॥ श्रीः ॥

श्रीमते रामानुजाय नमः ।

# श्रीमल्लोकाचार्यैरनुगृहीतं

# श्रीवचनभूषणम् ।

विद्वद्वकुशिखामणि-

## श्रीमद् वरवरमुनिप्रणीत

## व्याख्यासंवलितम् ।

भाषाटीकोपेतं च ।

इदं

पंडितैः संस्कृत्य संशोध्य

श्री राज गो पा ल म ठा धी श्व रैः

श्री १०८ श्रीगदाधररामानुजस्वामिभिः

श्रीवैष्णवसम्प्रदायान्वित्यै श्रीराजगोपालमठे स्थापिते

स्वीये

श्रीरघुनन्दनमुद्रणालये

श्रीनिवासाचार्यद्वारा

मुद्रयित्वा प्रकाशितम् ।

पुरी ।

सन् १९२६

# लघुप्रस्तावः ।

विदितमेव सर्वेषां श्रीवैष्णवसम्प्रदायनिष्ठानां यदिदं श्रीवचनभूषणाख्यं रहस्यं सर्वेष्वपि सम्प्रदायग्रन्थेषु श्रेष्ठतममिति । यद्यप्यस्य बृहत्प्रस्ताव एतद्व्याख्यातृभिः श्रीमद्वरवरमुनिभिः प्रणीतो विराजतेऽस्यादौ तथापि बहूनां सहृदयानां प्रार्थनेनास्मिन् विषये किञ्चिल्लिख्यते— 'असारमल्पसारं च सारं सारतरं त्यजेत् । भजेत् सारतमं शास्त्रं रत्नाकर इवामृतम् ॥" इत्यस्य श्लोकस्य सारतमतया प्रतिपाद्यं शास्त्रमिदमेवेति ज्ञायते । तथाहि— असारमित्यनेन ब्रह्मादिस्तम्बपर्यन्तैहिकामुष्मिकसुखप्राप्तय उपायोपेयप्रतिपादकं शास्त्रं बोध्यम् । अल्पसारमित्यनेनात्मानुभवरूपकैवल्यात्मकमुक्तिप्रतिपादकं शास्त्रं वेद्यम् । सारमित्यनेन कर्मज्ञानसहकृतभक्तिरूपोपायप्रतिपादकं शास्त्रं बोध्यम् । सारतरमित्यनेन स्वगतस्वीकाररूपप्रपत्त्युपायप्रतिपादकं शास्त्रं वेद्यम् । एतच्चतुष्टयं चाहंकारगर्भितात्मभिः स्वतन्त्रात्मवेदिभिरनुष्ठेयत्वात्फलाविनाभावे संशयग्रस्तमिति हृदयालुभिस्त्याज्यमित्युक्तम् ।

सारतममित्यनेन परगतस्वीकाररूपप्रपत्त्युपायप्रतिपादकं शास्त्रमिति ज्ञायते । तच्च शास्त्रमिदमेवेति लोकाचार्यैरुद्घुष्यते । तत्तथैवावगम्यतेऽस्माभिरपि—यतोऽस्मिन् शास्त्रे आत्मस्वरूपयाथात्म्यात्यन्तपारतन्त्र्यविद्भिः पूर्वैस्सूरिभिराचार्यैश्च कठवल्ल्युपनिषत्प्रतिपादितमार्जारकिशोरन्यायेन 'यमेवैष वृणुते तेन लभ्यः' इत्यादिना परगतस्वीकारात्मकप्रपत्तिरेवाविलम्बेन देहान्ते भगवल्लाभात्मकमोक्षप्रदातृतयाङ्गीकृत्यानुष्ठिता च दरीदृश्यते । अतस्तदनुयायिभिः सर्वैरस्माभिरपि लुप्तसर्वधर्मेऽस्मिन्

कराले कलियुगेऽविलम्बेन भगवल्लाभायेदमेव शास्त्रमधीत्य तन्निष्ठावद्भिर्भवितव्यमिति ।

एतच्च मणिप्रवालनामकद्राविडसंस्कृतमिश्रितभाषया लिखितं मूलकारैस्तत्रभवद्भिः श्रीमद्गोवर्द्धनरङ्गाचार्यस्वामिभिस्तद्भाषानभिज्ञानामप्यहानये गैर्वाण्या वाण्यानूदितममुद्रितपूर्वञ्च । बहुभिः सहृदयैः प्रार्थिताः श्रीराजगोपालामठाधीश्वरश्रीमन्महन्त श्रीगदाधररामानुजस्वामिनो बहुधनंव्ययेन भाषावेदिभिर्विद्वद्भिः परिष्कृत्य रमणीयनिर्णयसागरायसाक्षरैः सुस्निग्धपत्रेष्वङ्कयित्वा प्राकाश्यं नीतम् ।

अन्यच्चैतन्महद्वैभवप्रतिपादकाः श्लोकाः—

एतद्व्याख्यातृभिः श्रीशैलेशदयापात्रैर्धीभक्त्यादिगुणार्णवैर्यतीन्द्रप्रवणैः श्रीमद्रम्यजामातृमुनीन्द्रैः कार्त्स्न्येन संस्कृतवेदमुद्धृत्य द्राविडवेदोद्धरणे सूत्रं पातयित्वोपसंहृतशेषावतारानां श्रीभगवद्रामानुजयतीन्द्राणामपरावतारैः कार्त्स्न्येन द्राविडवेदोद्धारकैरष्टदिग्गजप्रतिष्ठातृभिरहरहरनुसंधेयतया प्रणीतोपदेशरत्नमालाख्यप्रबंधे परिदृश्यन्ते ।

ते यथा:—

को वा प्रबंध इह लोकगुरुप्रबंधैः
साम्यमेति सकलेष्वपि वाङ्मयेषु ।
तत्रापि किं वचनभूषणतुल्यमन्यद्
ग्रंथो ममाद्य वचनं खलु वेहि सत्यम् ॥ १ ॥
प्राचां प्रपत्तिपदवीमयतां गुरूणां
पौदिष्णुना वचनरत्नकदंबकेन ।
धन्याः कृतोऽयमासिलार्यजनस्य कृपा

तेनाभवद्वचनभूषणनाम तस्य ॥२॥

जानंति के वचनभूषणवारिराशे-
र्धार्यं सदा हृदि सतामभिधेयरत्नम् ।
के तत्प्रदर्शितपथेन च संचरंति
यः कोऽपि संभवति चेद्विरलो हि तज्ज्ञः ॥३॥

उग्राब्धवार्धिकुहराद्द्रुतमुत्तितीर्षा
जायेत वो यदि जनाः सदुपाय एषः ।
आलोच्यतां वचनभूषणमात्मनीनं
निष्ठीयतां च नियमेन तदुक्तिमार्गे ॥४॥

ये देशिकादधिगतान्युपदेशवर्त्मा-
न्यासज्ज्य चेतसि तदाचरितुं यतंते ।
ते यत्नतो वचनभूषणगूढमर्थं
नैवाचरंति परिशील्य हि कस्य हेतोः ॥५॥

~~सत्संप्रदायसुधिया~~ सततोपलाल्या
लभ्येत चेद्वचनभूषणवाक्यटीका ।
सा व्यंजती सकलमस्य पदार्थजातं
मध्यस्थयैव दृशया ननु भावनीया ॥६॥

वाचा वदामि यदि वाचनभूषणीनाः
सार्थाः स्मरामि यदि ता मनसा ममैनाः ।
आर्याः कथंनु भवतां मनसि प्रथेरन्
भूम्ना धियो हि विषयातिशयावगाहः ॥७॥

गच्छतः स्खलनं नियमितिन्यायेनास्मिन् मुद्रणे कानिचि-त्स्खालित्यानि यद्यप्युपलभ्येरन् तथापि 'क्षमाशीला हि साधवः' इति क्षमाविषयाण्येव स्युः ।

अनुक्रमणिका । पृष्ठांकाः

# श्रीवचनभूषणं

## व्याख्या – भाषाटीकासमेतम्

श्रीमते रामानुजाय नमः ।

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् ।
यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥
लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरंपराम् ॥
यो नित्यमच्युतपदांबुजयुग्मरुक्म-
व्यामोहतस्तदितराणि तृणाय मेने ।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धो
रामानुजस्य चरणौ शरणं प्रपद्ये ॥
माता पिता युवतयस्तनया विभूतिः
सर्वं यदेव नियमेन मदन्वयानाम् ॥
आद्यस्य नः कुलपतेर्वकुलाभिरामं
श्रीमत्तदंघ्रियुगलं प्रणमामि मूर्ध्ना ॥
भूतं सरस्यमहदाह्वयभट्टनाथ-
श्रीभक्तिसारकुलशेखरयोगिवाहान् ।
भक्तांघ्रिरेणुपरकालयतीन्द्रमिश्रान्
श्रीमत्परांकुशमुनिं प्रणतोऽस्मि नित्यम् ॥
लोकगुरुं गुरुभिः सह पूर्वैः कूरकुलोत्तमदासमुदारम् ।
श्रीनगपत्यभिरामवरेशं दीप्रशयानगुरुं च भजेहम् ॥

लोकाचार्याय गुरवे कृष्णपादस्य सूनवे ।
संसारभोगिसंदष्टजीवजीवातवे नमः ॥
लोकाचार्यकृपापात्रं कौण्डिन्यकुलभूषणम् ।
समस्तात्मगुणावासं वन्दे कूरकुलोत्तमम् ॥
नमः श्रीशैलनाथाय कुन्तीनगरजन्मने ।
प्रसादलब्धपरमप्राप्यकैंकर्यशालिने ॥
लोकाचार्यपदांभोजराजहंसायितान्तरम् ।
ज्ञानवैराग्यजलधिं वंदे सौम्यवरं गुरुम् ॥
श्रीजिह्वावदधीशदासममलमशेषशास्त्रविदम् ।
सुंदरवरगुरुकरुणाकन्दलितज्ञानमन्दिरं कलये ॥

पुरुषकारवैभवं च साधनस्य गौरवं
तदधिकारिकृत्यमस्य सद्गुरूपसेवनम् ।
हरिदयामहेतुकीं गुरोरुपायतां च यो
वचनभूषणेऽवदज्जगद्गुरुं तमाश्रये ॥

सांगाखिलद्रविडसंस्कृतरूपवेद-
सारार्थसंग्रहमहारसवाक्यजातम् ।
सर्वज्ञलोकगुरुनिर्मितमार्यभोग्यं
वंदे सदा वचनभूषणदिव्यशास्त्रम् ॥
आकण्ठोत्कण्ठवैकुण्ठप्रियाणां कण्ठभूषणम् ।
गुरुणा जगतामुक्तं व्यासं वचनभूषणम् ॥
लोकाचार्यकृते लोकहिते वचनभूषणे ।
तत्वार्थदर्शिनो लोके तन्निष्ठाश्च सुदुर्लभाः ॥
जगदाचार्यरचिते श्रीमद्वचनभूषणे ।
तत्वज्ञानं च तन्निष्ठां देहि नाथ यतीन्द्र मे ॥

सकलवेदसंग्रहभूते मूलमंत्रे पदत्रयप्रतिपाद्यस्याकारत्रयस्य सर्वात्मसाधारणत्वात् 'यत्रर्षयः प्रथमजा ये पुराणाः' इति श्रुत्युक्तनित्यसूरिवत् शुद्धसत्त्वमये परमपदे नित्यासंकुचितज्ञाना निरंतरभगवदनुभवजनितनिरतिशयानन्दतृप्ताः संतः स्थातुं योग्या भवंति, तथापि 'अनादिमायया सुप्तः' इत्युक्तप्रकारेण तिलतैलवद्दारुवह्निवद्दुर्विवेचत्रिगुणदुरत्ययानादिभगवन्मायातिरोहितस्वप्रकाशेषु, अनाद्यविद्यासंचितानन्तपुण्यापुण्यकर्मानुगुणसुरनरतिर्यक्स्थावरयोनिषु पर्यायेणानेकवारं जनित्वा देहात्माभिमानस्वातंत्र्यान्यशेषत्वरूपगर्तेषु पतित्वा तत्तदनुगुणसाध्यसाधनेष्वत्यंतमवगाह्य यत्किंचिदवलम्बनेन व्यावृत्तिमतमारोप्य प्राप्तशेषिणः परमप्राप्यप्रापकभूतात् अत्यंतविमुखेषु गर्भजन्मबाल्ययौवनवार्धक्यमरणनरकरूपास्ववस्थासु सप्तसु निरंतरविततविविधदुःखान्यनुभूय संचरत्स्वेतेषु संसारिचेतनेषु येषां केषांचिज्जायमानकालभगवत्कटाक्षविशेषेण रज-

---

अष्टाक्षरी मंत्र सकल वेदों का सार है। उसमें प्रणव, नमः और नारायणाय यह तीन पद हैं। प्रणव पद से अनन्यार्ह शेषत्व, नमः पद से अनन्य शरणत्व, नारायणाय पदसे अनन्य भोग्यत्व, यह तीनों चेतनों के आकार बतलाये हैं। यह तीनों आकार नित्य मुक्त और बद्ध चेतनों को समान हैं। सदा नित्य विभूति में रहकर ज्ञान-संकोच रहित, निरन्तर भगवदनुभवानन्द से तृप्त नित्यसूरियों के सदृश योग्यतावाले यह संसारी चेतन भी हैं। तथापि अनादि प्रकृति संबंध से अज्ञानान्धकार को प्राप्त हो, अनादि अविद्या से सम्पादित पुण्य पाप रूप कर्मानुगुण देव, मनुष्य, तिर्यक्, स्थावर, योनियों में वारंवार जन्म लेकर देह ही को आत्मा मानना, अपने को स्वतन्त्र मानना और अपने को अन्यशेष मानना इत्यादि गढ़ों में गिरकर तदनुगुण फल और साधनों में प्रवृत्त हो परमात्मा से अलग हो प्राप्तशेषी परमप्राप्य और प्रापक भूत सर्वेश्वर से अत्यन्त विमुख हो गर्भ, जन्म, बाल्य, यौवन, वार्द्धक्य, मरण और नरक रूप सात अवस्थाओं में निरन्तर विस्तृत विविध असंख्यात दुःखों को भोगते हैं। इन संसारी चेतनों में से किसी एक को जायमान काल भगवत्कटाक्ष

रजोभिभवे सत्त्वोद्रेके मोक्षरुच्युत्पत्तावपि तत्त्वहितपुरुषार्थान्यथार्थत्वेन ज्ञात्वैवोज्जीवनं भवति, तेषां शास्त्रेण ज्ञाने सम्पादनीये शास्त्रेषु प्रधानभूतस्य वेदस्य 'अनंता वै वेदाः' इत्यनन्तत्वेन स्वार्थनिर्णये सर्वशाखाप्रत्ययन्यायादिसापेक्षत्वेनाल्पमतीनां तदवगाहनेनार्थनिर्णयस्य दुष्करत्वात् , तादृशवेदपारगैः स्वयोगमहिमसाक्षात्कृतपरावरतत्त्वविभागैः परमर्षिभिः प्रणीतेषु वेदोपबृंहणस्मृतीतिहासपुराणेषु च सारासारविवेकचातुर्यमन्तरेण तात्पर्यांशस्य दुर्ज्ञेयत्वात् , तद्विलक्षणस्य संसारिचेतनोज्जीवनकामेन सर्वेश्वरेण स्वयमाचार्यभूतेन प्रकाशितस्य सकलवेदसारभूतस्य रहस्यत्रयस्यातिसंग्रहतया निगूढार्थकत्वात् भगवदाकस्मिककटाक्षविशेषेणाज्ञानशून्यपरमभक्तिरूपज्ञानं प्राप्तैः सकलवेदशास्त्रतात्पर्याणि करतलामलकवत् साक्षात्कुर्वद्भिः परांकुशपरकालादिदिव्यसूरिभिः प्रणीतानां द्राविडवेदतदङ्गोपाङ्गानां दिव्यप्रबंधानामर्थदर्शनस्य परिमितानां दुष्करत्वाच्च चेतनानां स्वरूपच्युतिरेव स्यादिति दिव्यसूरेर्निर्हेतुक-

---

से रजोगुण तमोगुण दब सात्विक गुण बढ मोक्ष में रुचि होने पर भी उपाय और पुरुषार्थ का ज्ञान विना मोक्ष की प्राप्ति नहीं होती है। अत एव उन साधन और पुरुषार्थों को शास्त्रों द्वारा जानना चाहिये। शास्त्रों में प्रधान वेद है। वह अनन्त होनेसे अर्थ निर्णय करना अशक्य है। तादृश वेदपारंगत और परमात्मा को प्रत्यक्ष देखनेवाले व्यासादि परमऋषियों से प्रणीत वेदव्याख्यान रूप स्मृतीतिहास पुराणों में विद्वानों के विना औरों को अर्थज्ञान अशक्य है , ऐसा विचार परमात्मा संसारिचेतनों के उज्जीवन के लिये आप ही आचार्य होकर अष्टाक्षरी, द्वय मंत्र और चरम श्लोक रूप रहस्य त्रय को प्रकट किये हैं। वह रहस्य त्रय अत्यन्त कठिन होनेके कारण अज्ञान शून्य और सकल वेदशास्त्रों के तात्पर्यों को करतलामलकवत् साक्षात्करने वाले श्रीपरांकुश परकाल आदि दिव्यसूरियों ने द्राविड भाषा में उस दुर्लभ मंत्रार्थ को प्रकाश किये हैं। इन प्रबन्धों के अर्थ को मन्दमति लोग नहीं समझ सकते हैं। जिन्हें रुचि होती है वे तो अर्थज्ञान विना नष्ट ही होजायंगे

कटाक्षेण लब्धदिव्यज्ञानाः नाथमुनिप्रभृतयः सत्संप्रदाय-सिद्धाः सकलशास्त्रनिपुणाः परमदयालवः पूर्वाचार्यास्तेषु वेदादिष्वर्थान् संगृह्य मंदमतीनां सुग्रहणाय प्रबंधीकृत्योपदिदिशुः, तथैव संसारिचेतनप्रच्युतिमसहमानपरमकृपया तदुज्जीवनाय स्वयमपि बहुप्रबंधानुक्त्वा कृष्णपादलोकाचार्यः आचार्य-परम्परायातेष्वर्थेषु तैर्गौरवातिशयेन रहस्यत्वेनोपदिष्टान् दुर्लभत्ववैभवाभ्यामितः स्वेनाप्यप्रकाशनेन गोपितान् सर्वानर्थ-विशेषान् पश्चात्तनानां चाप्राप्तिर्न स्यादिति स्वकृपातिशयोपरि भगवता स्वप्ने नियमितत्वाच्च वचनभूषणरूपैतत्प्रबंधमुखेन प्रकाशयामास। तथाहि – वरदराजस्वामी स्वनिर्हेतुककृपया मणपाक्कग्रामे वर्तमानस्य नम्बियारिति कस्यचिच्छ्रीवैष्णवस्य विशेषकटाक्षं कृत्वा शरणभूतान् कांश्चिदर्थविशेषान् स्वयमेव तत्स्वप्न उक्त्वा भवान्नदीद्वयमध्ये तिष्ठतु पुनरपि भवत एत-दर्थविशेषान् सर्वान्विशदतया तत्र वयं ब्रूम इत्यभ्यधात्, तच्छ्रु-

---

ऐसा विचार दिव्यसूरियों के निर्हेतुक कटाक्ष से दिव्यज्ञान को प्राप्त हुए सत्संप्रदाय सिद्ध सकलशास्त्र निपुण और परम दयालु श्रीनाथमुनि प्रभृति पूर्वाचार्य लोग उन-प्रबंधों के अर्थों को सुलभतया मन्दमति लोग भी समझसकें इस लिये सरल रूपसे व्याख्यान और उपदेश किये हैं।

वैसे ही संसारी चेतनों के दुःख को न सहनेवाले और परमकृपालु श्रीलोकाचार्य स्वामी जी भी उन के उज्जीवन के लिये बहुत प्रबन्ध बनाये हैं। आचार्यपरंपरा प्राप्त अति श्रेष्ठ रहस्य अर्थो को भविष्यत् चेतनों को जनाने के लिये परमात्मा से स्वप्नमें प्रेरित हो श्रीवचनभूषण नामक इस प्रबंध को बनाये हैं।

श्रीकाञ्चीपुरी के वरदराज भगवान् अपनी निर्हेतुक कृपा से मणपाक्क ग्राम वासी किसी एक स्वामी पर विशेष कटाक्ष कर उपाय भूत अर्थ विशेषों को स्वप्नमें उपदेश कर और कहे हैं कि, 'तुम दोनों नदियों के बीच अर्थात् श्रीरङ्गजी में वास करो और भी अनेक अर्थों को सुस्पष्ट रूपसे हम कहेंगे' इस बात को सुनकर वे महात्मा

त्वा सोऽप्यत्रागत्य स्वामिनं सेवमानः स्वस्य तत्र पूर्वमुपदिष्टान-र्थविशेषानतिरहस्यतयानुसंदधान एकांते कस्मिंश्चिद्देवमंदिरे-ऽवर्त्तत, तदानीमेकास्मिन् दिवसे स्वश्रीपादयोरंतरङ्गैर्ज्ञानाधि-कैः सह लोकाचार्यः तस्मिन् मन्दिरे याद्दच्छिकमागत्य तस्य स्थानस्यैकान्तत्वात्तेषां रहस्यार्थानुपदिशन्नतिष्ठत् । तदा तेषामर्थानां पूर्वं भगवता स्वस्योपदिष्टार्थरूपत्वात् सोऽतीव विद्धः सन् ततो बहिर्निर्गत्याऽऽगत्य लोकाचार्य-चरणयोर्निपत्य स एव किं भवानित्यपृच्छत्, तत्किमिति तेन पृष्टो नाम्बियार् वरदराजस्वामिना स्वस्यैतदर्थप्रसादप्रकार-मेतद्देशागमननियमनप्रकारं पुनस्तस्यैतानर्थान् विशदतया वयं ब्रूम इत्युक्तप्रकारं च व्यजिज्ञपत्, तच्छ्रुत्वा सोऽतीव प्रहृष्टस्तमंगीचकार, सोऽपि तस्यातीवांतरङ्गस्सन्नवर्तत । तस्मि-न्काले भगवान् रङ्गनाथः [illegible] स्वके आगत्यैतदर्थाना[illegible]स्म-रणार्थं प्रबंधीकरणायाहमवोचमिति लोकाचार्यं [illegible]यतु

---

श्रीरङ्गजी में आकर श्रीरङ्गनाथ भगवान् की सेवा में तत्पर हो पहिले अपने को कहे हुए अर्थों को गुप्ततया अनुसंधान करते हुए एकान्त में एक मन्दिर में वास करने लगे। उस मन्दिर के पास ही श्रीलोकाचार्य [illegible] भी अपने शिष्यों के साथ जाकर रह-स्यार्थ उपदेश करते रहे, वहां पर पाहिलेमें [illegible] रहनेवाले मणपाक ग्राम वासी स्वामीजी उन अर्थों को सुनकर विस्मित हो श्रीलोकाचार्य स्वामीजी के चरणों में प्रणाम कर वह वरदराज भगवान् आप ही हैं क्या ? ऐसा पूछा, श्रीलोकाचार्य स्वामीजी के पूछने पर 'वरदराज भगवान् इन हीं अर्थो को मुझसे कहेथे और श्रीरङ्गजी में जाकर वास करो मैं इन अर्थों को विशदरूप से कहूंगा' इस बातको सुनकर श्रीलोकाचार्य स्वामीजी संतुष्ट हो उन को भी अपनी शिष्यकोटि में मिलालिये, पश्चात् श्रीरङ्गनाथ भगवान् ग्रामवासी स्वामी से इन अर्थोंकी रक्षा के लिये ग्रन्थरूप से बनाने को लोकाचार्यस्वामीजी से कहो ऐसा कह थे।

ग्रामवासी महात्मा ने इस बात को श्रीलोकाचार्यस्वामीजी से विज्ञापन किये,

भत्रानित्याज्ञापयामास, सोऽपि भगवन्निर्देशप्रकारं निवेदितवान्, तर्हि तथाकुर्यामिति मनसि विचार्यानन्तरममुं प्रबन्धं निर्ममे इति प्रसिद्धम् । यथा रत्नप्रचुरं भूषणं रत्नभूषणमित्यभिधीयते तथा पूर्वाचार्यवचनप्राचुर्यात् अनुसंधातॄणामौज्ज्वल्यकरत्वाच्चास्य श्रीवचनभूषणमिति श्रीनाम भवति । अस्मिन् प्रबन्धे 'वेदार्थो निश्चेतव्य' इत्यारभ्य 'तस्मात् स पूर्वपातित' इत्यन्तं वक्ष्यमाणार्थनिर्णायकप्रमाणस्य निर्देशात् प्रबंधोपोद्घातः।'इतिहासश्रेष्ठ' इत्यारभ्य 'प्रपत्त्युपदेशश्चैतदर्थं कृत' इत्यंतं सापराधचेतनानां सर्वापराधान् सर्वेश्वरं प्रति साहयित्वा रक्षयितृत्वैकस्वरूपपुरुषकारवैभवः, तादृशपुरुषकारश्चाधिको यथा स्यात्तथाविधोपायवैभवश्चोच्यते,। 'प्रपत्तेः' इत्यारभ्य 'एकान्ती व्यपदेष्टव्यः' इत्यन्तसेतदुपायकरणरूपायाः प्रपत्तेर्देशकालनियमाभावं, विषयनियमं, आश्रयविशेषं, अन्यथाःप्रपत्तेः साधनत्वेन स्वीकारे भवदवद्यं, एतत्स्वरूपाङ्गादीनि चोक्त्वा प्रपत्तव्य एवोपाय इति साधितत्वेन

---

पश्चात् प्रबंधरूप से श्रीलोकाचार्यस्वामीजी इस श्रीवचनभूषण नामक ग्रंथ को बनाये। जैसे रत्नमय भूषण को रत्नभूषण कहते हैं वैसे ही पूर्वाचार्यों के वचनमय होनेसे और अनुसंधान करनेवालों को उज्वल करनेसे 'श्रीवचनभूषण' ऐसा इस ग्रंथ का नाम हुआ । इस ग्रंथमें ' वेदार्थो निश्चेतव्यः ' इस सूत्र से ' तस्मात्स पूर्वपतितः इस सूत्र तक आगे कहेजाने वाले अर्थों का निर्णय करनेसे प्रबंधोपोद्घात जानना। 'इतिहास श्रेष्ठ' यहांसे 'प्रपत्त्युपदेशश्चैतदर्थं कृतः' यहां तक अपराधी चेतनों के सर्व अपराधों को सर्वेश्वर से क्षमा कराकर रक्षा करने वाली पुरुषकार भूत लक्ष्मीजी का वैभव, तादृश पुरुषकार को भी अधिक मानने वाले उपाय भूत ईश्वर का वैभव भी कहे गये हैं । ' प्रपत्तेः' इत्यादि से ' एकान्ती व्यपदेष्टव्यः ' इत्यन्त इस उपाय स्वीकार रूप प्रपत्ति को देशकालनियमों की अपेक्षा नहीं है,। विषय नियम, आश्रय विशेष , इस प्रपत्ति को साधन माननेसे होनेवाला दोष, प्रपत्ति का स्वरूप और अंग आदि को कह कर प्रपत्तव्य ही उपाय हैं ऐसा सिद्धान्त करनेसे पूर्वोक्त

पूर्वोक्तोपायशेषत्वादुपायप्रकरणम् । अत्र 'प्राप्तेः प्रसन्नः स एव' इत्यंतं प्रधानप्रकरणं भवति, उपरि प्रासंगिकं भवति। 'उपायस्य' इत्यारभ्य 'उपेयविरोधिनश्च स्युः' इत्यन्तमनेनोपायेनोपेयं प्राप्स्यतः कस्यचिच्चेतनस्योपायोपेयाधिकारप्रधानापेक्षितानामुपायांतरत्यागहेतूनां अन्यत्याज्योपादेयानां च विस्तरेण कथनादधिकारिनिष्ठाक्रम उच्यते ।'स्वेनं हितोपदेशकरणसमये' इत्यारभ्य 'प्रीतिरुपकारस्मृतिश्च वर्तितव्ये, इत्यंतं हितोपदेशसमये स्वाचार्यपारतंत्र्यादिसदाचार्यलक्षणस्य' सच्छिष्यलक्षणस्य' तदुभयवर्तनप्रकारस्य, दुष्टमनोनिवर्तकस्वाचार्यविषये शिष्यस्योपकारस्मृतिक्रमस्य च कथनात्सिद्धोपायनिष्ठस्याधिकारिणः स्वाचार्यानुवर्तनक्रम उच्यते। 'स्वदोषानुसंधानं भयहेतुः' इत्यारभ्य निवर्तकज्ञानमभयहेतुः' इत्यंतमस्याधिकारिणोऽद्वेषादिप्राप्तिफलकैंकर्यपर्यन्तानां प्राप्यानां हेतोः स्वकर्मभयानिवर्तिकाया भगवन्निर्हेतुककृपायाः प्रभाव उच्यते। 'स्वतंत्रमुपायत्वेन स्वयं यदा

---

उपाय शेष होनेसे भी उपाय प्रकरण जानना । इस उपाय प्रकरण में 'प्राप्तेः प्रसन्न स एव' इत्यन्त प्रधान प्रकरण, आगे प्रासंगिक प्रकरण ।

'उपायस्य' इत्यादि 'उपेयविरोधिनश्च स्युः' इत्यन्त इस उपाय से उपेय को प्राप्त होने वाला किसी एक चेतन का उपायोपेयाधिकार के प्रधानापेक्षित उपायांतर त्याग हेतु और त्याज्योपादेयों को विस्तार पूर्वक कहनेसे अधिकारि निष्ठा क्रम कहा जाता है। 'स्वेन हितोपदेशकरणसमये' इत्यादि 'प्रीतिरुपकारस्मृतिश्च वर्तितव्ये' इत्यन्त हितोपदेश के समय में स्वाचार्यपारतन्त्र्य आदि सदाचार्य लक्षण, सच्छिष्य लक्षण, इन दोनोंके वर्तन प्रकार और दुष्टमनको दूर करने वाले आचार्य के विषयमें शिष्य की उपकार स्मृति कहेजानेसे सिद्धोपायनिष्ठ अधिकारि का स्वाचार्य्यानुवर्तन क्रम कहा जाताहै । 'स्वदोषानुसंधानं भयहेतुः' इत्यादि 'निवर्तकज्ञानमभयहेतुः' इत्यन्त इस अधिकारि के अद्वेषादि प्राप्तिफल कैंकर्य पर्यन्त के फलोंका हेतु और स्वकर्मभय निवर्तक भगवान्निर्हेतुक कृपा का प्रभाव कहाजाता है ।'स्वतंत्रमुपायत्वेन स्वयं यदा

स्वीकरोति' 'इत्यारभ्योपारि सर्वमपि परमवैदिकवेदतात्पर्यार्थभूता चरमपर्वनिष्ठा स्पष्टमुच्यते। 'वेदार्थो निश्चेतव्यः' इत्यारभ्यांस्मिन्नर्थे समाप्तत्वादस्मिन्प्रबंधे चरमप्रकरणप्रतिपाद्यमानोऽर्थो वेदतात्पर्यविषयमिति संप्रतिपन्नम् । श्रीगीतायाश्चरमश्लोकवदस्य प्रबंधस्य चरमप्रकरणम् । तत्र साध्योपायानुपदिशन्स्वस्वातंत्र्यभीतस्य तान्निषिध्य सिद्धोपायमुपदिदेश ।

अत्र सिद्धोपायं वदन्नीश्वरस्वातंत्र्यभीतस्य प्रथमपर्वं निषिध्य चरमपर्वमुपदिदेश। एवं षड्भिः प्रकरणैः षडर्थप्रतिपादको भवति। अथवा नवभिः प्रकरणैर्नवार्थप्रतिपादकश्च। तस्मिन्पक्षे प्रथमप्रकरणं पूर्ववत् । 'प्रपत्तेः' इत्यारभ्य 'भगवद्विषयप्रवृत्तिरुचिता' इत्यंतं पूर्वप्रकरणोक्तोपायशेषत्वादुपायप्रकरणम्। 'प्रापकांतरपरित्यागस्य' इत्यारभ्य 'तस्मात् सुखरूपा भवति'

---

स्वीकरोति' इत्यारम्य आगेके सब ही वाक्य परम वैदिक वेद तात्पर्यभूत चरम पर्व निष्ठा कही जातीहै 'वेदार्थो निश्चेतव्यः' इत्यारभ्य चरमपर्व में समाप्त होनेसे इस प्रबंधमें चरम प्रकरण से कहे जानेवाले अर्थ वेदों का ही तात्पर्य है ऐसा सिद्ध होता है

श्रीगिता के चरमश्लोक सदृश इस प्रबंध का चरम प्रकरण को जानना उस में चेतनसाध्य उपायों को उपदेश करते हुए स्वस्वातंत्र्य से डरा हुआ अर्जुन को उन उपायों को निषेध कर सिद्धोपाय का उपदेश किये हैं । इस श्रीवचनभूषणमें सिद्धोपाय को कहते हुए ईश्वर स्वातंत्र्य से डरा हुआ अधिकारी को प्रथमपर्व को निषेध कर चरमपर्व का उपदेश किये हैं । इस प्रकार छः प्रकरणों से छः अर्थों को प्रतिपादन करता है ।

अथवा नव प्रकरणों से नव अर्थों को प्रतिपादन करते हैं । इस पक्ष में प्रथम प्रकरण पहिलेके माफक समझना । 'प्रपत्तेः' इत्यादि 'भगवद्विषयप्रवृत्तिरुचिता' इत्यन्त पूर्व प्रकरणोक्त उपाय के शेष होनेसे उपायप्रकरण समझना । 'प्रापकांतरपरित्यागस्य' इत्यादि 'तस्मात्सुखरूपा भवति' इत्यन्त उपायान्तरों के दोषों का प्रकरण सम-

इत्यंतमुपायांतरदोषप्रकरणम् । अस्मिन् प्रकरणे प्रपत्त्युपायवैल-क्षण्यकथनं प्रासंगिकम् । 'अयं तं प्राप्तुमिच्छति चेत्' इत्यारभ्य 'गोपिकापि प्राप्तवती' इत्यन्तं सिद्धोपायनिष्ठानां वैभवप्रकरणम् । 'एवं सर्वप्रकारेण' इत्यारभ्य 'उपेयविरोधिनश्च भवंति' इत्यंतं प्रपन्न-दिनचर्याप्रकरणम् । स्वेन हितोपदेशकरणसमये' इत्यारभ्य 'चेत-नानां रुच्यागतत्वात्' इत्यंतं सदाचार्यलक्षणप्रकरणम् । 'शिष्य' इत्यारभ्य 'उपकारस्मृतिर्वर्तितव्या' इत्यन्तं सच्छिष्यलक्षणप्रकर-णम् । 'स्वदोषानुसंधानं' इत्यारभ्य 'निवर्तकज्ञानं भयहेतुः' इत्यंतं भगवन्निर्हेतुकविषयीकारप्रकरणम् । 'स्वतंत्रं' इत्यारभ्य उपरि सर्व-मपि चरमप्राप्यप्रापकप्रकरणम् । एतत्क्रमद्वयमभिप्रेत्य 'फलदाय-यिन्या महिमा' 'श्रीदेवी' इति गाथाद्वयमवातरत् । तस्मात्प्रकारद्व-यानुसंधानमपि सुसंगतम् । अयं प्रबंधो दीर्घशरणागतिभूतसहस्र-गीतिवद् द्वयविवरणम् । कथमितिचेदित्थं–सहस्रगीत्यां प्रथमशत-

---

झना । इस प्रकरण में प्रपत्तिरूप उपाय को विलक्षण कहना प्रसंगिक है । 'अयं तं प्राप्तुमिच्छति चेत्' इत्यादि 'गोपिकापि प्राप्तवती' इत्यन्त सिद्धोपायनिष्ठों का वैभव प्रकरण जानना 'एवं सर्व प्रकारेण' इत्यादि 'उपेयविरोधिनश्च भवंति' इत्यन्त प्रपन्न दिनचर्या प्रकरण । 'स्वेन हितोपदेशकरणसमये' इत्यादि 'चेतनानां रुच्यागतत्वात्' इत्यन्त सदाचार्य लक्षण प्रकरण 'शिष्य' इत्यादि' उपकारस्मृतिर्वर्तितव्या' इत्यन्त सच्छिष्य लक्षण प्रकरण 'स्वदोषानुसंधानम्' इत्यादि 'निवर्तकज्ञानमभयहेतुः' इत्यन्त भगवन्निर्हेतुक विषयीकार प्रकरण , 'स्वतंत्र' इत्यादि आगे सबही चरम प्राप्य प्रापक प्रकरण इन दोनों क्रमों को अनुसंधान कर , फलदात्री ' 'श्रीमहालक्ष्मी' ये दो गाथा प्रकट हुए हैं । इससे दोनों प्रकार भी सुसंगत हैं ।

यह प्रबंध दीर्घशरणागतिरूप सहस्रगीति के सदृश द्वयमंत्र का विवरण है ।

कत्रयेणोत्तरखण्डार्थं, उपरि शतकत्रयेणपूर्व खण्डार्थं चोक्त्वोपरि शतकचतुष्टयेन तादृशोपायोपयोगिनां गुणानां, आत्मात्मीयेषु स्वस्य संगाभावस्य, तेन सह स्वस्य विद्यमाननिरुपाधिकसंबंधस्य, स्वप्रार्थनाप्रकारेण प्राप्तिप्रकारस्य च प्रतिपादनात् तदनुरूपार्थानुक्त्वा निगमनं कृतम्। एवमत्र च प्रथमं पुरुषकारस्यानंतरमेतदुपायाधिकारिनिष्ठायाश्चोक्तत्वात्पूर्वखण्डार्थं, तदधिकारिनिष्ठाकथनसमय उपायाधिकारापेक्षितकथन उत्तरखण्डार्थं चोक्त्वोपरि प्रबंधशेषेण तदुपदेष्ट्राचार्यविषये अस्यावश्यापेक्षितप्रतिपत्त्यनुवर्तनप्रकारान्, एतन्महाविश्वासहेतुभूतभगवन्निर्हेतुककृपाप्रभावं, वाक्यद्वयोक्तोपायोपेयचरमावधिं चोक्त्वा निगमितत्वादिति ज्ञेयम्।

---

तथाहि — सहस्रगीति में प्रथम तीन शतक से द्वयमंत्र के उत्तरखंडार्थ को, आगे के तीन शतक से पूर्वखंडार्थ को कहकर उससे आगे चार शतक से तादृश उपाय के उपयोगि गुणों को आत्मात्मीयवस्तुओं में अपने संग रहित्य परमात्मा और आत्माके बीच वर्तमान निरुपाधिक संबंध को, अपनीप्रार्थना के अनुसार प्राप्तिप्रकार को प्रतिपादन किये हैं। इसीप्रकार इस श्रीवचनभूषण प्रबंध में पहिले पुरुषकार का अनन्तर इस उपायाधिकारी की निष्ठा को कहने से द्वयमंत्र का पूर्वखंडार्थ कहागया है। प्रपत्ति अधिकारी की निष्ठा को कहने के समय उपायाधिकार के अपेक्षित विषय को उत्तर खण्डार्थ से कहा है।

आगे प्रबंधशेष से प्रपत्ति उपदेशक आचार्य के विषय में इस चेतन को अवश्यापेक्षित प्रतिपत्ति और अनुवर्तन प्रकार को इस प्रपत्ति में महा विश्वास हेतुभूत भगवान की निर्हेतुक कृपा के प्रभावको और द्वयमंत्र में कहाहुवा उपाय और उपेयोंके चरमावधि को कहकर पूर्ण करनेसे इस प्रबंध को सहस्रगीति के समान ही जानना

नवार्थप्रतिपादकत्वपक्षे च पूर्ववाक्ये क्रियापदोक्तस्य स्वीकारस्योपायांतरपरित्यागपूर्वकत्वनियमात् दिनचर्यायाश्चैतत्पदोक्तेऽधिकारिण्येव विद्यमानत्वात्सदाचार्यलक्षणस्य द्वयोपदेष्ट्राचार्यलक्षणत्वेनोक्तत्वाच्च द्वयविवरणत्वेन निर्वाहस्य न विरोधः । एवं द्वयविवरणभूतेऽस्मिन्द्वयार्थवदन्यरहस्यद्वयार्थाश्च संग्रहेणोक्ताः । तथाहि—'अहमर्थस्य' इत्यारभ्य 'दास इति हि' इत्यंतं स्वरूपप्रयुक्तं दास्यं प्रधानमिति प्रणवार्थ उक्तः। 'स्वयत्ननिवृत्तिः' इत्यादिना 'स्वस्य स्वेनैव विनाशकरणं नाम' इत्यारभ्य 'एवं सर्वप्रकारेण' इत्यतः प्राग्ग्रंथेन च नमःशब्दार्थ उक्तः। 'परप्रयोजनप्रवृत्तिः' इत्यादिना 'उपेयस्य बालस्वामिवत्' इत्यादिना 'कैंकर्यं भक्तिमूल' इत्यादिना च तृतीयपदार्थ उक्तः। 'अज्ञानेन' इत्यादिना 'प्रापकान्तरपरीत्यागस्य' इत्यादिना चोपायान्तरपरित्यागस्य

---

नव अर्थों के प्रतिपादन पक्ष में पूर्वखंड में 'प्रपद्ये' इस क्रियापद से कहा गया स्वीकार उपायान्तर परित्यागपूर्वक होनेसे इस प्रबंध में कही गयी दिनचर्या पूर्वोक्त महाविश्वासशाली अधिकारी में रहनेसे सदाचार्य लक्षण द्वयोपदेष्टृ आचार्य में ही है ऐसा कहनेसे द्वयविवरण हुआ ।

इस प्रकार द्वय विवरणरूप इसमें जैसा द्वयार्थ है तैसा और रहस्यद्वय रूप अष्टाक्षरी चरमश्लोकों के अर्थ भी संग्रह रूपसे कहागया है । तथाहि—'अहमर्थस्य' इत्यारभ्य 'दास इति हि' इत्यंत स्वरूपप्रयुक्त कैंकर्य ही प्रधान है ऐसा कहनेसे प्रणवार्थ कहागया है। 'स्वयत्ननिवृत्तिः' इत्यादि से और 'स्वस्य स्वेनैव विनाशकरणं नाम' इत्यारभ्य 'एवं सर्वप्रकारेण' इससे पहिलेके ग्रंथ से भी नमः शब्दार्थ कहा गया। 'पर प्रयोजनप्रवृत्तिः' इत्यादि से 'उपेयस्य बालस्वामिवत्' इत्यादि से और 'कैंकर्यं भक्तिमूलं' इत्यादिसे भी नारायणाय पदका अर्थ कहा गया है। 'अज्ञानेन' इत्यादि से और 'प्रापकांतरपरित्यागस्य' इत्यादिसे भी उपायान्तर परित्याग

सहेतुकमुक्तत्वात् तत्त्याज्यत्यागप्रकारप्रतिपादकपदद्वयार्थ उक्तः। 'अस्याः स्वरूपम्' इत्यादिना'प्राप्तेरुपायस्तादिच्छा 'इत्यादिना च 'मामेकं शरणम्' इति पदानामर्थ उक्तः। 'तमयम्' इत्यारभ्य 'स्वातंत्र्यप्रयुक्तं पारतंत्र्यं प्रबलम्' इत्यंतं सर्वपापान् दूरीकृत्याङ्गीकर्तुरीश्वरस्य स्वातंत्र्यस्य कृपाफलमवश्यमनुभाव्यमिति फलसिद्धेरबाधितत्वस्य चोक्तत्वादुत्तरार्द्धार्थश्चोक्तः।

---

को सहेतुक कहनेसे चरम श्लोक में त्याज्य और त्यागप्रकार को कहनेवाले पदद्वय के अर्थ कहेगये हैं। ' अस्याः स्वरूपं ' इत्यादि से और ' प्राप्तेरुपायस्तादिच्छा ' इत्यादि से भी ' ' मामेकं शरणं ' इन पदों का अर्थ कहा गया है। ' तमयं ' इत्यारभ्य ' स्वातंत्र्य प्रयुक्तं पारतंत्र्यं प्रबलं ' इत्यंत सर्व पापों को दूर कर अंगीकार करने वाले ईश्वर का स्वातंत्र्य और ' कृपाफलमवश्यमनुभाव्यं ' इति फल सिद्धि का नियम से होना कहे जाने से चरम श्लोकका उत्तरार्ध का अर्थ कहा गया।

इति श्रीमद्वरवरमुनिप्रणीत
श्रीवचनभूषणव्याख्यो-
पोद्घातः समाप्तः



मू० वेदार्थो निश्चेतव्यः स्मृतीतिहासपुराणैः ॥ १ ॥

---

व्या०वेदार्थ इत्यादि। प्रमाता प्रमाणेनैव हि प्रमेयं निश्चिनोति, तादृशप्रमाणानि प्रत्यक्षादिरूपेणाष्टविधानि वदन्ति, अत्र 'प्रत्यक्षमेकं चार्वाका' इत्यादावुक्तबाह्यकुदृष्टिवैलक्षण्येन प्रत्यक्षानुमानागमरूपाणि त्रीण्यपि प्रमाणतयांऽगीकृत्योपमानादिपंचकं तेषु यथायोग्यमन्तर्भाव्य तत्र च प्रत्यक्षमिन्द्रियग्रहणयोग्येषु अनुमानं प्रत्यक्षसिद्धव्याप्तिग्रहणानुरूपं कतिपयपरोक्षार्थेषु च प्रमाणत्वेन अतीन्द्रियार्थे शास्त्रमेव प्रमाणमिति च निष्कर्षयित्वा तत्रापि 'वेदे कर्त्राद्यभावाद् बलवति हि नयैस्त्वन्मुखे नीयमाने

---

श्लो० वेदवेदांततत्वार्थो निश्चेतव्यो मनीषिभिः ।
स्मृतीतिहासवाक्येन पुराणवचनेन च ॥ १ ॥

भा० वेदार्थ को स्मृति-इतिहास-पुराणों से निश्चय करना चाहिये ॥ १ ॥

वेदार्थ इति —

प्रमाता पुरुष प्रमाण से ही प्रमेय को निश्चय करता है। तादृश प्रमाण प्रत्यक्षादि रूपसे ८ प्रकारके हैं। इन प्रमाणों में 'प्रत्यक्षमेकं चार्वाकः, इस उक्ति के अनुसार प्रत्यक्ष एक ही को प्रमाण मानने वाले बाह्यकुदृष्टियों की अपेक्षा प्रत्यक्ष, अनुमान और आगम रूप तीन प्रमाणों को मानकर इन ही तीन प्रमाणों में शेष पांच प्रमाणों को भी वैदिक लोग अंतर्गत करते हैं। उनमें प्रत्यक्ष प्रमाण इन्द्रियों से ग्रहण कियेजानेवाले पदार्थों में - अनुमान प्रत्यक्षसिद्ध व्याप्तिज्ञानानुगुण किसी २ अप्रत्यक्ष विषय में - और शास्त्ररूप प्रमाण को इन्द्रियागोचर वस्तुओं में प्रमाण मानते हैं ॥

वेद में कर्ता आदि नहीं होनेसे उसको मुख्य प्रमाण तदितर प्रमाणों को वेदाधीन

तन्मूलत्वेन मानं तदितरदखिलं जायते' इत्युक्तप्रकारेण स्वप्रामाण्यस्य मूलसापेक्षपौरुषेयशास्त्रापेक्षया स्वतः प्रामाण्यविशिष्टो वेद एव प्रबलप्रमाणमिति निश्चिन्वतः स्वस्य परमवैदिकत्वादस्मिन्प्रबंधे स्वोक्ताः सर्वे अर्था वेदप्रतिपाद्या इति ज्ञापयितुं प्रथमं वेदं प्रमाणत्वेनांगीकृत्य तदर्थनिर्णयक्रममनेन वाक्येनाह — वेदार्थ इति। अखिलहेयप्रत्यनीकत्वकल्याणैकतानत्वाभ्यामीश्वरो यथाखिलप्रमेयविलक्षणो भवति तथाऽपौरुषेयत्वनित्यत्वाभ्यां वेदोऽखिलप्रमाणविलक्षणः। वेदस्यापौरुषेयत्वादि 'वाचा विरूप नित्यया' इत्यादिश्रुत्या 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः॥' इति स्मृत्या च प्रतिपादितं। आभ्यां श्रुतिस्मृतिभ्यां नित्यत्वस्योक्ततया तदपौरुषेयत्वं सिद्धम्। अत एव

---

प्रमाण मानते हैं। स्वतः प्रमाण वेद ही को प्रबलप्रमाण मानने वाले परमवैदिक होनेसे इस प्रबंध में स्वयं अपने कहे हुए सब अर्थ वेदप्रतिपाद्य हैं ऐसा जनानेके लिये पहिले वेद को प्रमाणतया मानकर उस के अर्थ का निश्चय करनेके क्रमको 'वेदार्थ' इस वाक्य से कहते हैं।

जैसा ईश्वर सर्वदोष रहित और कल्याण गुणाकर होनेसे संपूर्ण पदार्थों में श्रेष्ठ हैं तैसा पुरुषनिर्मित न होनेसे और नित्य होनेसे वेद सब प्रमाणों में श्रेष्ठ हैं।

वेद पुरुषनिर्मित नहीं इत्यादि—'हे विरूप नित्यवाणी से' (ईश्वर को जान सक्ते हैं) इत्यादि श्रुति और 'जिस वेद से संपूर्ण भूतों की उत्पत्ति ज्ञात होती है ऐसे उत्पत्ति-नाश रहित इस वेदरूप दिव्य विद्या को आदि सृष्टि में परमात्माने प्रकट किया' इत्यादि स्मृति से कहा जाता है।

इन श्रुति—स्मृतियों से वेद का नित्यत्व कहे जाने से वेद का पुरुषनिर्मित नहीं होना सिद्ध हुआ। इससे ही भ्रांति, वंचना, भूल और अशक्ति रूप इन चार दो-

भ्रमविप्रलम्भप्रमादाशक्तिरूपदोषचतुष्टयसंभावनागंधराहितो भवति। पौरुषेयत्वं खलु तन्मूलं। अत एतदतिशयितं किंचिच्छास्त्रंनास्ति। अत एव—

'सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते।
वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम्॥'

इत्यैतिहासिकैः पौराणिकैश्चैककण्ठ्येनोक्तम्। एतदाधिक्यं सर्वमभिप्रेत्य खलु 'तेजसातिशयिता श्रुतिः' इति परांकुशसूरिभिरनुगृहीतम्। तदनुयायिनोऽभियुक्ताग्रेसरा भट्टार्य्याश्च 'आदौ वेदाः प्रमाणं' इत्यवदन्। अयं च 'वेदः' इत्यभिधीयते 'वेदयतीति वेद' इति व्युत्पत्त्या बुभुत्सूनामास्तिकानां स्वार्थप्रकाशकत्वात्। एवंरूपो वेदः प्रतिपाद्यार्थविशेषेण भागद्वयात्मकः। सोऽत्रोभयभागसामान्यवाचिना वेदशब्देन साकल्येनोच्यते। अर्थ

---

षों के संभावना मात्रसे रहित है। इस कारण इस वेद से परे कोई शास्त्र नहीं है।

इस कारण 'वेदशास्त्रसे परे शास्त्र नहीं एवं केशव से परे देवता नहीं इस बात को मैं भुज को उठाकर वारवार सत्य कहता हूं'। ऐसा इतिहासवेत्ता और पौराणिकोंने एक स्वर से कहा है।

इन संपूर्ण माहात्म्यों को विचार कर ही 'तेजोऽधिक श्रुति' ऐसा श्रीशठकोप सूरि जी अनुग्रह किये हैं। उनके अनुयायी परम आप्त श्रीपराशर भट्टार्य भी 'प्रथम प्रमाण वेद ही है' ऐसा कहे हैं।

इस को जाननेकी इच्छा वाले अस्तिकों को अपने अर्थ को प्रकाश करनेसे 'वेदयतीति वेदः' इस व्युत्पत्तिके अनुसार इस को 'वेद' कहते हैं। एवंभूत वेद प्रतिपाद्य अर्थ भेद से दो भागों में विभक्त है। वह भागद्वयरूप वेद इस सूत्र में उभयभाग का सामान्यबोधक 'वेद' शब्द से कहाजाता है।

**अर्थ इति** 'अर्थ' यह पद पूर्वभाग से कहेहुए कर्म और उत्तरभाग से क

इति। पूर्वभागप्रतिपाद्यकर्म उत्तरभागप्रतिपाद्यब्रह्म चोच्यते। पूर्वोत्तरमीमांसयोः 'अथातो धर्मजिज्ञासा' 'अथातो ब्रह्मजिज्ञासा' इति ह्युपक्रमः। अतो भागद्वयप्रतिपाद्यमाराधनरूपं कर्माराध्यवस्तु ब्रह्म च। कर्मणो भगवदाराधनत्वं 'स आत्मा अङ्गान्यन्या देवताः' इति अग्नींद्रादिसकलदेवताश्च भगवच्छरीराणीति शास्त्रेणोक्तत्वात्सिद्धम्। अमुमाकारं ज्ञात्वाग्नीन्द्रादिदेवतांतर्यामिसमाराधनत्वेनानुतिष्ठत्स्वस्य भगवदाराधनत्वं सुस्पष्टम्। अमुमाकारमजानंतस्तत्तद्देवतोद्देशेन ये पुनरनुतिष्ठंति तत्रापि कर्म वस्तुगत्या भगवदाराधने पर्यवस्यति। तदुक्तं—'ये यजंति पितॄन्देवान्ब्राह्मणान्सहुताशनान्। सर्वभूतांतरात्मानं विष्णुमेव यजंति ते॥' इत्युक्तं हि। 'येऽप्यन्यदेवताभक्ता यजंते श्रद्धयान्विताः। तेऽपि मामेव कौंतेय यजंत्यविधिपूर्वकम्॥' इति स्वयमेवावोचत्। अतः सर्वं

---

हेहुए ब्रह्म को कहता है। पूर्वमीमांसा का प्रारंभ 'अथातो धर्म जिज्ञासा' और उत्तर मीमांसा का प्रारंभ 'अथातो ब्रह्मजिज्ञासा से है।

इस कारण दोनों भागों का प्रतिपाद्य आराधन रूप कर्म और आराध्यरूप ब्रह्म है! 'वह आत्मा है और अन्य देवता अंग हैं' इस सूक्ति स आग्न इंद्रादि सकल देवता भगवान के शरीरभूत हैं ऐसा कहेजानेसे कर्म का भगवदाराधनत्व सिद्ध हुआ

इस आकार को जानकर अग्नि इन्द्रादि देवतांतर्यामी के समाराधनरूप से अनुष्ठान करनेवालों में इस का भगवदाराधनत्व सुस्पष्ट है। जो लोग इस आकार को नहीं जानकर उन उन देवतामात्र का उद्देश कर कर्मानुष्ठान करते हैं वह कर्म भी वस्तुगत्या भगवदाराधन में अंतर्गत होता है।., जो लोग पितर देवता ब्राह्मण और अग्नि की आराधना करते हैं वे भी सर्वभूतों के अंतर्यामी विष्णु का ही आराधना करते हैं ऐसा कहा है। 'और हे अर्जुन जो लोग अन्य देवताओं के भक्त हो श्रद्धापूर्वक आराधन करते हैं वे भी विधिरहित मेरा ही उपासना क.

प्रकारेणापि कर्मणो भगवदाराधनत्वं सिद्धम् । एवमाराधनरूपे कर्मण्याराध्यवस्तुब्रह्मणि च ज्ञाते त्याज्योपादेयसकलपदार्थानां ज्ञातुं शक्यत्वाद्भागद्वयार्थः कर्म ब्रह्म चेत्युक्तं, तत्कथमितिचेत्-कर्म बुभुक्षूणामैश्वर्यसाधनं, मुमुक्षुषु भक्तिनिष्ठानामुपासनाङ्गं, प्रपन्नानां कैंकर्यरूपं च भवति । एवंभूतकर्मस्वरूपे ज्ञाते अनन्तस्थिरफलब्रह्मप्राप्तिकामानामुपासकानामुपासनांगत्वेनोपादेयं, ऐश्वर्यार्थिनामुपादेयभूतेनाकारेण त्याज्यमिति ज्ञातुं शक्यम् । अनन्यसाधनानामनेन साधनीयस्यार्थस्याभावात्कैंकर्यरूपेणोपादेयं, उपासकानामुपादेयभूतेनाकारेण त्याज्यं भवतीति ज्ञातुं शक्यम् । यदा ब्रह्म ज्ञातव्यं तदा तत्स्वरूपरूपगुणविभूतीनां ज्ञातव्यत्वात् विभूतिभूतचेतनाचेतनस्वरूपं ज्ञातुं शक्यं, तत्रच ज्ञाना-

---

रते हैं' ऐसा स्वयं श्रीकृष्ण भगवान ने कहे हैं । इस कारण सर्व प्रकार से भी कर्म का भगवदाराधनत्व सिद्ध होता है ।

इस प्रकार आराधनरूप कर्म और आराध्यरूप ब्रह्म ये दोनों के जानने पर त्याज्योपादेयरूप सकल अर्था को जानसक्ते हैं इसालिये भागद्वय प्रतिपाद्य कर्म और ब्रह्म ऐसा कहागया ।

सो कैसे ऐसी आकांक्षा में - कर्म बुभुक्षुओं का ऐश्वर्य साधनरूप मुमुक्षुओं में भक्तों को उपासना का अंग रूप और प्रपन्नों को कैंकर्यरूप होता है । एवं प्रकार कर्म के स्वरूप को जानने पर अनंत स्थिर फल वाले ब्रह्म की प्राप्ति के कामनावाले उपासकों को उपासना के अंग रूप से कर्म उपादेय होता है और ऐश्वर्यार्थियों के उपादेयरूप ऐश्वर्यसाधनाकार से त्याज्य है ऐसा जानसक्ते हैं । उपायांतर रहित प्रपन्नों को इस कर्म से साधनयोग्य प्रयोजन के अभाव से कैंकर्य द्वारा उपादेय होता है और उपासकों के उपादेयरूप उपासनांगत्वाकाररूप से त्याज्य है ऐसा जान सक्ते हैं ।

जब ब्रह्म को जानना चाहते हैं तब उनका स्वरूप रूप गुण और विभूतियों का जानना आवश्यक होने से उनका विभूतिरूप चेतन अचेतन का स्वरूप जानाजास-

नन्दलक्षणचेतनस्वरूपवैलक्षण्येन हेतुनाऽऽगतत्वात्कैवल्यवेषश्च ज्ञातुं शक्यते। ब्रह्मणः शेषित्वप्राप्यत्वयोर्ज्ञातयोस्तदनुभवादयः पुरुषार्थ इति ज्ञातुं शक्याः।

तदुपास्यत्वशरण्यत्वयोर्ज्ञातयोस्तत्प्राप्तिसाधनविशेषौ ज्ञातुं शक्यौ। साध्यांतरसाधनांतराणां त्याज्यता, ब्रह्मणो निरतिशय-भोग्यता, अनन्यसाध्यत्वं तत्प्रकारतया परतंत्ररूपे स्वस्वरूपे च दृष्टे सुस्पष्टं ज्ञायते। एवचं सति भागद्वयस्य प्रतिपाद्यमाराधनरूपं कर्माराध्यवस्तु ब्रह्मेति वक्तुं न विरोधः। 'त्वदर्चाविधिमुपरि परिक्षीयते पूर्वभागः। ऊर्ध्वो भागस्त्वदीहागुणविभवपरिज्ञापनैस्त्वत्पदाप्तौ इति भट्टाचार्या आहुः। एवं भागद्वयप्रतिपाद्ययोरनयोरर्थयोर्निर्णयो नाम-कर्मस्वरूपांगफलादीनां ब्रह्मस्वरूपरूपगुणविभूत्यादीनां

---

क्ता है। उस विभूति में ज्ञानानंदलक्षण चेतन के स्वरूपवैलक्षण्य द्वारा आया हुआ कैवल्यवेष जानाजासक्ता है। ब्रह्म का शेषित्व प्राप्यत्व ये दोनों के जाननेपर भगवदनुभवादि को पुरुषार्थतया जानसक्ते हैं। ब्रह्म का उपास्यत्व शरण्यत्व ये दोनों के जाननेसे ब्रह्म की प्राप्ति और साधनविशेष जानाजासक्ता है। भगवान के शरीरतया परतंत्रभूत आत्मस्वरूप के जाननेपर ऐश्वर्यादि साध्यान्तर भक्त्यादि साधनांतर की त्याज्यता, ब्रह्म की अपरिमित भोग्यता और अनन्यसाध्यता जानीजाती है।

ऐसा होनेसे ही वेद के भागद्वयप्रतिपाद्य आराधनरूप कर्म और आराध्यरूप ब्रह्म है ऐसा कहना असंगत नहीं है। 'वेद का पूर्वभाग आपके पूजनबिधि का प्रतिपादन में समाप्त होता है और उत्तर भाग आप की चेष्टा गुण और विभूतियों के जनानेमें और तद्द्वारा आप के चरणारविन्दकी प्राप्तिमें समाप्त होता है ऐसा श्रीपराशरभट्टार्य स्वामीजी ने कहे हैं।

निश्चय करना. इत्यादि। एवं भागद्वय प्रतिपाद्य इन अर्थों को निश्चय करना माने – कर्म के स्वरूप, अंग और फल आदि, और ब्रह्म के स्वरूप रूप गुण विभूत्यादि को संदेह वैपरीत्य विना निश्चय करना।

संशयविपर्ययनिरासपूर्वकं निर्णयः । सच सकलशाखाप्रत्यय-न्यायेन सकलवेदान्तप्रत्ययन्यायेन च कर्त्तव्यः ।

तत्र सकलशाखाप्रत्ययन्यायो नामैकस्मिन् वाक्य एकोर्थ उक्तश्चेत्तस्याङ्गोपाङ्गानि साक्षाज्ज्ञातुं शाखान्तरेषु संचरित्वा तत्रोक्तेष्वर्थेषु ज्ञानं संपाद्य तेषामर्थानामन्योन्यविरोधं शम. यित्वा स्वाभिमतेनाङ्गिनोपसंहार्याणामर्थानामुपसंहारः । सकलवेदान्तप्रत्ययन्यायोनामैकस्मिन्वेदान्ते एकेन वाक्येनैकोर्थः प्रतिपन्नश्चेदन्येषु वेदान्तेषु संचरित्वा तत्रोक्तानामर्थानामन्योन्यविरोधो यथा न स्यात्तथा विषयविभागं कृत्वा स्वाभिमतेनार्थेनोपसंहार्याणामर्थानामुपसंहारः ।

अयंच महर्षीणामेव शक्यः इतरेषां तु दुःशक इत्युपबृंहणैरेव निश्चयः कर्तव्यः, तस्मात्तन्निर्णायकान्याह--स्मृतीतिहासपुराणैरिति । स्मृतयश्चात्रैर्मन्वत्रिविष्णुहारीतयाज्ञवल्क्यादि-

---

निश्चय करने के वखत सकलशाखाप्रत्ययन्याय और सकलवेदान्त प्रत्ययन्याय इन दोनों से कर्तव्य है ।

उनमें सकलशाखाप्रत्ययन्याय माने— एक वाक्य में एक अर्थ को कहने पर उस का अंगोपांगादियों को साक्षात् जाननेके लिये और शाखाओं में सर्वत्र वि. चारकर उन में कहेजाने वाले अर्थों में ज्ञान पैदा होकर उन अर्थों के अन्योन्य-विरोधों को नाश कर अपना अभिमत अंगी के साथ मिलनेयोग्य को मिलाना ।

सकल वेदांतप्रत्ययन्याय माने — एक वेदान्त में एक वाक्य एक अर्थ को कह. ने पर और वेदान्तों में विचारकर उन में कहेजानेवाले अर्थों का अन्योन्य विरोध नहीं होनेके लिये विषय विभाग कर अपने अभिमत अर्थों के साथ मिलनेयोग्य को मिलाना ।

यह काम महामति महर्षियों के विना औरों को अशक्य होनेसे इतिहासपुराण-रूप उपबृंहण लेकर ही निर्णय करना है । इस हेतु से उस अर्थ के निर्णय क. रनेवाले स्मृत्यादि को कहते हैं— स्मृतीतिहासपुराणों से इति ।

भिरभिहितानि धर्मशास्त्राणि। इतिहासाः पुरावृत्तप्रतिपादकाः श्रीरामायणभारतादयः। पुराणानि सर्गादिपञ्चलक्षणोपेतानि ब्राह्मपाद्मवैष्णवादीनि।

वेदार्थो निश्चेतव्य एतैरिति नियमोक्तिः, एतैर्विना स्वबुध्या निर्णयकरणेऽल्पश्रुतस्य विप्रतिपत्तेः संभवात् वेदकालुष्यहेतुः स्यादित्यभिप्रायेण। अयं च नियमः –

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतारिष्यति॥'

इति बार्हस्पत्य स्मृतौ महाभारतेचोक्तः।

एतदुपक्रमवाक्यप्रक्रियया पुरुषकारवैभवमारभ्याचार्याभिमानपर्यन्तमस्मिन्प्रबंधेऽनेनोक्ता वेदार्थाः सर्वे उपबृंहणेनैव निश्चिता इति ज्ञायते। अयमर्थस्तत्तदर्थनिरूपणसमये सम्प्रतिपन्नः।

---

स्मृति माने – आप्त मनु, अत्रि, विष्णु, हारीत और याज्ञवल्क्यादिकों से निर्मित धर्मशास्त्र। इतिहास माने – पूर्ववृत्तप्रतिपादक श्रीमद्रामायण महाभारतादि। पुराण माने - सृष्टि, प्रलय राजवंश, राजचरित्र और मन्वंतर इन को प्रतिपादन करनेवाले ब्राह्म, पाद्म, वैष्णव आदि।

वेदार्थ को इन से निश्चय करना इस नियम उक्ति–इन के बिना अपनी बुद्धिसे निश्चय करनेपर अल्पज्ञ पुरुष को विपरीत ज्ञान होकर वेद कालुष्यहेतु होगा ऐसा समझ कर कीगयी है। यह नियम इतिहास पुराणों से वेद के अर्थका निश्चय करे, नहीं तो हम को अपार्थ करवंचना करेगा ऐसा वेद अल्पज्ञ से डरता है। ऐसा बार्हस्पत्य स्मृति और महाभारत में कहा है।

इस उपक्रमवाक्यप्रक्रिया से पुरुषकार वैभव को लेकर आचार्याभिमान पर्यंत इस प्रबंध में इन से कहे जानेवाले संपूर्ण वेदार्थ उपबृंहण अर्थात् इतिहासपुराणों को लेकर ही निश्चय करते हैं ऐसा भान होता है। इस बात को उन उन अर्थों के कहनेके स्थलोमें स्पष्टतया जान सक्ते हैं।

**स्मृत्या पूर्वभागार्थो निर्णीयते, अन्याभ्यां द्वाभ्यामुत्तरभागार्थो निर्णीयते ॥ २ ॥**

---

एवमनेन वाक्येन सकलप्रमाणेषु वेद एव प्रबलप्रमाणमित्यर्थः, तदर्थनिर्णायकक्रमश्चोक्तः ।

अत्र केन वाक्येन कस्यार्थो निर्णीयते इत्यत आह—स्मृत्येत्यादि ।

यथोपबृंह्यवेदस्य प्रतिपाद्यार्थविशेषेण भागभेदो जातस्तथोपबृंहणानामपि प्रतिपाद्यविशेषेण भेदोऽस्ति । तत्र स्मृतीनां पूर्वभागोपबृंहणत्वेनेतिहासादीनामुत्तरभागोपबृंहणत्वेन निर्मितत्वात् तत्तदुपबृंहणैरेव तत्तद्भागार्थो निश्चेतव्यः ।

---

तत्र निर्णीयते स्मृत्या पूर्वभागार्थगह्वरम् ॥
इतिहासपुराणाभ्यामुत्तरार्धार्थकीर्तनम् ॥ २ ॥

तथाच—इस सूत्रसे सकल प्रमाणों में वेद ही प्रबल प्रमाण है और उस के अर्थनिर्णय करनेका क्रम यह है ऐसा कहागया ।

इन उपबृंहणों में किस से किस भाग का अर्थ निश्चय करना चाहिये ऐसी जिज्ञासा में कहते हैं—'स्मृति से' इत्यादि ।

स्मृति से पूर्वभागार्थ को निश्चय करते हैं, शेष दोनों से उत्तरभागार्थ को निश्चय करते हैं

जैसे व्याख्येय ( व्याख्याकरने योग्य ) वेद का प्रतिपाद्य अर्थों के भेद से ही भागों का भेद हुआ वैसे ही उपबृंहण (व्याख्यानों) का प्रतिपाद्यविशेष से भेद होता है । उन में स्मृति पूर्वभाग का व्याख्यानरूप, इतिहासादि उत्तर भाग का व्याख्यानरूप बनाया गया है । उन उन उपबृंहणों को लेकर ही उस उस भाग का अर्थ निश्चय कियाजाता है ।

तस्मादाचारव्यवहारप्रायश्चित्तानां प्रतिपादकधर्मशास्त्रैः कर्मप्रतिपादकपूर्वभागार्थो निश्चेतव्यः। भगवत्स्वरूपरूपगुणविभूतिचेष्टितानां प्रतिपादकाभ्यामन्याभ्यामितिहासपुराणाभ्यां द्वाभ्यां ब्रह्मप्रतिपादकोत्तरभागार्थो निश्चेतव्य इत्याह।

एवमुभयविधोपबृंहणैः क्रियमाण उभयभागार्थनिर्णयो नाम—अनधीतशाखार्थानां च प्रतिपादकैरेतैरधीतशाखार्थानामपेक्षितविशेषैः सह निश्चयः।

स्मृतिषु ब्रह्मप्रतिपादकांशस्येतिहासादिषु कर्मप्रतिपादकांशस्य च सत्वेपि स्मृतिषु ब्रह्मप्रतिपादनस्य कर्मणां तदाराधनरूपत्वज्ञापनार्थत्वात्, इतिहासपुराणेषु कर्मप्रतिपादनस्य कर्मणामुपासनांगत्वज्ञापनार्थत्वाच्चैवं विभागो नानुपपन्नः।

'प्रायेण पूर्वभागार्थपूरणं धार्मशास्त्रतः।
इतिहासपुराणाभ्यां वेदान्तार्थः प्रकाश्यते॥' इत्युक्तम्।

---

इस हेतु से आचार व्यवहार और प्रायश्चित्तादियों को प्रतिपादन करनेवाले धर्मशास्त्रों से कर्मप्रतिपादक पूर्वभाग का अर्थ निश्चय कियाजाता है। भगवत्स्वरूप रूप गुण विभूति चेष्टितों को प्रतिपादन करनेवाले इतिहास और पुराणों से ब्रह्म प्रतिपादक उत्तरभाग का अर्थ निश्चय कियाजाता है।

एवं उभयविध उपबृंहणों से उभय भागार्थ का अर्थ निश्चय करना माने—अध्ययन नहीं कियाहुआ और शाखोओं को प्रतिपादन करनेवाले इन से अध्यपन कियाहुआ शाखाओं के अर्थों को अपेक्षित विशेषों के साथ निश्चय करना।

यद्यपि स्मृतियों में ब्रह्म का प्रतिपादन और इतिहासों में कर्म का प्रतिपादन होने पर भी स्मृतियों में ब्रह्मप्रतिपादन—कर्मों का ब्रह्माराधनरूपत्व को जनानेके लिये। इतिहासों में कर्म प्रतिपादन—कर्मों के उपासनांगत्व को जनानेके लिये। अत एव ऐसा कहना असंगत नहीं।

'प्रायः धर्मशास्त्र से पूर्वभाग का अर्थ पूर्ण होता है, इतिहासपुराणों से वेदांतार्थ पूर्ण होता है ऐसा कहा है॥

## अनयोरुभयोर्मध्ये इतिहासः प्रबलः ॥ ३ ॥

ननूत्तरभागार्थोपबृंहणद्वयस्य मिथस्तारतम्यमस्ति, उतो-भयमपि तुल्यमित्यत आह–अनयोरुभयोरिति ।

यद्वैकभागविषयोपबृंहणद्वय इदं प्रबलमिति ज्ञापनीयमिति स्वयमेव मनसि विचार्याह–अनयोरुभयोरिति ।
श्रेष्ठभागोपबृंहणत्वप्रयुक्तसाहचर्ययोरुभयोर्मध्ये प्रामाण्ये पुराणादितिहासस्य प्राबल्यमस्तीत्यर्थः ।

पुराणादितिहासस्य प्राबल्यं परिग्रहातिशयः, मध्य-स्थत्वं, कर्तुराप्ततमत्वमित्येतैः। अत्र परिग्रहो नाम-शास्त्रपरिग्रहः
'वेदवेद्ये परे पुंसि जाते दशरथात्मजे।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना॥
'मतिमंथानमाविध्य येनासौ श्रुतिसागरात् ।
जगद्धिताय जनितो महाभारतचन्द्रमाः॥'

---

इतिहासः प्रधानः स्यादितिहासपुराणयोः ॥ ३ ॥

इन दोनों में इतिहास प्रबल है ॥ ३ ॥

उत्तरभागोपबृंहण भूत इतिहासपुराणों में तारतम्य है या नहीं इस जिज्ञासा में कहते हैं–इन दोनों में इति ।

अथवा एक भाग को प्रतिपादन करने वाले दो उपबृंहणों में यह प्रबल है ऐसा दिखाना आवश्यक समझकर कहते हैं—इन दोनों में इति । श्रेष्ठभाग का उपबृंहण होनेसे आया हुआ तुल्यता वाले इन दोनों में प्रामाण्य की अपेक्षा होनेपर पुराणापेक्षया इतिहासका प्राबल्य हैं ।

पुराणापेक्षया इतिहास का प्राबल्य–परिग्रहातिशय, मध्यस्थता और कर्ता की आप्ततमता है । इन में परिग्रह माने–शास्त्रपरिग्रह ।

'वद से वेद्य परमात्मा दशरथ पुत्ररूप से जन्म लेनेपर वह वेद वाल्मीकिमहर्षि द्वारा साक्षात् रामायण रूपसे हुआ ।'

'जिस व्यासजीने वेदरूप समूद्र को बुद्धिरूप मंथनदण्ड द्वारा मथकर जगत हितके लिये महाभारतरूप चंद्रमा को उत्पन्न किया ।'

'व्यासवाक्यजलौघेन कुधर्मतरुहारिणा।
वेदशैलावतीर्णेन नीरजस्का मही कृता॥'
'बिभेति गहनाच्छास्त्राज्जनस्तीव्रादिवौषधात्।
भारतः शास्त्रसारोऽयमतः काव्यात्मना कृतः॥
'विष्णौ वेदेषु विद्वत्सु गुरुषु ब्राह्मणेषु च।
भक्तिर्भवति कल्याणी भारतादेव धीमताम्॥
इत्यादिभिः पुराणविशेषेष्वितिहासः श्लाघितः।

मध्यस्थता नाम—

'यस्मिन्कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा।
तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते॥'

इति सर्वपुराणस्य प्रवर्तको ब्रह्मा, तस्य यस्मिन्कल्पे गुणत्रये यो गुणः प्रचुरः, तादृशगुणानुगुणदेवताया माहात्म्यस्य तत्पुराण उक्तत्वात् पक्षपाति भवति पुराणम्। अस्य

---

'वेदरूप पर्वत से निकलने वाला कुधर्मरूप वृक्षों को उखाडने वाला व्यासवाक्य-रूप जलप्रवाह से भूमि रजोरहित की गयी।'

'मनुष्य तीव्र औषध के तरह गहनशास्त्र से डरता है, इस कारण शास्त्र का सार भूत यह भारत काव्यरूप से किया गया।'

'बुद्धिमानों को विष्णु, वेद, विद्वान्, गुरु और ब्राह्मणों में कल्याणकारी भक्ति भारत से ही होती है।'

इत्यादि से पुराणापेक्षा इतिहास प्रशंसित है।

मध्यस्थता माने—'पूर्वकाल में ब्रह्मा से जिस कल्प में जो जो पुराण कहा गया उस उस का माहात्म्य उसके स्वरूपसे वर्णन कियाजाता है।' ऐसा सर्वपुराणों के प्रवर्तक ब्रह्मा जिस कल्प में गुणत्रय में जो गुण अधिक होता है उस गुण के अनु-सार देवता के माहात्म्य को पुरणों में कहे हैं। इस कारण पुराण पक्षपाती होते हैं,

तु लौकिकवैदिकसकलपदार्थनिर्णयेऽधिकृतत्वात्क्वचिदपि विषये पक्षपाताभावः ।

कर्तुराप्ततमत्वं नाम—प्रबंधकर्तुर्यथार्थदर्शनसामर्थ्य—यथार्थवादित्वाभ्यामत्यन्तवैशिष्ट्यम् ।

'अथेतिहासपुराणयोरितिहासा बलीयांसः, कुतः—तेषां परिग्रहातिरेकात्, सर्वत्र माध्यस्थ्ये भूतार्थप्रतिपादनात्, वचनसौष्ठवेन, कर्तुराप्ततमत्वावगतेश्च' इत्यारभ्य परिग्रहातिशयादिभिः पुराणादितिहासस्य प्राबल्यं सामान्येन तत्त्वनिर्णये उद्यक्कोंडाराचार्यैः ।

'महाभारतं हि परिग्रहविशेषवत्तमम्' इत्यारभ्य 'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्' इति लौकिकवैदिकसकलार्थनिर्णयाधिकृतत्वेन क्वचिदप्यपक्षपातित्वात्पुराणेभ्यो बलवत्तरम्' इत्यंतं परिग्रहातिशयान्माध्यस्थ्याच्च पुराणेभ्य इतिहास-

---

ऐसा न होकर लौकिक वैदिक सर्व अर्थों के निर्णय करने में प्रवृत्त होनेसे इतिहास किसी विषय में पक्षपात नहीं है ।

कर्ता की आप्ततमता माने—प्रबन्धकर्ता यथार्थदर्शनसमर्थ और यथादृष्टार्थवादी होना । 'अब इतिहास—पुराणों में इतिहास प्रबल है । कारण उन के बहुत लोगों के परिग्रह करनेसे, सर्वत्र मध्यस्थ हो भूतकाल के अर्थ का प्रतिपादन करनेसे, वचनसौंदर्य से और कर्ता के आप्ततम होनेसे' ऐसा प्रारम्भ कर परिग्रहातिशय से पुराण की अपेक्षा इतिहास का प्राबल्य तत्वनिर्णय ग्रन्थ में उद्यक्कोंडाराचार्य ने सामान्यरीति से कहा है ॥

'महाभारत परिग्रहातिशय से श्रेष्ठ होता है' ऐसा आरम्भ कर 'हे पाण्डव धर्म अर्थ, काम और मोक्ष के विषय में जो इस भारत में है सो अन्यत्र भी है । जो इस में नहीं है सो कहीं भी नहीं है ।'

ऐसा लौकिक वैदिक सकल अर्थों के निश्चय करने में प्रवृत्त होने से, किसी

## तेन स पूर्वं भवति ॥ ४ ॥

विशेषस्य महाभारतस्य विद्यमानं प्राबल्यं श्रीसहस्रनामभाष्ये श्रीभट्टार्यैरपि प्रत्यपादि ।

तत्प्राबल्यं संघटयति—तेनेति ।

तादृशप्राबल्येन 'इतिहासपुराणं पंचमम्' 'इतिहासपुराणाभ्याम्' इति च श्रुतिस्मृत्योरुभयोरेकत्रोपादानसमये इतिहासः पुराणात्पूर्वमुक्तः ।

द्वंद्वसमासे अल्पाच्तरं अभ्यर्हितं वा पूर्वं स्यात्, तत्राल्पाच्तरत्वाभावेऽपि पूर्वनिपातोऽभ्यर्हितत्वेन। एतदभ्यर्हितत्वस्य मूलमेतत्प्राबल्यमिति तात्पर्यम् ।

अथवा 'स्मृतीतिहासपुराणैः' इति भागद्वयोपबृंहणेषु समस्तत्वेनोच्यमानेषु—इतिहासाश्च पुराणानि चेतिहासपुराणानि

---

**प्रधानत्वाच्च सर्वत्रेतिहासः पूर्वसंस्थितः ॥ ४ ॥**

विषय में पक्षपाती न होनेसे पुराणों की अपेक्षा भारत प्रबल है' ऐसा सहस्रनाम भाष्य में श्रीपराशर भट्टार्य प्रतिपादन किये हैं ॥ ३ ॥

इतिहास की प्रबलता को साधन करते हैं—उस से इत्यादि ।

उससे वह पहिले कहागया है ॥ ४ ॥

उस से—प्रबल—होनेसे ' इतिहास और पुराण पांचवां ' और ' इतिहास और पुराणों से ' ऐसा श्रुतिस्मृति यों में दोनों का इकट्ठा कहनेके समय इतिहास पुराण के पहिले कहा गया ।

द्वंद्वसमास में अल्प स्वरवाला या श्रेष्ठवाचक पद पहिले होता है। यहांपर अल्प स्वरवाला नहीं होनेपर भी श्रेष्ठ होनेसे इतिहास पहिले कहा गया ।

इस श्रेष्ठता का कारण उस का प्राबल्य है । अथवा ' स्मृतीतिहासपुराणों से' इति भागद्वय उपबृंहणों को इकट्ठा कहने के समय ' इतिहासाश्च पुराणानि च इतिहासपुराणानि , स्मृतयश्च इतिहासपुराणानि च स्मृतीतिहासपुराणानि ' इति

स्मृत्यर्थमितिहासपुराणानि चेति स्मृतीतिहासपुराणान्यपि, अस्य समासस्य विवक्षितत्वादल्पाच्तरपुराणात्पूर्वमितिहास उक्त इति तात्पर्यम् 'अनयोरुभयोः' इत्यादिनाऽऽहेति स्यात् ।

अस्यां योजनायां 'तेन स पूर्वं भवति' इत्यस्य तेन—प्राधान्येन । 'इतिहासपुराणैः' इत्यत्र पुराणात्पूर्वमितिहास उक्त इत्यर्थो भवति ।

एवं वेदार्थनिर्णयः कर्तव्यः, तत्र च तदुपबृंहणैरेव कर्तव्यः, तत्र च पूर्वोत्तरभागोपबृंहणान्येतानि, उत्तरभागोपबृंहणेष्वितिहासपुराणेष्वितिहासः प्रबल इति चोक्तत्वात्, उपरि स्वेन वक्ष्यमाणानामर्थानां प्रमाणव्यवस्थामकरोत् ॥

पुरुषकारवैभवः ।

प्रथमं 'वेदार्थ' इत्यादिना वेदतदर्थतदुपबृंहणानां साकल्येनोपादानं कृत्वा तादृशवेदस्य भागविभागत उपबृंहणविभागानां कृतत्वेऽपि चेतनोज्जीवनस्यापेक्षितार्थान्वक्तुमधिकृतत्वात्, तस्य

---

लोकाचार्यस्वामी जी के विवक्षित होनेसे अल्प स्वरवाले पुराण के पहिले इतिहास के कहनेके तात्पर्य को ' इन दोनों में ' इत्यादि से कहते हैं ।

तथा च—वेदार्थ निर्णय उपबृंहणों से ही करना चाहिए । उन में पूर्वभाग और उत्तरभाग के उपबृंहण ये हैं , उत्तर भागोपबृंहण इतिहासपुराणों में इतिहास प्रबल है , ऐसा कहनेसे आगे लोकाचार्यस्वामीजी से कहेजाने वाले अर्थों का प्रमाण दिखाये हैं ।

पुरुषकारवैभव ।

प्रथम वेदार्थ इत्यादिसे वेद तदर्थ तदुपबृंहणों को समग्र कहकर वेद का भाग-विभाग और उस का उपबृंहण विभाग किये हैं, तौभी चेतनों के उज्जीवन के लिये अपेक्षित अर्थों को कहने में प्रवृत्त होने से, वे अर्थ पूर्व भाग

## इतिहासश्रेष्ठेन श्रीरामायणेन

च पूर्वभागवेद्यत्वाभवेनोत्तरभागवेद्यत्वात्, पूर्वभागे मुमुक्षूणां ज्ञातव्यांशस्य सत उत्तरभागार्थानां स्वरूपोपायपुरुषार्थानां प्रतिपादनस्थलेषु तत्तदनुगुणत्याज्योपादेयकथनमुखेन ज्ञाप-यितुं शक्यत्वाच्चोत्तरभागार्थनिर्णये प्रवृत्तः, तत्र च भगवत्स्वरू-परूपगुणविभूतीनां भगवदुपासनादीनां च विस्तरेण प्रति-पादनस्थलेषु सारासारविवेकपूर्वकं तात्पर्यार्थान् संगृह्य संशय-विपर्ययराहित्येन चेतनप्रतिपत्तियोग्यान् प्रतिपादयत्युपरि ।

तत्र प्रथममुत्तरभागोपबृंहणद्वये प्राबल्येनोक्तयोरितिहासयोः श्रीरामायणस्य प्राबल्यं प्रकाशयन् तत्प्रतिपाद्यविशेषमाह— इतिहासश्रेष्ठेनेत्यादिना ।

---

## इतिहासप्रधानेन श्रीमद्रामायणेन च ॥

से जाननेके योग्य न होकर उत्तरभाग से जाननेके योग्य होनेसे, पूर्वभाग में मुमुक्षुके ज्ञातव्य अंश उत्तरभागार्थ—स्वरूप, उपाय और पुरुषार्थ के प्रतिपा-दन करने के स्थलों में तत्तदनुगुण त्याज्योपादेय कथन द्वारा जनानेके योग्य हो-नेसे, उत्तरभागार्थ निर्णय में प्रवृत्त हुए । उसमें भगवत्स्वरूप रूप गुण विभूति और भगवदुपासनादियों को विस्तार पूर्वक प्रतिपादन करने के स्थलों में सारासार विवेक पूर्वक तात्पर्यार्थों को संग्रह कर संशय और विपरीत ज्ञान विना चेतनों के ज्ञान का विषय होनेके लिये कहते हैं ॥ ४ ॥

उस में पहिले उत्तरभागोपबृह्मणरूप इतिहास–पुराणों में प्रबलतया कहेहुए इतिहासों में श्रीरामायण की प्रबलता को प्रकट करते हुए तत्प्रतिपाद्य विशेष को कहते हैं—इतिहास श्रेष्ठ इत्यारभ्य ।

इतिहासश्रेष्ठ श्रीरामायण से कारागार वास कर्त्री का वैभव कहा जाता है ॥५॥

## कारागृहवासकर्त्र्या वैभव उच्यते ॥ ५ ॥

---

श्रीरामायणस्येतिहासश्रेष्ठत्वं—

'वाल्मीकये महर्षये संदिदेशासनं ततः ।
ब्रह्मणा समनुज्ञातः सोप्युपाविशदासने ॥'

इति सकललोकपितामहेन ब्रह्मणा संभावितेन भगवता श्रीवाल्मीकिना प्रणीतत्वात्,

'न ते वागनृता काव्ये काचिदत्र भविष्यति।'

इति ब्रह्मणानुगृहीतत्वेनात्रचोक्तानां सर्वेषामर्थानां यथार्थत्वात्,

'यावद्रामायणकथा लोकेषु प्रचरिष्यति।'

इति सकललोकपरिग्रहस्य सत्वाच्च-इतिहासांतरेभ्यः प्रबल-प्रमाणं भवति । उक्तश्चायमर्थो मध्यश्रीवीथीभट्टार्यैः--तत्वत्रय-प्रबंधे प्रमाणाधिकारे ।

---

## कारागृहनिवासिन्याः सीताया वैभवः स्मृतः ॥ ५ ॥

श्रीरामायण की इतिहास श्रेष्ठता ' वाल्मीकि महर्षि को ब्रह्मा जी आसन दिये हैं । ब्रह्माजी की अनुज्ञा पाकर वह आसन में बैठे हैं ।' इति सर्वलोकपितामह ब्रह्मा से संभावित होकर श्रीवाल्मीकि महर्षि श्रीरामायण को बनानेसे ,

'इस रामायणरूप काव्य में आपकी एक भी बात असत्य नहीं होगी' ।
ऐसा ब्रह्माजी के अनुग्रह करनेसे इस में कहे हुए सब अर्थ सत्य होनेसे ,

' जहांतक रामायण की कथा का लोक में प्रचार रहेगा '

इति सकल लोकपरिगृहीत होनेसे , अन्य इतिहासों की अपेक्षा श्रीरामायण ही प्रबल प्रमाण होता है । इस विषय को मध्यश्रीवीथी भट्टार्य तत्वत्रयप्रबंध के प्रमाणाधिकार में कहे हैं ।

किंच 'वेदवेद्ये परे पुंसि' इत्यादिरीत्या यथा सर्वस्मात्परः सर्वेश्वरः संसारिचेतनरक्षणार्थमितरसजातीयोऽवततार, तथा सर्वप्रमाणोत्कृष्टो वेदश्च तदवतारगुणचेष्टितप्रतिपादनमुखेन संसारिणां तदाश्रयणरुचिमुत्पाद्य रक्षितुं श्रीरामायणरूपेणावातरदित्युक्तत्वादस्य वैभवः संप्रतिपन्नो हि ।

लक्ष्म्या इत्यनुक्त्वा 'कारागृहवासकर्त्र्या' इत्युक्तं तस्या दयातिशयं प्रकाशयितुम् । देवदेवदिव्यमहिष्याः स्वस्या उत्कर्षं कारागृहवासस्यापकर्षं चापश्यंती देवस्त्रीणां बंधनं निवारयितुं स्वयं बंधनेऽतिष्ठद्दयापारवश्यादेव। प्रजायां कूपे पतंत्यां सह पतंती मातेवैतच्चेतनपतनस्थाने संसारे स्वयमपि सहैव जनित्वैतैरनुभूयमानं क्लेशमनुभूय रक्षति ।

तस्मान्निरुपाधिकमातृत्वसंबंधस्य तत्प्रयुक्तनिरतिशयवात्सल्यस्य च प्रकाशकोयम् ।

---

और 'वेदवेद्य परम पुरुष' इस वचन से सर्वस्मात्पर सर्वेश्वर संसारीचेतनों की रक्षाके लिये मनुष्य रूप से अवतीर्ण होनेपर सब प्रमाणों से उत्कृष्ट वेद. उस अवतार के गुण चेष्टितों के प्रतिपादन द्वारा श्रीरामावतार के आश्रयणरुचि को संसारियों में उत्पादन कर रक्षा करनेके लिये श्रीरामायण रूप से अवतीर्ण हुआ ऐसा कहेजानेसे इस की श्रेष्ठता सिद्ध हुई !

सूत्र में महालक्ष्मी नहीं कहकर 'कारागार में वास करने वाली' ऐसा कहने का अभिप्राय लक्ष्मीजी के अतिशय दया को प्रकट करनेके लिये । देवदेव दिव्यमहिषी रूप अपने वैभव को, कारागार वास रूप नीचता को भी न देखकर देवस्त्रियों को कारागार वास से मुक्त करनेके लिये आपही कारागार में वास करना दया का ही कार्य है । बालक के कूप में गिरनेपर उस के संग कूदकर निकालनेवाली माताके सदृश यह चेतनके गिरे हुए इस संसार में आप स्वयं जन्म लेकर इन के दुःखों को आप भी भोगकर रक्षा करनेसे निरुपाधिक मातृत्व संबंध से होनेवाले अवधिरहित वात्सल्य गुण का प्रकाशक है ।

तादृशगुणाधिक्यप्रकाशनार्थं श्रीपरांकुशैरपि 'असहायकारागारे प्रसिद्धिं प्रापितायाः शुकभाषिण्याः' इत्यभिहितम्। तेषां दिव्यसूक्तिरेवास्येवं वक्तुं मूलम्। कारागृहवासस्यापकर्षः कर्मनिबंधनत्वे हि, आश्रितदेवस्त्रीबंधविमोचनार्थं स्वानुग्रहेण स्वेनैव बलात्कारेण कृतत्वादुत्कर्षहेतुत्वमेव। संसारिभिः सहाविशेषेण गर्भे वसित्वा जायते–इतीदं 'बहुजन्मविशिष्टतेजोविशिष्टः' इत्युक्तरीत्या सर्वेश्वरस्य तेजस्करं भवति कर्मनिबंधनत्वाभावेनानुग्रहनिबंधनत्वात्। एवं च सति – अयं चानुग्रहनिबंधनत्वादस्यास्तेजस्करो भवति। अयं रावणबलात्कारेणागत इति मन्यमाना एतच्छक्तिविशेषमजानंतः क्षुद्राः। 'शीतो भव' इत्युक्तवती 'नष्टो भव' इति वक्तुं नासमर्था।

अतोऽयं स्वानुग्रहेण पररक्षणार्थं कृतो व्यापारः। तस्मादयमेवास्या दयादिगुणानां प्रकाशक इत्यभिप्रायेण 'कारागृहवास-

---

इस गुणाधिक्य को प्रकट करनेके लिये ही परमाचार्यभूत श्रीशठकोप सूरि 'क्रूर कारागार में वास करनेवाली ऐसा प्रसिद्ध शुकवाणी' ऐसा कहे हैं। उन का दिव्य सूक्ति ही लोकाचार्यस्वामीजी का इस प्रकार कहनेका कारण है।

कारागार वास की नीचता कर्म मूल होनेसे ही होती है। आश्रित देवस्त्रियों को कारागार वास से मुक्त करनेके लिये अपने अनुग्रह से स्वयमेव कारा गार में वास करना उत्कर्षता का ही हेतु है। संसारियों के समान गर्भ में वास कर जन्म लेना 'बहुत जन्म लेकर तेजस्वी होते हैं' ऐसा सर्वेश्वर को तेज. स्कर होनेका कारण कर्म निबंधन विना अनुग्रह मूल होनेसे ही है। ऐसा होनेपर यह भी अनुग्रह मूल होनेसे लक्ष्मीजी को तेजस्कर होता है। इस को रावण के बलात्कार से आया हुआ समझने वाले लक्ष्मीजी के शक्ति को न जाननेवाले क्षुद्र हैं। 'शीतल हो' ऐसा कहनेवाली 'नष्ट हो' ऐसा नहीं कहसकती थीं क्या?

तस्मात् यह कारागार वास अपने अनुग्रह से पररक्षणार्थ करनेसे यह ही

श्रीमहाभारतेन दौत्येन गतवतो वैभव उच्यते ॥ ६ ॥

---

कर्त्र्यो ' इत्यवोचन् । श्रीरामायणं सर्वमस्या वैभवं प्रतिपादयतीति —

' काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् ।'

इति भगवान् वाल्मीकिः स्वयमेव मुखपत्रलेखनमकरोत् । ' श्रीमद्रामायणमपि परं प्राणिति त्वच्चरित्रे ' इति भट्टार्याः ॥

अनन्तरं महाभारतप्रतिपाद्यमाह — महाभारतेनेत्यादिना ।

' कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत् ॥'

' एवंविधं भारतं तु प्रोक्तं येन महात्मना ।
सोयं नारायणः साक्षाद् व्यासरूपी महामुनिः ॥'

---

महाभारतग्रंथेन दूतत्वेन गतस्य हि ॥
उपायस्य हरेरेव वैभवः सम्यगीरितः ॥६॥

इनके दयादिगुणों को प्रकाशक है ऐसा समझकर श्रीलोकाचार्य ' कारागार में वास करनेवाली' कहे हैं । सम्पूर्ण श्रीरामायण इनके वैभव को कहता है , इस बात को

' महाकाव्य श्रीरामायण संपूर्ण सीताजी का महच्चरित्र है ।'

ऐसा वाल्मीकि भगवानने स्वयमेव कहा है । ' श्रीमद्रामायण भी आप के चरित्र प्रतिपादन करने में जीता है ' ऐसा भट्टार्य स्वामी कहे हैं ।

अनंतर महाभारत के प्रतिपाद्य को कहते हैं—महाभारत से इत्यादि ।

श्रीमहाभारत से दौत्य करने वाले का वैभव कहा जाता है ॥ ६ ॥

'कृष्णद्वैपायन श्रीव्यासजी को स्वयं प्रभु नारायण समझो, हे मैत्रेय ! भूमि में भारत को करनेवाला और कौन होगा ।

'इस प्रकार के भारत को जिस महात्माने कहा वह व्यासरूपी महामुनि साक्षात् नारायण ही हैं ।'

इति भगवदावेशावतारत्वेन 'स होवाच व्यासः पाराशर्यः' इत्याप्ततमत्वेन च प्रसिद्धेन श्रीवेदव्यासेन भगवता—

'वेदानध्यापयामास महाभारतपंचमान् ।'

इति रीत्या पंचमवेदत्वेन प्रणीतं, अनेकपुराणप्रशस्तं महाभारतं च श्रीरामायणतुल्यतया प्रबलप्रमाणम् । इदं च मध्यवीथीभट्टार्यैरुक्तम् । भट्टार्यैश्च श्रीसहस्रनामभाष्योपोद्घाते श्रीरामायणवन्महाभारतमपि शरणमित्युक्तम् ।

सर्वेश्वरस्येत्यनुक्त्वा 'दौत्येन गतवतः' इत्युक्तिस्तस्याश्रितपारतंत्र्यं प्रकाशयितुम् । देवदेवस्य स्वस्योत्कर्षं क्रियमाणकृत्यस्यापकर्षं चापश्यन् पाण्डवनिमित्तं कण्ठे पत्रिकां बध्वा दौत्येनागमत्प्रणतपारतंत्र्यरुचिविवशः सन्नेव हि । इदं चास्याश्रयणसौकर्यापादकस्वभावनिदानवात्सल्यादीनां सर्वेषां प्रकाशकं भवति । अस्मिन् गुणाधिक्ये विद्धः 'अमुकदूत इति वक्तुं योग्यत-

---

इस प्रकार भगवदावेशावतार, 'वह पराशर के लडके व्यासमहर्षि कहते' हैं ऐसा आप्ततमतया प्रसिद्ध श्रीवेदव्यास भगवानने –

'पांचवां वेद महाभारत के साथ वेदों को पढाया'

इसी उक्ति के अनुसार पञ्चम वेदतया रचा है । और अनेकपुराण प्रशस्त महाभारत भी श्रीरामायण के सदृश ही प्रबल प्रमाण है । यह विषय को मध्यश्रीवीथी भट्टार्य स्वयं कहे हैं । और पराशर भट्टार्य श्रीसहस्रनामभाष्योपोद्घात में 'श्रीरामायण के सदृश महाभारत प्रमाण है' ऐसा कहे हैं ।

सर्वेश्वर न कहकर 'दुतकृत्य करनेवाले' ऐसा कहना–उन के आश्रितपारतंत्र्यगुण को प्रकाश करनेके लिये। देवदेवरूप अपनी महिमा और क्रियमाण व्यापार की नीचता को भी न देखकर पांडवों के लिये कंठ में पत्र बांधकर दूतकृत्य करना प्रणतपारतंत्र्यरुचि के परवश होकर ही है । यह इन का आश्रयणसौकर्यापादक स्वभाव वात्सल्यादि सर्वगुणों का प्रकाशक है । इस गुणाधिक्य में विद्ध होकर ही कहलाने का दुत ऐसा कहागया' इति । 'छत्रपति राजाओं के बीच में जानेवाले'

याऽवस्थितः' इति 'छत्राधिपतिमध्ये गच्छन् दूत' इति च श्री परकालसूरिरभ्यधात्। तद्दिव्यसूक्तिरस्यैवं वक्तुं मूलं, कथितस्य कथनमेव ह्येतेषामुत्कर्षः। दौत्येन गमनमपकर्षः स्यात्-कर्मवश्यतयागतं चेत्, ऐच्छिकमाश्रितविषये क्रियमाणं नैच्यं सर्वमुत्कर्षोपयुक्तं भवति। 'स उ श्रेयान् भवति जायमानः' इति परार्थत्वात्तेजस्करमिति श्रुत्युक्तं जन्म परार्थं स्वेच्छया क्रियमाणं सर्वमस्य तेजस्करमित्यस्योपलक्षणम्। एतत्कृतदौत्यं मांद्यहेतुत्वेन जानंतो बुद्धिभ्रष्टेषु शिरोमणयः।

बुध्यवधिनिष्ठानां 'कीदृशम्' इति मोहहेतुतया वर्तते। एवंभूतस्यैतत्स्वभावोत्कर्षस्य प्रकाशनार्थं 'दौत्येन गतवत' इत्युक्तम्। महाभारतस्य सर्वस्यैतदाधिक्यप्रतिपादकत्वेन तत्परत्वादेव हि महाभारतकथां वक्तुमारभमाणः—

---

दूत ऐसा परकालसूरि कहे हैं। वह श्रीसूक्ति श्रीलोकाचार्यस्वामी के कहनेका मूल है, कहेहुए को कहना ही इन आचार्यों की श्रेष्ठता है। दूतकृत्य की नीचता कर्ममूल होनेसे ही, इच्छा से आश्रितविषय में किये जानेवाले समस्त नीचकृत्य उत्कर्ष का ही मूल है। 'वह परमात्मा जन्म लेते हुए श्रेष्ठ होता जाता है' इस तरह परार्थ जन्म लेनेसे तेज बढता है ऐसा श्रुति प्रतिपादन करती है, इस से परार्थ स्व इच्छा से क्रियमाण समग्र कृत्य इन को तेजस्कर है। इन के दूतकृत्य को निहीन समझनेवाले ज्ञानहीन हैं।

कारण—ज्ञानियों में श्रेष्ठ 'यह कौन गुण है' ऐसा मोहित होगये हैं। एवंभूत सौशील्यगुण के उत्कर्ष को प्रकट करनेके लिये यह लोकाचार्यस्वामी 'दूतकृत्य करनेवाले' ऐसा कहे हैं। संपूर्ण माहाभारत श्रीकृष्ण के उत्कर्ष को कहने में तत्पर होनेसे महाभारतकथा के प्रारंभ में

एतद्द्वाभ्यां–पुरुषकारवैभव उपायवैभवश्चोक्तः॥ ७॥

---

'नमो भगवते तस्मै व्यसायामिततेजसे ।
यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमाम् ॥

इत्युक्तवान् ॥
एवमेतत्प्रबंधद्वयस्यापि प्रधानप्रतिपाद्यमेतदिति प्रकाशितम् ।

उपबृंहणमुखेन वेदांततात्पर्यं निष्कर्षैरवोज्जीवननिदानार्थं वक्तुं खलूपक्रांतं, तत्रेदानीमुक्तेन को वार्थ उक्त इत्याकांक्षायामाह—एतद्द्वाभ्यामित्यादिना ।

एतद्द्वाभ्यां—कारागृहवासकर्त्र्या वैभवो दौत्येन गतवतो वैभवश्चेत्येतद्द्वाभ्याम् अपराधभूयिष्ठानां चेतनानामाश्रयणीयतायामखिलजगन्मातृरूपसंबंधेन कृपादिभिश्च मध्ये पुरुषका-

---

एतद्द्वाभ्यां प्रमाणाभ्यां प्रमेयकथनं त्विदम् ॥
उपायवैभवोथापि पुरुषाकारवैभवः ॥७॥

'भगवान् व्यासजी को नमस्कार करता हूं, जिस के अनुग्रह से मैं इस नारायणकथा को' कहताहूं ऐसा कहा है।

तथाच—इन दो प्रबंधों से प्रधानप्रतिपाद्य वस्तु को प्रकट किये हैं ।

उपबृंहणद्वारा वेदांततात्पर्य को निष्कर्ष कर उज्जीवन के उपयुक्त अर्थों को कहनेके लिये उपक्रम कियेहैं । उस में इन सूत्रों से वेदांत के कौनसे अर्थ कहेगये हैं ! ऐसी आकांक्षा में कहते हैं—इन दोनों से इत्यादि ।

इन दोनों से पुरुषकार वैभव और उपाय वैभव कहेगये हैं ॥ ७ ॥

कारागार में वास करनेवाली सीता जी का वैभव, दूतकृत्य करनेवाले श्रीकृष्णजी का वैभव इन दोनों से अपराधभूयिष्ठ चेतनों को आश्रयणयोग्य होनेके समय अखिलजगन्मातृस्वरूप संबंध से और कृपादि गुणों से बीच में एक पुरुषकार की अपेक्षा

रांतरमनपेक्ष्याश्रयितुं योग्याया अपराधान् दृष्ट्वा क्रुद्धस्य 'क्षिपामि' 'न क्षमामि' इति च वदत ईश्वरस्य हृदयं विशोध्य तेषामंगीकारयित्र्था पुरुषकारभूताया वैभवः, अंगीकारानंतरं तस्यामेव छिद्रं वदंत्यां 'मद्दासास्तन्न कुर्युः' इति प्रातिद्वंद्वीभूत्वा स्वयं दृढतया स्थित्वा रक्षितुरुपायभूतस्य वैभवश्चोक्त इत्यर्थः ॥

पुरुषकारेत्युपायेति चास्य निरूपकत्वेनोक्तिर्लक्ष्म्याः पुरुषकारत्वमीश्वरस्योपायत्वं चासाधारणमिति ज्ञापयितुम् । अमुमर्थ—

'मत्प्राप्तिं प्रति जन्तूनां संसारे पततामधः ।
लक्ष्मीः पुरुषकारत्वे निर्दिष्टा परमर्षिभिः ।
ममापि च मतं ह्येतन्नान्यथा लक्षणं भवेत् ।' इति ।
'अहं मत्प्राप्त्युपायो वै साक्षाल्लक्ष्मीपतिः स्वयम् ।

---

विना आश्रयणकरनेके योग्य हो अपराधों को देखकर कुपित होकर 'क्षिपामि' 'न क्षमामि' ऐसा कहनेवाले ईश्वर के हृदय को शोधनकर उन चेतनों को अंगीकार करनेवाले पुरुषकारभूत महालक्ष्मी का वैभव, अंगीकारानंतर वह लक्ष्मी स्वयमेव चेतनों के दोष को दिखाने पर भी ' हमारे दास ऐसा नहीं करेंगे ' ऐसा प्रतिवाद कर आप दृढ होकर रक्षा करने वाले उपायभूत नारायण का वैभव भी कहागया ।

लक्ष्मीजी को पुरुषकारत्व और ईश्वर को उपायत्व ये दोनों दोनों के असाधारण गुण हैं ऐसा समझानेके लिये पुरुषकार और उपाय ऐसा कहे हैं । इस विषय को —

' संसार में अधः पतित जंतुओं को हमारी प्राप्तिके लिये महर्षि लोग लक्ष्मी को पुरुषकार कहे हैं, हमारा भी यही मत है इसका और लक्षण नहीं ' । इति
' स्वयं लक्ष्मीपति मैं अपनी प्राप्ति के लिये उपाय हूं मेरी प्रिया लक्ष्मी प्राप्ति

लक्ष्मीः पुरुषकारेण वल्लभा प्राप्तियोगिनी ॥
एतस्याश्च विशेषोयं निगमांतेषु शब्द्यते ॥'
'आकिंचन्यैकशरणाः केचिद्भाग्याधिकाः पुनः ।
मत्पादांभोरुहद्वंद्वं प्रपद्य प्रीतमानसाः
लक्ष्मीं पुरुषकारेण वृतवंतो वरानन ।
मत्क्षमां प्राप्य सेनेश प्राप्यप्रापकमेव माम् ।
लब्ध्वा कृतार्थाः प्राप्यंते मामेवानन्यमानसाः ॥'

इति भगवच्छास्त्रे स्वयमेवावोचत् ।

अवशिष्टदिव्यमहिषीणां सूरिप्रभृतितदीयानां चैतत्संबंध-प्रयुक्तं पुरुषकारत्वं, अस्या इव स्वतःसिद्धं न भवति । अत एव—

'एतत्सापेक्षसंबंधादन्येषाममलात्मनाम् ।
देवीसूरिगुरूणां च घटकत्वं नतु स्वतः ।'

---

कराने वाली है , इन का यह वैभव वेदांतों में कहा गया' । इति ।

'आकिंचन्य ही शरण है जिनको ऐसे भाग्याधिक लोग लक्ष्मी को पुरुष-कारतया वरणकर हमारी क्षमाके विषय हो और हमको प्राप्यप्रापक समझ-कर कृतार्थ हो हम ही को प्राप्त होते हैं' ।

ऐसा भगवत् शास्त्र में आपही कहे हैं ।

अन्यदेवियों को और सूरि प्रभृति तदीयों को लक्ष्मीजी के संबंध द्वारा ही-पुरुषकारता है । इन के सदृश स्वतः सिद्ध नहीं । इस कारण से ही 'इनके संबंध से ही अन्य देवी सूरि गुरुओं को पुरुषकारत्व है, स्वतःसिद्ध पुरुष-कारत्व नहीं, ऐसा दीपसंग्रह में जीयर (वेदांती) कहे हैं । उपायत्व 'कृष्ण ही

इति दीपसंग्रहे यतिभिरुक्तम् । उपायत्वं च 'कृष्णं धर्मं सनातनम्' इति सनातनधर्मत्वेनोक्तस्य तस्यैव स्वतःसिद्धं, तदीयानां तदासत्तिहेतुकमेव भवति, तस्माल्लक्ष्म्याः पुरुषकारत्वं, ईश्वरस्योपायत्वं च निरूपकमिति निर्बाधम् । अमुमर्थं प्रकाशयितुमयमेवमवोचत् ॥

एवमुपबृंहणभूतेन प्रबंधद्वयेन प्रतिपादितं पुरुषकारत्वमुपायत्वं चोपबृंहणीयवेदांते क्कोक्तमितिचेत्–कठवल्ल्युपनिषत्सिद्धे द्वये पूर्ववाक्ये उभयं च सम्यगुक्तम् ।

नन्वस्य चेतनस्योभाभ्यां संबंधस्य सत्वेनेश्वरसमाश्रयणेऽस्याः पुरुषकारत्वं किमर्थमिति चेत्, न; मातृत्वप्रयुक्तवात्सल्यातिरेकात्, तद्वत्काठिन्यमार्दवयोः सामानाधिकरण्याभावेन केवलमार्दववत्त्वात्, अन्यनेत्रसंकोचदर्शनाशक्तिप्रकृतिकत्वात्, विमुखानभिमुखान् कर्तुं कृषिकरणाच्चापराधभूयिष्ठानामपि निर्भयमागत्य पादपतनयोग्यत्वात्, पुंस्त्वप्रयुक्तकाठिन्येन सह-

---

सनातन धर्म हैं' इति सनातनधर्मतया कहेजानेवाले श्रीकृष्ण को स्वतःसिद्ध है। तदीयों को तत्संबंधद्वारा ही उपायत्व है। तस्मात् महालक्ष्मी को पुरुषकारत्व, ईश्वर को उपायत्व निरूपक धर्म हैं–ऐसा कहने में असंगत नहीं। इस अर्थ को प्रकटकरनेके लिये ही श्रीलोकाचार्यस्वामी जी इस प्रकार कहे हैं।

इस प्रकार उपबृंहणरूप दोनों प्रबंधों से प्रतिपाद्यमान पुरुषकारत्व और उपायत्व को उपबृंह्यभूत वेदांत में कहां कहा है ऐसी आकांक्षामें–कठवल्ल्युपनिषत्सिद्ध द्वयमंत्र के पूर्ववाक्य में दोनों को अच्छीतरहसे कहा है।

इस चेतन को दोनों के साथ संबंध समान होते हुए ईश्वर के समाश्रयण में लक्ष्मीजी को पुरुषकारतया क्यों आश्रयण करैं – इस आकांक्षा में कहते हैं मातृत्व प्रयुक्त वात्सल्याधिक्य से भगवान के जैसा काठिन्य और मार्दव ये दोनों इकट्ठा न होकर केवल मार्दवगुण मात्र होनेसे चेतनों के दुःख को न देखसकने की स्वभववाली होनेसे विमुखों को भी अभिमुख बनानेके लिये कृषि करनेवाली होनेसे अपराधियों को भी निर्भीक हो चरणों में गिरने योग्य होनेसे पुरुष-

पुरुषकारभवनसमये कृपा पारतंत्र्य-
मनन्यार्हत्वं चापेक्षितम् ॥ ८ ॥

---

पितृत्वप्रयुक्तहितपरत्वेन विशिष्टत्वात्, अपराधान् दशदशैव परिगणय्य क्रूरदंडकरणात्, अपराधभूयिष्ठानामग्रगमनमपि भयावहं यथा स्यात्तथा स्थितमीश्वरमुचितोपायैरपराधान् सर्वान् विस्मार्य घटयंत्याऽपराधैकवेषस्यास्य चेतनस्य तदाश्रयणसमयेऽनया पुरुषकारेण भवितव्यम्।अतएवास्योपायत्वेन वरणसमये इयं पुरुषकारत्वेन पुरस्क्रियते ।

अनंतरं पुरुषकारप्रकारान् विस्तरेणोपपादयितुं मनसि विचार्य प्रथमं पुरुषकारत्वस्यावश्यापेक्षितान् गुणानाह —पुरुषकारभवनसमय इत्यादिना।

---

पुरुषाकारताकाले गुणत्रयमपेक्षितम् ॥
दीने दया परे पारतन्त्र्यानन्यार्हते सती ॥ ८ ॥

त्व प्रयुक्त काठिन्य के साथ पितृत्व प्रयुक्त हितपरत्ववाले अपराधों को गिनकर दंड देनेवाले अपराधियों को सामने जानेमें डरानेवाले ईश्वर को उचितोपायों से सब अपराधों को भुलाकर मिलानेवाली होनेसे, अपराधस्वभाववाला यह चेतन ईश्वर को आश्रयण करनेके समय लक्ष्मीजी को पुरुषकार होना चाहिये। इस कारण ही ईश्वर को उपायतया स्वीकार करनेके समय लक्ष्मीजी को पुरुषकारतया आगे करते हैं ॥

अनंतर पुरुषकार के गुणों को विस्तारपूर्वक कहने की इच्छा से पहिले पुरुषकारत्व के अवश्यापेक्षित गुणों को कहते हैं—पुरुषकार होनेके समय इत्यादि से ।

पुरूषकार होनेके समय कृपा—पारतंत्र्य—और अनन्यार्हत्व अपेक्षित हैं ॥ ८ ॥

पुरुषकारभवनसमय इति—पुरुषकारभवनस्थल इत्यर्थः। कृपा—परदुःखासहिष्णुत्वम्। पारतंत्र्यम्—तदधीनत्वम्। अनन्यार्हत्वम्—तद्व्यतिरिक्तविषयानर्हत्वम्। एतानि पुरुषकारत्वस्य अवश्यापेक्षितानीति कथमितिचेत्, चेतनैः संसारेऽनुभूयमानं दुःखं दृष्ट्वा तदसहिष्णुतयेश्वरेणैतान् सहयितुमुपयुक्तं यत्नं कर्तुं दयाऽपेक्षिता। स्वतंत्रस्य वशीकरणसमयेऽनुवर्त्तनेन वशीकर्तव्यत्वात् पारतंत्र्यमपेक्षितम्। अस्मद्व्यतिरिक्तस्य कस्यापि विषयस्यानर्हत्वेनास्मदतिशयकरवस्तुत्वादस्मत्कार्यमेव वदति' इत्युक्तप्रकारेण कर्तुमुपयुक्तत्वादनन्यार्हत्वमपेक्षितम्। तस्मादेतत् [illegible] पुरुषकारत्वस्यावश्यापेक्षितम्।

ईश्वरकृपापेक्षया लक्ष्म्याः कृपायाः को विशेष इति चेत्—ईश्वरस्य निरंकुशस्वतंत्रत्वात्, निग्रहानुग्रहयोरुभयोरपि निर्वाहकत्वात्, चेतनकर्माणि तोलयित्वा छित्त्वा भोगयितृत्वाच्च तस्य

---

पुरुषकार होनेके समय—पुरुषकार होनेके स्थल में। कृपा—पर-दुःखासहिष्णुता, पारतंत्र्य—पराधीनता। अनन्यार्हत्व—ईश्वर को छोडकर अन्यों के योग्य न होना। ये तीनों गुण पुरुषकार को कैसे अवश्यापेक्षित हैं इस प्रश्न पर कहते हैं—चेतन के संसार में पाते हुए दुःख को देख न सहकर ईश्वर के साथ इन को मिलाने को यत्न करनेके लिये कृपा की आवश्यकता है। स्वतंत्र को वश करने के समय अनुवर्तन की आवश्यकता होनेसे पारतंत्र्य अपेक्षित है। 'हमसे व्यतिरिक्त किसी विषय के अर्ह न हो हम को अतिशय करनेवाली होनेसे हमारे कार्य को ही कहती है' ऐसा विचार जैसा कहेगी वैसा करनेके उपयुक्त होनेसे अनन्यार्हत्व चाहिये। इस कारण ये तीनों गुण पुरुषकारत्व के अवश्यापेक्षित है।

ईश्वरकी कृपा की अपेक्षा लक्ष्मीजी की कृपा की श्रेष्ठता कैसा? इस आकांक्षा में कहते हैं। ईश्वर निरंकुश स्वतंत्र, निग्रहानुग्रह दोनों का करनेवाला, चेतनों के कर्मों को तोलकर टुकडे टुकडे कर भुगाने वाले होनेसे उन की कृपा स्वातंत्र्य से डूबकर

कृपा स्वातंत्र्येण निमग्ना कासु चिद्दशासूद्भवति। अस्या अनुग्रहैकशीलत्वात्, एतत्कृपाया अन्येन केनचिदभिभवस्याभावात् सदैकरूपाभवति। तस्मादेतत्कृपोद्वेलं तिष्ठति। संबंधे व्यावृत्तिवत्कृपायां व्यावृत्तिः। एवंभूतत्वादेनामाश्रयतां पुरुषकारांतरं न मृग्यम्

ईश्वरविषये अस्याः पारतंत्र्यानन्यार्हत्वे स्वरूपप्रयुक्तत्वमात्रं विना 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' 'विष्णुपत्नी' इत्युक्तपत्नीत्वप्रयुक्ते च।

'अहंता ब्रह्मणस्तस्य साहमस्मि सनातनी।'

इति 'श्रीवत्सवक्षा नित्यश्रीः' इति चोक्तस्वरूपनिरूपकत्वादिसिद्धानन्यत्वप्रयुक्ते च भवतः। एवं स्थितत्वादेवान्येषां मिथुनशेषत्वमस्या एकस्यास्तदेकशेषत्वं च भवति। एतदव्यवधानसंबंधेन हि अस्या ईश्वरवशीकरणसमये पुरुषकारो नापेक्षितः।

---

किसी किसी दशा में प्रकट होती है। लक्ष्मी जी अनुग्रहैकस्वभाव वाली होनेसे इन की कृपा को तिरस्कार करनेवाले स्वातंत्र्यादिगुण न होनेसे सदा एक प्रकार रहती है। इस कारण इन की कृपा अवधिरहित है। संबंध में जैसा भेद है तैसा ही कृपा में भेद है। ऐसा रहनेसे ही इनके आश्रयण करने वालोंको और किसी पुरस्कार की अपेक्षा नहीं है।

ईश्वर के विषय में इनके पारतंत्र्य अनन्यार्हत्व यह दोनों स्वरूपप्रयुक्त मात्र नहीं किंतु 'भूमिदेवी लक्ष्मी दोनों आप की पत्नी हैं' इति 'विष्णु की पत्नी' इति कहे जानेवाले पत्नीत्व से आयेहुये, 'मैं उस ब्रह्म की सदाकी अहन्ता हूं' इति, 'लक्ष्मी जी से चिह्नित वक्षवाले' 'नित्यश्री' इति कहे जाने वाले स्वरूपनिरूपकत्वादि से होने वाले अनन्यत्व से भी आये हुए हैं। ऐसा रहने से ही और सर्व चेतनों को मिथुन शेषत्व है लक्ष्मीजी को तो नारायण का ही शेषत्व है। इस अव्यवधान संबंध से ही इन के ईश्वर की वशीकार में पुरुषकार की अपेक्षा नहीं है।

लक्ष्म्याः प्रथमविश्लेषः स्वकृपाप्रकाशनार्थम् ॥ ९ ॥

---

एतेषु त्रिषु गुणेषु कृपा 'श्रीञ् सेवायाम्' इति धातोर्निष्पन्ने श्रीशब्दे श्रीयते इति कर्मणि व्युत्पत्त्या, पारतंत्र्यानन्यार्हत्वे श्रयते इति कर्तरि व्युत्पत्त्या नित्ययोगवाचकमतुपा च सिध्यंति ।

एतत्कृपादित्रयं च सर्वे यथा जानीयुस्तथा स्वयमेव प्रकाशितं वैभवं श्रीरामायणे अस्या उक्तेन विश्लेषत्रयेण प्रदर्शयत्युपरि--लक्ष्म्या इति ।

'देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी ।
विष्णोर्देहानुरूपां वै करोत्येषात्मनस्तनुम् ॥'

इत्युक्तप्रकारेण नायकस्य सर्वेश्वरस्य तत्तदवतारसजातीयवि-

---

पंचवट्यां महालक्ष्म्या आद्यविश्लेष ईरितः ।
ततोऽसुरपुरीं गत्वा स्वकृपा प्रकटीकृता ॥९॥

इन तीनों गुणों में से कृपागुण 'श्रीञ् सेवायां' इस धातु से होनेवाले श्री शब्द में श्रीयते इस कर्मणिव्युत्पत्तिसे सिद्ध होता है। पारतंत्र्य अनन्यार्हत्व ये दोनों 'श्रयते' इस कर्तरिव्युति से नित्ययोगवाचक मतुप् से भी सिद्ध होते हैं।

इन कृपादि तीनों गुणों को सब के जाननेके लिये आप ही प्रकट किये हैं इस वैभव को श्रीरामायण में इन के विषय में कहे हुए तीनों विश्लेषों से दिखाते हैं—सीताजी का इत्यादि वाक्यत्रय से ॥

सीताजी का पहिला विश्लेष अपनी कृपा को प्रकट करनेके लिये हुवा ॥९॥

सीता जी का इत्यादि। 'परमात्मा देवरूप धारण करनेपर लक्ष्मीजी देवीरूप धारण करती हैं, मनुष्यरूप धारण करनेपर मनुष्यरूप धारण करती हैं यह लक्ष्मी अपने रूप को विष्णु के रूप के सदृश बनाती है।'

इति नायक सर्वेश्वर के उस उस अवतार के सदृश शरीर को धारण कर

ग्रहं परिगृह्यावतरणात् 'राघवत्वे भवेत्सीता' इत्युक्तप्रकारेण तस्य चक्रवर्तितनयावतारे तदनुरूपं स्वयमपि जनकराजपुत्रीत्वेनावतृ[illegible] लक्ष्म्या दंडकारण्यस्थितिसमये रावणकृतविश्लेष इति व्याजेन प्रथमं भगवद्विश्लेषेण स्थि[illegible]। '[illegible]व्या कारूण्यरूपया' इति तद्गुणसारत्वेन कारूण्यं स्वयमेवेति वक्तुं योग्यायाः [illegible] परमकृपां प्रकाशयितुमित्यर्थः।

[illegible]–देवस्त्रीणां बंधनं मोचयितुं स्वस्य कारागृहे स्थितत्वात्, तत्र स्थितौ स्वात्मानं रात्रिं[illegible] त[illegible] कृत्वा पीडयंतीषु क्रूरराक्षसीषु रावणः पराजितः स्वामी [illegible]दिति त्रिजटास्वप्नदर्शनेन भीतासु [illegible] 'भवेयं शरणं हि वः' इति युष्माकं [illegible] वर्तामि खलु यूयं माभैष्टेत्यभयप्रदानकरणात् तस्योक्तिमात्रं विना रावणवधानंतरं शोभनं वक्तुमागते हनूमति तासां वधं कर्तुं पश्येति वदति तेन

---

अवतार लेनेवाली होनेसे, 'रामरूप लेनेपर सीताजी हुई है' इस उक्ति के अनुसार चक्रवर्ती श्रीकुमार होनेपर तदनुरूप आप श्रीजनकराजनंदिनी हो दण्डकारण्य में बिराजने पर रावणकर्तृक विश्लेषके बहाने से पहिले रामजी से विश्लेष पाकर लंका को पधारना 'करूणारूपिणी देवी से' इति तद्गुणसारत्वन्याय से करूणागुण ही आप हैं ऐसा कहने के योग्य अपनी परमकृपा को प्रकट करनेके लिये इत्यर्थः।

यह कैसे इस आकांक्षा में कहते हैं–देवस्त्रियों को कारागार से मुक्त करनेके लिये आप कारागार में वास करने से, उस समय अपने को रातदिन डराते हुए काटखान वाली क्रूर राक्षसियों के, रावणका पराजय और रामजी का जीत को स्वप्न में देखने वाली त्रिजटा के वाक्य सुनकर अत्यन्त भीत हो कम्पासमान दशा में '[illegible] तुमलोगों को मैं रक्षा करूंगी' ऐसा 'आप की पीडित दशा में मैं रहतीहूं मत डरो' ऐसा अभयप्रदान करने से, वह उक्तिमात्र न होकर रावण वधानंतर शुभ वृत्तांत सुनाने को आये हुए मारुति इन राक्षसियों को [illegible]वध

मध्यमविश्लेषः पारतंत्र्यप्रकाशनार्थम् ॥१०॥

---

सह विवदित्वा 'राजसंश्रयवश्यानाम्' इत्यादिभिस्तासां दोषं गुणत्वेनोपपाद्य 'मर्षयामीह दुर्बला' इति परदुःखं दृष्ट्वा सहिष्णुहृदयस्य स्वस्याभावं पुरस्कृत्य।

'कार्यं करुणमार्येण न कश्चिन्नापराध्यति'।

इति तस्यापि क्षमामकृत्वा स्थितिर्यथा न स्यात्तथोपदिश्य, एवमेकस्या स्थितया कृतप्रतिज्ञानुगुणमार्द्रापराधानां राक्षसीनां रक्षणाच्च स्वस्याः कृपायाः प्रकाशयितुं हि।

मध्यमेत्यादि। मध्यमविश्लेषो नाम—निवृत्य भगवता सहायोध्यायां गर्भिणीत्वेन स्थितिसमये—

'अपत्यलाभो वैदेहि ममायं समुपस्थितः।

---

वाल्मीकाश्रमसांनिध्ये मध्यविश्लेषकं च यत्।
तद्राघवपराधीनप्रकाशनप्रयोजकम् ॥१०॥

करने के लिये मुझे सौंपदो ऐसा कहनेपर उन के साथ वाद विवाद कर 'राजाश्रित अतएव राजवश्य लोगों को' इत्यादि से उन के दोषों को गुणतया दिखाकर 'दुर्बल हो मैं सब को सहती हूं ऐसा अन्यों के दुःख देखकर सहनेका कठिन चित्त हमारा नहीं है 'गुणज्ञ पुरुष को अपराधियों के ऊपर कृपा करनी चाहिये अपराध के विना कोई नहीं है' ऐसा कहकर मारुति को दयावान् बनाकर अविच्छिन्न प्रकार से अपनी पहिली प्रतिज्ञा के अनुसार तत्काल अपराधि राक्षसियों की रक्षा करने से भी अपनी कृपा को प्रकट की हैं।

मध्यम विश्लेष पारतंत्र्य को प्रकट करने के लिये ॥ १० ॥

मध्यम विश्लेष—लौटकर रामजी के साथ श्रीअयोध्या में विराजते हुए गर्भावस्था में 'हे जानकि! हम को पुत्र लाभ उपस्थित हुआ है तुम क्या इच्छा करती

किमिच्छसि सकामा त्वं ब्रूहि सर्वं वरानने ॥'

इति तव किमपेक्षितमिति पृष्टया—

'तपोवनानि पुण्यानि द्रष्टुमिच्छामि राघव ।
गंगातीरनिविष्टानि ऋषीणां पुण्यकर्मणाम् ॥
फलमूलाशिनां वीर पादमूलेषु वर्तितुम् ।
एष मे परमः कामो यन्मूलफलभोजिषु ।
अप्येकरात्रं काकुत्स्थ वसेयं पुण्यकीर्तिषु ॥'

इति स्वस्य विद्यमानवनवासरसवांछायां विज्ञप्तायां तदर्थं प्रेषयित्रेव लोकापवादपरिहारार्थं भगवता वनं प्रति प्रेषणे कृते विश्लेषः ॥

एतद्विश्लेषस्य प्रयोजनं भगवता रक्षणे स्थापनसमये वने प्रेषणसमये चाविशेषेण तच्चित्तानुवर्तनकर्तव्यताप्रयोजकस्वपत्नीत्वप्रयुक्तपारतंत्र्यप्रकाशः ।

---

हो वह सब कहो' इति तुम को वांछित क्या ऐसा पुछने पर—

'हे राघव गंगातीरवर्ती पुण्यप्रद तपोवनों को देखनेकी इच्छा करती हूं और पुण्यात्मा फलमूल भोजन करनेवाले ऋषिलोगों के चरणतलों में वास करने की इच्छा करती हूं' फलमूल के आहार करनेवाले पुण्यकीर्तिवाले ऋषिलोगों की सन्निधि में एक रात्र तौभी वास करूंगी यह ही मेरी परम कामना है।' ऐसा आपके वन वास करने की इच्छा को निवेदन करने पर उसके लिये भेजनेवाले के तरह लोकापवाद को दूरकरने के लिये श्रीरामचन्द्र जी कर्तृक अरण्य को विदा करना ।

इस विश्लेष का प्रयोजन — श्रीरामचन्द्रजी के अंतः पुर में रखनेपर या अरण्य में छोडनेपर भी एकरूप से उस श्रीरामजी की इच्छा को अनुवर्तनके योग्य स्वपत्नीत्व से प्राप्त पारतंत्र्य का प्रकाश करना है ।

तथाहि गंगातीरारोहणानन्तरं बालस्वामिन्यत्यंतं क्लेशि-स्था भगवदभिमतकार्यं विज्ञापयति तच्छ्रुत्वात्यंतं प्रलापं कृत्वा।

'न खल्वद्यैव सौमित्रे जीवितं जाह्नवीजले।
त्यजेयं राघवं वंशे भर्तुर्मा परिहास्यति ॥'

इत्यवोचत् खलु । अनेन व्यसनातिशयेन मरणेन जीवनस्य मृग्यत्वेपि तदकृत्वा स्वामिचित्तमनुसृत्य स्वप्राणरक्षणं कृत्वा स्थातव्यरूपं पारतंत्र्यं हि प्रकाशितम् । अन्यार्थं जीव्यानां परतंत्राणां मरणं मृग्यमपि न संभाव्यते- 'मरणप्रकारं न जानामि प्रबलपापा स्त्री जानित्वा' इति परांकुशैरवाचि ।

प्रथमविश्लेषे दशमासेष्वतिदुःसहक्लेशाननुभूतवती—

'पतिर्हि दैवतं नार्याः पतिर्बंधुः पतिर्गतिः।
प्राणैरपि प्रियं तस्मात् भर्तुः कार्यं विशेषतः॥'

---

गंगाके तीर पहुंचने पर बालस्वामी (लक्ष्मणजी) अत्यंत दुःखित हो श्री रामजीके परित्याग करनेके अभिप्राय को श्रीजानकीजी से निवेदन करनेपर इस बात को जान अत्यंत प्रलाप कर—

'हे लक्ष्मण ! स्वामी से प्राप्त यह रघुसंतान स्वामीके वंश में तिरस्कृत न हो इस लिये ही मैं प्राणों को गंगाजी के प्रवाह में परित्याग नहीं करती हूं।' ऐसा सीताजी कही हैं ।

इस से विश्लेषदुःख की अधिकता से मरण अपेक्षित होनेपर भी ऐसा नहीं करसकीं । श्रीरामजी की इच्छा को अनुवर्तन कर अपने प्राणों को बचाकर रखने से पारतंत्र्य गुण प्रकट हुआ ऐसा जानना, औरों के लिये जीनेवाले परतंत्र चेतनों को प्राणत्याग की अपेक्षा होनेपर भी त्याग नहीं करसकते 'प्रबल पापिष्ठा मैं स्त्री होनेसे मरणप्रकार को नहीं जानती' ऐसा श्रीशठकोपसूरि भी नायिका अवस्था में कहे हैं ।

प्रथम विश्लेष में दश महीने के भीतर संपूर्ण दुःख का अनुभव करनेवाली सीताजी

'स्त्रीका पति ही देवता, बंधु और गति है, अतः प्राणों के व्यय से भी पतिका प्रिय करना चाहिये।'

अनंतरविश्लेषोऽनन्यार्हत्वप्रकाशनार्थम् ॥ ११ ॥

---

इति स्वोक्तिप्रकारेण पतिचित्तानुविधानमेवास्माकं स्वरूपमिति पारतंत्र्यबुध्या खल्वनेकसंवत्सरान्स्वस्थाऽतिष्ठत्। एवमस्मिन् विश्लेषे स्वपारतंत्र्यं प्रकाशयामास।

अनंतरमित्यादि।

अनन्तरविश्लेषो नाम—पुनरागत्य भगवत्सान्निधौ वर्तमानदशायां विश्लिष्य जन्मगृहप्रवेशः।

अस्य विश्लेषस्य प्रयोजनं—

'अनन्या राघवेणाहं' 'अनन्या हि मया सीता' इत्युभयसंमतस्य स्वानन्यत्वप्रयुक्तानन्यार्हत्वस्य सर्वसंमतं प्रकाशः।

---

नैमिशारण्यमध्ये योऽपरो विश्लेष उच्यते।
सोऽनन्यार्हत्वरूपस्य स्वगुणस्य प्रकाशकः ॥११॥

इस प्रकार अपनी उक्ति के अनुसार पति के चित्त का अनुवर्तन करना ही हमारा स्वरूप है। ऐसी पारतंत्र्यबुद्धि से ही अनेकवर्ष पर्यंत दुःख को सहन करती रही। इस प्रकार इस मद्यम विश्लेष में अपनी पराधीनता को प्रकाश की।

तीसरा विश्लेष अनन्यार्हत्व प्रकाश करनेके लिये हुआ। ॥ ११ ॥

तीसरा विश्लेष माने—वाल्मीकि महर्षि के आश्रम से लौटकर स्वामी के सन्निधि में रहनेपर विश्लेष पाकर जन्मगृह (पृथिवी) में प्रवेश करना।

इस विश्लेष का प्रयोजन—'सूर्यका साथ प्रभा जिस तरह नहीं छाडती उसी तरह श्रीरामचन्द्र का साथ मैं नहीं छाडती' 'हमारा साथ सीता नहीं छाडती' इस तरह उभय सम्मत अपना अनन्यत्व प्रयुक्त अनन्यार्हत्व को सबों के जाननेके योग्य प्रकाश करना है।

तथाहि—स्वामिन्यश्वमेधं कुर्वाणे श्रीवाल्मीकिनो भगवतो नियोगेन कुशलवयोः गायतोः श्रीरामायणं गायतोः संचरतोस्त-स्स्वामिनि श्रुत्वा सन्निधौ समाहूय विशेषज्ञान्सर्वानन्तर्मृह्य तयोर्गा-नं शृण्वति तदा तौ जानक्याः पुत्राविति ज्ञात्वा जानकीं मनसा स्मृत्वा स्वात्मसाक्षिकं शुद्धा यदि शीघ्रमेतस्सदसि श्व आगत्य प्रत्ययमुखेन स्वशुद्धिं प्रकाशयत्विति दूतमुखेन महर्षेर्जानक्या-श्च विज्ञापयति तथैव श्रीवाल्मीकिं भगवंतं पुरस्कृत्य तस्यां महापारिषदि भगवत्सन्निधावागत्य संकोचेन स्थितायां वाल्मी-कावपीयं शुद्धेति बहुमुखेन वदति, स्वयमपीयं शुद्धेत्यहमपि जानामि महर्ष्युक्तिरेवालं तथापि लोकापवादपरिहारार्थं कश्चन प्रत्ययोऽस्मिन्सदसि कर्तव्य इति वदति—

'सर्वान्समागतान्दृष्ट्वा सीता काषायवासिनी ।
अब्रवीत्प्रांजलिर्वाक्यमधोदृष्टिरवाङ्मुखी ॥'

---

तथा हि—श्रीरामजी अश्वमेध याग करनेपर श्रीवाल्मीकि भगवान् की आज्ञा से कुशलव के रामायण को गान करनेपर श्रीरामजी सुनकर अपनी सन्निधि में बुलाकर बडे बडे ज्ञानीलोगों के साथ उनके गान को सुननेके समय उन दोनों को सीताजी का लडके जानकर सीताजी को स्मरण कर सीताजी शुद्ध हो तो शीघ्र इस सभा में आकर प्रतिज्ञा पूर्वक अपनी शुद्धता को प्रकट करें ऐसा दूत के द्वारा श्रीरामजी के वाल्मीकि जी और सीताजी के जनानेपर, तैसा ही श्रीवाल्मीकि भग-वान् को आगे कर उस महासभा में श्रीरामजी के सन्निधि में आकर संकोच से एक स्थानपर खडे होनेपर श्रीवाल्मीकि भगवान्—सीताजी शुद्धा है ऐसा बहुत प्रकार कहते भये । श्रीरामजी सुनकर सीताजी शुद्धा है इस बात को मैं भी जानता हूं, महर्षि का वचन ही बहुत कुछ है, तौभी लोकापवाद दूर करनेके लिये इस सभा में एक प्रतिज्ञा की आवश्यकता है ऐसा अभिप्राय को प्रकट किये । अनंतर—

'काषायवस्त्र धारिणी सीताजी आये हूए सभी सदस्यों को देख पृथिवी तल को देखती हुई हाथ जोड इस बातको कहीथी ।'

इत्युक्तप्रकारेणं सांजलिहस्ताऽधोमुखी सती स्थित्वा—

'यथाहं राघवादन्यं मनसापि न चिंतये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥
मनसा कर्मणा वाचा यथा रामं समर्थये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥
यथैतत्सत्यमुक्तं मे वेद्मि रामात्परं न च
तथा मे माधवी देवी विवरं दातुमर्हति ॥'

इति शपथं कुर्वंत्यां—

'तथा शपंत्यां वैदेह्यां प्रादुरासीन्महाद्भुतम्
भूतलादुत्थितं दिव्यं सिंहासनमनुत्तमम् ॥
ध्रियमाणं शिरोभिस्तु नागैरमितविक्रमैः ।
दिव्यं दिव्येन वपुषा सर्वरत्नविभूषितम् ॥
तस्मिंस्तु धरणी देवी बाहुभ्यां गृह्य मैथिलीम् ।
स्वागतेनाभिनंद्यैनामासने चोपवेशयत् ॥

---

'यदि मैं श्रीरामजी के अतिरिक्त और किसीको मन से भी चिंतवन न की हूं तो भूमिदेवी मुझ को स्थान देगी ।

यदि मन बचन और काय से श्रीराम को ही मैं समर्थन की हूं तो भूमिदेवी मुझ को स्थान देगी ।

श्रीराम से अतिरिक्त और किसी को भी मैं नहीं जानती यह बात सत्य हो तो भूमिदेवी मुझ को स्थान देगी ।'

इस प्रकार सभा में शपथ करने पर–

'इस प्रकार जानकीजी के शपथ करनेपर अत्यद्भुत, दिव्य, उत्तमोत्तम, सर्व रत्नविभूषित और बडे पराक्रमी नागगणों द्वारा मस्तकों से धृत सिंहासन भूमि से प्रकट हुआ, उस सिंहासन में भूमिदेवी सीताजी का स्वागत कर भुजाओं से आलिंगन कर बैठाई । उस सिंहासन में बैठ कर पाताल में प्रवेश करती हुई

तामासनगतां दृष्ट्वा प्रविशंतीं रसातलम् ।
पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरत् ॥'

इति तदानीं भूमेः किंचित् सिंहासनं प्रादुर्भूतं तत्र भूमी देवी इमां स्वागतप्रश्नपूर्वकं बाहुभ्यामादाय समवेशयत् । आसनगतां रसातलं प्रविशंतीमिमां दृष्ट्वा दिव्यपुष्पवृष्टिर्निरंतरमपतदित्युक्तत्वादस्मिन् विश्लेषे स्वानन्यार्हत्वं प्रकाशयामास ।

एवमस्मिन्नवतारे विश्लेषत्रयस्य हेतुरेतषां गुणानां प्रकाशनम् । अन्यथानपायिन्या अस्याः कर्मवश्यस्यैवैवं विश्लेषस्य हेतुर्नास्ति हि ।

**स्वस्याः पुरुषकारत्वोपयोगिगुणान् पुरुषकारत्वं च प्रकाशयितुं खल्वयमवतारः । अत एवोक्तम्—**

**'यदुतान्यदुदाहरंति सीतावतारमुखमेतदमुष्य योग्यम्'**
**इति भट्टार्य्यैः ।**

---

सीताजी के ऊपर विच्छेद रहित पुष्पवृष्टि देवताओं ने की ।'

इस प्रकार कहनेसे इस विश्लेप में सीताजीने अपने अनन्यार्हत्व को प्रकाश की।

तथाच— इस अवतार में सीताजी के विषय में कहे हुए तीनों विश्लेपों का हेतु कृपादि तीनों गुणों का प्रकाश करना है, ऐसा न होतो कभी न छोडने वाली कर्म के वश कभी न होनेवाली सीताजी को कर्मवश्यों के तरह अलग होनेका हेतु नहीं है ।

अपने पुरुषकारत्वोपयोगि गुणको और पुरुषकारत्व को प्रकट करनेके लिये ही यह अवतार है, इस कारण—

'सीतावतार के मूल जिन कृपादिगुणों को कहते हैं वे भी इस रंगनायकी में हैं' ऐसा भट्टर स्वामी कहे हैं ।

**संश्लेषविश्लेषयोरुभयोश्च पुरुषकारत्वं भासते॥१२॥**

---

एवं चेतनविषयेऽनुग्रहस्य निदानकृपायाः ईश्वरमुपसृत्य वशीकर्तुं निदानस्य पारतंत्र्यादेः स्वेनैव प्रकाशः– शास्त्रेषु श्रवणं विनानुष्ठानपर्यंतदर्शनेन स्वं पुरुषकारत्वेनाश्रयतां रुचिविश्वासदार्ढ्यार्थं कृतः।

एवंभूतगुणविशिष्टाया अस्याः पुरुषकारत्वं क्व प्रकाशत इत्यत आह––संश्लेषविश्लेषयोरिति।

पुरुषकारत्वं नाम–घटकत्वं, तच्चास्यास्तेन सह संश्लेषदशायां विश्लेषदशायां च प्रकाशत इत्यर्थः।

संश्लेषदशायां बालस्वामिना स्वामिनि वनं प्रति गमनसमये एनं विहाय गंतव्यमिति विचारयत्यहमपि सहैव नेतव्य इति–

---

देव्याः संश्लेषविश्लेषकालयोरुभयोरपि।
पुरुषाकारता शुद्धा भासते कार्यकारिणी॥१२॥

इस प्रकार चेतन के विषय में अनुग्रह करने का हेतु कृपा और ईश्वर को वश करने का हेतु पारतंत्र्य और अनन्यार्हत्व इन तीनों गुणों को आप ही प्रकाश करना शास्त्रों में श्रवण करने की अपेक्षा अनुष्ठान पर्यंत देखकर लक्ष्मीजी को पुरुषकारतया आश्रयण करनेवालों की रुचि और विश्वास होनेके लिये ही है।

एवं भूत गुणवाली सीता जी की पुरुषकारता कहां दीखती है इस आकांक्षा में कहते हैं– संश्लेष और विश्लेष इन दोनों में इत्यादि।

संश्लेष और विश्लेष इन दोनों में पुरुषकारत्व भासता है॥ १२॥

पुरुषकारत्व– घटकत्व। वह घटकत्व परमात्मा के साथ वर्तमान दशा और परमात्मा से अलग रहनेकी दशा में भी भासता है।

संश्लेष दशा में बालस्वामी वन को जानेके समय श्रीरामजी हमको छोड जाते हैं ऐसा जान मुझे भी संग लेजाना चाहिये ऐसा समझ––

'स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः ।
सीतामुवाचातियशा राघवं च महाव्रतम् ॥'

इत्युक्तप्रकारेण शरणवरणकरणसमये । पंचवट्यां स्थितिसमये जलछायाभ्यां समृद्धे कस्मिंश्चिद्देशे पर्णशालां रचयेति स्वामिन्यभिदधाति सयि यदा स्वातंत्र्यमारोपयत्तदा मामत्यजदिति विक्लृतेन—

'एवमुक्तस्तु रामेण लक्ष्मणः संयतांजलिः ।
सीतासमक्षं काकुत्स्थमिदं वचनमब्रवीत् ॥
परवानस्मि काकुत्स्थ त्वयि वर्षशतंस्थिते ।
स्वयं तु रुचिरे देशे क्रियतामिति मां वद ॥'

इत्युक्तप्रकारेण स्वपारतंत्र्यं लब्धुं सांजलिहस्तेन प्रार्थना कृता तदा च लक्ष्मीं पुरुषकारत्वेन पुरस्कृत्यैव स्वापेक्षितस्य प्राप्तत्वात्, आसुरप्रकृतौ जयंते काकरूपं गृहीत्वागत्य जननीविषयेऽकृत्ये प्रवृत्ते सति—

---

'वह महा यशस्वी लक्ष्मणजी भ्राता के चरणों में गिर सीताजी और दृढव्रत रामजी से कहते भये।'

इस उक्ति के अनुसार शरणागति करने के समय । और पंचवटी में पहुंचनेपर जल और छाया के प्रदेश को देखकर पर्णशाला को बनाओ ऐसा रामजी के कहने पर मेरे शिर में स्वातंत्र्य को रखनेसे श्रीरामजी हमको छोडदिये ऐसा दुःखित हो—

'इस प्रकार श्रीरामजी के कहनेपर लक्ष्मण जी हाथ जोड सीताजी के सामने श्रीरामजी से कहते भये— हे राघव ! आप की सत्ता जहांतक रहैगी तहांतक मैं परतंत्र हूं, आप ही अपने इच्छित सुंदर स्थान को दिखाकर मुझे बनानेकी आज्ञा दीजिये ।'

इस उक्ति के अनुसार अपने पारतंत्र्य को पानेके लिये हाथ जोड खडा हो अपेक्षा करनेके समय सीताजी को पुरुपकारतया आगे कर अपने अपेक्षित को लक्ष्मण जी पाये हैं । असुरप्रकृति जयंत काकरूप धारण कर सीताजी के

'कः क्रीडति सरोषेण पंचवक्त्रेण भोगिना ।'

इति स्वामिना तदुपरि क्रुद्धेन मस्तकं च्छेत्तुं ब्रह्मास्त्रे प्रयुक्ते सति

'स पित्रा च परित्यक्तः सुरैश्च समहर्षिभिः ।
त्रीन् लोकान् संपरिक्रम्य तमेव शरणं गतः ॥'

इत्युक्तप्रकारेण सर्वत्र सर्वतो भ्रमित्वा कुत्राप्याश्रयाभावेन निराश्रये शरणागते सति–

'स तं निपतितं भूमौ शरण्यः शरणागतम् ।
वधार्हमपि काकुत्स्थः कृपया पर्यपालयत् ॥' इति
'पुरतः पतितं देवी धरण्यां वायसं तदा ।
तच्छिरः पादयोस्तस्य योजयामास जानकी ॥
प्राणसंशयमापन्नं दृष्ट्वा सीताथ वायसम् ।
त्राहि त्राहीति भर्तारमुवाच दयया विभुम् ॥
तमुत्थाप्य करेणाथ कृपापीयूषसागरः ।
ररक्ष रामो गुणवान् वायसं दययैक्षत ॥'

---

विषय में अकृत्य करनेको प्रवृत्त होनेपर—'रोषविशिष्ट पंचमुख सर्प के साथ कौन खेलता है ।' इस तरह श्रीरामजी उसपर क्रुद्ध हो शिरश्छेदन करनेके लिये ब्रह्मास्त्रका प्रयोग किये ।

'वह पिता (इन्द्र), देवता और महर्षियों से परित्यक्त हो तीनों लोक में घूमकर अन्तमें श्रीरामजी के ही शरण में आया ।'

'वह दयासागर सर्वरक्षक श्रीरामजी शरणागत भूमि में गिरा हुआ बध करनेयोग्य उस जयंत काक को अपनी कृपा से रक्षा किये ।' इति

'उस समय श्रीजानकी अपने आगे भूमि में गिरा हुआ उस वायस के शिर को श्रीरामजी के चरणारविन्दों में लगाती भयी ।

प्राण छूटनेका भय करनेवाला उस वायस को देख दयार्द्रचित्त हो जानकीजी रक्षा करो रक्षा करो ऐसा अपने स्वामी से कहती भयी ।

अनंतर कृपासागर श्रीरामजी अपने हाथ से उस काक को उठा दयासे देखते हुए रक्षा किये ।'

इति श्रीरामायणपद्मपुराणयोरुक्तप्रकारेणैतत्पुरुषकारेण स्वामिना रक्षितत्वाच्च । विश्लेषदशायां च—

'इह संतो न वा संति सतो वा नानुवर्त्तसे।
तथाहि विपरीता ते बुद्धिराचारवर्जिता॥'

इत्यादिना विपरीतबुद्धिं रावणं स्वामिनश्चरणयोर्घटयितुमुपायस्य दृष्टत्वात्, रावणवधानंतरं राक्षसीषु चित्रवधं कर्तुमुद्युक्तं हनुमंतं प्रति—

'पापानां वा शुभानां वा वधार्हाणां प्लवंगम।
कार्यं करुणमार्येण न कश्चिन्नापराध्यति॥'

इति तत्कृपोद्भवनार्हवाच उक्त्वा क्षमापयितृत्वाच्च—उभयोर्दशयोरस्याः पुरुषकारत्वं ज्ञायते ।

ननु हनूमति राक्षस्योऽपराधानुगुणं दंडनाय देया इति वदति लक्ष्मीस्तेन सह विवदित्वाऽरक्षत्खलु ।

---

ऐसा श्रीरामायण और पद्मपुराणों में कहेहुए प्रकार सीताजी के पुरुषकार से श्रीरामजी रक्षा किये, इस कारण संश्लेषदशा में पुरुषकारत्व का भान होता है। विश्लेषदशा में भी—

'हे रावण ! जिस कारण तुमारी बुद्धि आचारभ्रष्ट और विपरीत है उस कारण मैं समझती हूं कि—इस तुमारे लंका में सत्पुरुष नहीं हैं या होनेपर भी तुम उन का अनुवर्त्तन नहीं करते हो।' इत्यादि से विपरीत बुद्धि रावण को स्वामी के चरणारविन्द में मिलानेके लिये उपाय को शोची थी। और रावण वधानंतर राक्षसियों को चित्रवध करनेके लिये उद्युक्त हुए मारुति के प्रति—

'हे वानर ! पापी हो, पुण्यात्मा हो, या बध के अर्ह हो उनके ऊपर श्रेष्ठ पुरुष को दया करना चाहिये, कोई भी पुरुष अपराध से मुक्त नहीं है ।'
ऐसा हनुमानजी से दयाजनक वचन कह श्रीसीताजीने क्षमा करवाई है। इस कारण विश्लेषदशा में भी पुरुषकारत्व जानाजाता है ।

हनुमानजी अपराधानुसार दण्ड देनेके लिये राक्षसियों को हमारे सिपुर्द

'मातर्मैथिलि राक्षसीस्त्वयि तदैवार्द्रापराधास्त्वया
रक्षंत्या पवनात्मजाल्लघुतरा रामस्य गोष्ठी कृता ।
काकं तं च विभीषणं शरणमित्युक्तिक्षमौ रक्षतः
सा नः सांद्रमहागसः सुखयतु क्षांतिस्तवाकस्मिकी ॥'

इति पवनात्मजादरक्षादिति भट्टार्यैरप्युक्तम् । तत्र पुरुषकारत्वं कथमिति चेन्न--बलात्कारेण विना तदनुसरणेन क्षमापयितृत्वात्पुरुषकारत्वमुच्यते । 'हनूमंतं क्षमापयंती स्वोक्तिमार्गे आगच्छन्तं क्षमापयतीति न वक्तव्यं खलु' इति हनुमद्विषये पुरुषकारत्वं स्वयमेवाभ्यधात् । अत उभयदशायामप्यस्याः पुरुषकारत्वं ज्ञायते इत्येतावन्मात्रकथनरूपेऽस्मिन् वाक्येऽस्याप्युदाहरणे न विरोधः ।

---

करो ऐसा कहनेपर सीताजी उन के साथ विवाद कर राक्षसियों की रक्षा की ।

'हे मातः ! हे मैथिलि ! तात्कालिक अपराधी राक्षसियों को मारुति से रक्षा करानेवाली आपकी कृपा की अपेक्षा शरणागत काकासुर और विभीषण को रक्षा करने वाले श्रीरामजी की कृपा लघु होती है, वह आप का निर्हेतुक कृपा अत्यंत महापापी मादृश जनों को सुखी करें ।'

इस वात को श्रीपराशरभट्टार्य भी कहे हैं ।

राक्षसियों की रक्षा करने में पुरुषकारत्व कैसे भान होता है, इस शंका में कहते हैं—बलात्कारके विना मारुति का अनुसरण कर क्षमा करानेसे पुरुषकारत्व भान होता है । स्वयं श्रीलोकाचार्य स्वामी भी मुमुक्षुपडि में 'हनुमानजी से क्षमा करानेवाली अपने वचनानुसार चलनेवाले स्वामी से क्षमा कराती हैं इस वात में क्या कहना ।' ऐसा मारुति के विषय में पुरुषकारत्व को कहे हैं ।

इस कारण संश्लेष और विश्लेप दोनों दशाओं में लक्ष्मीजी का पुरुषकारत्व भान होता है—ऐसा इस अर्थ को कहनेके समय राक्षसियों को मारुति से सीताजीने पुरुषकार हो रक्षा की, इस उदाहरण को देने में कोई दोष नहीं ।

संश्लेषदशायामीश्वरं वशीकरोति,
विश्लेषदशायां चेतनं वशीकरोति ॥ १२ ॥

---

अनयोरुभयोरपि दशयोरस्याः पुरुषकारप्रकारः कीदृश इत्याकांक्षायामाह—संश्लेषदशायामित्यादि ।

ईश्वरवशीकरणं नाम—अपराधानेव दृष्ट्वा 'क्षिपामि न क्षमामि' इति स्थितस्य स्थितिं निवर्त्य स्वांऽगीकारौन्मुख्यकरणम् । चेतनवशीकरणं नाम—अकृत्यकरणादिशीलस्य भगवद्विमुखस्य तादृशाकारं दूरीकृत्याऽऽश्रयणौन्मुख्यकरणम् ।

संश्लेषदशायां बालस्वामिनिमित्तमीश्वरविषये, विश्लेषदशायां राक्षसीनिमित्तं हनुमद्विषये च पुरुषकारत्वस्य, उभयदशायामपि पुरुषकारत्वं ज्ञायत इत्येतावन्मात्रस्य निदर्शितत्वेऽपि, प्राकरणिकोऽर्थः—संसारिचेतनस्येश्वरस्य च घटनमित्यस्य वाक्यस्यैवमेवार्थः । तस्मादीश्वरेण स्वसंश्लेषदशायां चेतन आश्रयणोन्मुख आगते सति पूर्वापराधान् दृष्ट्वेश्वरेऽनंगीकृत्य स्थिते च सति तस्स्वातंत्र्यं दूरी[illegible] कृपादिगुणोज्जीवनं कृत्वैत-

---

हरिसंश्लेषकाले तु स्ववशः क्रियते हरिः ।
तद्विश्लेषकाले च चेतनं स्ववशं तथा ॥१३॥

इन दोनों दशाओं में इन का पुरुषकार प्रकार कैसा ? इस शंका में कहते हैं—संश्लेषदशा में इत्यादि—

संश्लेषदशा में ईश्वर को वश करती हैं
विश्लेष दशा में चेतन को वश करती हैं ॥ १२ ॥

ईश्वर को वश करना माने—अपराध ही को देखकर 'क्षिपामि' 'न क्षमामि' ऐसे कहने वाले ईश्वरका स्वातंत्र्य को हटाकर अंगीकार करनेको उन्मुख बनाना, चेतन को वश करना माने—अकृत्यकारी और भगवद्विमुख इस चेतन के दोषों को दूर कर आश्रयण करनेको अभिमुख कराना ।

दंगीकारौन्मुख्यकरणम् । विश्लेषदशायां चेश्वरोऽङ्गीकारोन्मुख्य आगतेऽस्मिन् चेतने कर्मानुगुणं विमुखे च सति तद्वैमुख्यं दूरीकृत्य रुचिमुत्पाद्याश्रयणौन्मुख्यकरणं चानया क्रियमाणमुभयवशीकरणम् ।

एवमंगीकारविरोधि स्वातंत्र्यं दूरीकृत्यांगीकारोपयुक्तकृपादीनामुज्ञावितत्वादाश्रयणविरोधिवैमुख्यं दूरीकृत्याश्रयणरुच्यादीनां जनितत्वाच्च 'शॄ हिंसायाम्' इति धातोः 'शॄ विस्तारे' इति धातोश्च निष्पन्ने श्रीशब्दे शृणाति शृणातीति व्युत्पत्तिद्वयार्थश्च ज्ञायते ।

'शृणाति निखिलान् दोषान् शृणाति च गुणैर्जगत्' इत्येतद्व्युत्पत्तिद्वयस्य च चेतनपरत्वेन प्रतीतावपीश्वरं च वशीकरोतीत्यत्राप्येतन्न्यायस्य भानादेवं वक्तुं न विरोधः ।

उभयोर्वशीकरणं केनोपायेनेत्याकांक्षायामाह—उभयोरित्यादि—

---

तथाच इस प्रकार अंगीकार का विरोधी स्वातंत्र्य गुण को हटाकर अंगीकारके उपयुक्त कृपादि गुणों को प्रकटकराने से, आश्रयण विरोधी विमुखता को हटाकर आश्रयण रुचि को उत्पादन करनेसे, 'शॄ हिंसायाम्', 'शॄ विस्तारे' इन धातुओं से निष्पन्न हुआ श्रीशब्द में शृणाति, शृणाति, इन दोनों व्युत्पत्ति का अर्थ इस स्थल में भान होता है ।

'सब दोषों को नाश करती है, गुणों से जगत को विस्तार करती है ।'

यह दोनों व्युत्पत्ति यद्यपि चेतन के विषय में होनेपर भी ईश्वर के विषय में भी यह न्याय भान होता है, इस कारण ऐसा कहना असंगत नहीं ।

दोनों को किस उपाय से वश करती हैं इस शंका में कहते हैं दोनों को इत्यादि ।

## उभयोर्वशीकरणमुपदेशेन ॥१४॥

ईश्वरवशीकरणम्— 'अस्य चेतनस्यापराधान् पारिगणय्य भवान्निष्कास्य कपाटं विदधाति चेदस्यान्यः को वाऽऽश्रयः। भवतोऽस्य च विद्यमाने संबंधविशेषे दृष्टे— 'संबंधस्तु आवयोर्निवर्तनीयो न भवति' इत्युक्तप्रकारेण घटजलस्रवणेपि न गच्छति खलु। स्वभूतस्यास्य लाभः स्वामिनो भवतः खलु फलं, सर्वत्र व्याप्तिं कृत्वा वर्तमानस्य भवतो वक्तव्यं किं रक्षणसापेक्षतयाऽऽगतस्यास्य रक्षणाकरणे भवतः सर्वरक्षकत्वं विफलं स्यात्। 'अनादिकालमस्मदाज्ञातिलंघनं कुर्वाणस्मत्क्रोधविषयस्यास्यापराधोचितदंडमकृत्वा तं क्षमित्वांगीकारे कृते शास्त्रमर्यादा नष्टा स्यात्' इति हि भवतोभिप्रायः। तर्ह्यस्य रक्षणमकृत्वापराधानुगुणं नियमने कृतेपि भवतः कृपादिगुणानां

---

## जीवेशयोर्वशीकार उपदेशेन कुरुते ॥१४॥

दोनों को उपदेश से वश करती हैं ॥ १४ ॥

ईश्वरवशीकरण— 'इस चेतन के अपराधों को गिनकर आप इस को हटा-कर कपाट बंद किये तो इस चेतन का और कोई रक्षक है क्या ? आपके साथ इस के विद्यमान संबंध देखने पर 'संबंध को हम दोनों तोड नहीं सकते।' इस गोदादेवी के वचनानुसार जलपूर्णघट को फोडने से भी दूर नहीं होगा, इस अपने वस्तु को प्राप्त होना मालिक आप का ही फल है। चेतनों को वश करनेके लिये सामने सर्वत्र संचार करनेवाले आप को हम क्या कह सकती ? रक्षा की अपेक्षा से आया हुआ इस चेतन की रक्षा न करे तो आप के सर्वरक्षकत्व का भंग न होगा क्या ? 'अनादिकाल से हमारी आज्ञा को न मानकर हमारे क्रोध का लक्ष्य होनेवाले इस चेतन के अपराध के अनुगुण दंड न दे क्षमा कर अंगीकार करनेपर शास्त्रमर्यादा नष्ट होजायगी.' ऐसा आप के हृदय

जीवनप्रकारः कथं, कृपादीनां जीवनमेतद्रक्षणेनैव स्यात्, 'नियमनाभावे शास्त्रं न जीवति रक्षणाभावे कृपादयो न जीवंति किं कुर्याम्' इति न वक्तव्यं, शास्त्रं विमुखविषयं कृत्वा कृपादिकमभिमुखविषयं कुर्याश्चेदुभयमपि जीवेत्। एवं सत्यमुं रक्षतु' इत्युपदेशेन । अयमुपदेशक्रमः स्वामोक्ते परंदपडिरहस्ये, श्रीकृष्णपादोक्ते परंदरहस्ये च विस्तरेण द्रष्टव्यः।

'पितेव त्वत्प्रेयान् जननि! परिपूर्णागसि जने
हितस्रोतोवृत्त्या भवति च कदाचित् कलुषधीः ।
किमेतन्निर्दोषः क इह जगतीति त्वमुचितै-
रुपायैर्विस्मार्य स्वजनयसि माता तदसि नः ॥'

इत्यपराधपरिपूर्णचेतनाविषये हितपरस्य सर्वेश्वरस्य हृदये कोपप्रकारं तद्दशायामस्य कोपस्य मूलं किमिति पृष्टेऽनेन सम्यक्कृतोपराध इति तस्मिन् वदसि शर्करौदने शिलान्वेषणं कुर्वंति किम्? अस्मिन् जगत्यपराधरहितः क इत्युचितोपायैरपरा-

में भान होता है, इस चेतन की रक्षा न कर अपराधानुगुण दंड देनेसे आप के कृपादिगुण कैसे जीवेंगे ? दंड न देनेसे शास्त्र नहीं जीवेगा, रक्षा न करनेपर कृपादि नहीं जीवेंगे क्या करूं ! ऐसा मत डरो-शास्त्र को आप के विमुखों के विषय में, कृपादिकों को आप के अभिमुखों के विषय में करनेसे दोनों ही जीवेंगे । ऐसा होनेपर इस की रक्षा करो' ऐसा लक्ष्मीजी उपदेश कर ईश्वर को वश करती है । इस उपदेश क्रम को श्रीलोकाचार्यस्वामीजी के परंदपडि रहस्य में आचान्पिळै के परन्दरहस्य में भी विस्तारक्रम से देख सकते हैं ।

'हे जननि ! परिपूर्ण पापी चेतन के विषय में हित करनेके लिये पिता के तरह आप के पति कदाचित् कुपित होते हैं, उस समय आप 'यह क्या हुआ? इस जगत में निर्दोष कौन है ? ऐसा उचित उपायों से ईश्वर को भुलाकर इस चेतन को अपनाती हो, इस कारण आप हम लोगों की माता होती हो ।'

धान् विस्मार्य लक्ष्म्या घटयितृत्वप्रकारस्योक्तत्वादुपदेशेनेश्वरव-शीकरणप्रकारं च संग्रहेण भट्टार्या अवोचन्।

अवतारदशायां च–

'प्राणसंशयमापन्नं दृष्ट्वा सीताथ वायसम्।
त्राहि त्राहीति भर्तारमुवाच दयया विभुम्॥'

इति वाचामगोचरं महापराधं कृतवंतं काकं प्रति शिरश्छेत्तुं प्रेरितस्य ब्रह्मास्त्रस्य कांचन नेत्रच्युतिं कल्पयित्वा भगवान् ररक्षैतदुपदेशेनेति पद्मपुराण उक्तम्।

चेतनवशीकरणं–'त्वदपराधातिशये दृष्टे तव कुत्रापि गत्यंतरं नास्ति, ईश्वरश्च निरंकुशस्वतंत्रत्वादपराधान् दशादशैव दृष्ट्वा विभज्य नाशयति, एतदनर्थपरिजिहीर्षायां तच्चरणयोर्मस्तकना-मनं विना मार्गांतरं नास्ति, अपराधपूर्णं मां स कथमंगीकुर्यात् दंडयेदेवेति मा भीः, आभिमुख्यमात्रेऽपराधान् क्षंतुं भोग्यत्वेन स्वीकर्तुं चोपयुक्तैर्गुणैः स पुष्कल इति लोके प्रसिद्धः। एवं च

---

ऐसा उपदेश से ईश्वर को वशकरनेके प्रकार को श्रीपराशरभट्टार्य ने कहा है।

अवतारदशा में भी 'प्राणसंशय प्राप्त हुए वायस को रक्षा करो रक्षा करो ऐसा पति से कहतीभयी।'

ऐसा वाचामगोचर महापराध करनेवाले काक को [illegible] प्रयोग किया हुआ ब्रह्मास्त्र को एक नेत्र से तृप्त करा भगवान श्री[illegible] लिये यह इन के उपदेश से ही, ऐसा पद्मपुराण में कहा है।

चेतन को देखकर 'तुमारे अपराधों की अधिकता को देखने पर तुम को कहीं पद रखने स्थान नहीं, निरंकुश स्वतंत्र ईश्वर [illegible] एक अपराधों को गिन-कर दंड देंगे इस अनर्थ से बचनेकी इच्छा हो तो उन के चरणों में सिर झुकाओ और कोई उपाय नहीं, अपराध से परिपूर्ण मुझ को बहु दंड न दे अंगीकार करेंगे क्या? ऐसा मत डरो आभिमुख्य मात्र से सब अपराधों को क्षमाकर तुम को भोग्यतया स्वीकार करनेके उपयुक्त गुणों से वह पूर्ण हैं। इस

सति त्वं सुखेन स्थातुमिच्छसि चेत्तमाश्रय, इति परमहितोपदेशेन ॥

तथा कुत्र दृष्टमिति चेत्पापिष्ठं दुर्मार्गे प्रवृत्तं रावणं प्रति—

'मित्रमौपयिकं कर्तुं रामः स्थानं परीप्सता ॥
वधं चानिच्छता घोरं त्वयाऽसौ पुरुषर्षभ ॥
विदितः स हि धर्मज्ञः शरणागतवत्सलः ।
तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ॥'

इति 'स्वामिना संबंधकरणं तव प्राप्तम् । तथा कर्तुं नेच्छसि चेन्मार्गे चौर्यं कुर्वतामपि पृथिव्यां पादं निधाय चौर्यं कार्यं तव किंचिद्वासस्थानमपेक्षितं चेत्स आश्रयणीयः, तत्स्वत्वरहितं किंचिदपि स्थानं नास्ति, दैन्येन शत्रुचरणयोः पतित्वा जीवत एतास्थितेर्मरणमेव श्रेय इति यदि मन्यसे तथापि त्वां चित्रवधेन विना समीचीनवधेन हिंसितुं स आश्रयणीयः । कृता-

---

लिये तुम सुखी होना चाहो तो ईश्वर का आश्रयण करनेका विचार करो, ऐसा उत्तम हितोपदेश से लक्ष्मीजी चेतन को वश करती हैं ।

यह कहां देखे हैं इस आशंका में कहते हैं— पापिष्ठ दुर्मार्गप्रवृत्त रावण को उद्देशकर—

'हे रावण ? तुमारे लंका को बचाने की इच्छा हो तो और घोर बध को न चाहो तो उस पुरुषोत्तम का आश्रयण करो ।

'वह शरणागति रूप धर्म को जाननेवाले और शरणागत वत्सल हैं, जो जीनेकी इच्छा है तो उन के साथ मित्रता करलो' ऐसा स्वामी के साथ मित्र करलेना ही तुमको उचित है, यह न बने तो रास्ते में लूटने वालों को भी पृथिवी में पांव को स्थिर रखकर ही लूटना चाहिये, तुम को रहनेके लिये एक स्थान की अपेक्षा हो तो उन का आश्रयण करो उन के बिना कोई स्थल नहीं है।' 'दीन हो शत्रु के चरण में गिर बचने की अपेक्षा मरना ही अच्छा है', ऐसा समझते हो क्या ? तब भी चित्रवध न कर समीचीन बध करने के लिये भी

पराधं मां कथं स्वीकुर्यादिति विचारं माकुरु— आभिमुख्ये कृते पूर्वकृतमपराधं दृष्ट्वा कोपनैच्यं तस्य नास्ति, स पुरुषोत्तमः, शरणागतिः परमधर्मः इति जानाति, शरणागतदोषमपश्यन् वत्सल इति सर्वैरपि ज्ञातुं योग्यः प्रसिद्धः स्वामी, त्वं जीवितव्यमितीच्छसि चेत्तेन सह तव संबंधः कर्तव्यः' इति भयं प्रदर्श्योपदिदेश। तस्य वश्यत्वाभावोऽस्या उपदेशन्यूनतया न भवति किंतु तस्य पापप्राचुर्येण।

एवमुभावपि वशीकरोतीत्युक्तत्वात् 'श्रु श्रवणे' इति धातोर्निष्पन्ने श्रीशब्दे शृणोति श्रावयतीति व्युत्पत्त्योः श्रावयतीति व्युत्पत्त्यर्थ उक्तः। श्रावयतीत्यस्येश्वरविषयत्वेन पूर्वेषां ग्रंथेषु बहुस्थलेषु दृष्टत्वेऽपि, 'अथवा विमुखानामपि भगवदाश्रयणोपदेशश्रावयितृत्वं—

---

उन का आश्रयण करना चाहिये 'ऐसा अपराधी मुझ को वह अंगीकार करेंगे क्या ? ऐसा मत डरो. अभिमुख होनेवालों के पूर्व अपराधों को देख कर क्रुद्ध होने की नीचता उन में नहीं है, वे पुरुषोत्तम हैं शरणागती को परम धर्म जानते हैं और शरणागत चेतन के दोष को न देख भोग्य मानने के लिये वात्सल्य गुण उनमें है यह सर्वत्र प्रसिद्ध है, इस लिये तुम को जीनेकी इच्छा हो तो उन के साथ तुम का संबंध रखना चाहिये' ऐसा डराकर रावण को उपदेश की है। रावण के रामजी का आश्रयण न करनेका कारण सीताजी के उपदेशकी न्यूनता नहीं किन्तु उस के प्रबल पाप ही कारण है।

इस प्रकार चेतन और परमात्मा दोनों को उपदेश द्वारा वश करनेसे 'श्रु श्रवणे' इस धातु से निष्पन्न श्रीशब्द में शृणोति, श्रावयति, इन व्युत्पत्तियों में 'श्रावयति' इस व्युत्पत्ति का अर्थ कहागया। 'श्रावयति' यह ईश्वर विषयतया ही पूर्वाचार्यों के ग्रंथों में देखा जाता है तौ भी तत्वदीप ग्रंथ में 'अथवा विमुखों को भी भगवदाश्रयणोपदेश को करना, 'वह शरणागत धर्मज्ञ और शरणागत

उपदेशेनोभयोरपि कर्मपारतंत्र्यं नश्यति ॥१५॥

---

'विदितः सहि धर्मज्ञः शरणागतवत्सलः ।
तेन मैत्री भवतु ते यदि जीवतुमिच्छसि ॥'

इति रावणं प्रत्युपदेशात्' इति तत्वदीये चेतनविषयत्वमपि-यतिभिरुक्तम् । अतोऽत्रापि चेतनविषयत्वोक्तौ न विरोधः ।

एतदुपदेशेनोभयत्रापि फलितमाह—उपदेशेनेत्यादिना ।

एवमुभयोरपि तत्तदनुगुणमनया क्रियमाणेनोपदेशेन पुण्य-पापयोर्वशे आकृष्यमाणस्य भगवद्विमुखस्य संचरतोऽस्य चेत-नस्य कर्मपारतंत्र्यं एतत्कृतं कर्म प्रधानं कृत्वैतदनुगुणमेव कुर्यामित्येतद्रक्षणविमुखस्य सत ईश्वरस्य कर्मपारतंत्र्यं च निवृत्तं भवतीत्यर्थः ।

---

उभयोरुपदेशो हि कर्मतन्त्रत्वनाशकः ॥१५॥

वत्सल हैं तुम को जीने की इच्छा होतो उन का आश्रयण करो' ऐसा रावण को उपदेश करने से' इस तरह जीयर स्वामी चेतन के विषय में भी कहे हैं । इस प्रबंध में भी चेतन के विषय में कहनेसे कुछ विरोध नहीं ।

•इस उपदेश से चेतन और ईश्वर में क्या फलैगा इस आशंका में कहते हैं– उपदेश से इत्यादि ।

उपदेश से दोनों का कर्म पारतंत्र्य जाता रहेगा ॥१५॥

इस प्रकार दोनों को तत्तदनुगुण क्रियमाण लक्ष्मीजी के उपदेश से पुण्य पापों के वश में खींचाजाकर भगवद्विमुख हो संचार करने वाले चेतन का कर्म पारतंत्र्य और चेतन कृत कर्म को प्रधान समझ उस के अनुगुण फल देंगे ऐसा इस का रक्षण में विमुख होने वाले ईश्वर का कर्म पारतंत्र्य यह दोनों निवृत्त होते हैं ।

उपदेशेनानिवर्तने चेतनं कृपया वशीकरोति,
ईश्वरं सौंदर्येण वशीकरोति ॥१६॥

---

चेतनस्य कर्मपारतंत्र्यमनाद्यचित्संबंधकार्याविद्यानिबंधनम्, ईश्वरस्य कर्मपारतंत्र्यं निरंकुशस्वातंत्र्यकार्यस्वसंकल्पनिबंधनम्, एतदुभयमप्यनादिसिद्धमपि मातृत्वसंबंधेन चेतनस्याप्ततया महिषीत्वसंबंधेनेश्वरस्याभिमततयाऽनयोरुभयोरपि हृदयमार्द्रं कृत्वा आश्रयणांगीकाराभिमुखं यथा स्यात्तथा क्रियमाणेनोपदेशेन निवृत्तं भवतीत्यत्र न विरोधः।

एतदुपदेशेनैतयोर्निवर्तनाभावेऽनया किं क्रियत इत्यत आह—उपदेशेनेत्यादि।

---

उपदेशे कृतेऽपीत्थमुभयोरनिवर्तने।
स्ववशं कृपया जीवान् सौंदर्येणेश्वरं नयेत्॥१६॥

चेतन का कर्मपारतंत्र्य अनादि अचित्संबंध द्वारा होनेवाले अज्ञान से हुआ है, ईश्वर का कर्मपारतंत्र्य निरंकुश स्वातंत्र्य कार्यभूत अपने सकल्प से आया हुआ है। इन दोनों के कर्मपारतंत्र्य अनादि होनेपर भी मातृत्वसंबंध से चेतन को आप्त और महिषीत्व संबंध से ईश्वर को अभिमत होनेवाली लक्ष्मीजी के चेतन और ईश्वर को आर्द्रचित्त हो आश्रयण और अंगीकार के अभिमुख होनेके लिये क्रियमाण उपदेश से निवृत्त होने में बाधक नहीं।

इस उपदेश से चेतन और ईश्वर कर्मपारतंत्र्य से नहीं हटेंगे तो लक्ष्मीजी क्या करेंगी इस आकांक्षा में कहते हैं—उपदेश से नहीं लौटनेपर इत्यादि।

उपदेश से नहीं लौटने पर चेतन को कृपा से वश
करती है, ईश्वर को सौंदर्य से वश करती है ॥१६॥

चेतनस्यानिवर्तने मूलं—'अनादिकालं यत्किंचिद्वलंब्य व्यावृतिव्रतम्' इत्युक्तप्रकारेण भगवद्विमुखस्य विषयांतरप्रवणस्य भ्रमतो दुर्वासनादयो भवंति। ईश्वरस्यानिवर्तने हेतुः—अपराधानुगुणमयं शिक्षणीय इत्यभिसंधिना स्वस्थितेश्च्युतिं विना स्थातुं निदानं निरंकुशस्वातंत्र्यम्। एताभ्यां हेतुभ्यामुभयोरपि स्वोपदेशेन स्वस्वकर्मपारतंत्र्यान्निवर्तनाभावे—

चेतनस्य कृपया वशीकरणं नाम— हंतास्य दुर्बुद्धिर्निवृत्ता स्यादनुकूला बुद्धिः स्यादिति तद्विषये स्वेन क्रियमाणया 'पंकजवासिन्याः श्रीकृपा' इत्युक्तया परमकृपयाऽस्य पापबुद्धेर्निवृत्त्या भगवदाभिमुख्यसंपादनम्।

ईश्वरस्य सौंदर्येण वशीकरणं नाम—ओं तवेदं कार्यमित्युपदेशानंगीकारे नेत्रतिर्यक्करणं कंचुकश्लथनं कृत्वा स्वसौंदर्येण व्यामोहयित्वा स्वोक्तिप्रकारेणाकृत्वा स्थातुमशक्तो यथा स्यात्तथा कृत्वांगीकारोन्मुख्यकरणम्।

---

चेतन के न लौटनेका कारण—अनादिकाल से 'किसी एक व्रत को अवलंबन कर अलग होता है' इस वचन के अनुसार भगवद्विमुख और विषयांतरप्रवण होनेसे आयेहुए दुर्वासनादि हैं। ईश्वर के न लौटनेका कारण—अपराधानुगुण इस चेतन की शिक्षा करूंगा ऐसी इच्छा से अपनी स्थिति को नहीं छोडनेके योग्य निरंकुश स्वातंत्र्य है। इन हेतुओं से दोनों अपने उपदेश से स्व स्व कर्मपारतंत्र्य से नहीं लौटने पर—

चेतन को कृपा से वश करना माने—'हाहा इस की दुर्बुद्धि निवृत्त हो अनुकूल बुद्धि हो' ऐसा उस के विषय में लक्ष्मीजी से कीजानेवाली परमकृपा के द्वारा पापवुद्धि नष्ट हो भगवदभिमुख होनेके योग्य करना।

ईश्वर को सौंदर्य से वश करना माने—'हांजी जाइये तुमरा यही काम है' ऐसा कह उपदेश को न मानने पर नेत्रों को घुमाना, चोली को ढीला करना इत्यादि से अपने सौंदर्य दिखा उन को पागल बना अपनी बात को काट न सकें ऐसा कर अंगीकारोन्मुख बनाना।

**अज्ञातार्थान् साकल्येन ज्ञापयित्वाचार्यकृत्यस्य पुरुषकारकृत्यस्योपायकृत्यस्य च स्वेनैव स्वोपर्यारोपितत्वान्महाभारत उपायवैभव उक्तः ॥ १७॥**

---

एवं 'पुरुषकारभवनसमय' इत्यारभ्यैतावत्पर्यंतं पुरुषकारत्वोपयोगिगुणविशेषाः, तेषां स्वेनैव प्रकाशनप्रकारः संश्लेषविश्लेषयोरुभयोः पुरुषकारत्वं, तत्प्रकारविशेषाश्चोक्ताः ।

उपायवैभवः,

कृपादिप्रकाशनकथनादेव श्रीरामायणे पुरुषकारवैभवकथनप्रकारमुपपादि । अनंतरं महाभारते उपायवैभवोक्तिप्रकारमुपपादयति— अज्ञातेत्यादिना ।

---

अज्ञातान् सकलानर्थान् ज्ञापयित्वोपदेशतः ।
श्रीगुरूपायकृत्यानि स्वस्मिन्नारोपणात्स्वयम् ।
महाभारतकात्स्न्यें चोपायोत्कर्षः प्रकीर्तितः ॥१७॥

तथाच—'पुरुषकार होनेके समय' इस सूत्र से लेकर यहां तक पुरुषकारत्व के उपयुक्त गुणविशेषों को, उन गुणों को आप ही प्रकाश करनेके प्रकार को, संश्लेष और विश्लेष इन दोनों में क्रियमाण पुरुषकार को और उस पुरुषकार के प्रकारों को कहे हैं।

उपाय वैभव ।

कृपादिगुणों को प्रकट की है ऐसा कहने से श्रीरामायण में कहा हुआ पुरुषकार वैभव को प्रतिपादन किये, आगे महाभारत में कहा हुआ उपाय वैभव को कहते हैं—अज्ञात अर्थों को इत्यादि ।

अज्ञात अर्थों को पूर्णतया जनाकर आचार्य कृत्य, पुरुषकार
कृत्य और उपाय कृत्य को आप ही अपने ऊपर आरोपण
कर लेने से महाभारत में उपाय वैभव कहा गया ॥१७॥

प्रकारनियतिर्नास्तीत्यर्थः सर्वत्र द्रष्टुं शक्यते॥३१॥
द्रौपदी स्नाता न खलु प्रपत्तिमकरोत्
अर्जुनो नीचमध्येऽमुमर्थमशृणोत्॥३२॥

---

त्वम्। अतएव प्रपत्तेर्देशकालनियमराहित्यं तस्मिन्पदे सम्यक्प्रकाशते इत्याह।

प्रकारनियमराहित्यं प्रदर्शयति—प्रकारनियतिरित्यादिना।

सर्वत्र द्रष्टुं शक्यत इति—अस्यां अनुष्ठातृषु श्रोतृषु सर्वत्र द्रष्टुं शक्यत इत्यर्थः।

स कुत्र दृष्ट इत्यतः पूर्वप्रकृतविषययोर्दर्शयति—द्रौपदीत्यादिवाक्यद्वयेन।

---

प्रकारनियतिर्नेति द्रष्टुं सर्वत्र शक्यते॥३१॥
द्रौपदी स्नानहीना हि प्रपत्तिमकरोत्सती।
नीचमध्ये च शुश्राव पार्थोऽमुमर्थगह्वरम्॥३२॥

प्रपत्ति का देशकालनियमाभाव है ऐसा उस पद में स्पष्ट मालूम होता है।

प्रकारनियमाभाव को दिखाते हैं—प्रकारनियम इत्यादि से।

प्रकारनियमाभाव को सर्वत्र देख सकते हैं॥ ३१॥

सर्वत्र देख सकते हैं—प्रपत्ति करनेवाले और सुननेवाले सब लोगों में देख सकते हैं।

वह कहां देखे हैं इस आकांक्षा में पूर्वप्रस्तुत विषयों में दिखाते हैं—द्रौपदी इत्यादि से।

द्रौपदी स्नान करके नहीं प्रपत्ति की है, अर्जुन
नीचों के वीच में इस अर्थ को सुना है॥ ३२॥

स्नाता न खलु प्रपत्तिमकरोदिति—दुःशासनाकृष्टा सभागमनसमये ।

'रजस्वलैकवस्त्राहं ननु मां नेतुमर्हसि ।
गुरूणां पुरतः स्थातुं सभायां नाहमुत्सहे ॥'

इत्यशुद्धा सत्यपि स्नानमकृत्वा प्रपत्तिमकरोदित्यर्थः । अनेन प्रपत्त्यनुष्ठातृषु प्रयतैः कर्तव्येति नियमाभावो दर्शितः ।

नीचमध्येऽमुमर्थमशृणोदित्यत्र नीचेति 'महावैभवमस्मरंतो नीचा' इति दिव्यसूर्युक्ताः शौरिचिंताविमुखा हेया उच्यंते ।

'विष्णुभक्तिविहीनस्तु यतिश्च श्वपचाधमः ॥'
'विप्राद् द्विषड्गुणयुतादरविन्दनाभ–
पादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ॥'

---

स्नानकर नहीं प्रपत्ति की है माने– दुःशासन से खिंची हुई सभा में आनेके समय–

'मैं रजस्वला और एक वस्त्र हूं हमें सभा में नहीं लेजासकते हो वहां बडों के सामने खडी होने योग्य नहीं हूं ।'

ऐसा अपवित्र द्रौपदी स्नान के विना ही प्रपत्ति की है, इस कारण प्रपत्ति का अनुष्ठान करने वालों को शुद्ध हो प्रपत्ति करना इस नियमाभाव को दिखाये हैं ।

नीचों के बीच में इस अर्थ को सुना है, इस वाक्य में नीच माने– 'महा वैभव को न जाननेवाले ही नीच हैं' ऐसा परकालसूरि से कहे हुए परमात्मा के विमुख और हेय चेतन हैं ।

'विष्णुभक्ति रहित यति (संन्यासी) भी श्वपच (चांडाल) से नीच है ।'
'षड्गुण (अध्ययन अध्यापन यजन याजन दान और प्रतिग्रह) विशिष्ट कमलनाभ के पादारविंदयुगल से विमुख ब्राह्मण के अपेक्षा चांडाल को श्रेष्ठ मानना ।'

तस्माच्छुध्यशुद्धी उभे अपि न संपाद्ये,
स्थितप्रकारेणैवाधिकारी भवति॥३३॥

इति भगवद्विमुखाः श्वपचाधमा उक्ताः । तदुपरि शरणागतां परिभाव्य शरणागतपाण्डवविषये उपद्रवान्कृत्वा वर्तमानत्वात् 'सद्यश्चांडालतां व्रजेत्' इत्युक्तप्रकारेण कर्मचंडालाः खलु मिलित्वा स्थिताः । 'नीचमध्ये' इत्युक्तत्वान्नीचस्पृष्ट्याऽस्या-गता अशुद्धिर्नीचसकाश इत्यर्थश्च ज्ञायते । अनेन प्रपत्ति-श्रवणं नीचमध्ये न संभवतीति नियत्यभावो दर्शितः ।

अनेन फलितं वदन्नमुमर्थं निगमयति—तस्मादित्यादिना ॥

तस्मादिति—अनुष्ठानदशायां श्रवणदशायां चैताभ्यां द्वा-भ्यामेवं कृतत्वादित्यर्थः । शुध्यशुद्धी उभे अपि न संपाद्ये

शुध्यशुद्धी न संपाद्ये तस्मात्स्वस्मात्कदाचन ।
स्थितप्रकारेणैवात्राधिकारी सर्वसंमतः॥३३॥

ऐसा भगवद्विमुखों को चांडाल से नीच कहा है । तदुपरि शरणागता द्रौपदी को परिभव कर शरणागतपांडवों के विषय में बुराइयां करने से 'उसी वखत चांडालता को प्राप्तहोता है' इस वचनानुसार सब ही कर्म चांडाळ इकट्ठा हुए हैं । 'नीचों के बीच में' ऐसा कहनेसे— नीच स्पर्श से अर्जुन को हुई अशुद्धि नीच समीप में हुई जानना । इस से प्रपत्ति का श्रवण नीचों के बीच में नहीं करना चाहिये इस नियम के अभाव के दिखाये हैं ।

इस का प्रयोजन कहते हुए इस अर्थ को समाप्त करते हैं— इस से इत्यादि ।

इस कारण शुद्धि और अशुद्धि को नहीं देख ।
स्थितप्रकार से अधिकारी होता है ॥३३॥

इस से अनुष्ठानदशा में और श्रवण दशा में ये दोनों (द्रौपदी और अर्जुन)

अत्र वेल्वेट्टिप्पिळ्ळैइत्यस्य कलिवै-
रिदासोक्ता वार्ता स्मर्तव्या ॥३४॥

इति—प्रपत्तावन्वयसमयेऽशुद्धस्य सतः शुद्धिर्न संपाद्या, शुद्ध-
स्य सतोऽशुद्धिर्न संपाद्येत्यर्थः । अशुद्धिर्न संपाद्येति पूर्वोक्त-
योरुभयोरशुद्धिदशायां प्रपत्तावन्वयस्योक्तत्वादशुद्धिरस्यापेक्षि-
ता किमिति शंकानुदयार्थं स्थितप्रकारेणैवाधिकारी भवतीति
प्रपदनकाले शुद्धो वाऽशुद्धो वा यादृशप्रकारास्तिष्ठति तादृश-
प्रकार एवाधिकारी भवतीत्यर्थः । द्रौपद्यर्जुनयोः प्रपत्त्यनुष्ठान-
तच्छ्रवणदशयोस्तदंगत्वेन शुद्धिसंपादनाभाववदशुद्धिसंपादनं
न दृश्यते, स्थितप्रकारेणैवाधिकारिणावभवताम् ।

एतदर्थविषय आप्तवचनं स्मारयति—अत्रेत्यादिना ॥

वेल्वेट्टिपिळ्ळैइत्यस्य कलिवैरिप्रसादिता ।
स्मरणीयात्र वार्ता सा रामप्रपदनात्मिका ॥३४॥

ऐसा करने से शुद्धि और अशुद्धि को नहीं देखना— प्रपत्ति करने के समय अशुद्ध को शुद्धि की अपेक्षा न करना शुद्ध को अशुद्धि की अपेक्षा न करना । पूर्वोक्त दोनों अशुद्ध दशा में प्रपत्ति में संबंध रखनेसे अशुद्धि की अपेक्षा करें क्या ? ऐसी शंका न होनेके लिये अशुद्धि को नहीं देखना कहा है । स्थितप्रकार से अधिकारी होता है— प्रपदन काल में अशुद्ध या शुद्ध जैसा रहा है वैसा ही प्रपत्ति का अधिकारी होता है । द्रौपदी और अर्जुन प्रपत्त्यनुष्ठान प्रपत्तिश्रवण दशाओं में तदंगतया शुद्धि की अपेक्षा जैसे नहीं किये तैसे ही अशुद्धि की भी अपेक्षा नहीं किये हैं, स्थितप्रकार से अधिकारी हुए हैं ॥

इस अर्थ के विषय में आप्तवचन को स्मरण कराते हैं—इस स्थल में इत्यादि से ।

इस स्थल में वेल्वेट्टिप्पिळ्ळै से कलिवैरिदासजी
की कही वार्ता को स्मरण करें ॥ ३४ ॥

वेल्वेट्टिप्पिल्लैआचार्यै भगवता समुद्रशरणागतिसमये प्राङ्मुखत्वादि नियमोपेतेन शरणागतेरनुष्ठितत्वादितरोपायवत्प्रपत्तेरपि केचन नियमा अपेक्षिताः किमिति कलिवैरिदासान् पृच्छति स्वामिविषये दृष्टो नियमोऽस्योपायस्य स्वाभाविकत्वेनागतो न भवति, उपायपरिग्रहकर्तुस्तस्य स्वभावेनागतः। स्वामिनः—

'समुद्रं राघवो राजा शरणं गंतुमर्हति'

इत्युपदिदेश श्रीविभीषणः, स भगवद्विषयशरणागतिसमये समुद्रे स्नात्वा नागतः। अनेनोक्ता भवति स्वामिन इक्ष्वाकुवंश्यत्वेनाचारप्रधानत्वात्स्वनियमैः शरणं गतः, अस्य राक्षसजातीयत्वात् स्थितप्रकारेण शरणंगतः, तस्माद्योग्यस्यायोग्यता न संपाद्या, अयोग्यस्य योग्यता न संपाद्या स्थितप्रकारेणाधिकारी भवतीति वार्ता।

---

वेल्वेट्टिप्पिल्लै— 'श्रीरामजी समुद्र के शरण लेनेपर पूर्वमुख आदि नियमविशिष्ट हो शरणागति किये हैं इसलिये इतरोपायों के तरह प्रपत्ति को भी किसी नियम की अपेक्षा है क्या'? ऐसा कलिवैरिस्वामीजी से पूंछनेपर 'श्रीरामजी में देखा हुआ नियम इस उपाय का स्वाभाविक नहीं उपायस्वीकार करनेवाले श्रीरामजी के स्वभाव से आया है। श्रीरामजी को—

'राजा राघव समुद्र की शरणागति करें'

ऐसा विभीषण सूरि उपदेश किये हैं, वह विभीषणसूरि स्वामीजी के शरण में जानेपर समुद्र में स्नान कर आया है ऐसा नहीं दीखता है। इस से यह तात्पर्य है कि, स्वामी इक्ष्वाकुवंश्य और आचारप्रधान होनेसे अपने नियमों के साथ शरणागति किये हैं, यह विभीषण राक्षसजातीय होनेसे स्थितप्रकार से शरणागति किया, इस लिये योग्य को अयोग्यता की अपेक्षा नहीं स्थितप्रकार से अधिकारी होते है' ऐसा कलिवैरिस्वामीजी की वार्ता।

अधिकारिनियमाभावः कथमिति चेत् ॥ ३५ ॥

धर्मपुत्रादयः द्रौपदी काकः कालियः
श्रीगजेंद्रः श्रीविभीषणः स्वामी
बालस्वामी एतत्प्रभृतयः शरणंगता
इत्यधिकारिनियमो नास्ति ॥ ३६ ॥

---

अनंतरमधिकारिनियमाभावमुपपादयिष्यन् तज्जिज्ञासुप्रश्न-मनुवदति—अधिकारिनियमाभाव इत्यादिना ।

तस्योत्तरमाह—धर्मपुत्रादय इति ।

'द्रौपद्या सहिताः सर्वे नमश्चक्रुर्जनार्दनम्'

---

कथंकारोऽधिकर्तॄणां नियमो नात्र वर्तते
इति चेत्पृच्छ्यते तत्र नियमो नैव दृश्यते ॥३५॥

द्रौपदीकाककालियश्रीगजेन्द्रविभीषणाः ।
धर्मपुत्रादयः स्वामिबालस्वामिमुखाः शुभाः ।
प्रपन्ना अधिकर्तॄणां नास्त्यतो नियमः क्वचित् ॥ ३६ ॥

अनंतर अधिकारिनियमाभाव को उपपादन करने की इच्छा से तज्जिज्ञासु कर्तृक प्रश्न को अनुवाद करते हैं ।

अधिकारि नियम का अभाव कैसा ? ॥ ३५ ॥

उसका उत्तर देते हैं— धर्मपुत्रादि इत्यादि से ।

धर्मपुत्रादि, द्रौपदी, कालिय, काकासुर, श्रीगजेन्द्र
सूरि, श्रीबिभीषणसूरि, श्रीरामजी और लक्ष्मण
प्रभृति शरणागति करनेसे अधिकारिनियम नहीं हैं ॥ ३६ ॥

द्रौपदी के साहित पांचों पांडव जनार्दन श्रीकृष्णजी के शरण में गये हैं'

इति क्षत्रिया धर्मपुत्रादयः,

'शंखचक्रगदापाणे! द्वारकानिलयाच्युत!

गोविंद! पुंडरीकाक्ष! रक्ष मां शरणागताम् ॥'

इति स्त्री द्रौपदी,

'स पित्रा च परित्यक्तः सुरैश्च समहर्षिभिः।

त्रीन् लोकान् संपरिक्रम्य तमेव शरणंगतः॥'

इति देवतारूपमाच्छाद्य महापराधकृत्काकः,

'सोहं ते देवदेवेश नार्चनादौ स्तुतौ न च।

सामर्थ्यवान् कृपामात्रमनोवृत्तिः प्रसीद मे॥'

इति तिर्यग्योनिजः प्रातिकूल्यः कालियः,

'परमापदमापन्नो मनसाचिंतयद्धरिम्।

स तु नागवरः श्रीमान् नारायणपरायणः॥'

इति तिर्यग्जन्मानुकूलः श्रीगजेंद्रः,

ऐसा क्षत्रिय जाति धर्मपुत्रादि,

'हे शंखचक्रगदापाणे! हे द्वारकावासिन्! हे अच्युत! हे गोविंद! हे पुंडरीकाक्ष! शरणागता मेरी रक्षा करो'

ऐसा स्त्री जाति द्रौपदी,

'वह पिता, देवता, महर्पियों से तिरस्कृत हो तीनों लोक में भ्रमण कर उन श्रीरामजी के ही शरण में गया।'

ऐसा देवरूप को छिपाकर महापराधी काकासुर,

'हे देवदेवेश! आप की अर्चना और स्तुति आदि करने में मैं समर्थ नहीं हूं केवल निर्हेतुक कृपा से मेरे ऊपर अनुग्रह करो।'

ऐसा तिर्यक्‌जातीय प्रतिकूल कालीय,

'परम आपदा को प्राप्त हो श्रीनारायणपरायण श्रीगजेंद्रसूरि मन से श्रीहरि का स्मरण करता भया।'

इस प्रकार तिर्यक्‌जातीय अनुकूल श्रीगजेंद्रसुरि;

'सोऽहं परुषितस्तेन दासवच्चावमानितः ।
त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणंगतः ॥'

इति राक्षसजातीयः श्रीविभीषणः,

'बाहुं भुजगभोगाभमुपधायारिसूदनः ।
अंजलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः ॥'

इति सर्वशरण्यः स्वामी,

'स भ्रातुश्चरणौ गाढं निपीड्य रघुनंदनः ।
सीतामुवाचातियशा राघवं च महाव्रतम् ॥'

इति तत्तीरस्थोऽनुसृत्य कैंकर्यं कर्तुमागतो बालस्वामी च । प्रभृतय इत्युक्तत्वात्—

'सोऽहं त्वां शरणमपारमप्रमेयं
संप्राप्तः परमपदं यतो न किंचित् ।
संसारश्रमपरितापतप्तचेताः

---

'मैं उस रावण से कठोर वचन सुन दास की तरह अपमानित हो पुत्र और दाराओं को छोडकर श्रीराघव के शरण में आया हूं ।'

एवं प्रकार राक्षसजातीय विभीषणसूरि,

'सर्प के सदृश बाहु को मस्तक के नीचे रख शत्रुनाशक श्रीरामजी पुर्वाभिमुख हो हाथ जोड समुद्र का शरण लिये ।'

ऐसा सर्वरक्षक श्रीरामजी,

वह लक्ष्मण भ्राता के चरणों को गाढालिंगन कर सीता और श्रीरामजी से कहते भये,

ऐसा नित्यविभूति में सदा अनुचर हो कैंकर्य करनेवाले श्रीलक्ष्मणजी भी, प्रभृतिकहनेसे—

'अपार उपमारहित आप को संसारश्रमरूप ताप से तप्तचित्त आनंदलक्षण मुक्ति को चाहते हुए शरणागति करता हूं आप की अपेक्षा परमपद कोई

निर्वाणे परिणतधाम्नि साभिलाषः ॥'

इति मुचुकुंदः,

'मूढोयमल्पमतिरल्पविचेष्टितोयं
क्लिष्टं मनोस्य विषयैर्न मयि प्रसंगि ।
इत्थं कृपां कुरु मयि प्रणतेऽखिलेश !
त्वां स्तोतुमंबुजभवोपि हि देव नेशः ॥

इति क्षत्रबंधुः,

'भगवंतं प्रपन्ना सा भगवंतमवाप सा ।

इति माधवी,

'तं प्रभिन्नशिरोग्रीवमास्येभ्यः स्रुतशोणितम् ।
विलोक्य शरणं जग्मुस्तत्पत्न्यो मधुसूदनम् ॥'

इति कालियपत्न्यः,

---

चीज नहीं ।'

ऐसा मुचुकुन्द,

'यह मूढ अल्पमति और अल्पचेष्टित है इस का मन विषयों से क्लेशित हुआ हमारे में नहीं लगा ऐसा समझ हे अखिलेश ! प्रणत मेरे ऊपर कृपा करो आपकी स्तुति करनेको ब्रह्मा भी समर्थ नहीं ।

ऐसा क्षत्रबंधु,

'भगवान् के शरण में गई वह भगवान् को प्राप्त हुई ।'

ऐसा माधवी,

'टूटे हुए शिर और कंठवाला मुखों से चूताहुआ रक्तवाला उस कालीय को देख उस की पत्नी श्रीकृष्णजी के शरण में गयीं ।'

ऐसा कालीयपत्नी,

फलनियमाभावः कथमिति चेत् ॥३७॥

'प्रणामप्रवणा नाथ! दैत्यसैन्यपराजिताः ।
शरणं त्वामनुप्राप्ताः समस्ता देवतागणाः ॥'

इतीन्द्रादिदेवाः,

'राक्षसैर्वध्यमानानां वानराणां महाचमूः ।
शरण्यं शरणं याता रामं दशरथात्मजम् ॥'

इति श्रीवानरसेना । एतत्प्रभृतीनां शरणागतत्वात् प्रपत्तेरेतेऽधिकारिण इति नियतिर्नास्ति, रुचिमन्तः सर्वेऽधिकारिण इत्यर्थः ।

फलनियमाभावप्रश्नमनुवदति–फलेत्यादि ।

तस्योत्तरमाह–धर्मपुत्रादीनां फलमित्यादिना ।

---

को हेतुरितिचेत्पृच्छा फले नियमवर्जने॥३७॥

'हे नाथ दैत्य सैन्य से पराजित हो प्रणाम करतेहुए संपूर्ण देवता समूह आप के शरण में आये हैं।'

ऐसा इंद्रादि देवता,

'राक्षसों से मारी जाकर वानरों की महासेना रक्षक दशरथ कुमार श्रीरामजी के शरण में गयी।'

ऐसा श्रीवानरसेना। इत्यादि सब ही शरणागति के करनेसे प्रपत्ति का अमुक ही अधिकारी है ऐसा कोई नियम नहीं, रुचि विशिष्ट सभी अधिकारी हैं।

अनंतर फलनियमाभाव कैसा ? इस प्रश्न का अनुवाद करते हैं—

फलका नियमाभाव कैसा ? ॥ ३७ ॥

उस का उत्तर देते हैं– धर्मपुत्रादियों का फल इत्यादियों से

धर्मपुत्रादीनां फलं राज्यं, द्रौपद्याः फलं वस्त्रं, काककालिययोः फलं प्राणः, श्रीगजेंद्रस्य फलं कैंकर्यं, श्रीविभीषणस्य फलं रामप्राप्तिः, स्वामिनः फलं समुद्रतरणं, बालस्वामिनः फलं रामानुवृत्तिः ॥

---

अनेन पूर्वमधिकारिनियमाभावोपपादनार्थमुक्तैर्धर्मपुत्रादि-प्रभृतिभिः प्रपत्तृभिः राज्यार्थं, वस्त्रार्थं, प्राणार्थं, कैंकर्यार्थं, रामप्राप्त्यर्थं, समुद्रतरणार्थं; रामानुवृत्त्यर्थं च प्रपत्तेः कृतत्वात् प्रपत्तेः फलनियमो नास्तीत्युक्तमासीत् ।

---

पांडवानां फलं राज्यं द्रौपद्या वस्त्रवर्धनम् ॥
काककलिययोः प्राणः श्रीगजेंद्रस्य दास्यता ।
विभीषणस्य रामस्य प्राप्तिः फलतयोच्यते ॥
समुद्रतरणं ज्ञेयं स्वामिनो राघवस्य च ।
फलं रामानुवृत्तिश्च बालस्वामिन इष्यते ॥ ३८ ॥

धर्मपुत्रादियों का फल राज्य, द्रौपदी का फल वस्त्र, काक और कालीय का फल प्राण, श्रीगजेंद्रसूरि का फल कैंकर्य, श्रीविभीषणसूरि का फल श्रीराम प्राप्ति, श्रीरामजी का फल समुद्रतरण, और लक्ष्मणजी का फल श्रीरामानुवृत्ति है ॥ ३८ ॥

पहिले अधिकारिनियमाभाव के लिये दिखाये हुए धर्मपुत्रादि प्रपन्नजन राज्यार्थ, वस्त्रार्थ, प्राणार्थ, कैंकर्यार्थ, श्रीरामप्राप्त्यर्थ, समुद्रतरणार्थ, और रामानुवृत्त्यर्थ प्रपत्ति करनेसे प्रपत्ति का फल नियम नहीं ऐसा दिखाया गया ।

**विषयनियमो नाम—गुणपूर्तिमत एव विषयत्वम् ॥३९॥**
**गुणपूर्तिरर्चावतारे ॥४० ॥**

---

एवं प्रपत्तेर्देशकालादिनियमापेक्षा नास्तीति प्रतिज्ञामुपपादिष्ट। अथ विषयनियम एवास्तीति प्रतिज्ञामुपपादयति—विषयनियमो नामेति ।

गुणपूर्तिमत एव विषयत्वमिति— परत्वादिपंचसु सौलभ्यादिगुणपूर्तिमत एव विषयत्वमित्यर्थः ।

तादृशगुणपूर्तिः कुत्रेत्यतो गुणपूर्तिरर्चावतार इत्याह— गुणपूर्तिरित्यादिना ।

'अर्चावतारविषये मयाप्युद्देशतस्तथा !
उक्ता गुणा न शक्यंते वक्तुं वर्षशतैरपि ॥'

---

**विषयनियमो नाम--विषयो गुणपूर्तिमान् ॥३९॥**
**अर्चास्थले हि तत्पूर्तिर्दृश्यते वेंकटादिषु ॥४०॥**

इस प्रकार 'प्रपत्ति को देशकालादि—नियमापेक्षा नहीं है' इस प्रतिज्ञा को उपपादन किये हैं। अब 'विषयनियम ही है इस प्रतिज्ञा को उपपादन करते हैं—विषयनियम माने इत्यादि से ।

विषयनियम माने—गुणपूर्तिमान् ही विषय हैं ॥ ३९ ॥

गुणपूर्तिमान् ही विषय हैं–परत्वादि पांचों में सौलभ्यादि गुणपूर्तिवाले ही विषय हैं ।

तादृश गुणपूर्ति किस में है ? इस आकांक्षा में 'गुणपूर्ति अर्चावतार में' ऐसा कहते हैं—गुणपूर्ति इत्यादि से ।

गुणपूर्ति अर्चावतार में है ॥ ४० ॥

'अर्चावतार के विषय में मैं भी उद्देश से गुणों को कहा हूं सैकडों वर्षों तक कहनेपर भी पूर्णतया नहीं कह सकता।' ऐसा स्वतःसर्वज्ञ सर्वेश्वर भी

दिव्यसूरयो बहुस्थलेषु प्रपत्तिं चार्चावतारे कुर्वन् ॥४१॥

इति स्वतः सर्वज्ञेन स्वेनापि कार्त्स्न्येन वक्तुं न शक्या ख-
ल्वर्चावतारगुणपूर्तिः ।

एतद्गुणपूर्तिमदर्चावतार एव प्रपत्तेरनुरूपो विषय इत्यर्थं
प्रपन्नजनकूटस्थानामनुष्ठानेन प्रकाशयति—दिव्यसूरयः इत्या-
दिना ।

अज्ञाननिवृत्तिपूर्वकभक्तिरूपापन्नज्ञानप्राप्त्या परत्वादिकं स-
र्वं करतलामलकत्वेन दृष्टवंतो हि दिव्यसूरिणः। एवंभूताः प्रा-
प्यत्वरातिशयेन बहुवारं प्रपत्तिकरणसमये बहुस्थलेष्वर्चावता-
र एतां प्रपत्तिमकुर्वन् स्थलांतरे कादाचित्की ।

तथा हि—सूरीणामग्रेसरः परांकुशः 'उपायं त्वच्चरणावेव श-
रणमददाः' 'तौ चरणावेवोपायत्वेन स्वीकुर्वन्' 'अस्मत्स्वामिनः

---

अर्चावतारके भूरि स्थलेऽश्रयंत सूरयः ॥४१॥

अर्चावतार की गुणपूर्ति नहीं कह सकते हैं ।

इस गुणपूर्तिवाले अर्चावतार ही प्रपत्ति का अनुरूप विषय है, इस अर्थ
को प्रपन्नजनकूटस्थों के अनुष्ठान से दिखाते हैं—दिव्यसूरिगण इत्यादि से ।

दिव्यसूरिगण बहुस्थलों में प्रपत्ति अर्चावतार में किये हैं ॥ ४१ ॥

अज्ञाननिवृत्ति सत्यानंद को प्राप्त होनेसे परत्वादि सब को करतलामलकवत्
देखनेवाले सूरिगण प्राप्यत्वराधिक्य से बहुबार प्रपत्ति करनेके समय बहुस्थलों में
अर्चावतार के विषयमें ही प्रपत्ति किये हैं और स्थलों में कहीं कहीं किये हैं ।

तथाहि—सूरियों में प्रधान श्रीशठकोपसूरि—'उपायतया आप अपने
चरणों को ही मुझ को दिये हैं ।' 'उन ही चरणों को शरणतया स्वीकार करने-
वाले ।' 'हमारे स्वामी के चरणों में क्षेम को प्राप्त हुए कुरुकापुरी शठकोप ।'

चरणयोः क्षेमं स्वीकुर्वन्कुरुकापुरीनिर्वाहकः शठकोपः।' 'त्वच्च-रणयोरधस्तात्सम्यक्प्रविष्टोऽस्मि' इति बहुषु स्थलेषु प्रपत्तिमक-रोदर्चावतारे हि। 'जन्मप्रकार' इत्येकस्मिन्नेवावतारे शरणंगतः।

परकालसूरिश्च — 'आगत्य त्वच्चरणावाश्रितो नैमिषार-ण्येऽस्मत्पितः।' 'परिमलपूर्णवेंकटनाथ नीच आगत्याश्रितः।' 'कावलंबाडिदिव्यदेशे वर्तमान कृष्णोपायस्त्वमेव।' 'समुद्रवर्ण त्वच्चरणयुग्मं प्राप्तवानस्मि अतिनिविडोद्यानश्रीरंगनाथ' इत्ये-वमर्चावतारे बहुषु स्थलेषु प्रपत्तिमकरोत्। अन्येषां सूरीणा-मप्येवं तत्तत्प्रबंधेषु द्रष्टव्यम्। प्रपत्तिं चेति 'च' शब्देन 'गुण-पूर्तिः' इति पूर्वोक्ताः समुच्चीयंते।

एवमेतैः सूरिभिः प्रपत्तिकरणस्थले परत्वादिषु सर्वेषु सत्सु अर्चावतारे करणस्य हेतुरेतद्गुणपूर्तिः खलु तां गुणपूर्तिं सप्र-माणमाह—पूर्णमित्यादिना।

---

'आप के चरणों के नीचे सम्यक प्रवेश किया हूं।' ऐसा बहुस्थलों में अर्चावतार में ही प्रपत्ति किये है। 'जन्मप्रकार' इस एक ही दशक में कृष्णावतार में शरणागति किये हैं।

परकालसूरी भी 'नैमिशारण्यवासिन्! स्वामिन्! दास आप के चरणों को प्राप्त हुआ।' 'परिमलपूर्ण श्रीबेंकठनायक नीच मैं आप को आश्रयण किया हूं।' कावलंबाडि दिव्यदेश में वर्तमान हे कृष्ण! उपाय आपही हो।' 'समुद्रवर्ण निविडोद्यान श्रीरङ्गवासिन्! आप के चरणयुग्म को प्राप्त हूं।' इस प्रकार अर्चा-वतार में ही प्रपत्ति किये हैं। और सूरियों का भी प्रपत्ति अनुष्ठान अर्चावतार में ही है, इस बात को उन के प्रबंधों में देख सक्ते हैं।

इस प्रकार ये सूरिगण प्रपत्ति करनेके वखत परत्वादि सब रहते हुए अर्चावतार में करनेका कारण अर्चावतार की गुणपूर्ति ही है। उस गुणपूर्ति को प्रमाणसहित कहते हैं—पूर्ण इत्यादि से।

'पूर्ण' इत्युक्तत्वात् सर्वे गुणाः पुष्कलाः ॥४२॥
प्रपत्तेरपेक्षिताः सौलभ्यादयोऽन्ध-
कारव्याप्ते गृहे दीपवत्प्रकाशंतेऽत्र ॥४३॥

---

पूर्णमित्युक्तत्वादिति ।

'इदं पूर्णमदः पूर्णं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥'

सर्वं पूर्णं सहोम्' इति श्रुत्योक्तत्वादित्यर्थः । सर्वे गुणाः पुष्कला इति । आश्रयणसौकर्यापादका आश्रितकार्यापादकाः सर्वे कल्याणगुणा अस्मिन् विषये संपूर्णा इत्यर्थः ।

तर्हि 'वासुदेवोऽसि पूर्णः' इत्युक्तपरत्वादत्रास्य किंचाधिक्यमित्यत आह — प्रपत्तेरित्यादि ।

---

पूर्णमित्युक्तवेदाच्च पुष्कला गुणराशयः ॥ ४२॥
अंधकारगृहे यद्वद्दीपादीनां प्रकाशनम् ॥
सौलभ्यादिगुणास्तद्वत्प्रकाशंतेऽत्र शोभनाः ॥ ४३॥

'पूर्ण' ऐसा कहने से सब गुण पूर्ण हैं ॥ ४२ ॥

'पूर्ण का पूर्ण लेकर पूर्ण ही बचता है' सब पूर्ण है ऐसा श्रुति कहनेसे सब गुण पूर्ण हैं— आश्रयणसौकर्यापादक गुण आश्रितकार्यापादक गुण ऐसा बिभाग विना सकलकल्याणगुण इस विषय में पूर्ण हैं ।

ऐसा हो तो—'वासुदेव आप पूर्ण हो' इस परत्व की अपेक्षा अर्चावतार की अधिकता कौनसी है ? इस आकांक्षा में कहते हैं—प्रपत्ति के इत्यादि ।

प्रपत्ति के अपेक्षित सौलभ्यादिगुण अंधकारविशिष्ट
घरमें दीपक के सदृश अर्चावतार में प्रकाशते है ॥ ४३ ॥

प्रपत्तेरपेक्षिता इति। उपायत्वेनाश्रयणसमय अपेक्षिता इत्यर्थः। सौलभ्यादयो नाम– दृष्ट्वाश्रयितुमुपयुक्तं सौलभ्यं, उत्कर्षं दृष्ट्वानपगमहेतुः सौशील्यं, कार्यं कुर्यादिति विश्वासोपयुक्तं स्वामित्वं, दोषं दृष्ट्वाऽभयोपयुक्तं वात्सल्यं। 'असदृशगुण' इत्यादिनैतांश्चतुरो गुणान् किल परांकुशोऽवोचत्।

अंधकारव्याप्ते गृहे दीपवत्प्रकाशंतेऽत्र इति– परत्वे गुणानां सर्वेषां सत्वेऽपि परमसाम्यापन्नानां मुखं दत्वा वर्तमानदेशत्वाद्दिवा दीपवत्प्रकाशरहिताः संति, अर्चावतारेऽपकर्षसीमाभूतानां संसारिणां मुखं दत्वा वर्तमानत्वात् अंधकारे दीपवदत्युज्ज्वलं प्रकाशंते इत्यर्थः। विषयसद्भावस्थले हि गुणाः प्रकाशंते। तत्रत्याः शीलादिगुणाननुभवितुमत्र खल्वागच्छंति। सौलभ्यपूर्वकमुक्तिः–दृष्ट्वाश्रयितुमुपयुक्तं सौलभ्यं प्रपत्तेः प्रधानापेक्षितमिति ज्ञापयितुम्।

---

प्रपत्ति के अपेक्षित—उपायतया स्वीकारकरनेके समय अपेक्षित। सौलभ्यादि माने—देखकर आश्रयण करनेके लिये सौलभ्यगुण, परत्व देख नहीं हटनेके लिये सौशील्यगुण, कार्य करेंगे ऐसा विश्वास के लिये स्वामित्वगुण, दोष को देख न डरनेके लिये वात्सल्यगुण। 'उपमारहित गुणवाले' इत्यादि से ये चारगुणों को ही श्रीशठकोपसूरि कहे हैं।

अंधकारविशिष्ट घर में दीपक के सदृश अर्चावतार में प्रकाशते हैं– परत्व में ये संपूर्णगुण होनेपर भी परमसाम्यापन्न नित्यमुक्तों को दर्शन देनेके स्थल होनेसे दिवादीपक के सदृश प्रकाशरहित होते हैं। अर्चावतारस्थल में अति नीच संसारियों को दर्शन देनेसे अंधकार में दीपक के तरह अत्युज्ज्वल हो प्रकाशते हैं। जहां विषय हैं वहां ही गुण प्रकाशते हैं। वहां रहनेवाले भी शीलादिगुणों को अनुभव करनेके लिये यहां आते हैं। सौलभ्य को पहिले कहनेका कारण—देखकर आश्रयण करनेको सौलभ्य ही प्रपत्ति का प्रधानापेक्षित है ऐसा जनानेके लिये।

पूर्तिं स्वातंत्र्यं च त्यजन् सन् स्वाना-
दर्तॄन् स्वयमादृत्य स्थितस्थलम् ॥४४॥

---

एते गुणाः प्रकाशंतेऽत्रेत्युक्तमुपपादयति—पूर्तिमित्यादिना।
पूर्तिः—अवाप्तसमस्तकामत्वं, तत्त्यजनं नाम—एतदर्पितं गृहीत्वा यथा तृप्तः स्यात्तथा सापेक्षत्वेन स्थितिः। स्वातंत्र्यं—स्वाधीनस्वरूपादिमत्वं, तस्य त्यजनं नाम—आश्रिताधीनस्वरूपस्थित्यादिमत्वम्।

'तदिच्छया महातेजा भुङ्क्ते वै भक्तवत्सलः।
स्नानं पानं तथा यात्रां कुरुते वै जगत्पतिः॥
स्वतंत्रः सन् जगन्नाथोप्यस्वतंत्रो यथा तथा।
सर्वशक्तिर्जगद्धाताप्यशक्त इव चेष्टते॥'

---

स्वानादर्तॄन् स्वयं तत्र सम्यगादृत्य तिष्ठति॥
स्वातंत्र्यपूर्तिमारभ्य त्यजन् स्वीयगुणान् प्रभुः॥४४॥

'ये गुण यहां प्रकाशते हैं' इस को उपपादन करते हैं—पूर्ति इत्यादि से।

पूर्ति और स्वातंत्र्य को छोड अपने को अनादर करने-
वालों को आप आदर करते हुए स्थित स्थल हैं ॥ ४४ ॥

पूर्ति माने—अवाप्तसमस्तकामत्व। उस को छोडना माने—इस चेतन के द्वारा समर्पित वस्तु से तृप्त हो जैसे सापेक्ष होना। स्वातंत्र्य माने—स्वरूपादि अपना अधीन होना। उस को छोडना माने—आश्रितों के अधीन स्वरूप और स्थितिवाले होना।

'अर्चक की इच्छा से महातेजस्वी भक्तवत्सल भगवान स्वीकार करते हैं तथा अर्चक की इच्छा से स्नान, पान और यात्राओं को जगत्पति करते हैं। स्वतंत्र होते हुए भी जगन्नाथ परतंत्र के तरह रहते हैं। सर्वशक्ति होतेहुए जगद्धाता अशक्तके तरह रहते है।' ऐसा कहा है। 'संपूर्ण अपनी स्थिति को अचर्क के

इत्युक्तं हि । 'अर्चकपराधीनाखिलात्मस्थितिः' इति भट्टार्याः । स्वेच्छां विनाऽत्यागे हेत्वभावात्त्यजन् सन्नित्युक्तम् । स्वानादर्तृन् स्वयमादृत्य स्थितिस्थलमिति — स्वस्मिन्नेवं सुलभत्वेन स्थितोऽस्मद्भाग्याद् दुर्लभः सुलभो जातः इत्यादृत्याश्रयणं विना सुलभत्वहेतुना स्वोपेक्षकाणां संसारिणां त्यागाशक्तिमात्रं विना तान्विना स्वस्य धारणासामर्थ्यमपि प्रकटयित्वा स्थितस्थलमर्चावतार इत्यर्थः । पूर्तिस्वातंत्र्ये त्यक्त्वा स्थितत्वात्सौलभ्यसौशील्ये, स्वानादर्तृनादृत्य स्थितत्वात्स्वामित्ववात्सल्ये च प्रकाशंते ।

यद्वा पूर्तिमित्यारभ्यैतैर्वाक्यैर्गुणचतुष्टये प्रधानं सौलभ्यमेव प्रतिपादयति । तदानीमस्य विषयस्य सौलभ्यातिशयं प्रदर्शयति इति वाक्यसंगतिः । नेत्रविषयतायोग्यत्वाय नित्यसंनि-

---

अधीन करते हैं' ऐसा भट्टार्यस्वामी कहे हैं । अपनी इच्छा विना इन दोनों को छोडने में दूसरा हेतु नहीं है ऐसा समझानेके लिये 'पूर्ति और स्वातंत्र्य को छोड' ऐसा कहते हैं । अपने को अनादर करतेवालों को आप आदर करते हुए स्थितस्थल—आप इस प्रकार सुलभ होनेपर दुर्लभ सुलभ हुआ ऐसा समझ अत्यादर करना चाहिये ऐसा न कर उस सौलभ्य के कारण ही उपेक्षा करनेवाले संसारियों को छोड नहीं सकना इतना ही नहीं किंतु संसारिचेतन विना रह नहीं सकनेका स्थल अर्चावतार है । पूर्ति और स्वातंत्र्य को छोड रहनेसे सौलभ्य और सौशील्य, अपने को अनादर करनेवालों को आप आदर करनेसे स्वामित्व और वात्सल्य भासते हैं ।

यद्वा—पूर्ति इत्यादि इस संपूर्ण वाक्य से गुणचतुष्टय में प्रधान भूत सौलभ्यगुण को ही कहते हैं । उस निर्वाह में—अर्चावतार का सौलभ्यातिशय को दिखाते हैं ऐसा वाक्य की संगति समझना । नेत्र के विषय हो नित्यसंनिधि

धिकरणमात्रं विना सर्वप्रकारपरिपूर्णं निरंकुशस्वतंत्रमात्मानं सापेक्षं परतंत्रं च कृत्वा स्वानादर्तॄन् संसारिण आदृत्य स्थितस्य स्थित्यपेक्षयाऽऽतिशयितं सौलभ्यं नास्ति ।

'एवं पंचप्रकारोऽहमात्मनां पततामधः ।
पूर्वस्मादपि पूर्वस्माज्ज्यायांश्चैवोत्तरोत्तरः ।
सौलभ्यतो जगत्स्वामी सुलभो ह्युत्तरोत्तरः ॥

इति परत्वादिषु पंचसु च सौलभ्ये सत्यपि पूर्वपूर्वापेक्षयोत्तरोत्तरं सौलभ्यमतिशायितामिति स्वेनैवोक्तत्वात्सौलभ्यस्य सीमाभूमिरर्चावतारः ।

परत्वादीनां दौर्लभ्यमर्चावतारस्य सौलभ्यं च दृष्टांत मुखेन प्रदर्शयति– भूगतजलवदित्यादिना ।

---

करते हैं इतना ही नहीं किंतु सर्वप्रकार परिपूर्ण निरंकुशस्वतंत्र अपने को सापेक्ष और परतंत्र बना अनादर करनेवाले संसारियों को आदर करतेहुए रहने की अपेक्षा अधिक सौलभ्य नहीं है ।

'अधः पतित चेतनों के लिये ऐसा पांच प्रकार से मैं हूं पूर्व पूर्व की अपेक्षा उत्तरोत्तर श्रेष्ठ है, जगत् के मालिक सौलभ्यगुण से उत्तरोत्तर सुलभ होते हैं ।'

ऐसा परत्वादि पांचों में सौलभ्य होते हुए भी पूर्वपूर्व की अपेक्षा उत्तरोत्तर में सौलभ्य अधिक है ऐसा आप ही कहनेसे सौलभ्य की सीमाभूमि आर्चावतार ही है ।

परत्वादि दुर्लभ हैं अर्चावतार सुलभ हैं इस को दृष्टांत द्वारा दिखाते हैं— भूगतजल इत्यादि से ।

**भूगतजलवदंतर्यामित्वं, आवरणजलवत्परत्वं,**
**क्षीरार्णववद् व्यूहः, प्रवहन्नदीवद्विभवः,**
**तत्र स्थिता ह्रदा इवार्चावतारः ॥४६॥**

---

तृषार्तस्य देशांतरगमनापेक्षां विना स्थितस्थले सत्त्वेपि खनित्रादीनादाय खननं विना पानायोग्यभूगतजलवत् दृष्ट्वाऽऽश्रयणं कर्तव्यमित्याशावतः पुंसो हृदये वर्तमानत्वेपि 'नेत्रस्य नास्ति' इत्युक्तप्रकारेण नेत्रविषयत्वाभावेनाष्टांगयोगरूपयत्नेन द्रष्टव्यमंतर्यामित्वं,

तस्यांडाद्बहिः प्रवाहित्वा स्थितमावरणजलमिव अस्य च 'बहिः कारणतया स्थितापरिच्छेद्यपूर्णामृत' इत्युक्तप्रकारेण लीलाविभूतेर्बहिः स्थितं परत्वं,

---

भूगतांबुसमानत्वमंतर्यामित्वमुच्यते ।
परत्वं विरजातुल्यं व्यूहः क्षीरसमुद्रवत ॥
सरिद्वद् दृश्यते चात्र विभवो भगवान् स्वयम् ।
तत्र स्थिता ह्रदा यद्वदर्चामूर्तिस्तथा स्मृता ॥ ४५ ॥

भूगतजल के सदृश अंतर्यामित्व, आवरण जल सदृश परत्व,
क्षीराब्धिवत् व्यूह, बहनेवाली नदी के तरह विभव हैं,
उन नदियों में ह्रदों के सदृश अर्चावतार हैं ॥ ४५ ॥

प्यासे को देशांतर में न जाकर स्थितस्थल में होनेपर भी खनित्रादि से खोदे बिना पीने को दुर्लभ भूगत जलवत् देखकर आश्रयण करेंगे ऐसी अभिलाषावालों के हृदय में विराजने पर भी 'नेत्र के गोचर नहीं हो' ऐसा नेत्र का विषय न हो अष्टांगयोगरूप यत्न से देखनेके योग्य अंतर्यामित्व,

प्यासे को 'अंडबहिर्गत आवरण जलवत् 'बाहर कारणतया स्थित अपरिच्छेद्य पूर्णामृत' ऐसा लीलाविभूति से परे रहने वाले परत्व,

तथातिविप्रकृष्टत्वाभावेनांडांतर्भूततया स्थितत्वेपि तस्य दु-ष्प्रापक्षीराब्धिवर्तित्वस्यापि 'क्षीराब्धौ तव शयनसौंदर्यं श्रुतमा-त्रं' इत्युक्तप्रकारेण श्रवणमात्रं विना गत्वा द्रष्टुमयोग्यतया स्थितो व्यूहः,

प्रत्यासन्ना तत्कालवर्तिनामनुवर्जीव्या पाश्चात्यस्य दुर्लभा प्रवहन्नदीव 'भूम्युपरि संचरसि' इत्युक्तप्रकारेण भूम्युपर्यवतीर्य संचरन् तत्कालवर्तिनामाश्रयणीयः पश्चात्कालवर्तिनोस्य दुष्प्राप्यो विभवः,

पूर्वोक्तवैलक्षण्येनास्य तृषानिवृत्तिर्यथा स्यात्तथा पानयो-ग्याः प्रवहन्नद्यां स्थिता ह्रदा इव अस्य च देशकालकरणवि-प्रकर्षं विना आलयेषु गृहेषु च सदा सर्वेषामपि नेत्रविषयत-या स्थितः 'पश्चात्तनानामाश्रयणीयो ज्योतीरूपो' र्चावतारः । 'भौमनिकेतनेष्वपि कुटीकुंजेषु' इत्युक्तप्रकारेण बहुषु स्थलेषु

---

तैसा अतिदूर में न हो अंडांतर्गत होनेपर भी चेतन के दुष्प्राप्य क्षीराब्धि के सदृश 'क्षीराब्धि में आप के शयन सौंदर्य को सुने हैं' ऐसा सुननेके योग्य विना जा देखने को दुर्लभ व्यूह,

समीप में होते हुए तत्काल वर्तमान लोगों को आश्रयण करने के योग्य पश्चात्कालीन चेतन के दुर्लभ बहती हुई नदी सदृश 'भूमि में अवतार लिये हो' ऐसा भूमि में अवतीर्ण हो संचार करते हुए तत्कालवर्ति चेतनों के आश्रयण करनेके योग्य पश्चात्कालवर्तियों के दुर्लभ विभव,

पूर्वोक्त के सदृश न हो प्यासे को जल पान करा तृप्त करानेवाले प्रवह-न्नदियों में जल भराहुआ ह्रद जैसे चेतन को देश, काल, करण आदि से दूर बिना मंदिर और गृहों में सर्वत्र एक प्रकार से सब के नेत्रों के गोचर हो पश्चा-त्कालवर्ति लोग भी आश्रयण करने योग्य तेजोरूप' अर्चावतार,

'भूमि के दिव्यदेशों में और कुटी कुंजों में' ऐसा बहुस्थलों में सन्निधि

अयं च शास्त्रैर्वशीकरणायोग्यानां विषयांतरेषु निमज्य विमुखानां चेतनानां वैमुख्यं दूरीकृत्य रुचिमुत्पादयति, रुच्युत्पत्तावुपायो भवति, उपाय-परिग्रहे कृते भोग्यो भवति। ॥४६॥

---

संनिधिं कृत्वा स्थितस्य प्रकारमनुसंधाय ह्रदा इवेति बहुव-चनेनाभ्यधात्।

अवतारगुणानां सर्वेषामर्चावतारे परिपूर्णत्वात्, अवतार-विग्रहानेवार्चारूपेण बहुषु स्थलेषु परिगृह्य स्थितत्वाच्च तत्र स्थिता ह्रदा इवेत्युक्तम्।

एवमुत्पन्नाश्रयणरुचीनामाश्रयणीयत्वे सौलभ्यमात्रं न भ-वति किंतु रुचिजनकत्वादिकं चास्यार्चावतारस्यास्तीत्येतद्वैभ-वमाह— अयं चेत्यादिना।

---

शास्त्रवश्यविहीनानां विषयांतर्निमज्जताम् ॥
विमुखानां च वैमुख्यं हापयित्वा प्रयत्नतः।
स्वस्मिन्रुचिं च संपाद्योपायो भवति शाश्वतम् ॥

करते हुए रहनेकी स्थिति को स्मरण कर ह्रदोंके तरह ऐसा बहुवचन से कहे हैं।

अवतार के संपूर्ण गुण अर्चावतार स्थलों में परिपूर्ण होनेसे, अवतारवि-ग्रहों को अर्चारूप से बहुस्थलों में स्वीकार कर रहनेसे 'प्रवहन्नदी के ह्रद' ऐसा कहे हैं।

इस प्रकार आश्रयणरुचिवालों को आश्रयण करनेको सुलभ होना इतना ही नहीं किंतु रुचि को उत्पादन करना आदि कृत्य भी इस अर्चावतार का है, ऐसा इसके वैभव को कहते हैं—यह इत्यादि।

यह शास्त्रों से शिक्षित न हो विषयांतरों में मग्न
हो विमुख होनेवाले चेतनों के वैमुख्य को दूर कर
रुचि को उत्पादन करते हैं, रुचि होनेपर उपाय होते
हैं, उपायस्वीकारानंतर भोग्य भी होते हैं ॥४६॥

प्रकृतसौलभ्यादिगुणयोग्यं मनसि निधाय 'अयं च' इति परामृशति । शास्त्रैर्वशीकरणायोग्यत्वं नाम– हितानुशासनपरैः श्रुतिस्मृत्यादिशास्त्रैररुच्युत्पादनाय इतरविषयाणां दोषाधिक्यस्य, रुच्युत्पादनाय भगवद्विषयगुणाधिक्यस्य च उपदेशे कृतेपि तेनेतरविषयान् त्याजयित्वा एतद्विषयमवलंबयितुमशक्यत्वम् । दुर्वासनाबलमुपदेशं निरर्थकीकरोति हि ।

'जन्मांतरसहस्रेषु बुद्धिर्या भाविता नृणाम्।
तामेव लभते जंतुरुपदेशो निरर्थकः ॥'

इत्युक्तं हि । विषयांतरेषु निमज्य विमुखत्वं नाम– 'मंजीरपादशरीरासितायतेक्षणस्त्रीनिम्नो धर्ममेव विस्मृत्येंद्रियैरवगाह्य भोज्यं भोगमेव वर्द्धयित्वा' इति 'वक्रालकानां युवतीनां विषये उत्कंठां वर्द्धयित्वा स्वैरसंचारं कुर्वन्' इति च 'अत्यंतयुवतीनां मत्स्यसदृशनेत्रपाशबद्धं निमग्नं माम्' इत्युक्तप्रकारेणेतर-

---

यह—प्रकृत सौलभ्यादिगुणविशिष्टता का उद्देश कर अर्चावतार का परामर्श करते हैं । शास्त्रों से शिक्षित न होना माने—हितानुशासन करनेवाले श्रुति स्मृत्यादिशास्त्र अरुचि होनेके लिये इतरविषयों के दोषाधिक्य को, रुचि होनेके लिये भगवद्विषय के गुणाधिक्य को उपदेश करने पर भी उस से इतरविषयों को छोड भगवद्विषय का आश्रयण अशक्य होना । दुर्वासना का बल उपदेश को निरर्थक करदेता है ।

'सहस्रजन्मों में लोग जिस बुद्धि की भावना करते हैं उसी बुद्धि को पाते हैं, उपदेश निरर्थक है ।'

ऐसा कहाहै । विषयांतरों में मग्न हो विमुख होना माने— 'घुंघुरालंकृत पाद, काले और दीर्घ नेत्रवाली स्त्रियों में मग्न हो धर्म को भूल इंद्रियों के भोग्य भोगों को वढाकर' ऐसा, 'वक्रकेशवाली युवतियों के विषय में आशा को वढा यथेष्ट संचार करते हुए' 'अत्यंतयुवतियों के मत्स्यसदृश नेत्ररूप पाश में बद्ध और निमग्न मुझ को' इस उक्ति के अनुसार इतरविषय में अत्याशा से जिस-

विषयेष्वत्यभिनिवेशेन यत्किंचिदवलंब्य व्यावृत्तिव्रतमारोप्य भगवद्विषयमाश्रयितुमनंगीकारः ।

एतादृशं चेतनानां वैमुख्यं दूरीकृत्य रुच्युत्पादनं नाम—'आगच्छेत्युक्त्वा हृदये प्रविश्य स्वविषये आदरं प्रवाहय-त्सौंदर्यवान्' इत्युक्तप्रकारेण सौंदर्यादिभिश्चित्तापहारं कृत्वा स्वं न पश्याम इति स्थितानां स्थितिं विनाश्य पक्ष्मक्षेपस्य व्यावृत्त्यशक्यत्वापादनम् ।

रुच्युत्पत्तावुपायत्वं नाम-- एवं स्ववैलक्षण्यदर्शनेन स्वस्य नित्यानुभवः कर्तव्य इति रुच्युत्पत्त्यनंतरमुपायप्रदानसमये 'त्वच्चरणावेवोपायत्वेनाददाः' इत्युक्तप्रकारेण संसारनिवृत्तिपूर्विकायाः स्वप्राप्तेः स्वयमुपायत्वम् ।

उपायपरिग्रहे कृते भोग्यत्वं नाम-- स्वस्मिन्नुपायत्वेन परिगृहीते उपेयसिद्धेर्देशविशेषगमनपर्यंतं प्रतीक्षामनपेक्ष्य 'सुंदर-

---

किसी को अवलंबन कर अलग होनेके व्रत को ऊपर लेकर भगवद्विषय का आश्रयण करनेको अंगीकार न करना ।

इस प्रकार के चेतन का वैमुख्य को दूर कर रुच्युत्पादन करना माने—'आओ ऐसा कह हृदय में प्रवेश कर अपने विषय में आदर को बढानेवाले सुंदर' ऐसा सौंदर्यादियों से चित्त को अपहारकर अपने को नहीं देखेंगे ऐसा रहनेवाले चेतनों की स्थिति को नाशकर निर्निमेष देखने योग्य बनाना ।

रुचि होनेपर उपाय होना माने— इस प्रकार अपना वैलक्षण्य को देखनेसे अपने को नित्यानुभव करना ऐसा रुचि होनेपर उपाय दिखानेके समय 'आप के चरणों को ही उपायतया दिये हो' ऐसा संसारनिवृत्ति पूर्वक अपने प्राप्ति के लिये आप ही उपाय होना ।

उपायस्वीकारानंतर भोग्य होना माने—अपने को उपायतया स्वीकार कर-नेपर फलसिद्धि के लिये परमपद जाने पर्यंत प्रतीक्षा न कर 'सुंदर श्रीरङ्गनाथ,

श्रीरंगस्य निर्वाहकं ममामृतवद्भोग्यभूतं पश्यती चक्षुषी अन्यन्न पश्यतः'--'मम मधु क्षीरीमक्षुरसखंडः श्रीमान् वनाद्रिनाथः'—इत्युक्तप्रकारेण निरतिशयभोग्यत्वेन स्थितत्वात् स्वयमुपेयत्वेन स्थितिः ।

एवं प्रपत्तेर्गुणपूर्तिविशिष्ट एव विषयः स्यादिति, स चार्चावतार इति, तत एव सूरयः सर्वे प्रपत्तिमकुर्वन्नेतद्विषय इति, अस्मिन् विषये गुणाः सर्वे पुष्कला इति, विशिष्य प्रपत्तेरपेक्षिता गुणा विशदं प्रकाशंतेऽत्रेति, अयं च स्वस्य नैरपेक्ष्यादिकं त्यक्त्वा स्वानादर्तॄनपि आदरन् स्थितस्थलम् । परत्वादय एकैकप्रकारेण दुर्लभाः, अयं सर्वप्रकारेण सूलभ इति एतावन्मात्रं नापितु—अयं विषयः रुचिजनक उपायोपेयश्च भवतीत्युक्तम् ।

## उपाये संगृहीते तु स्वयं भोग्यः प्रजायते ॥४६॥

हमारे अमृतवत् भोग्यभूत, स्वामी को देखनेवाले नेत्र और को देख नहीं सकते हैं ।' 'श्रीमान् सुंदरबाहु भगवान् हमारा मधु, क्षीर और इक्षुरसखंड हैं ।' इन वचनों के अनुसार अत्यंत भोग्य होनेसे स्वयं फलभूत होना ।

तथाच—प्रपत्ति को गुणपूर्तिवाले ही विषय हैं, तादृश गुणपूर्ति अर्चावतार में है, इस कारण सूरिगण अर्चावतार में ही प्रपत्ति किये हैं, इस विषय में सब गुण पुष्कल हैं, विशेषरूप से प्रपत्ति के अपेक्षित गुण अच्छीतरहसे अर्चावतार में ही प्रकाशते हैं, यह अपने निरपेक्षतादियों को छोड अपने को अनादर करनेवालों को आप आदर करते हुए रहनेका स्थल है, परत्वादि एक एक प्रकार से दुर्लभ हैं यह सर्वप्रकार से सुलभ हैं, इतना ही नहीं, यह विषय रुचिजनक और उपायोपेय भी हैं ऐसा प्रतिपादन किये हैं ।

# अत्र प्रपत्तिकर्तारोऽधिकारिणस्त्रयः ॥ ४७॥

---

अनेनोपायोपेयौ द्वावपि स्वयमेव भूत्वा स्वेतरविषयविरक्तिपूर्वकं स्वविषयरुचिमुत्पादयन् सर्वसुलभः स्वप्रकारान् त्यक्त्वा स्वानादर्तॄनपि आदरन्प्रपत्त्यपेक्षितगुणोज्ज्वलः समस्तगुणसंपूर्णः प्रपन्नजनकूटस्थानामुपायवरणविषयोर्चावतार एव प्रपत्तेर्नियतविषय इत्युक्तम्। अनेन सर्वसुलभोर्चावतार एवाश्रयणीय इत्युक्तम् !

प्रपत्तेर्देशादिनियम इत्यारभ्य एतावता उपायवरणात्मिकायाः प्रपत्तेर्देशादिनियमाभावः विषयनियमश्चादर्शि ।

एवं विषयविशेषं प्रदर्श्यानंतरं भगवच्छास्त्रादिसिद्धाधिकारिविशेषाश्च प्रदर्शनीया इत्यभिप्रेत्याधिकारिविशेषानाह—अत्रेत्यादिना ।

---

## अत्र प्रपत्तिकर्तारस्त्रिविधाः परिकीर्तिताः ॥४७॥

इस से उपायोपेय दोनों आप ही हो, स्वेतरविषयविरक्तिपूर्वक स्वविषय में रुचिजनक,सर्वसुलभ, अपने स्वातंत्र्यादियों को छोड अपने को अनादर करनेवालों को आप आदर करते हुए,प्रपत्ति के अपेक्षित गुणों से उज्ज्वल समस्तगुणसंपुर्ण और प्रपन्नजनकूटस्थों के उपायवरण विषय भी होनेवाले अर्चावतार ही प्रपत्तिका नियमन विषय है— तात्पर्य होता है ॥

'प्रपत्ति को देशनियम' इत्यारभ्य यहां तक उपायवरणात्मिका प्रपत्ति को देश कालादिनियमाभाव और विषयनियम भी दिखाये हैं ।

इस प्रकार विषयविशेष को दिखानेके पश्चात् भगवच्छास्त्र ( पांचरात्र ) में सिद्ध अधिकारिविशेषों को भी दिखाना उचित समझ अधिकारि विशेष को दिखाते हैं— इस में प्रपत्ति करनेवाले अधिकारी तीन हैं इत्यादि ।

इस में प्रपत्ति करनेवाले अधिकारी तीन हैं ॥ ४७॥

अज्ञाश्च ज्ञानाधिकाश्च भक्तिपरवशाश्च ॥४८॥

सौलभ्यादिगुणपूर्त्या प्रपत्तेर्नियतविषयेऽस्मिन्नर्चावतारे प्रपत्तिकर्तारोऽधिकारिणः प्रपदनहेतुभेदेन त्रिप्रकारा इत्यर्थः।

ते के इत्यपेक्षायामाह– अज्ञाश्चेत्यादि ।

अज्ञा नाम—भगवल्लाभार्थं साधनानुष्ठानं कर्तुमुपयुक्तज्ञानरहिताः । अज्ञानमशक्तेरप्युपलक्षणं, 'प्रापकांतरपरित्यागस्य चाज्ञानाशक्ती न' इत्युपरि स्वयमेव वक्ष्यति । ज्ञानाधिका नाम – ज्ञानशक्त्यादिसत्त्वेऽपि भगवदत्यंतपरतंत्रस्वरूपयाथात्म्यदर्शनेन उपायांतराणि स्वरूपविरुद्धानीति तत्त्यागोपयुक्तज्ञानपूर्तिमंतः । भक्तिपरवशा नाम–एकमपि क्रमेणानुष्ठातुमक्षमा भगवत्प्रेमातिशयेन शिथिलकरणाः ।

---

अज्ञा ज्ञानाधिकाश्चैव भक्तेः परवशास्तथा ॥४८॥

सौलभ्यादि गुणपूर्ति से प्रपत्ति का नियत विषय इस अर्चावतार में प्रपत्ति करने वाले अधिकारी प्रपदन हेतु के भेद से तीन प्रकार हैं ।

वे कौन हैं इस आकांक्षा में कहते हैं— अज्ञ इत्यादि से ।

अज्ञ, ज्ञानाधिक और भक्तिपरवश ॥ ४८ ॥

अज्ञ माने— भगवत्प्राप्ति के लिये साधनानुष्ठान के उपयुक्त ज्ञानरहित लोग । अज्ञान कहनेसे अशक्ति को भी जानना । 'प्रापकांतर को छोडने में अज्ञान और अशक्ति नहीं है' ऐसा आगे यह लोकाचार्यस्वामी ही कहते हैं । ज्ञानाधिक माने— कर्माद्यनुष्ठान करने को ज्ञान और शक्ति होने पर भी भगवदत्यंत परतंत्र भूत अपना स्वरूप को यथार्थ देखनेसे 'उपायांतर स्वरूप विरुद्ध है' ऐसा समझ छोडने के उपयुक्त ज्ञानपूर्तिवाले । भक्तिपरवश माने— किसी एक भी उपाय को अनुष्ठान करने में अशक्त भगवत्प्रेमातिशय से शिथिल होनेवाले ।

**अज्ञानेन प्रपन्ना अस्मदादयो, ज्ञानाधिक्येन प्रपन्नाः**
**पूर्वाचार्याः, भक्तिपारवश्येन प्रपन्ना दिव्यसूरयः ॥४९॥**

---

एवमेतदज्ञानादिहेतुना प्रपत्तिमनुतिष्ठंतः अमुक इति ज्ञातुं शक्यंते किमित्याकांक्षायामाह— अज्ञानेनेत्यादि ।

अज्ञानेन प्रपन्ना इति—इतरोपायानुष्ठानार्थं प्रथमतो ज्ञानाद्यभावादनन्यगतयः संतो भगवद्विषये भरन्यासकृत इत्यर्थः । अस्मदादय इति स्वनैच्यानुसंधानेन मंदाधिकारिभिः स्वमेकीकृत्याह ।

ज्ञानाधिक्येन प्रपन्ना इति— उपायांतराणि स्वरूपनाशकानीति कंपप्रयोजकस्वरूपयाथात्म्यदर्शनेनागतज्ञानपूर्त्याऽनन्यगतिकाः स्वरूपानुरूपं भगवति न्यस्तभरा इत्यर्थः । पूर्वाचार्याः— नाथयामुनयतिवरादयः ॥

---

**अज्ञानेन वयं सर्वे ज्ञानेन पूर्वदेशिकाः ॥**
**प्रपन्ना भक्तियोगेन दिव्यसूरिमुखाः किल ॥४९॥**

इस प्रकार इन अज्ञानादि द्वारा प्रपत्ति करनेवाले अमुक हैं ऐसा जान-सकते हैं क्या ? इस आकांक्षा में कहते हैं—अज्ञान से इत्यादि ।

अज्ञान से प्रपन्न अस्मदादि, ज्ञानाधिक्य से प्रपन्न
पूर्वाचार्य, भक्तिपरवशता से प्रपन्न दिव्यसूरिगण ॥ ४९ ॥

अज्ञान से प्रपन्न—इतरोपायानुष्ठान करने के लिये ज्ञानादि न होनेसे अनन्यगति हो भगवत् चरणों में भरन्यास करनेवाले । अस्मदादि—स्वनैच्यानुसंधान से मंदाधिकारियों के साथ अपने को भी मिलाकर कहते हैं ।

ज्ञानाधिक्य से प्रपन्न माने—उपायांतर स्वरूप नाशक है ऐसा समझ कांपें जैसा स्वरूपयाथात्म्यदर्शन से होनेवाली ज्ञानपूर्ति से अनन्यगति हो स्वरूपानुरूप भगवान में भरन्यास करनेवाले । पूर्वाचार्यमाने—नाथ यामुन यतिवरादि ।

एवमुक्तिराधिक्यमपेक्ष्य ॥५०॥

---

भक्तिपारवश्येन प्रपन्नाः-- भगवत्प्रेमपौष्कल्येन 'पादौ स्तब्धौ मनः शिथिलं भवति चक्षुर्भ्रमति' 'पादौ हस्तौ च निश्चेष्टौ' इत्युक्तप्रकारेण शिथिलकरणत्वेन साधनानुष्ठानयोग्यताभावादनन्यगतिकाः संतस्तस्मिन् भरसमर्पणकृतः। भक्तिपरवशानां साधनानुष्ठानं दुःशकमिति 'त्वद्दर्शनाशायां पतित्वाहं कुत्रत्योपि न' 'किं स्वीकुर्यां' इत्यादिगाथासु सूरयः स्पष्टमवादिषुः।

एवमज्ञानादिष्वेकैकमेवैतेषां प्रपदनमूलमित्युक्तेर्मूलमाह-- एवमित्यादिना।

अज्ञानाशक्ती, स्वरूपयाथात्म्यज्ञानं, भगवद्भक्तिरित्येतेषु त्रिषु त्रयाणामन्वयसत्त्वेपि, एकैकमेतेषां प्रपदनहेतुरित्युक्तिः--

---

अज्ञात्वाद्यधिकं दृष्ट्वा कथनं तत्र सांप्रतम् ॥५०॥

भक्तिपारवशता से प्रपन्न माने--भगवत्प्रेमाधिक्य से 'पाँव स्तब्ध होते हैं मन गलजाता है नेत्र घूमते हैं' चित्रलिखित के तरह हाथ पाँव न हिलाते हैं' इन वचनानुसार शिथिलकरण होनेसे साधनानुष्ठान करनेको असमर्थ अनन्यगति हो भगवत् चरणों में भरन्यास करनेवाले। भक्तिपरवश साधनानुष्ठान नहीं कर सकते इस विषयको 'आप को देखने की अभिलाषा में डूबा हुआ मैं किसीका भी योग्य नहीं' 'आप को छोड और किस को मैं स्वीकार करसकता हूं?' ये दो गाथा में श्रीशठकोपसूरि सुस्पष्ट कहे हैं।

इस प्रकार अज्ञानादियों में एक एक ही को इन के प्रपत्ति करने में हेतुतया कहनेका कारण अमुक है ऐसा कहते हैं--इस प्रकार इत्यादि।

इस प्रकार कहनेका कारण अधिकता है ॥५०॥

अज्ञानाशक्ति, स्वरूपयाथार्थ्यज्ञान और भगवद्भक्ति इन तीनों में अज्ञानी ज्ञानी और भक्तिपरवश ये तीनों को भी संबंध रहते हुए एक एक ही इन के

एतेषु एकैकस्यैवैतेष्वधिकारिष्वधिकत्वादित्यर्थः । अनेन पूर्वोक्तेषु ज्ञानभक्ती उभे अल्पे अज्ञानमेवाधिकं वर्तते । मध्याधिकारिष्वज्ञानमल्पं भक्तिश्च परिमिता ज्ञानमेवाधिकं वर्तते । पश्चादुक्तेष्वज्ञानमत्यल्पं स्वरूपज्ञानस्यान्यूनतया स्थितावपि प्रेमोत्कूलतया वर्तते तस्मात्सर्वेषां सर्वेषु सत्वेपि अल्पयोः सतोरधिक एव तेषां प्रपदनहेतुरित्युक्तम् ।

अस्या योजनायाः कश्चन दोषोस्ति— निर्हेतुककृपालब्धज्ञानानां सूरीणामप्यज्ञानं किंचिद्वर्तत इत्यंगीकारावश्यकत्वात् । तर्हि कथमिति चेत्– 'आधिक्यमपेक्ष्य' इति मूलमनुसंधानपरं कृत्वा योजनायां न विरोधः । तदा 'एवं' इत्यादेः— अज्ञानाशक्ती स्वरूपयाथात्म्यज्ञानं भगवद्भक्तिरित्येतेषां त्रयाणामनुसंधानस्य त्रिष्वपि येन केन प्रकारेण सत्वेप्येकैकमेवैषां प्रपद-

---

प्रपत्ति करने में हेतुतया कहना–इन में एक एक ही इन अधिकारियों में अधिक तया रहनेसे । इस से–अज्ञानियों में ज्ञानभक्ति ये दोनों अल्प हो अज्ञान ही अधिक है । ज्ञानाधिकों में अज्ञान और भक्ति ये दोनों अल्प हो ज्ञान ही अधिक है । भक्तिपरवशों में अज्ञान अत्यल्प हो स्वरूपज्ञान पूर्ण होनेपर भी प्रेम ही कूलंकष है । इस कारण सब सब में होनेपर भी अल्पापेक्षया अधिक ही प्रपत्ति करनेका कारण होता है ऐसा समझना ।

इस योजना में एक न्यूनता है– अज्ञाननिवृत्ति पूर्वक सत्यानंद को प्राप्त हुए सूरियों को भी अल्प अज्ञान है ऐसा मानना आवश्यक होनेसे । तब-कैसा योजना करें ? इस आकांक्षा में कहते हैं– अधिकता है इस को अनुसंधान में मिला योजना करनेसे विरोध नहीं है ।

इस प्रकार इत्यादि— अज्ञानाशक्ति स्वरूपयाथात्म्यज्ञान और भगवद्भक्ति रूप इन तीनोंका अनुसंधान तीनों अधिकारियों में किसी न किसी प्रकार होने पर भी एक एक ही इन के प्रपत्ति करनेका हेतुतया कहना– इन में एक एक

एतत्त्रयं च तत्त्वत्रयमवलंब्यागच्छति ॥ ५१ ॥

---

मद्धेतुरित्युक्तिः— एतेष्वेकस्मिन्नेवाधिकारिणामाधिक्यं भवति। तथाचानन्यगतित्वपूर्वकं प्रपत्त्यवगमेऽज्ञानादित्रयानुसंधानस्य त्रिष्वपि सत्त्वेऽपि त्रयाणां मध्ये अधिकमेव स्वेषां स्वेषामनन्यगतित्वपूर्वकप्रपत्त्यनुष्ठानहेतुरित्यनुसंधानमित्यर्थः। अत्र प्रथमाधिकारिणामज्ञानानुसंधानं स्वरसं, मध्य उक्तानां प्रामाणिकत्वादज्ञानस्य सवासनानिवृत्त्यसंभवादज्ञानानुसंधानमुचितं, पश्चादुक्तानां निर्हेतुककृपालब्धज्ञानत्वादज्ञानानुसंधानं नैच्यनिबंधनमात्रम्।

एतदज्ञानादित्रयस्य च कारणमेतदित्याह—एतत् त्रयं चेत्यादिना।

· तत्त्वत्रयमवलंब्यागच्छतीति—साधनानुष्ठानेऽज्ञानाशक्त्योर्मूलं

---

तत्त्वत्रयं समालंब्य त्रयमेतत्प्रवर्तते ॥ ५१ ॥

में इन अधिकारियों को अधिकता ज्ञान होनेसे।

तात्पर्य यह है कि— अनन्यगति हो प्रपन्न होने के लिये अज्ञानादित्रयानुसंधान तीनों को होनेपर भी अज्ञानादि तीनों में जो अधिक है उस ही को अपने अपने के अनन्यगति हो प्रपत्ति करने का हेतुतया अनुसंधान करने में वही मुख्य मानाजाता है। इन में अज्ञानियों को अज्ञानानुसंधान स्वरस है। प्रामाणिक ज्ञानाधिकों को अज्ञान की सवासनानिवृत्ति असंभव होनेसे अज्ञानानुसंधान संगत है। भक्तिपरवश अज्ञाननिवृत्ति मग्ना नंद को प्राप्त होनेसे अज्ञानानुसंधान केवल नैच्यानुसंधान प्रयुक्त जानना।

इन अज्ञानादि तीनों का कारण बताते हैं— ये तीनों इत्यादि।

ये तीनों तीन तत्वों को अवलंबनकर होते हैं ॥ ५१ ॥

तीन तत्वों को अवलंबन कर होते हैं— साधनानुष्ठान में अज्ञानाशक्तियों

कर्मनिबंधनाचित्संबंधोऽतोऽज्ञानमचित्संबंधमवलंब्यागच्छति। इतरसाधनानि स्वरूपविरुद्धानीति तत्परित्यागोपयुक्तज्ञानपूर्ते-र्हेतुर्मध्यमपदे उक्तमात्मस्वरूपयाथात्म्यदर्शनं, अतो ज्ञानाधि-क्यमात्मतत्त्वमवलंब्यागच्छति। एकस्यापि कर्मेणानुष्ठानाश-क्त्यापादककरणशैथिल्यावहभक्तिवृद्धेः कारणं 'भक्तिं समुद्र-वदपरिच्छिन्नतया वर्धयत्कालमेघनिभश्यामदिव्यमंगलविग्रह-विशिष्टः' इत्युक्तं भगवद्विग्रहवैलक्षण्यं, अतो भक्तिपारवश्यं भ-गवत्तत्त्वमवलंब्यागच्छतीत्यर्थः।

अधिकारित्रयस्याज्ञानादित्रयेप्यन्वये सत्यप्येकैकस्यैव प्रप-दनहेतुत्वोक्तिः—आधिक्यमपेक्ष्येति खलूक्तम्। एवमेकस्मिन्नधि-कारिणि एतत्त्रयमप्यस्तीत्यत्र किं प्रमाणमित्यत आह—किम-हं कुर्यामित्यादि।

---

का कारण कर्मनिमित्तभूत अचित्संसर्ग होनेसे, अज्ञान— अचित्संबंध को अव-लंबन कर होता है। इतर साधन को स्वरूपविरुद्ध समझ परित्याग करनेके लिये ज्ञानपूर्ति का कारण मध्यमपद ( नमः ) में कहे जानेवाले आत्मयाथात्म्यद र्शन होनेसे, ज्ञानाधिक्य— आत्मतत्त्व को अवलंबन कर होता है। किसी एक साधन को भी क्रम से अनुष्ठान नहीं करसकनेका कारण शिथिलता है। तादृश शिथिलता का मूल भक्तिवृद्धि का कारण ' भक्ति को समुद्र सदृश बढाने वाले मेघ सदृश विग्रह' इस वचनानुसार भगवद्विग्रह का सौंदर्य होनेसे, भक्ति परव-शता भगवत्तत्व को अवलंबन कर होता है।

तीनों अधिकारियों को अज्ञानादि तीनों में संबंध होनेपर भी एक एक ही को प्रपत्ति करने का कारणतया कहना 'अधिकता है' ऐसा पहिले कहा है, इस प्रकार एक अधिकारि में ये तीनों का होना कहां देखसकते हैं ? इस आकांक्षा में कहते हैं— क्यामैं इत्यादि।

'किमहं कुर्यां इत्यत्रैतत् त्रयमप्यस्ति ॥ ५२ ॥

---

भगवता स्वस्यार्तिं दृष्ट्वा कृपाऽकरणात्स्वप्राप्तौ किंचित्साधनानुष्ठानं कर्तव्यमिति स्थित इति विचार्य उपायांतरानुष्ठानस्य योग्यता यथा न स्यात्तथा 'अज्ञोहं किं कुर्याम्।' 'ज्ञानमददाम' इति चेत्त्वद्दत्तज्ञानेन स्वरूपपारतंत्र्यं ज्ञात्वा साधनानुष्ठानमप्राप्तमिति स्थितोहं किं कुर्याम्। स्वरूपाप्राप्तमपि त्वत्प्राप्तिसाधनं चेदनुष्ठेयं स्याद्धि विज्ञानमात्रं दत्तवांश्चेत्, भक्तिरूपापन्नज्ञानप्रदानादेकमपि क्रमेणानुष्ठातुमक्षमत्वावहभक्तिपरवशोहं किं कुर्याम् । इत्युक्तत्वादेतत्त्रयमपि परांकुशस्य विवक्षितमतोत्रैतत्त्रयमप्यस्तीत्यर्थः । तस्मादिदं प्रमाणमिति भावः ।

---

किं कुर्यामहमित्यत्र त्रयमेतत्प्रकाशते ॥ ५२ ॥

'क्या मैं कर सकता' इस स्थल में ये तीनों हैं ॥ ५२ ॥

भगवान् अपनी आर्ति देख कृपा न करने से अपनी प्राप्ति के लिये किंचित् साधनानुष्ठान की अपेक्षा है ऐसा भगवान् का अभिप्राय समझ उपायान्तरानुष्ठान के लिये योग्यता रहित अज्ञानी मैं क्या कर सकता ? 'हम आप को ज्ञान दिये हैं ऐसा भगवान् के कहने पर, आप के दिये हुए ज्ञान से हमारे स्वरूप को परतंत्र जान साधनानुष्ठान के अयोग्य समझ रहने वाले हम क्या कर सकते हैं ? स्वरूप का उचित न होनेपर भी आप की प्राप्ति के कारण हो तो उस साधनांतर को भी कर सकते यदि ज्ञानमात्र दिये होते ऐसा न कर भक्तिरूपापन्न ज्ञान को देनेसे किसी एक साधन को भी क्रम से अनुष्ठान नहीं करसके तादृश भक्तिपरवश मैं क्या कर सकता हूं ऐसा ये तिनों श्रीशठकोपसूरी में रहनेसे उन में देखना ।

तत्रैकमवलंब्य वर्तते॥ ५३॥
'मुख्या सैव ॥५४॥

---

तर्ह्येतत्त्रयमप्यत्र प्रपत्तिकारणं कुतो न भवतीत्याकांक्षायां तत्रैकमवलंब्य वर्तत इत्याह-तत्रैकमित्यादिना।

तत्र प्रपदनं त्रिष्वाधिक्येन स्थितं भक्तिपारवश्यमेव स्वहेतुत्वेन स्वीकृत्य वर्तत इत्यर्थः।

एतद्धेतुत्रयकप्रपदनेषु मुख्यं किमित्याकांक्षायामाह — मुख्येत्यादि।

भक्तिपारवश्यहेतुकप्रपदनकरणसमये प्राप्यरुचेर्निर्बाधतया स्थितत्वात्तदेव मुख्यमित्यर्थः।

---

अज्ञानज्ञानभक्तीनां गृहीत्वैकं प्रवर्तते ॥५३॥
भक्त्यंगिका प्रधाना स्यादितरे न तथा मते ॥५४॥

तब ये तीनों शठकोपसूरी के प्रपत्ति करनेका कारण होता है क्या ? इस आकांक्षा में कहते हैं— वहां एक को अवलंबन कर इत्यादि।

वहां एक को अवलंबन कर रहती है ॥ ५३ ॥

वहां- श्रीशठकोपसूरी में। प्रपत्ति- अज्ञानाशक्ति ज्ञानाधिक्य और भक्ति परवशता इन तीनों में मुख्यतया भक्तिपरवशता को अपने हेतुतया अवलंबन कर रहती है।

इन तीनों हेतुओं से होनेवाली प्रपत्तियों में मुख्य कौन है ? इस आकांक्षा में कहते हैं—मुख्य वही है इत्यादि।

मुख्य वही है ॥ ५४ ॥

भक्तिपरवशता द्वारा प्रपत्ति करनेपर प्राप्यवस्तु में रुचि निरातंक परिपूर्ण होनेसे वही मुख्य है।

'अविद्यातः' इति श्लोके एतत् त्रयमप्युक्तम् ॥ ५५

एवमेतदधिकारित्रये प्रमाणं किमित्यपेक्षायां प्रथमं भट्टार्योक्तं कंचन श्लोकमुदाहरति— 'अविद्यातः' इत्यादिना ।

'अविद्यातो देवे परिवृढतया वा विदितया
स्वभक्तेर्भूम्ना वा जगति गतिमन्यामविदुषाम् ।
गतिर्गम्यश्चासौ हरिरिति जितंताह्वयमनो
रहस्यं व्याजह्रे स खलु भगवान् शौनकमुनिः ॥'

अस्य श्लोकस्यार्थं जितंताव्याख्यानोपोद्घाते— प्रपत्तेरधिकारिणोऽज्ञाः,सर्वज्ञाः, भक्तिपरवशाश्चेति त्रिविधा इति भट्टार्या अवदन्नित्यारभ्य, अज्ञो नाम – भगवल्लाभाय स्वस्मिन् ज्ञानशक्तिरहितः । सर्वज्ञो नाम– देशकालवस्तुभिरपरिच्छेद्यवै-

---

अविद्यात इति श्लोके त्रयमेतदपि स्मृतम् ॥ ५५ ॥

इन तीनों अधिकारियों के विषय में प्रमाण है क्या ? इस आकांक्षा में पहिले भट्टार्यस्वामीजी के एक श्लोक को उदाहरण देते हैं—अविद्यातः इत्यादि ।

'अविद्यातः' इस श्लोक में ये तीनों प्रपत्तियां कही गयीं ॥ ५५ ॥

'अविद्या (अज्ञान) से परमात्मा की प्रपत्ति करते हैं । ज्ञानीलोग समर्थ होनेपर भी परमात्मा की प्रपत्ति करते हैं । अपनी भक्ति की अधिकता से परमात्मा की प्रपत्ति करते हैं । ये तीनों अधिकारि जगत् में और कोई उपाय को नहीं देखते हैं । इन तीनों को भगवान् ही उपाय और उपेय हैं । ऐसा जितंते नामक मंत्र का रहस्य को शौनकभगवान् व्याख्यान किये हैं ।'

इस श्लोकका अर्थ जितंते व्याख्यान उपोद्घात में—प्रपत्ति के अधिकारी अज्ञ, सर्वज्ञ और भक्तिपरवश ऐसा तीनप्रकार भट्टार्य कहेहैं । अज्ञ माने—भगवल्लाभ के लिये ज्ञानशक्ति रहित । सर्वज्ञ माने—देशकालवस्तुओं से परिच्छेद

भत्र ईश्वर इति स्थितत्वादनन्यसाध्य इति स्थितः। भक्ति-परवशो नत्म-- ज्ञानशक्त्योः सत्वेपि क्रमेणानुष्ठातुमशक्तः। एतत्त्रयोपि भगवद्विषयं विनान्योपायोऽस्तीति ज्ञानरहिताः। एतेषां प्रापकश्च प्राप्यश्च भवति सर्वेश्वर एवेति 'जितंते' इति नामविशिष्टमंत्ररहस्यस्य सर्वज्ञः शौनकभगवान्व्याख्यानमकरोदिति वदतीति श्रीमत्कृष्णपादा अवदन्। 'ज्ञानाधिक्येन प्रपन्नाः' इत्यत्र स्वरूपयाथात्म्यज्ञानं प्रपदनहेतुत्वेनोक्तं, अस्मिन् श्लोके भगवदनन्यसाध्युत्वज्ञानं प्रपदनहेतुत्वेनोक्तं, तस्मादुभयमपि ज्ञानाधिकारिणोऽनन्यगतित्वपूर्वकप्रपदनहेतुर्भवतीत्यंगीकार्यम्। पूर्वमप्ययमेवार्थः स्यादिति चेन्न; एतत् त्रायमपि तत्वत्रयमवलंब्यागच्छतीत्यनेनानन्वयापत्तेः।

अनंतरमेतदर्थविषयमखिलजगन्मात्राप्ततमया लक्ष्म्या लक्ष्मीतंत्रोक्तं वचनमुपादत्ते—इदमित्यादिना।

---

रहित वैभववाले सर्वेश्वर ऐसा समझ रहने से परमात्मा साधनांतरों से साध्य नहीं ऐसा माननेवाले। भक्तिपरवश माने—ज्ञानशक्ति होनेपर भी क्रम से अनुष्ठान नहीं करसकनेवाले। ये तीनों भगवान को छोडकर और उपायों को नहीं जानते हैं। इन को उपाय और उपेय रूप से सर्वेश्वर ही हैं। ऐसा जितंते नामक मंत्ररहस्य का व्याख्यान सर्वज्ञ शौनकमुनि किये हैं यह हमारे भाग्य ही है ऐसा भट्टार्य विद्व होते हैं। ऐसा श्रीमत्कृष्णस्वामी कहे हैं। 'ज्ञानाधिक्य से प्रपन्न' इस स्थल में स्वरूपयाथात्म्यज्ञान प्रपत्ति का हेतुतया कहागया। पूर्वोक्त श्लोक में भगवान् को और किसी उपाय से प्राप्त न होसकते ऐसा समझना प्रपत्ति का हेतुतया कहागया। तथाच दोनों को ज्ञानाधिकों के अनन्यगतित्व पूर्वक प्रपत्ति करने को हेतुतया जानना।

अनंतर इस अर्थ के विषय में अखिलजगन्माता आप्ततमा महालक्ष्मी से लक्ष्मीतंत्र में कहा हुआ वचन को दिखाते हैं—यह अज्ञों को उपाय है

## 'इदं शरणमज्ञानाम्॥' ५६॥

'इदं शरणमज्ञानामिदमेव विजानताम्।
इदं तितीर्षतां पारमिदमानंत्यमिच्छताम्॥'

अस्मिन् श्लोके इदमिति परामृशति पूर्वोक्तां शरणागतिम्।

'उपायापायनिर्मुक्ता मध्यमां स्थितिमास्थिता।
शरणागतिरग्र्यैषा संसारार्णवतारिणी॥'

इति खलु पूर्वमुक्तम्। लिंगव्यत्ययः शरणशब्दाविवक्षया। अज्ञसर्वज्ञयोः स्फुटमुक्तत्वादुपारि भक्तिपरवशा उच्यन्ते इत्यंगीकार्यम्। इदं तितीर्षतां पारमिति शीघ्रमनिष्टनिवृत्तिः स्यादिति त्वरायुक्तानामित्यर्थः। आनंत्यमिच्छतामिति—स्वरूपप्राप्तपरिपूर्णभगवदनुभवप्राप्तिमंतरा धर्तुमशक्यानामित्यर्थः। एतद्द्वयमपि

---

इदं शरणमज्ञानामिदमेव विजानताम्।
इदं तितीर्षतां पारं मानमित्यादिकं वचः॥५६

इत्यादि।

'यह अज्ञों को उपाय है'॥५६॥

'यह अज्ञों को उपाय है, यही ज्ञानियों को भी उपाय है, यह पारहोने की इच्छा और भगवदनुभव में त्वरावालों को उपाय है।'

इस श्लोक में 'इदं' शब्द से शरणागति को कहते हैं।—

'उपाय और अपाय से रहित मध्यम स्थिति को आश्रयण करनेवाली शरणागति श्रेष्ठ और संसारसमुद्र को तराने वाली है।' ऐसा लक्ष्मीतंत्र में कहनेसे इस में अज्ञ सर्वज्ञ स्पष्टतया कहे जानेसे आगे भक्तिपरवशों को कहते हैं समझना। पार होनेकी इच्छावाले माने—शीघ्र अनिष्टनिवृत्ति के लिये त्वरा वाले। भगवदनुभव में त्वरा वाले माने—परिपूर्ण भगवदनुभव को पाये विना धारण

भक्तेर्मूर्ध्नाऽऽगच्छति । भक्तिपारवश्यमुपायांतरानुष्ठानेऽशक्तेः प्रयोजकं, अनिष्टनिवृत्ताविष्टप्राप्तौ च विलंबाक्षमताया मूलं भवति। तत्र विलंबाक्षमताया मूलभूत आकारोऽस्मिन् श्लोके उच्यते । तर्हि पूर्वमशक्तेर्मूलतया खलूक्तं तस्येदं प्रमाणं कथं भवेदिति चेत्– अधिकारित्रैविध्यप्रदर्शनमात्रस्यात्रापेक्षितत्वादिदं प्रमाणमित्युक्तौ न विरोधः। 'अविद्यातः' इति श्लोके ज्ञानाधिक्यस्य मूलतयोक्तस्य पूर्वोक्तस्य च भिन्नत्वेप्यधिकारित्रैविध्यस्य प्रमाणत्वेन तत्कथनवत् ।

एवंप्रपत्त्यधिकारित्रैविध्यस्य प्रमाणं प्रादर्शयत्। एतत्त्रिविधप्रपत्तिषु भक्तिपारवश्यप्रपत्तिरेव मुख्येति खलु पूर्वमुक्तं, एवंभूतप्रपत्तिनिष्ठानां तन्निष्ठानाशेन भगवल्लाभार्थं स्वयत्नेऽन्व-

---

नहीं करसकने वाले । ये दोनों भक्ति की अधिकता से होते हैं । भक्तिपरवशता उपायान्तरानुष्ठान में अशक्ति का कारण और अनिष्टनिवृत्ति इष्टप्राप्ति में त्वरा-करने में भी कारण होती है । इस श्लोक में विलंब नहीं सहने के आकार को कहते हैं । पहिले अशक्ति का कारणतया कहा, उस को यह कैसे प्रमाण हो सक्ता है? इस आकांक्षा में कहते हैं– अधिकारी तीन प्रकार के हैं ऐसा दिखाना इस स्थल में अपेक्षित होनेसे यह प्रमाण हो सकता है । 'अविद्या से इस श्लोक में ज्ञानाधिक्य का कारणतया कहा हुआ और पूर्वोक्त ये दोनों अलग होनेपर भी अधिकारी तीन प्रकार के हैं इस में प्रमाणतया जैसा लिया है तैसा ही यह भी जानना ।

तथाच– प्रपत्त्यधिकारी तीन प्रकार हैं इस में प्रमाण दिखा, इन तीन प्रपत्तियों में भक्तिपरवशता के कारण की जानेवाली प्रपत्ति ही मुख्य ऐसा पहिले कहे हैं । एवं भूत प्रपत्तिनिष्ठ अधिकारी उस निष्ठा को छोड भगवल्लाभ के लिये स्वयत्न में लगना, सर्वेश्वर आनेपर उन को उपेक्षा करना इत्यादि का कारण क्या ?

भक्तावषस्थाभेदोत्पत्तावियं नष्टा भवति ॥ ५७॥

---

ये सति तस्मिन्नागते तदुपेक्षणस्य किं निदानमित्यत आह—भक्तावित्यादिना ।

भक्तावषस्था भेदोत्पत्तिर्नाम — करणशैथिल्येन स्वयत्नाक्षमाणां तमेवोपायत्वेनाध्यवस्यतां तदागमनप्रतीक्षणावस्थामात्रं विना नेत्रभ्रमेण येन केन प्रकारेण वेदानीमेव प्राप्तव्य इत्यतिमात्रत्वरावस्थाया उत्पत्तिः । इयमिति प्रपत्तिरुच्यते । तादृशावस्थोत्पत्तौ प्रपत्तिनाशो नाम— किमहं कुर्यामिति स्वप्रवृत्तावन्वयं विहाय भगवति न्यस्तभरतया स्थितस्थितेर्नाशः ।

एवं प्रपत्तिनिष्ठानाशकतयोत्पन्नभक्तेरवस्थाभेदेनापायमाह—स्वामित्यादिना ।

---

भक्त्यवस्थाकृते भेदे प्रपत्तिर्नाशमिष्यति ॥ ५८ ॥

इस आकांक्षा में कहते हैं— भक्ति के अवस्थाभेद होनेपर इत्यादि ।

भक्ति के अवस्थाभेद होनेपर यह प्रपत्ति नष्ट होती है ॥ ५७ ॥

भक्ति के अवस्थाभेद होना माने— करणों की शिथिलता से स्वयत्न में असमर्थ हो सर्वेश्वर ही को उपायतया विश्वास कर उन के आगमन की प्रतीक्षा करना रूप अवस्थापर्यंत न हो नेत्र घूमने पर किसी एक प्रकार से उन को अब ही प्राप्त होवेंगे ऐसा अतिमात्र त्वरावस्था होना । यह—प्रपत्ति । तादृशावस्था होनेपर प्रपत्ति नष्ट होना माने—'क्या मैं करूंगा' ऐसा स्वप्रयत्न में संबंध छोड भगवान के ऊपर अपना भार रख निर्भर होनेकी अवस्था नष्ट होना ।

इस प्रकार प्रपत्ति निष्ठा को नाशकरनेवाली भक्ति के अवस्थाभेद को कहते हैं—अपने को इत्यादि ।

## स्वमलंकारयति धारयति च ॥ ५८॥

स्वमलंकारयतीति—'कंठभूषणविशेषं धत्ते' इत्यादिप्रकारेण तदागमनस्य हेतुतया स्वमलंकुर्वतीं प्रेरयतीत्यर्थः । भगवल्लाभार्थं स्वयत्ने प्रेरयतीति यावत् । इदं मडल्ग्रहणप्रभृतिषु प्रेरणस्य चोपलक्षणम् । धारयतीति—अर्धक्षणमपि तं विना धारणासामर्थ्यात् तदागमनहेतुतया स्वयत्ने प्रेरकः स एव तस्मिन्नागते विलंबरोषेण 'गच्छ पूर्ण' 'अस्मद्गोष्ठीं नारोह' इति तमुपेक्ष्य निष्कास्य धारणयुक्तां करोतीत्यर्थः । एवमेतद्द्वाभ्यां 'किमहं कुर्यां' इति 'धर्तुं न शक्नोमीतःपरं' इति च स्थितेः प्रतिकोटिमापादयतीत्युक्तम् । तस्मादेतत्प्रपत्तिनिष्ठानाशनेन स्वप्रवृत्त्याद्यवगाहनमूलं भक्तेरवस्थाभेद इति भावः ।

---

## स्वेनालंक्रियते स्वेन धार्यते भक्तिभेदतः ॥ ५८ ॥

अपने को अलंकृत कराती है, धारण कराती है ॥ ५८ ॥

अपने को अलंकृत कराना माने–'कंठभूषण धारण करती है' इस वचनानुसार परमात्मा के आगमनके लिये अलंकृत कराना। भगवल्लाभ के लिये स्वयत्न में लगाना। इस से मडल ग्रहण करना इत्यादि में लगाना भी सूचित होता है। धारण करना माने—अर्धक्षण भी उस के विश्लेष में धारण नहीं कर सकनेसे उस के आगमनके लिये स्वयत्न में लगाने वाली वही भक्ति उस के आनेपर विलंबरोष से 'जाओ हे पूर्ण !' 'हमारी गोष्ठी में मत आना' ऐसा उस को उपेक्षा कर हटाकर धारण करने योग्य बनाना। तथाच इन दोनों से 'मैं क्या करूं' 'इस के बाद धारण नहीं कर सकता हूं' ऐसी स्थिति को नाशकरती है समझना। इस लिये प्रपत्तिनिष्ठा नष्ट हो स्वप्रवृत्त्यादि में लगनेका कारण भक्ति का अवस्था भेद समझना।

एतौ स्वभावविशेषौ कल्याणगुणेष्वपि, श्रीशरेष्वपि श्रीनामस्वपि वेणुनादे च द्रष्टुं योग्यौ ॥५९॥

---

स्वमलंकारयति धारयति चेति भगवदागमनहेतुतया कृषीकरणं, आगते सति तदुपेक्षणं चेति परस्परविरुद्धस्वभावावापादयतीति प्रकारो ह्युक्तः। एवं भक्त्या स्वावस्थाविशेषैश्चेतनानामापाद्यमानौ परस्परविरुद्धस्वभावौ केवलं तद्विषये न भवतः किंतु तत्संबंधिवस्तुविषये च द्रष्टुं योग्यौ इत्यत आह— एतौ इत्यादिना।

एतौ स्वभावविशेषौ इति पूर्वोक्तावेव नोच्येते किंतु एवंभूतौ स्वभावविशेषौ इत्यर्थः। तौ चानुभाव्यविषयस्यैकरीत्या स्थितावपि तमनुभवतां साधकत्वेन भानं बाधकत्वेन भानं च।

---

एतौ स्वभावभेदौ वै श्रीनामसु शरेषु च ॥
कल्याणगुणके द्रष्टुं योग्यौ वेणुध्वनौ तथा ॥५९॥

'अपने को अलंकृत कराती है, धारण कराती है' ऐसा भगवान् के आगमनके लिये यत्न करना, उस के आनेपर उस को उपेक्षा करना इस प्रकार परस्पर विरुद्ध स्वभावों को उत्पादन करती है ऐसा कह, अनंतर—केवल भगवद्विषय में ही नहीं किंतु भगवत्संबंधि वस्तुओं के विषय में भी भक्ति के अवस्थाविशेष परस्पर विरुद्ध स्वभावों को उत्पादन करता है ऐसा दिखाते हैं—ये स्वभावविशेष इत्यादि।

ये स्वभावविशेष कल्याणगुण, बाण, श्रीनाम
और श्रीवेणुगान में भी देखे जाते हैं ॥५९॥

ये स्वभावविशेष—पूर्वोक्त से भिन्न स्वभावविशेष। वे कौन हैं ? इस शंका में कहते हैं—अनुभाव्य विषय एकरीति होनेपर भी उस को अनुभव करनेवाले

कल्याणगुणेष्वित्यादि— 'गोविंदगुणं गात्वा प्राणं रक्षामि' इति धारकत्वेन, 'प्रबलपापं मां बाधमानगुणविशिष्ट' इति बाधकत्वेन चोक्तत्वात् कल्याणगुणविषये च। 'शरेषु व्यापृतशीतलकमलसदृशनेत्रविशिष्टं विना मम हृदयं साभिलाषं न तिष्ठति' इति धारकत्वेन, 'शराण्येव क्रूरतया हिंसंति' इति बाधकतया चोक्तत्वाच्छ्रीशरविषये च। 'श्रियःपतिं गायति श्रुत्वा भव्यं शुकमंजलिं कृत्वा नमश्चकार' इति धारकत्वेन, 'कृष्णस्य नामान्येवाक्रमेणोऽत्र हिंसथ' इति बाधकत्वेन चोक्तत्वात् श्रीनामविषये च। 'अस्मदर्थमेवैकस्मिन् दिवसे वादयितुं तव वेणोर्मधुरस्वरो नागच्छति' इति धारकत्वेन, 'तस्य मधुरस्वरो वेणुर्हिनस्ति' इति बाधकत्वेन चोक्तत्वात् श्रीवेणुनादविषये च द्रष्टुं योग्यावित्यर्थः।

सदैकप्रकारेण भोग्यभूतानां कल्याणगुणादीनां धारकत्वेन

---

इन सूरियों को धारकतया बाधकतया भान होना। कल्याणगुणों में इत्यादि— 'गोविंद के गुण गानकर प्राण को रक्षा करती हूं' इति धारकतया, 'प्रबल पापी मुझ को बाधक गुणवाले' ऐसा बाधकतया भी कहनेसे कल्याणगुणों के विषय में, 'बाणों को प्रयोग करनेवाले शीतल कमलनेत्र के बिना मेरा मन झुकता नहीं' ऐसा धारकतया, 'बाण ही क्रूर हो पीडा करते हैं' ऐसा बाधकतया भी कहनेसे बाणों के विषय में, 'श्रियःपति को गानेपर सुन भव्य शुक को हाथ जोड प्रणाम की है' ऐसा धारकतया, 'कृष्ण के नामों को ही बक मार दिये हो' ऐसा बाधकतया भी कहनेसे श्रीनामों के विषय में, 'हमारे लिये ही एक दिन आ बजाने को तुह्मारे वेणु के स्वर नहीं आता है' ऐसा धारकतया, 'उस का क्रूर वेणु बाधक है' ऐसा बाधकतया भी कहनेसे श्रीवेणुगान के विषय में भी देख सकते हैं।

सदा एकरीति से भोग्यभूत कल्याणगुणादि धारकतया और बाधकतया

भानं, बाधकत्वेन भानं चानुभवितृणामेषां प्रेमस्वभावविशेषैर्हि नतु गुणादीनां स्वरूपभेदेन, अतो भक्त्यवस्थाविशेषजनितस्वभावविशेषौ तत्तद्वस्तुविषये च द्रष्टुं योग्यावित्युच्यते ।

यद्यपि गुणादीनां धारकत्वेन बाधकत्वेन चोक्तस्थल उभयोरप्येकोक्तित्वं नास्ति तथापि सूरीणां सर्वेषामेकप्रकृतिकत्वात् सर्वेषामपि भक्तेर्भगवत्प्रसादलब्धपरभक्तिरूपत्वात्तादृशभक्तिस्वभावविशेषाणां प्रदर्शनमात्रस्यापेक्षितत्वान्न विरोधः ।

ननु 'शराण्येव क्रूरतयाहिंसंति' इति पराजितराक्षसानां वचनं खलु, तस्य 'शरेषु व्यापृत' इत्यस्य प्रतिकोटित्वं कथमिति चेन्न; रामविजयस्य स्वेष्टत्वात्तद्विजयविषयाणां पराजितराक्षसानां दशोत्पत्त्या, महिषीणां दशोत्पत्त्या यथा वदति तथा स्वस्वरूपभावेन विना पराजितराक्षसवचनेन विजयमुक्त्वानुभवतीति खलु तद्दशकस्य व्याख्यानं कुर्वद्भिराचार्यैरु-

---

भान होना— अनुभव करने वाले इन सूरियों के प्रेमस्वभाव विशेषों से ही है' न गुणादियों के स्वरूप भेद से । इस कारण भक्त्यवस्था भेद से होने वाले स्वभावविशेष पूर्वोक्त वस्तुओं के विषय में भी देख सकते हैं ।

गुणादियों को धारकत्वेन भोग्यत्वेन कहनेके स्थल में एक ही सूरी की वार्ता न होनेपर भी सब सूरी लोग एक स्वभाववाले होनेसे सब की भक्ति भगवत्प्रसादलब्ध होनेसे और तादृश परभक्ति के स्वभावविशेष को दिखाना ही यहांपर अपेक्षित होनेसे विरोध नहीं ।

बाण ही अतिक्रूर हो बाधक होते हैं' यह हारनेवालों के वचन है इस को ' बाणों को प्रयोग करनेवाले' इस का प्रतिकोटि क्या कैसे कह सकते हैं ? इस आकांक्षा में कहते हैं— 'राम का विजय अपना इष्ट होनेसे तादृश विजय के लक्ष्य हो हारनेवाले राक्षसों की दशा उत्पन्न हो, महिषीदशा उत्पन्न होनेपर जैसे बात करते हैं तैसे अपने को भूल राक्षसों के वचनों से विजय को कह

क्तं, तस्मात्स्वप्रेमस्वभावेन तद्वस्थाप्राप्त्यनंतरं श्रीशराणां बाधकत्वस्य च स्वस्यैव भानेनोक्तत्वात् तथोक्तौ न विरोधः।

अथवा 'स्वमलंकारयति धारयति च' इति द्वाभ्यां स स्वयमेव यावदागच्छति तावद्धारणासामर्थ्येनागमनहेतुत्वेन यत्नं कारयति, आगते प्रणयरोषेणोपेक्ष्य धृत्वा स्थितिं कारयतीति ह्युक्तं, एवं विरुद्धस्वभावावेकैवापादयतीति अन्यत्रापि क्वचिद्विषयेषु दृश्यते किमित्यत आह– एताविति। एतादृशस्वभावविशेषौ गोविंदगुणं गात्वेत्यारभ्य पूर्वोक्तप्रकारेण एकस्यां दशायां धारकत्वोक्तिः एकस्यां दशायां बाधकत्वोक्तिश्चेत्येवमेतेषां धारणबाधनरूपविरुद्धस्वभावावापादयत्सु कल्याणगुणादिष्वपि द्रष्टुं योग्यावित्यर्थः।

एवं प्रपत्तेरित्यारभ्यैतावत्पर्यंतं प्रपत्तिवैभवं, तद्विषयवैभवं तदधिकारित्रैविध्यं, त्रिविधप्रपत्तिषु भक्तिपारवश्यहेतुकप्रपत्ते-

---

अनुभव करते हैं।' ऐसा परकालसूरी की सूक्ति का व्याख्यान करने वाले कहे हैं। इस कारण अपने प्रेमस्वभाव से तादृशावस्थाविशिष्ट होनेपर बाणों का बाधकपना, अपने को भान हो कहने से, विरोध नहीं है।

अथवा 'अपने को अलंकृत कराती है धारण कराती है' इन दोनों से सर्वेश्वर आनेतक धारण नहीं कर यत्न में लगाना आनेपर प्रणयरोष से निकाल कर धारण करना यही पूर्व कहे गये हैं। इस प्रकार विरुद्धस्वभावों को एक ही वस्तु उत्पन्न करता है यह विषय अन्य वस्तुओं में देखसकते हैं क्या ? इस आकांक्षा में कहते हैं– 'ये स्वभाव' इत्यादि। ये स्वभावविशेष 'गोविंद के गुण गानकर' इत्यादि पूर्वोक्त प्रकार एक दशा में धारकतया और एक दशा में बाधकतया कहने के योग्य उन को धारण और बाधन रूप विरुद्धस्वभावों को उत्पन्न करनेवाले कल्याणगुणों में भी देखसकते हैं ऐसा समझना।

तथा च 'प्रपत्ति को' ऐसा आरंभ कर यहां तक–प्रपत्तिवैभव, उस का

मुख्यत्वं, तद्धेतुभूतभक्त्यवस्थाभेदेन प्रयुक्तं नाशं तादृशभक्त्यवस्थाभेदेन क्रियमाणसंशं चाभ्यधात्।

अस्याः प्रपत्तेः 'धर्मपुत्रादय' इत्यारभ्य पूर्वोक्तेष्वधिकारिषु साधनतयानुष्ठानस्य दर्शनात् कर्मज्ञानभक्तिप्रपत्तय इति उपायैः सह पठितत्वात्—

यद्येन कामकामेन न साध्यं साधनांतरैः।
मुमुक्षुणा यत्सांख्येन योगेन नच भक्तितः॥
प्राप्यते परमं धाम यतो नावर्त्तते पुनः।
तेन तेनाप्यते तत्तन्न्यासेनैव महामुने!।
परमात्मा च तेनैव साध्यते पुरुषोत्तमः॥'

इति 'इदं शरणमज्ञानाम्' इति चैवं शास्त्रैरस्याः साधनत्वेनोक्ततया चोपायत्वप्रतिपत्तियोग्यतायाः सत्त्वात्तद्व्यावर्तनाय

---

विषयवैभव, उसके अधिकारियों की त्रिविधता, त्रिविधप्रपत्ति में भी भक्तिपरवशता के कारण की जानेवाली प्रपत्ति की मुख्यता, उस का कारण भक्त्यवस्थाभेद से होनेवाले प्रपत्ति का भंग, और उस अवस्थाभेद से उत्पन्न होनेवाले अनुभवों को भी कहे हैं।

'धर्मपुत्रादि' ऐसा आरंभकर पूर्वोक्त अधिकारियों में इस प्रपत्ति को साधन मानकर अनुष्ठान दीखनेसे और कर्म ज्ञान भक्ति प्रपत्ति ऐसा उपायों के साथ कहे जानेसे,

'ऐश्वर्यार्थि को जो ऐश्वर्य साधनांतरों से नहीं प्राप्त होता है, मुमुक्षु को पुनरावृत्तिरहित जो कैवल्य कर्म ज्ञान भक्ति योगों से नहीं प्राप्त होता है, उस उस अधिकारी को वह वह पुरुषार्थ प्रपत्ति से ही प्राप्त होता है, और परमात्मा पुरुषोत्तम भी प्रपत्ति से ही प्राप्त होता है।' ऐसा,

'यह अज्ञों को उपाय है' ऐसा भी शास्त्रों में प्रपत्ति को साधनतया कहेजानेसे भी उपायतया जानने योग्य होनेसे—उपायभाव को हटानेके लिये तद्व्यु-

इयं दृष्टाचेत् पितुः पुत्रेण लेखनस्वीकारवद्वर्तते ॥६०॥

---

तन्निदानं बह्वर्थजातमाह, तत्र प्रथमामियं प्रपत्तिरुपायत्वेन दृ-
ष्टा चेत् जायमानमवद्यं दर्शयति—इयमित्यादिना ।

इयं दृष्टाचेदिति– एतच्चेतनेनेश्वरविषये क्रियमाणा प्रप-
त्तिरुपायत्वेन दृष्टाचेदित्यर्थः । अथवा ईश्वरः स्वं रक्षितुं हे-
तुत्वेनैतच्चेतनेन क्रियमाणा प्रपत्तिर्निरूपिता चेदित्यनध्याहा-
रेण योजना स्यात् । तदाप्यर्थस्तुल्य एव । पितुः पुत्रेण लेखन-
स्वीकारवद्वर्तत इति– उत्पादकाद्धितैषिणः स्वाज्ञानदशायाम-
पि स्वरक्षितुः पितुः पुत्रेण स्वज्ञानदशायां मां त्वं रक्षेति ले-
खनस्वीकारे कृते उभयोरपि विद्यमानस्य संबंधस्य न्यूनता-
वत्सत्ताकारणभूतस्य सर्वदशायामपि रक्षकस्याकारवाच्यस्य

---

उपायत्वेन चेदेषा दृष्टा स्याज्जनकस्य हि ॥
पुत्रेण लेखस्वीकारसदृशं वर्तते तदा ॥ ६० ॥

गुण हेतुओंको विस्तारपूर्वक कहते हैं । उस में पहिले इस प्रपत्ति को उपाय
माननेपर होनेवाले दोष को दिखाते हैं—इस को इत्यादि ।

इस को देखनेपर पिता से पुत्र लिखवानेके सदृश है ॥ ६० ॥

इस को देखने पर माने—इस चेतन के सर्वेश्वर विषयमें क्रियमाण प्रपत्ति
को उपायबुद्धि से देखने पर । यद्वा ईश्वर अपने को रक्षाकरनेके कारणतया इस
चेतनकर्तृक प्रपत्ति को निरूपण करनेपर–ऐसा भी अर्थ होसक्ता है । पिता से
पुत्र लिखवाने के सदृश है माने–उत्पादक होनेसे हितैषी हो अपने अज्ञानदशा
में भी अपने को रक्षा करनेवाले पिता से पुत्र अपनी ज्ञानावस्था में 'हम को
आप रक्षा करना चाहिये' ऐसा लिखवानेपर दोनों का संबंध में जैसा दोष
लेग ग तैसा सत्ता का कारणभूत सर्वदशा में रक्षक अकारवाच्य सर्वेश्वर के

## अस्याः स्वरूपं स्वासहिष्णुत्वम् ॥ ६१ ॥

ईश्वरस्य मकारवाच्यस्यास्य च विद्यमानस्य संबंधस्यापचयका-री स्यात् । लेखनस्वीकारो नाम— रक्षकनाम्नः स्ववक्षसि लेखनम् ।

तर्हि अस्याः स्वरूपं किमित्यत आह—अस्या इत्यादिना

अस्याः स्वरूपमिति— अस्याः प्रपत्तेरसाधारणाकार इत्यर्थः । स्वासहिष्णुत्वं नाम उपायवरणात्मिकायाः स्वस्या उपायोक्त्यसहत्वं, तच्च आपातप्रतीतिं विना याथातथ्येन निरूपणे स्वस्मिन्नुपायत्वप्रतिपत्त्ययोग्यत्वमित्यर्थः । अथवा स्वासहिष्णुत्वमित्यत्र चोपायत्वेन प्रतीतस्वासहिष्णुत्वमित्यध्याहारेण योजनीयम् । एवमुक्तावपि स्वस्मिन्नुपायत्वप्रतिपत्त्यसहत्वमेवार्थो भवति हि ।

---

## स्वासहिष्णुत्वमस्याः स्यात्स्वरूपं शास्त्रसंमतम् ॥६१॥

साथ मकारवाच्य जीवात्मा के संबंध में दोष लगेगा । लिखवाना माने–रक्षक का नाम को अपने छाती में लिखवाना ।

ऐसा होतो इस का स्वरूप क्या ? इस आकांक्षा में कहते हैं—इस का इत्यादि ।

इस का स्वरूप अपने को न सहना ॥ ६१ ॥

इस का स्वरूप माने– प्रपत्ति का असाधारण आकार । अपने को न सहना माने– उपायस्वीकाररूप अपने को उपायतया न सहना । ऊपरी आकार को छोड यथार्थ निरूपण करने पर अपने में उपायत्वबुद्धि करने का योग्य न होना । यद्वा– अपने को न सहना– उपायतया प्रसिद्ध अपने को न सहना । इस अर्थ में भी अपने में उपायत्वबुद्धि करने का योग्य न होना यही अर्थ होता है ।

## अंगं स्वव्यतिरिक्तासहिष्णुत्वम् ॥ ६२ ॥

---

चरमश्लोकेऽस्य सांगतया विधानात् 'यद्यत्सांगं तत्सा-धनं' इतिन्यायोऽस्य प्रसज्यते किमिति शंकायामंगस्वरूपप्र-दर्शने स न्यायोऽत्र नावतरतीति विचार्य तदाह— अंग-मित्यादिना ।

स्वव्यतिरिक्तासहिष्णुत्वं— स्वीकारस्वरूपस्वव्यतिरिक्तचेतन प्रवृत्तिष्वेकस्याप्यसहिष्णुत्वम् । साधनरूपसकलप्रवृत्तीनां च स-वासनत्यागोह्यस्यांगम् । 'यद्यत्सांगं' इत्यत्र प्रवृत्तिरूपांगसहित-मेव हि साधनतयोच्यते, एतदंगस्य निवृत्तिरूपत्वादिदमेवा-स्यानुपायत्वसूचकमिति भावः ।

---

## अंगं स्वव्यतिरिक्तस्यासहिष्णुत्वं प्रचक्षते ॥ ६२॥

चरमश्लोक में इस को अंगसहित विधानकरने से 'जो जो अंगसहित होता है वह वह साधन होता है' यह न्याय यहांपर न होगा क्या ? इस शंका में— अंगस्वरूप को दिखानेपर वह न्याय यहां न लगेगा ऐसा विचार कहते हैं— अंग इत्यादि से ।

अंग अपने से व्यतिरिक्त को न सहेगा ॥ ६२ ॥

अपने से व्यतिरिक्त को न सहेगा माने— स्वीकाररूप अपने को छोड चेतनप्रवृतियों में किसी को भी न सहना । साधनरूप सकलप्रवृत्तियों के सवा-संनात्याग ही इस का अंग होता है । 'जो जो अंगसहित होता है' इस स्थल में जो प्रवृत्तिरूप अंगसहित हैं उन को साधनतया कहते हैं । वैसा न हो इस प्रपत्ति का अंग निवृत्तिरूप होनेसे यही इस का उपायत्वाभाव को दिखाता है— ऐसा तात्पर्य समझना ।

उपायः स्वं सहते। उपायांतरमुभय-
मपि सहते । इयमुभयमपि न सहते॥६३॥

---

एतदनुपायत्वदृढीकरणाय सिद्धसाध्योपायप्रकारानुक्त्वा तदुभयापेक्षयाऽस्या विद्यमानव्यावृत्तिमाह--उपाय इत्यादिना ।

उपायः स्वं सहत इति–सिद्धोपायभूतः सर्वेश्वर इष्टानिष्टप्राप्तिपरिहारयोः स्वयमेव निर्वाहकत्वात् स्वस्योपायत्वेन स्वीकारे तदौचित्येन तिष्ठतीत्यर्थः ।

'उपायोपेयत्वे तदिह तव तत्वं न तु गुणौ'

---

सिद्धोपायस्वरूपो यः परमात्मा व्यवस्थितः ॥
स्वरूपं सहते नान्यत्पूर्णस्वातंत्र्यतः सदा ॥
उपायांतररूपा ये कर्मज्ञानादयो मताः ।
स्वस्वरूपं स्वभिन्नं च सहंते पारतंत्र्यतः ॥
प्रपत्तिस्तूभयं नैव सहते पापनाशिनी ॥ ६३ ॥

इस का अनुपायत्व को दृढ करनेके लिये सिद्ध और साध्य उपायों के प्रकारों को कह उन दोनों की अपेक्षा इस की श्रेष्ठता को कहते हैं — उपाय इत्यादिसे ।

उपाय अपने को सहेगा ।
उपायांतर दोनों को सहेगा ।
यह प्रपत्ति दोनों को न सहेगी ॥ ६३ ॥

उपाय अपने को सहेगा माने— सिद्धोपायभूत सर्वेश्वर इष्ट प्राप्ति अनिष्ट निवृत्ति इन दोनों को स्वयं करनेसे अपने को उपाय माने तो सह सकेगा 'उपायत्व और उपेयत्व ये दोनों आपका स्वरूप है गुण नहीं' ऐसा उपेयत्व

इत्युपेयत्ववद्वस्तुनः स्वरूपं खलूपायत्वमपि ।

'ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदंति महात्मानं कृष्णं धर्मं सनातनम् ॥
शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः ।
अमृतं साधनं साध्यं संपश्यंति मनीषिणः ॥'

इत्युक्तं हि । स्वं सहत इत्येतावन्मात्रस्योक्तत्वात्स्वव्यतिरिक्ता-सहत्वमर्थात्सिद्धं, अयं सिद्धोपायः सहायांतरसंसर्गासहो हि वर्तते—अस्योपायविशेषस्य स्वव्यतिरिक्तासहत्वाद्धि । आनु-कूल्यादीनामुपायांगत्वं विनाऽवघातस्वेदवत्संभावितस्वभावत्व-मित्यमुमर्थं परंदपडिरहस्येऽयं स्वयमेवावोचत् ।

उपायांतरमुभयमपि सहत इति—सिद्धोपायेतरसाध्योपायः स्वपारतंत्र्यज्ञानरहितानां स्वयत्नपराणां मोक्षसाधनतया शास्त्र-विहितत्वात्स्वस्मिन्नुपायत्वप्रतिपत्तिं सहते । स्वोत्पत्त्यादिषु

---

के तरह उपायत्व ईश्वर का स्वरूप है ।

'जो ब्राह्मण वेद को जानते हैं और जो आत्मा को जानते हैं वे महा-त्मा कृष्ण को सनातन धर्म कहते हैं ।'

'देवता और महर्षिगण आप को रक्षक और उपाय जानते हैं । ज्ञानी लोग नाशरहित मोक्ष,उपाय और उपेय जानते हैं ।'

ऐसा कहा है । 'अपने को सहेगा इतना ही कहने से अपने से व्यति-रिक्त को न सहना अर्थात् सिद्ध होता है । यह सिद्धोपाय और किसी सहाय को न सहता है । इस लिये ही 'आनुकूल्यसंकल्पादि उपायांग न हो धान्यकूटने से पसीने के तरह स्वभावसिद्ध होते हैं ।' ऐसा इस अर्थ को परंदपडि रहस्य में श्री लोकाचार्यस्वामी ही कहे हैं ।

उपायांतर दोनों को सहेगा माने— सिद्धोपाय से व्यतिरिक्त साध्योपाय स्वपारतंत्र्य ज्ञान रहित स्वयत्नपर लोगों को मोक्षसाधनतया शास्त्र में कहे जाने से

प्रवृत्तिरूपांगसापेक्षत्वात् स्वव्यतिरिक्तानपि सहत इत्यर्थः ।

'भक्त्यालभ्यस्त्वनन्यया।'

'उभयपरिकर्मितस्वांतस्यैकांतिकात्यंतिकभक्तियोगैकलभ्यः ।'

'जन्मांतरसहस्रेषु तपोध्यानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥'

इत्युक्तं हि ।

इयमुभयमपि न सहत इति–सिद्धोपायवरणरूपा निवृत्तिसाध्या अधिकारिविशेषणभूता स्वरूपानतिरेकेयं प्रपत्तिरुभयासहेत्यर्थः । अतः सिद्धोपायव्यावृत्तवेषाया अस्याः प्रपत्तेरुपायत्वमसंभावितमित्यर्थः ।

(१) यद्वा तर्हि सांगतया शास्त्रविहिताया अस्याः प्रपत्तेः स्वरूपं किमस्या अंगं किमित्यपेक्षायां तदुभयमपि क्रमेण दर्शयति-

---

अपने में उपायत्वबुद्धि को सहेगा, और आप सिद्ध होनेके लिये प्रवृत्तिरूप अंग की अपेक्षा करनेसे स्वव्यतिरिक्तों को भी सहेगा ।

'अनन्य भक्ति से प्राप्त होने योग्य हैं'

'ज्ञान और कर्मों से जिन का मन निर्मल हुआ है उन की अनन्य भक्ति से सर्वेश्वर प्राप्त होते हैं ।'

'हजारों जन्मों में कर्म और ज्ञानयोगों से जिनके पाप दूर हुए हैं उन को कृष्ण में भक्ति होती है ।' ऐसा कहा है ।

दोनों को न सहेगी माने– सिद्धोपाय स्वीकाररूप निवृत्तिसाध्य अधिकारि विशेषण और स्वरूप से अभिन्न यह प्रपत्ति दोनों को न सहेगी । अर्थात् चेतनों की प्रवृत्ति और अपने में उपायत्वबुद्धि ये दोनों को न सहेगी । इस कारण सिद्ध और साध्य उपायों से भिन्न यह प्रपत्ति उपाय न हो सकती है ।

(१) इस की भाषाटीका इसलिये नहीं की कि, ये केवल पूर्वोक्त का ही विकल्प है, अर्थ में फरक नहीं ।

फलस्यात्मज्ञानमप्रतिषेधश्चैवापेक्षितः ॥ ६४ ॥

---

अस्या इत्यादि वाक्यद्वयेन। तर्हि स्वं सहमानः क इत्यपेक्षायामाह– उपाय इत्यादि। स्वं स्वव्यतिरिक्तं च सहमानं किमित्यपेक्षायामाह–– उपायांतरमित्यादि। एतत्सिद्धसाध्योपायाभ्यां प्रपत्तेर्विद्यमानां व्यावृत्तिं दर्शयन्नुक्तार्थं निगमयति– इयमुभयमपीत्यादि। एवं संगतिः स्यात्। अथवा एतस्या अनुपायत्वं साधयितुमस्याः स्वरूपांगे स्वयमेवाह— अस्या इत्यादिवाक्यद्वयेन। एतदनुपायत्वं स्पष्टयितुं सिद्धसाध्योपायप्रकारौ प्रदर्शनीयावित्यभिप्रेत्य प्रथमं सिद्धोपायप्रकारमाह— उपाय इत्यादि। अनंतरं साध्योपायप्रकारमाह—उपायांतरमित्यादिना। एतद्द्वाभ्यां प्रपत्तेर्विद्यमानां व्यावृत्तिमाह — इयमुभयमपीत्यादिना। एवं संगतिः स्यात्। एतदुभयसंगत्योरपि वाक्यानामर्थः पूर्ववत्।

एवं प्रपत्तेरनुपायत्वे फलसिद्धेरेतस्मिन्नपि किंचिन्नापेक्षितं किमित्यत आह—फलस्येत्यादि।

---

रक्षणाप्रतिषेधस्य स्वात्मज्ञानस्य चानयोः।
फलप्राप्तावपेक्षास्ति सिद्धोपायप्रभावतः ॥ ६४ ॥

इस प्रकार यह प्रपत्ति उपाय न हो ते, फलसिद्धि के लिये इस चेतन के पास भी कुछ होना आवश्यक नहीं है क्या ? इस आकांक्षा में कहते हैं– फल के लिये इत्यादि।

फल के लिये आत्मज्ञान और अप्रतिषेध ही अपेक्षित हैं ॥ ६४॥

अन्यथा बंधस्य पूर्तेश्च न्यूनता स्यात् ॥ ६५ ॥

---

फलस्येति--फलसिद्धेरित्यर्थः । आत्मज्ञानं स्वस्वरूपज्ञानं; तच्च तदेकशेषत्वतदेकरक्ष्यत्वयोर्ज्ञानम् । अप्रतिषेधो नाम--निरुपाधिकरक्षकेन तेन क्रियमाणस्य रक्षणस्य प्रतिषेधाभावः । स च स्वरक्षणे स्वान्वयनिवृत्तिः । अवधारणेनैतद्द्वयव्यतिरेकेण न किंचिदपेक्षितमित्यर्थः । चरमपदोक्तस्य फलस्य प्रथमपदोक्तमात्मज्ञानं मध्यमपदोक्तोऽप्रतिषेधश्च खल्वपेक्षितौ ।

एवं विना फलसाधनतयाऽनेनापि कानिचित्कर्तव्यानीत्युक्तौ को वा दोष इत्यत आह--अन्यथेत्यादि ।

अन्यथेति — एतावद्विना फलहेतुत्वेनानेन कानिचित्कर्तव्यानीत्युक्तावित्यर्थः । बंधस्य पूर्तेश्च न्यूनता नाम— अस्य

---

संबंधस्यान्यथा पूर्तेर्न्यूनता परिकीर्तिता ॥ ६५ ॥

फलके लिये — फलसिद्धि के लिये । आत्मज्ञान माने— स्वस्वरूपज्ञान, तदेकशेषत्व तदेकरक्ष्यत्व ज्ञान । अप्रतिषेध माने- निरुपाधिकरक्षक सर्वेश्वर रक्षा करनेपर न रोकना, अपने रक्षण में अपने संबंध को छोडना । ही कहनेसे इन दोनों के अतिरिक्त और किसी की अपेक्षा नहीं । चरमपद (आय) में कहे जानेवाले फल के लिये प्रथमपद (प्रणव) में कहे जानेवाले आत्मज्ञान और मध्यमपद (नमः) में कहे जानेवाले अप्रतिषेध भी अपेक्षित हैं ।

इस प्रकार न हो फल के लिये यह चेतन भी कुछ करना चाहिये ऐसा मानने पर क्या दोष ? इस शंका में कहते हैं — ऐसा न होतो इत्यादि ।

ऐसा न होतो संबंध और पूर्ति में दोष लगेगा ॥ ६५ ॥

ऐसा न होतो — फल के लिये चेतन भी कुछ करना चाहिये ऐसा समझनेपर । संबंध और पूर्ति में दोष लगना माने-- इस चेतन का रक्षण को अपना

आपदं दूरीकुर्म इति भ्रमित्वा
तद्वर्धनाद् व्यावृत्तिरेवापेक्षिता ॥६६॥

---

रक्षणं यथा तत्फलं स्यात् तथाविधस्य तस्य निरुपाधिकशेषत्वस्य, अस्य प्रवृत्तिष्वेकस्याप्यपेक्षाराहित्यरूपनिरपेक्षोपायत्वस्य चावश्यम् ।

तथाप्यनंतक्लेशभाजने संसारे निमज्जतो व्याकुलस्य स्वस्यापदि दृष्टायामापत्सखमीश्वरं स्वप्रपत्त्या वशीकृत्य तत्प्रसादेनायं न निवर्त्तनीयः किमित्यत आह— आपदमित्यादि ।

सर्वेश्वरचरणयोः प्रपत्तिं कृत्वा संसाररूपापदं दूरीकुर्म इति स्वकृतप्रपत्त्या स्वापदं दूरीकुर्म इति भ्रमित्वा तदेकपारतंत्र्य-

---

आपदं नाशयामीति भ्रमित्वा तस्य वर्धनात् ।
व्यावृत्तिरेव कार्यात्र तस्यापेक्षास्ति रक्षणे ॥६६ ॥

फलमानने के योग्य परमात्मा का निरुपाधिक शेषित्वरूप संबंध में, इस चेतन की प्रवृत्तियों में किसी को भी न अपेक्षा करनेवाले निरपेक्षोपायत्व में भी दोष लगना ।

तथापि अनंतक्लेशों के स्थान भूत संसारसागर में डूब व्याकुल होनेवाले यह चेतन अपनी आपदा को जानने पर आपत्सखा ईश्वर को स्वकर्तृकप्रपत्ति से वश कर उन के अनुग्रह से इस आपदा को हटाना आवश्यक नहीं है क्या? इस शंकामें कहते हैं- आपदा को इत्यादि से ।

आपदा को हटालेते हैं ऐसा भ्रांत हो उस को उत्पादन-
न करलेना ही अपेक्षित है ॥ ६६ ॥

सर्वेश्वर के चरणों में प्रपत्ति कर संसाररूप आपदा को हटालेते हैं ऐसा समझ अपने क्रियमाण प्रपत्ति से तदेकपारतंत्र्यरूप स्वरूप की हानि रूप आपदा को

रक्षणायापेक्षिता रक्ष्यत्वानुमतिरेव ॥ ६७ ॥

---

रूपस्वरूपहानिरूपापद्वर्द्धनाद् व्यावृत्तिरेव तन्निवृत्तयेऽस्यापेक्षितेत्यर्थः । एकामापदं परिहर्तुमुपक्रम्यैकापद्वर्द्धनं विनास्मिन्स्वयत्नान्निवृत्त ईश्वरः स्वयमेव रक्षतीति भावः । तादृत्यापत्सामान्याभिप्रायेणोक्तं नतु प्रकृतापदेत्र परामृश्यते ।

'तथापि रक्ष्यापेक्षां प्रतीक्षते' इति रक्षकः सर्वेश्वरो रक्ष्यभूतस्यास्य चेतनस्यापेक्षां प्रतीक्षत इत्युक्तत्वात् तेन क्रियमाणस्य रक्षणस्यैतदपेक्षाप्यावश्यकी खल्वित्यत आह—रक्षणायेत्यादि ।

निरुपाधिकरक्षकेण तेन क्रियमाणस्य रक्षणस्यैतच्चेतनविषयेऽपेक्षिता 'त्वं मम रक्ष्य इत्युक्तौ न भवामीत्यनुक्त्वा क्रिय-

---

रक्षणायेक्ष्यते तेन रक्ष्यत्वानुमतिः सदा ॥ ६७ ॥

उत्पादन न करलेनाही अपेक्षित है । एक आपदा को परिहार करने में प्रवृत्त हो और एक आपदा को न संपादन कर यह चेतन स्वयत्न से निवृत्त होनेपर सर्वेश्वर आप ही रक्षा करेंगे इति तात्पर्य है ।

तथापि 'रक्ष्यभूत चेतन की अपेक्षा को प्रतीक्षा करते हैं' ऐसा रक्षकभूत सर्वेश्वर रक्ष्यभूत इस चेतन की अपेक्षा को प्रतीक्षा करते हैं कहनेसे सर्वेश्वर कर्तृक रक्षा के लिये इस चेतन की अपेक्षा भी अपेक्षित है, ऐसी शंका में कहते हैं— रक्षण के इत्यादि ।

रक्षण के लिये अपेक्षित 'रक्ष्य हूं' ऐसा अनुमति ही है ॥ ६७ ॥

निरुपाधिक रक्षक सर्वेश्वरकर्तृक रक्षण के लिये इस चेतन में अपेक्षित 'तुम हमारे रक्ष्य हो' ऐसा कहने पर 'नहीं हूं' ऐसा न कह अपना रक्ष्यत्व

सर्वेषामुपायानां साधारणत्वाच्चैतन्य-
कार्यत्वात्प्राप्तिदशायां चानुवर्तमानत्वा-
त्स्वरूपातिरेकित्वाभावाच्चाचिद्व्यावृ-
त्तवेषः साधनीकर्तुं न शक्यते॥ ६८ ॥

---

माणा स्वरक्षकत्वानुमतिरेवेत्यर्थः । रक्ष्यापेक्षामित्यत्रोक्तापेक्षा रक्ष्यत्वानुमतिद्योतिकेति भावः । 'याच्ञा प्रपत्तिः' 'प्रार्थना-मतिः' इति स्वीकरोऽप्रतिषेधद्योतक इति स्वयमेवावोचत् ।

एवमनुमतिसापेक्षो रक्षति चेदियमनुमतिः साधनं न भवति किमत आह—सर्वेषामित्यादि ।

सर्वेषामुपायानां साधारणत्वं नाम—भोगमोक्षोपायेषु क-

---

सर्वोपायसमानत्वाच्चैतन्यप्रभवात्तथा ।
स्वस्वरूपाविनाभावात्प्राप्तदेशानुवर्तनात् ।
अचिव्द्यावृत्तवेषोयं साधनत्वे न संमतः॥ ६८॥

को अंगीकार करना ही अपेक्षित है । 'रक्ष्यभूत चेतन की अपेक्षा को प्रतीक्षा करते हैं' इस वाक्य में अपेक्षा का अर्थ रक्ष्यत्वानुमति ही है । 'याचना प्रपत्ति है' 'प्रार्थना की बुद्धि' इस वचनानुसार उपायस्वीकार को अप्रतिषेधद्योतक ऐसा यही लोकाचार्यस्वामी जी कहे हैं ।

इस प्रकार अनुमति को अपेक्षा कर रक्षा करेंगे तो यह अनुमति कैसा साधन न होगा ? इस शंका में कहते हैं— सब इत्यादि से ।

सब उपायोंके साधारण होने से, चैतन्यकार्य होने से,
प्राप्तिदशा में भी अनुवर्तमान होनेसे, स्वरूपातिरेकी न होनेसे,
अचिद्व्यावृत्ति वेष को साधन नहीं कर सकते ॥ ६८॥

भोगमोक्षोपायों में किसी एक उपायानुष्ठान के योग्य चेतन से 'तुम इ]

स्मिंश्चिद्धिकर्तुः त्वमिममुपायमनुतिष्ठेत्युक्तौ तथा करोमीत्यनुमतिपूर्वकं तत्रावगाहनस्यावश्यकत्वात् सकलोपायसाधारण्यम्। अनेन कुत्राप्यस्या अनुमतेरधिकारिविशेषणत्वं विना फलसाधनत्वं नास्तीति दर्शितम्।

चैतन्यकार्यत्वं नाम—रक्ष्यत्वस्य चेतनाचेतनसाधारणत्वेऽपि ज्ञानशून्यत्वादमुमाकारं ज्ञातुमयोग्यादचेतनाद्विलक्षणे ज्ञानाश्रयत्वात्तं ज्ञातुं योग्य एतच्चेतने विद्यमानाया अनुमतेः ज्ञानकार्यत्वेनागतत्वम्। अनेनेयमनुमतिश्चेतनवैलक्षण्यप्रयुक्तत्वात्साधनकोटौ नान्वेतीत्युक्तम्।

प्राप्तिदशायां चानुवर्तमानत्वं नाम—उपायदशामात्रं विनोपेयदशायां च चेतनव्यामोहानुगुणं क्रियमाणविनियोगविशेषेषु यथेच्छं स्वीकुर्वित्यनुमतेरस्मिन्वर्तमानत्वम्। अनेन साधनं चेत्फलसिद्धौ निवृत्ता स्यादिति भावो व्यंजितः।

---

उपाय को अनुष्ठान करो' ऐसा कहने पर 'वैसा ही करूंगा' ऐसा अनुमति पूर्वक उस में प्रवृत्त होना आवश्यक होनेसे सब उपायों के साधारण होना। इस से किसी स्थान में भी इस अनुमति का अधिकारिविशेषणत्व विना फलसाधनत्व न होना दिखाया गया।

चैतन्यकार्य होना माने— रक्ष्यत्व चेतनाचेतनसाधारण होनेपर भी ज्ञान शून्य होनेसे उस आकार को जानने की योग्यता रहित अचेतन के तरह न हो ज्ञानाश्रय होनेसे उस रक्ष्यत्व आकार को जानने के योग्य इस चेतन की अनुमति इस का ज्ञान कार्य होना। इस से यह अनुमति चेतन के स्वभाव से हुई है, अत एव साधनकोटि में न गिनी जायगी।

प्राप्तिदशा में अनुवर्तमान होना माने— उपायदशा में मात्र न हो उपेयदशा में भी सर्वेश्वर के व्यामोहानुगुण क्रियमाण विनियोगविशेषों में आप की इच्छा के अनुसार दास को विनियोग करलीजिये ऐसा अनुमति इस चेतन में वर्तमान

स्वरूपातिरेकित्वाभावो नाम—शेषिणा क्रियमाणस्यानुमतिं कृत्वा स्थितेः शेषत्वपारतंत्र्यकार्यादस्यानुमतेः स्वरूपाद्बाह्यत्वं विना स्वरूपानुरूपत्वम्। अनेन साधनं चेत्स्वरूपातिरेकिणी स्यादिति भावः।

अचिद्व्यावृत्तवेषो नाम—ज्ञातृत्वेन ज्ञानशून्यादचितो व्यावृत्तस्यात्मन आकारः। अत्रायमाकारः—ज्ञानकार्यानुमतिः। इयं साधनीकर्तुं न शक्यत इति—एवमस्या असाधनत्वहेतूनां सत्त्वादियं साधनत्वेन कल्पितुं न शक्यत इत्यर्थः। अचिद्व्यावृत्तिवेष इति पाठश्चेत् ज्ञानशून्यादचित आत्मनो विद्यमानाया ज्ञातृत्वरूपव्यावृत्तेर्वेषभूतानुमतिरिति शब्दार्थः।

तर्ह्येतदचिद्व्यावृत्तेः किंचित्प्रयोजनं नापेक्षितं किमित्यत आह—अचिद्व्यावृत्तेरित्यादि ।

---

होना।

स्वरूपातिरेकी न होना माने—शेषिकर्तृक व्यापारों में सहायभूत होना शेषत्वपारतंत्र्य का कार्य होनेसे यह अनुमति स्वरूप से अलग न हो स्वरूप ही होना। इस से साधन हो तो स्वरूपातिरेकी होना चाहिये ऐसा तात्पर्य है।

अचिद्व्यावृत्तवेष माने—ज्ञातृत्व द्वारा ज्ञानशून्य अचित् से भिन्न आत्मा का आकार। यहां वह आकार माने—ज्ञान का कार्य अनुमति ही है। इस को साधन नहीं करसकते माने—इस प्रकार यह साधन नहीं ऐसा सिद्ध करनेवाले हेतु बहुत होनेसे इस अनुमति को साधनतया कल्पना नहीं कर सकते।

ऐसा हो तो अचित् से विलक्षण होने का प्रयोजन क्या है ? इस आकांक्षा में कहते हैं— अचित् से विलक्षण होनेका इत्यादि।

अचिद्व्यावृत्तेः प्रयोजनमुपाय उप-
कारस्मृतिरुपेये प्रीतिश्च । ॥६९॥

---

उपाय उपकारस्मृतिर्नाम– 'मम दुष्टं मनो निवर्तितवान्' 'अनन्यप्रयोजनमाश्रयितुं मनो दत्तवान्' इत्युक्तप्रकारेण सिद्धोपायभूतेन भगवता स्वविषये कृतानामुपकाराणामनुसंधानम् । उपेये प्रीतिर्नाम—तच्चरणयोः स्वेन क्रियमाणेषु कैंकर्येषु 'प्रीत्या कैंकर्यं कृत्वा, इत्युक्ता प्रीतिः, तया तस्य जायमानां प्रीतिं दृष्ट्वा स्वस्य जायमाना प्रीतिश्च ।

एवमेतास्मिन्विद्यमानमेकमप्युपायो न भवति चेदस्य तत्प्राप्त्युपायः को वेत्यत आह—त्वन्मनसेत्यादि ।

---

उपाये चोपकारस्य स्मृतिः प्रीतिश्च साध्यके ।
अचिद्व्यावृत्तवेषस्य प्रयोजनप्रकाशिका ॥ ६९ ॥

अचित् से विलक्षण होनेका प्रयोजन– उपाय में
उपकारस्मृति और उपेय में प्रीति ये दोनों हैं ॥ ६९ ॥

उपाय में उपकारस्मृति माने– 'हमारे दुष्टमन को नाश किये हो' 'आदर पूर्वक सेवा करनेवाले मन को दिये हो' इस प्रकार सिद्धोपायभूत सर्वेश्वर के अपने विषय में किये हुए उपकारों को अनुसंधान करना । उपेय में प्रीति माने– उन के चरणों में स्वक्रियमाण कैंकर्यों में 'संतोषपूर्वक कैंकर्य कर' ऐसा प्रीति और तद्द्वारा सर्वेश्वर को होनेवाली प्रीति को देख अपने में होनेवाली प्रीति ।

इस प्रकार इस चेतनगत एक भी उपाय न होनेपर इस को उन की प्राप्ति में उपाय क्या ? इस शंका में कहते हैं— तुम्हारे मन से इत्यादि ।

'त्वन्मनसा किमैच्छः' इत्युक्तप्रकारे-
ण प्राप्तेरुपायस्तदिच्छा ॥७० ॥
सा च सदा वर्तते ॥ ७१ ॥

---

अस्मिन्विद्यमानस्यैकस्यापि फलोपायत्वाभावात् 'त्वन्मनसा किमैच्छः' इति हस्तप्रच्युतस्यापि किंचिन्निर्वहणप्रकारं पश्यतस्तव हृदयेनैषितं किमिति हितैषिणस्तस्येच्छैवोपाय इति दिव्यसूरिणानुसंहितप्रकारेण तत्प्राप्तेरुपायः सर्वज्ञस्य सर्वशक्तेः प्राप्तस्य परमदयालोः सतस्तस्यैतच्चेतनोज्जीवनार्थेच्छैवेत्यर्थः ।

सा चेच्छा तस्य कदा जायते इत्यत आह— सा चेत्यादि ।

---

त्वं मनसा किमैच्छश्चेत्युक्तश्रीसूक्तिरूपतः ।
तदिच्छा प्राप्त्युपायोस्ति निष्प्रत्यूहः सदा शुचिः ॥७० ॥
सा वर्तते सदा चात्र तेन न फलदा मता ॥७१ ॥

'तुम्हारे मन से क्या विचार किये हो' इत्युक्तप्रकार
प्राप्ति का उपाय उन की इच्छा है ॥ ७० ॥

इस चेतनगत एक भी फल का उपाय न होनेसे, 'तुम्हारे मन से क्या विचार किये हो' ऐसा हाथ से छूटे हुए वस्तुओं को रक्षाकरने में तत्पर 'आप के मन से क्या विचार किये हो' ऐसा हित चाहनेवाले उन की इच्छा ही उपाय है समझ जैसे सूरी अनुसंधान किये हैं तैसे उन की प्राप्ति का उपाय सर्वज्ञ सर्वशक्ति प्राप्त और परमदयालु सर्वेश्वर की चेतनोज्जीवन के लिये क्रियमाण इच्छा ही है– ऐसा तात्पर्य समझना ।

वह इच्छा उन को कब होती है इस शंका में कहते हैं– वह सदा रहती है इत्यादि से ।

वह सदा रहती है ॥ ७१ ॥

**सा फलति–अस्य चिंता निवृत्ता चेत् ॥ ७२ ॥**
**अंतिमकालस्य शरणं तदानीं शरणं कि-**
**मिति चिंतानिवृत्तिरिति यतिरवोचत् ॥ ७३ ॥**

---

सदेति–अस्य किंचिदवलंब्य व्यावृत्तिकालेऽय चाविशेषेण सर्वकालेष्वपीत्यर्थः ।

तर्ह्येतत्कालपर्यंतं कुतो न फलितेत्यत आह–सा फलतीत्यादि ।

तस्येच्छास्य कार्यकारिणी भवति अस्य स्वरक्षणचिंतानिवृत्तिकाले इत्यर्थः ।

एतदर्थस्याप्त्यर्थं वेदांतिवार्तामाह–अंतिमकालस्येत्यादिना

---

**अस्य चिंता निवृता चेत्तदा फलति निस्पृहा ॥ ७२ ॥**
**शरणमंतकालस्य तदानीं शरणं किमु ।**
**इति चिंतानिवृत्तिर्हि यतिनेत्थं प्रसादितम् ॥ ७३ ॥**

सदा माने— यह चेतन किसी एक व्रत को अवलंबन कर परमात्मा से अलग हो संचार करने का काल और समाश्रयण रुचि होने का काल सर्वकाल में भी रहती है ।

तब यह इच्छा आज तक क्यों फलीभूत नहीं ? इस आकांक्षा में कहते हैं– वह इच्छा फलीभूत होती है इत्यादि ।

वह इच्छा फलीभूत होती है– इसकी इच्छा निवृत्त होनेपर ॥ ७२ ॥

उन की इच्छा इस का कार्य करती है इस की स्वरक्षणचिंता हटने पर ।

इस अर्थ में विश्वास होने के लिये वेदांती के वचन को कहते हैं– अंतिम काल का इत्यादि से ।

'अंतिमकाल का रक्षक— अब रक्षक कौन ऐसी
चिंता न करना ही' ऐसा वेदांती कहे हैं ॥ ७३ ॥

**प्राप्ता च प्रापकश्च प्राप्तेः प्रसन्नश्च स एव ॥७४॥**

---

वेदांतियतौ स्वचरणाश्रितस्य कस्य चिच्छ्रीवैष्णवस्य रुजं ज्ञातुं गत्वा स्थिते सति तदा तस्मिन् श्रीवैष्णवे 'दासस्यांतिमकालस्य शरणभूतं किंचन वक्तव्य'मिति वदति 'अंतिमकालस्य शरणं ममेदानीं शरणं किमिति चिंतानिवृत्तिर्ही'ति तदुक्ता वार्ता । तस्मादीश्वरेणैतदात्मोज्जीवननिदानतया क्रियमाणचिंता फलति—अस्य स्वरक्षणचिंता निवृत्ता चेदित्युक्तम् ।

प्रापक ईश्वरश्चेदपि प्राप्ता प्राप्तेः प्रसन्नश्चायं खलु, तथासति अस्य चिंता कथं दूरीक्रियते? अत आह– प्राप्ताचेत्यादि ।

अथवास्मिन् चेतने विद्यमानमुपायत्वगंधं वारयित्वेश्वर

---

**प्राप्ता च प्रापकश्चैव प्राप्तिप्रीतिफलश्च सः ॥७४॥**

वेदांती अपने आश्रित एक श्रीवैष्णव व्याधिग्रस्त होनेपर उस को देखने के लिये गये थे, तब वह श्रीवैष्णव–'दास को अंतिमकाल में रक्षकभूत एक उपाय को बताईये' ऐसा पूंछने पर 'अंतिमकाल में रक्षक–हम को अब रक्षक कौन है ? ऐसा स्वरक्षणचिंता का न होना ही' इस वार्ता को स्मरण करना । अर्थात् चेतनकर्तृकाचिंता नष्ट होनेपर ही ईश्वर की इच्छा सफल होती है—इति तात्पर्य ।

प्रापक ईश्वर हो तौ भी प्राप्त होनेवाला और प्राप्ति से संतुष्ट होनेवाला यह चेतन ही है, तब इन चेतन की चिंता को प्रत्यक्ष हटाना उचित है क्या ? इस शंका में कहते हैं—प्राप्ता इत्यादि ।

प्राप्ता, प्रापक और प्राप्ति से संतुष्ट होनेवाला भी वही है ॥ ७४ ॥

जब इस चेतन स्वकर्तृक उपाय को छोड ईश्वर ही उपाय है ऐसा निश्चय

एवोपाय इति निष्कर्षे कृते प्राप्तृत्वं प्राप्तिप्रयुक्तप्रीतिश्चास्य न भवति किंतूपायभूतेश्वरस्यैवेति फलितत्वात् प्राप्ता च प्रापकश्च प्राप्तेः प्रसन्नश्च स एवेति निगमयति— प्राप्ता चेत्यादिना। प्राप्ता स इति— ।

'स्वत्वमात्मनि संजातं स्वामित्वं ब्रह्मणि स्थितम् ।'

इत्युक्तस्वतःसिद्धस्वस्वामिसंबंधहेतुना स्वप्राप्तृस्वामिवत् एत-दात्मप्राप्ता स्वयमेवेत्यर्थः। प्रापकः स एवेति— स्वस्यैतत्प्राप्तौ प्रापयितोपायश्च सर्वज्ञत्वसर्वशक्तित्वसत्यसंकल्पत्वादिगुणवि-शिष्टः निरंकुशस्वतंत्रः स्वयमेवेत्यर्थः। प्राप्तेः प्रसन्नश्च स एवेति— यथा स्वलाभे तद्भोक्ता स्वामी हृष्टो भवति तथैतत्प्रा-प्तौ लाभो जात इति प्रीतिविशिष्टश्च तदात्मनो नित्यभोक्ता स्वयमेवेत्यर्थः। एतत्त्रयं च स एवेत्यवधारणेनैतेष्वेतदन्वयएक-मपि नास्तीत्युक्तम्।

---

किया है तब प्राप्त होना, प्राप्त होनेपर संतुष्टहोना ये दोनों चेतन का नहीं, उपा-यभूत ईश्वर का ही होते हैं। इस कारण 'प्राप्त होनेवाला, प्रापक और प्राप्ति से संतुष्ट होनेवाला भी वही है' ऐसा समाप्त करते हैं।

प्राप्ता ईश्वर होना माने—

'आत्मा चीज है मालिक ब्रह्म है' ऐसा स्वतः सिद्ध स्वस्वामित्व संबंध द्वारा चीज को प्राप्त होनेवाले मालिक के तरह इस आत्मा को प्राप्त होनेवाले आप ही हैं। प्रापक वह है—आप इस चेतन को प्राप्त होनेके समय प्राप्ति का उपाय—सर्वज्ञत्व, सर्वशक्तित्व, सत्यसंकल्पत्वादि गुणविशिष्ट और निरंकुशस्वतंत्र आप ही हैं। प्राप्ति से संतुष्ट होनेवाले भी वही है माने—चीज का लाभ से तद्भोक्ता स्वामी यथा हृष्ट होता है तथा इस चेतन की प्राप्ति के लिये मैं भाग्यवान् हुवा हूं ऐसा हृष्ट होनेवाले आप ही है। ये तीनों वही है ऐसा कहनेसे इन तीनों में एक भी चेतन के साथ संबंध न रखता है ऐसा जानना। 'प्राप्त होनेवाले

स्वयत्ननिवृत्तिः पारतंत्र्यफलं,
स्वप्रयोजननिवृत्तिः शेषत्वफलम् ॥७५॥

---

अत्र प्राप्ता च प्रापकश्च स एवेत्युक्तत्वादस्य स्वयत्नेऽन्वयो नास्तीति, प्राप्तेः प्रसन्नश्च स एवेत्युक्तत्वात्स्वप्रयोजनेन्वयो नास्तीति च सिद्धम्

तर्हि ज्ञातृत्वकार्यभूतकर्तृत्वभोक्तृत्वविशिष्टत्वेन स्वयत्नस्वप्रयोजनार्हतायां सत्यां अनयोरुभयोरपि निवृत्तिरस्य कथमागतेति शंकायामाह– स्वयत्नेत्यादिवाक्यद्वयेन ।

ज्ञातृत्वनिबंधनकर्तृत्वे सत्यपि भगवत्प्राप्तिं प्रति स्वयं यत्नाकरणरूपेयं स्वयत्ननिवृत्तिः पराधीनस्वरूपस्थित्यादिमत्वरू-

---

पारतंत्र्यफलं तत्स्याद् यत्स्वयत्ननिवर्तनम् ।
शेषत्वफलमप्याहुः स्वप्रयोजनवर्जनम् ॥ ७५ ॥

और प्रापक ये दोनों वही है कहनेसे इस चेतन का स्वयत्न में संबंध नहीं है, 'प्राप्ति से संतुष्ट होनेवाले वही' कहनेसे इस चेतन का स्वप्रयोजन में संबंध नहीं है ये दोनों सिद्ध होते हैं ।

तब यह चेतन ज्ञातृत्वकार्यभूत कर्तृत्व–भोक्तुत्ववाले होनेसे स्वयत्न स्वप्रयोजनों के योग्य होते हुए इन दोनों की निवृत्ति इस चेतन में कैसी होती है ? इस शंका में कहते हैं–स्वयत्न इत्यादि दो वाक्यों में ।

स्वयत्ननिवृत्ति पारतंत्र्यफल है, स्वप्रयोजननिवृत्ति शेषत्वफल है ॥ ७५ ॥

ज्ञातृत्व के कारण कर्तृत्व होतेहुए भी भगवत्प्राप्ति के लिये आप अपने यत्न को छोड रहना–अपने स्वरूप और स्थिति परमात्मा के अधीन हैं ऐसा इस पारतंत्र्यज्ञानका कार्य है । तैसा ही भोक्तृत्व होतेहुए भी उन को आनंदित करना

परप्रयोजनप्रवृत्तिः प्रयत्नफलं,
तद्विषयप्रीतिश्चैतन्यफलम् ॥७६॥

---

षपारतंत्र्यकार्यम्। एवं भोक्तृत्वे सत्यपि तद्रसयितृत्वमंतरेण स्वस्य कुत्रापि रसाभावरूपा स्वप्रयोजननिवृत्तिः परातिशया-धायकत्वैकस्वरूपशेषत्वकार्यमित्यर्थः। अनेन पारतंत्र्यशेषत्वयो रप्यात्मनः स्वरूपत्वादेतदाकारयोर्ज्ञातयोरेतद्द्वयमपि स्वयमेव भवतीत्युक्तम्।

तर्ह्येवं स्वयत्नस्वप्रयोजनयोरन्वयाभावेऽस्य प्रयत्नस्य चैतन्य-स्य च किं प्रयोजनमित्यत आह—परप्रयोजनेत्यादिवाक्यद्वयेन।

सा च 'अहं सर्वं करिष्यामि' 'च्युतिरहितं कैंकर्यं कर्तव्यम्'

---

प्रयत्नस्य फलं तत्स्याद् यत्परार्थप्रवर्तनम्।
तद्विषयानुरागश्च चैतन्यफलमुच्यते ॥७६॥

छोड अपने आनंदित न होना रूप स्वप्रयोजननिवृत्ति परमात्मा का अतिशय को बढाना ही अपना स्वरूप ऐसा इस शेषत्वज्ञान का कार्य है। इस से पार-तंत्र्य और शेषत्व ये दोनों आत्मा का स्वरूप होनेसे इन आकारों को जान-नेपर ये दोनों (स्वयत्ननिवृत्ति और स्वप्रयोजननिवृत्ति) स्वयमेव होते हैं।

तथासति—इस प्रकार स्वयत्नस्वप्रयोजनों में संबंध न हो तो इस चेतन का प्रयत्न और चैतन्य के प्रयोजन क्या? इस शंका में कहते हैं—परप्रयोजन इत्यादि दो वाक्यों से।

परप्रयोजन प्रवृत्ति प्रयत्न का फल है, परमात्मा
के विषय में प्रीति चैतन्य का फल है ॥७६॥

'मैं सब करूंगा' 'विच्छेदरहित कैंकर्य करना' आप ही को हम

'तवैव वयं कैंकर्यं कुर्मः' इत्युक्तप्रकारेण परस्य प्रयोजनतया क्रियमाणकैंकर्यरूपप्रवृत्तिरस्य प्रवृत्त्युद्योगरूपप्रयत्नस्य प्रयोजनम्। 'नित्यकिंकरः प्रहर्षयिष्यामि' इत्युक्तप्रकारेण तत्प्रीत्यर्थं स्वेन क्रियमाणकैंकर्येणात्यंतहृष्टस्य परस्य विषये जायमाना प्रीतिरस्याचिद्व्यावृत्तिरूपचैतन्यस्य प्रयोजनमित्यर्थः। 'सोपानीभूय त्वत्प्रवालाधरं पश्यानि' इत्युक्तंहि। अनेन पारतंत्र्यशेषत्वाभ्यां फलितस्वयत्नस्वप्रयोजननिवृत्तिविशिष्टस्य चेतनस्य प्रयत्नचैतन्ययोः पारतंत्र्यशेषत्वानुगुणे प्रयोजने उक्ते।

शेषत्वादेर्ज्ञातृत्वादेश्च आत्मधर्मत्वेऽविशिष्टे शेषत्वादिकं प्रधानीकृत्य ज्ञातृत्वादिकं तदानुगुण्येन योजयितुं किं नियामकं? वैपरीत्ये को दोषः? इत्यत आह—अहमर्थस्येत्यादि।

---

कैंकर्य करेंगे' इन वचमानुसार परमात्मा का प्रयोजन मान कीजानेवाली कैंकर्य रूप प्रवृत्ति--इस का प्रयत्न का फल है। 'नित्यकिंकर हो हृष्ट करूंगा' इत्युक्त प्रकार परमात्मा के हर्ष के लिये चेतनकर्तृक कैंकर्य से अत्यंत हृष्ट परमात्मा के विषय में प्रीति--इस चेतन का अचिद्भिन्नत्व रूप चैतन्य का प्रयोजन है। 'सीढी हो आप के प्रवालाधर को देखूंगा' ऐसा कहे हैं। इस से पारतंत्र्य-शेषत्वों से फलित स्वयत्न—स्वप्रयोजननिवृत्तिवाले चेतन के प्रयत्न चैतन्यों को पारतंत्र्यशेषत्वानुगुण प्रयोजन कहे गये हैं।

शेषत्वादि और ज्ञातृत्वादि आत्मा के धर्म होनेपर शेषत्वादि को प्रधान मान ज्ञातृत्वादि को उस के अनुगुण योजना करने का हेतु क्या? इस शंका में कहते हैं—'अहमर्थ का इत्यादि।

अहमर्थस्य ज्ञानानंदौ तटस्थौ
दास्यं ह्यंतरंगनिरूपकम् ॥ ७७ ॥

---

अहमर्थो नाम – प्रत्यक्त्वेन अहंबुद्धिव्यवहारार्हमात्मवस्तु। ज्ञानानंदौ नाम – तद्गते प्रकाशत्वानुकूलत्वे 'ज्ञानानंदमयस्त्वात्मा'
स्वरूपमणुमात्रं स्यात् ज्ञानानंदैकलक्षणम्'
इत्येताभ्यां हि वस्तु निरूप्यते। तटस्थाविति – बहिरंगनिरूपकतया बहिर्दल इत्यर्थः। दास्यं नाम – शेषत्वं। अस्यांतरंगनिरूपकत्वं नाम – भगवत्स्वरूपस्य प्रकारतया शेषत्वेनैव स्वसत्ताकत्वाद्वस्तुनः प्रथमं शेषत्वेन निरूप्यैवान्यैराकारैर्निरूपणीयवस्तुसत्ताकत्वम्। अनेन निरूपकत्वं नाम – वस्तुनो वस्त्वंतराद् व्यावर्तकत्वम्। अतो दास्यमीश्वरव्यावर्तकं, ज्ञानानंदा-

---

ज्ञानानंदौ तटस्थौ चाहमर्थस्यांतरंगकम् ॥ ७९ ॥

अहमर्थ का ज्ञानानंदादि यथा तटस्थ कहेजाय
तथा दास्य ही अंतरंगनिरुपक है ॥ ७७ ॥

अहमर्थमाने – प्रत्यक्तत्व होनेसे 'अहं' ऐसा जानने और व्यवहारकरने योग्य आत्मवस्तु। 'ज्ञानानंदमय आत्मा है'।

'ज्ञानानंदलक्षण स्वरूप अणुमात्र है'।

ऐसा ज्ञानानंदोंसे ही आत्मवस्तु को निरूपण करते हैं। यथा तटस्थ कहेजांय माने – बहिरंगनिरूपक समझ बाह्याकार कहेजाँय। दास्य माने – शेषत्व, यह अंतरंगनिरूपक माने – भगवत्स्वरूप का विशेषणतया शेषभूत होकर ही सत्तावाले होनेसे पहिले शेषत्व को लेकर निरूपण कर अनंतर अन्य आकारों से निरूपण करने योग्य होना। इस से निरुपक माने–एक वस्तु को अन्य वस्तु से अलग करनेवाला है। दास्य–ईश्वर से अलग करता है। ज्ञानानंद– अचित् से अलग करता

चिद्व्यावर्तकौ । एवं निरूपकद्वयस्य च वस्तुनोऽपेक्षितत्वेऽपि भगवत्प्रकारतया लब्धसत्ताकस्य वस्तुनोऽचितो विद्यमानविशेषज्ञापकत्वमात्रविशिष्टौ ज्ञानानंदौ यथा बहिर्दले स्यातां तथा प्रकारत्वप्रयुक्तं शेषत्वमेवांतरंगनिरूपकमित्युक्तम् । हीत्यस्मिन्नर्थे प्रामाण्यप्रसिद्धिः ।

प्रथमं शेषत्वेन वस्तु निरूप्य पश्चाद् ज्ञानानंदलक्षणं ज्ञानगुणकमचिद्व्यावृत्तं चेति तृतीयपदेन निरूपयत्प्रणवः, समस्तवस्तूनां सर्वेश्वरप्रकारत्वं प्रतिपादयन्नारायणपदादीनि चात्र प्रमाणम् ।

'दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः ।
नान्यथा लक्षणं तेषां बंधे मोक्षे तथैव च ॥'

इत्यादीनि संतिहि । 'दासे स्थितः' इत्यवदन् परांकुशाः । श्रीगो-

---

है । इस प्रकार ये दोनों निरूपकधर्म वस्तु के अपेक्षित होनेपर भगवत् प्रकारतया सत्ताविशिष्ट वस्तु को अचित् से अलग करनेवाले ज्ञानानंद यथा बाहरके दल हों तथा प्रकारत्व से आयाहुआ शेषत्व ही अंतरंगनिरूपक होता है । 'ही' इस से इस अर्थ में प्रमाण प्रसिद्ध है समझना ।

प्रथम शेषत्व को लेकर आत्मवस्तु को निरूपण कर अनंतर ज्ञानानंदलक्षण ज्ञानगुणक और अचित् से भिन्न है ऐसा कहना चाहिये । इस अर्थ को तीसरा पद (मकार) से निरूपण करनेवाला प्रणव, समस्तवस्तु सर्वेश्वर के प्रकार हैं इस अर्थ को निरूपण करनेवाला नारायण पद आदि इस में प्रमाण हैं ।

'सकल आत्मा परमात्मा के स्वतः सिद्ध दास हैं । उन आत्माओं को बद्धावस्था में और मोक्षावस्था में भी अन्य लक्षण नहीं है ।'

इत्यादि प्रमाण भी हैं । शठकोपसूरि 'दास के भीतर रहनेवाले' कहे हैं । श्रीगोष्ठीपूर्ण के चरणों में कूरेश छः महीने शुश्रूषा कर महानिधिरूप से

इदं चागंतुकं न भवति ॥७८॥

---

श्रीपूर्णश्रीपादयोः षण्मासान् कूरेशः सेवां कृत्वा महानिधित्वे-नामुमर्थमवाप । एवं शेषत्वस्यांतरंगनिरूपकत्वान्निरूपितस्वरूपविशेषणभूतज्ञातृत्वादीन्येतदनुगुणं योजनीयानीति भावः ।

अस्य स्वरूपनिरूपकत्वे आत्मसत्ताप्रभृति सत्तावश्यकी हि, एतत्पूर्वमभावेनेदानीं जातत्वाल्लोकेऽस्यौपाधिकत्वेन दर्शनाच्च दास्यमात्मनः आगंतुकं खलु इत्यत आह– इदं चेत्यादि ।

इदंचेति– प्रकृतं दास्यं परामृश्यते । तन्न भवतीत्युक्त्वा-स्वाभाविकमित्यर्थः ।

'स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि ।
आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर ॥'

---

दास्यं निरूपकं तच्चानागंतुकतयेष्यते ॥७८॥

प्राप्त हुए अर्थ यही है । अभिप्राय यह है कि– शेषत्व अंतरंगनिरूपक होनेसे शेषत्व से निरूपित आत्मस्वरूप के विशेषण ज्ञातृत्वादियों को शेषत्वानुसार योजना करना चाहिये ।

यह शेषत्व स्वरूपनिरूपक हो तो आत्मा जब से है तब से रहना चाहिये ऐसा न हो अब ही होनेसे, लौकिकजन इस को आगंतुक कहने से यह दास्य आत्मा को बीच में आया है इस शंका में कहते हैं-- यह आगंतुक नहीं इत्यादि से ।

यह आगंतुक नहीं है ॥७९॥

यह माने-- प्रकृत दास्य । आगंतूक नहीं माने– स्वभावसिद्ध है ।

'तुम को अपने उज्जीवन में इच्छा हो तो अपनी सत्ता में रुचि हो तो आत्मा का दास्य और हरि का स्वामित्व ये दोनों स्वभावसिद्ध समझो ।'

**स्वातंत्र्यमन्यशेषत्वं चांगतुके ॥७९॥**
**शेषत्वविरोधि स्वातंत्र्यं, तच्छेष-**
**त्वविरोधि तदितरशेषत्वम् ॥८०॥**

---

'लक्ष्मीव्यामोहशालिन्नहमपि तव प्राचीनदासः' इत्युक्तं हि ।

तर्ह्यागंतुकत्वेन विवक्षिते के इति शंकायामेतद्विरोधिनी-त्याह—स्वातंत्र्यमित्यादिना ।

स्वातंत्र्यं नाम— अहं ममार्हं इति स्थितिः । अन्यशेषत्वं नाम— भगवदन्यविषयेषु चापल्यम् । एते चांगतुके इत्युक्तं— अस्याविद्यादिहेतुकतयाऽऽगतत्वात् ।

एतद्विरोधित्वमुपपादयति— शेषत्वविरोधीत्यादिना ।

---

स्वातंत्र्यमन्यशेषत्वं चागंतुकतयेष्यते ॥७९॥
शेषत्वस्य विरोधिः स्यात् स्वातंत्र्यं चान्यशेषता ।
तच्छेषत्वविरोधिः स्यात्प्राप्योपायप्रबाधिका ॥८०॥

'हम भी आपका पुराना दास हैं' ऐसा भी कहा है ।

तब आगंतुक किस को कहते हैं ? इस शंका में, इस शेषत्व के विरोधियों को कहते हैं ऐसा प्रतिपादन करते हैं – स्वातंत्र्य इत्यादि से ।

स्वातंत्र्य और अन्यशेषत्व ये दोनों आगंतुक हैं ॥८०॥

स्वातंत्र्य माने—मैं अपने लिये हूं ऐसा रहना । अन्यशेषत्व माने—भगवदन्यविषयों में दास्य करना । ये दोनों आगंतुक हैं माने— इस चेतन के अविद्यादि कारण से आये हुए हैं ।

ये इस शेषत्व को विरोधि हैं इस को उपपादन करते हैं— शेषत्व का विरोधि इत्यादि से

शेषत्व का विरोधि स्वातंत्र्य है, परमात्मा के
शेषत्व का विरोधि तदितरशेषत्व है ॥८१॥

अहंकाररूपमालिन्यानिवर्त्तने
आत्मनोऽविनश्यन्नाम दास इति हि ॥८१॥

---

शेषत्वविरोधिस्वातंत्र्यमिति— अहं ममार्ह इति स्थितिसमये एकस्मिन्नपि विषये शेषत्वाभावात्स्वातंत्र्यं शेषत्वोत्पत्तिप्रतिबंधकमित्यर्थः ।

तच्छेषत्वविरोधि तदितरशेषत्वमिति — स्वातंत्र्यनिवृत्त्या शेषत्वांगीकारेपि भगवद्व्यतिरिक्तविषयेषु कस्यचित्स्वस्य शेषत्वानुसंधानं निरुपाधिकशेषिभूततद्विषये शेषत्वं प्रतिबध्नातीत्यर्थः ।

इदं चागंतुकं न भवतीत्यारभ्योपपादितमर्थं निरूपयति— अहंकारेत्यादिना ।

---

अहंकारशरीरस्य मालिन्यस्य निवर्तने ।
आत्मनो दास इति हि निरुपाधिकनामता ॥८१॥

शेषत्व का विरोधि स्वातंत्र्य है माने – जब यह चेतन 'मैं मेरे लिये हूं' ऐसा समझता है तब किसी एक विषय में भी शेषत्व न होने से स्वातंत्र्य शेषत्व को रोकता है ।

परमात्मा के शेषत्व का विरोधि तदितरशेषत्व माने – स्वातंत्र्य नष्ट हो शेषत्व को अंगीकार करनेपर भी भगवद्व्यतिरिक्त विषयों में एक का अपने को शेष मानना, यह निरुपाधिक शेषी परमात्मा का शेषत्व को रोकता है ।

'यह आगंतुक नहीं' इस अर्थ को स्पष्ट कहते हैं – अहंकार इत्यादि ।

अहंकाररूप लेप को पोंछने पर आत्मा का स्वतः सिद्ध नाम 'दास' ही है ॥८१॥

ग्रामकुलादिप्रयुक्तं नामानर्थहेतुः ॥ ८२ ॥

---

अहंकारश्च देहात्माभिमानरूपः, स्वस्वातंत्र्यरूपश्चेति द्वि-विधः । तयोरत्र स्वातंत्र्यमुच्यते । मालिन्येत्यनेन—अस्य तिरोधायकत्वमागंतुकत्वं च भासते । तन्निवर्त्तनं नाम—सदाचार्योपदेशादिभिः सवासननिवर्त्तनम् । आत्मनोऽविनश्य-न्नाम दास इति हीति—औपाधिकजातिवर्णाश्रमादिभिरागत्य निवर्तमानानां विलक्षणं यावदात्मानुवृत्ति नाम दास इति ही-त्यर्थः । हीत्यस्मिन्नर्थे प्रमाणप्रसिद्धिः । 'दासभूताः स्वतः' 'आत्मदास्यं' इत्यादीन्यत्र विवक्षितानि । तस्मात्स्वातंत्र्यादिकमौ-पाधिकं दास्यं स्वाभाविकमिति न विरोध इति तात्पर्यम् ।

तत्किं ग्रामकुलादिप्रयुक्तो व्यपदेशः खलु वर्तते इत्यत आह—ग्रामेत्यादि ।

---

कुलग्रामादियुक्तं यत्तन्नामानर्थहेतुकम् ॥८२॥

अहंकार—देहात्माभिमान और स्वातंत्र्य ऐसा दो प्रकारके हैं उन में यहांपर स्वातंत्र्य को कहते हैं, लेप कहनेसे उस अहंकार का तिरोधायकत्व और आगंतुकत्व भासता है । उस को पोंछना माने – सदाचार्य उपदेशादियों से वासना सहित छुडाना । आत्मा का स्वतःसिद्ध नाम दास माने – आगंतुक जाति, वर्ण, आश्रमा-दियों से आकर नष्ट होनेवाले नामों के तरह न हो आत्मा रहनेतक अनुवर्तन करनेवाला नाम 'दास' ऐसा है । 'ही' कहनेसे इस अर्थ में प्रमाण प्रसिद्ध है । 'स्वतःसिद्ध दास हैं' 'आत्मा का दास्य को' इत्यादियों को यहां प्रमाण समझना । इस कारण स्वातंत्र्यादि आगंतुक है दास्य स्वतःसिद्ध है ऐसा कहनेमें दोष नहीं ।

वह कैसा ? ग्रामकुलादियों से होनेवाले नाम ही व्यवहार में चलता है इस शंका में कहते हैं – ग्राम इत्यादि ।

ग्रामकुलादियों से होनेवाले नाम अनर्थ का हेतु है ॥ ८२ ॥

'एकांती व्यपदेष्टव्यः' ॥ ८३ ॥

---

ग्रामकुलादिव्यपदेशोऽहंकारजनकत्वात् स्वरूपहानिरूपानर्थकर इत्यर्थः। तस्मात्तेनायं व्यपदेष्टव्यो न भवतीति तात्पर्यम्। उक्तार्थे प्रमाणमाह—'एकांती व्यदेष्टव्यः' इति।

'एकांती व्यपदेष्टव्यो नैव ग्रामकुलादिभिः।
विष्णुना व्यपदेष्टव्यस्तस्य सर्वं स एव हि॥'

अनेन भगवदेकपरो ग्रामकुलादिसंबंधेन वक्तव्यो न भवति, भगवत्संबंधेन व्यपदेश्यस्य ग्रामकुलादिकं सर्वं भगवानेव हीत्युच्यते।

प्राप्ता चेत्यादिवाक्येऽस्य चेतनस्य स्वयत्ननिवृत्त्यादिभानादेतन्निदानमेतदिति, एवंभूतस्य प्रयत्नचैतन्यप्रयोजनं, शेषत्वादिप्राधान्यहेतुरात्मस्वरूपस्य दास्यांतरंगनिरूपकत्वमि-

---

एकान्ती व्यपदेष्टव्यो नैव ग्रामकुलादिभिः ॥ ८३ ॥

ग्रामकुलादि से कहेजाना अहंकार जनक होनेसे स्वरूप हानिरूप अनर्थ को करता है। इस कारण उन नामों से यह चेतन नहीं कहाजाना चाहिये।

पूर्वोक्त अर्थ का प्रमाण दिखाते हैं — 'एकांती कहाजाता है' इत्यादि।

'एकांती कहाजाता है' ॥ ८३ ॥

'एकांती ग्रामकुलादियों से नहीं कहा जाता है, विष्णु से ही कहाजाता है कारण उस को ग्राम कुल आदि सब विष्णु ही हैं, इस से भगवदेकपर चेतन ग्रामकुलादि संबंधों से नहीं कहाजाता है। उस को ग्रामकुलादि सब भगवान ही है।

'प्राप्ता' इत्यादि वाक्य से इस चेतन का स्वयत्न निवृत्त्यादि भान होने से इन का कारण अमुक है, एवंभूत प्रयत्न और चैतन्य का प्रयोजन, शेषत्वादि का प्राधान्य का हेतु आत्मस्वरूप के अंतरंग निरूपक दास्य है, यह

तिच, एवंभूतमिदं स्वाभाविकं, एतद्विरोधिनो औपाधिके, तन्निवृत्तावात्मनो दास्यमेव नित्यनिरूपकमित्युक्तत्वादेतदर्थनिरूपणं, ग्रामकुलादिभिर्व्यपदेष्टव्यो न भवतीत्युक्तार्थे प्रमाणस्योक्तत्वात् 'स्वयत्ननिवृत्ति' रित्यादिवाक्यमारभ्यैतावत्प्रासंगिकम् ।

एवमनेन प्रकरणेन प्रपत्तेर्देशादिनियमो नास्ति विषयनियम एवास्तीत्यर्थः, स च विषयोऽयमित्यर्थः, तद्विषयवैलक्षण्यं, तत्र प्रपत्तिकर्त्रधिकारिणां त्रैविध्यं, प्रपत्तावुपायत्वप्रतिपत्तेर्भवद्दवद्यं, प्रपत्तेः स्वरूपादिकं, प्रपत्तव्य एवोपाय इत्यर्थश्च—प्रतिपादितः ।

उपायवैभवप्रकरणं समाप्तम् ।

—○❀○—

अधिकारिशोधनम् ।

---

स्वाभाविक है, इन के विरोधि आगंतुक हैं, विरोधि दूर होनेपर आत्मा का दास्य ही नित्यनिरूपक है, ग्रामकुलादियों से यह नहीं कहाजाता है, इस अर्थ में प्रमाण इत्यादि भी कहे हैं । 'अतः स्वयत्न निवृत्ति' इत्यादि वाक्य से लेकर यहांतक प्रासंगिक समझना ।

एवं इस प्रकरण से प्रपत्ति का देशादिनियम नहीं, विषयनियम ही है, वह विषय अमुक है, उस विषय का वैलक्षण्य, उस विषय में प्रपत्ति करनेवाले अधिकारियों का वैलक्षण्य, उस में प्रपत्ति करनेवाले अधिकारी तीन प्रकारके हैं, प्रपत्ति को उपाय माननेसे होने वाला दोष, प्रपत्ति के स्वरूपादि, जिसविषय में प्रपत्ति करते हैं वही विषय उपाय है इत्यादि कहे गये हैं ।

उपाय वैभव प्रकरण समाप्त हुआ ।

—○❀○—

अधिकारि वैभव ।

उपायस्य जानकीवत् द्रौपदीवत् तिरुक्कण्णमंगै-याण्डान्वत् वर्तेत । उपेयस्य बालस्वामिवत् महाराजवत् पिळ्ळैतिरुनरैयूररैयर्वत् चिंतयंतीवच्च वर्तेत ॥

---

अनंतरमधिकारिशोधनं क्रियते । उपायस्योपेयार्थत्वात् 'उपेये प्रीतिश्च' 'परप्रयोजनप्रवृत्तिः प्रयत्नफलं, तद्विषयप्रीतिश्चैतन्यफलं' इतिचोपेयाधिकारस्य च पूर्वं प्रसक्तत्वात् द्वयनिष्ठस्याधिकारिण उभयोरप्यपेक्षितत्वादुपायोपेयाधिकारयोश्चेतन एवमेवंप्रकारेण वर्तेतेत्यर्थः । तत्तन्निष्ठान्निदर्शयन्नित्याह— उपायस्येत्यादिवाक्यद्वयेन ।

---

तिरुक्कण्णमंगैयाण्डान् द्रौपदी जानकी यथा ।
तथोपायस्य माहात्म्यदर्शनाद्वर्तनं शुभम् ॥
बालस्वामी महाराजश्चिन्तयन्ती यथा तथा ।
तिरुनरैयूराचार्यवदुपाये च वर्तनम् ॥ ८४ ॥

अनंतर अधिकारि को शोधन करते हैं । उपाय उपेय के वास्ते होनेसे, 'उपेय में प्रीति' 'परप्रयोजन के लिये प्रवृत्ति प्रयत्न का फल है, उस विषय में प्रीति चैतन्य का फल है' ऐसा उपेयाधिकार भी पूर्वप्रसक्त होनेसे, द्वय में निष्ठावान् अधिकारी को दोनों अपेक्षित होनेसे, उपाय और उपेयाधिकारों में यह चेतन अमुक अमुक प्रकार से रहना चाहिये इस अर्थ को उपाय और उपेय में निष्ठावालों को दृष्टांत दे कहते हैं— उपाय के लिये इत्यादि ।

उपाय के लिये सीता जी. द्रौपदी और तिरुक्कण्णमंगैयांडान्
इन के सदृश रहना चाहिये, उपेय के लिये श्रीलक्ष्मणजी,
श्रीजटायु, पिळ्ळैतिरुनरैयूररैयर और चिंतयंती के सदृश
रहना चाहिये ॥ ८४ ॥

जानक्या द्रौपद्याश्च तारतम्यं
शक्तिश्चाशक्तिश्च ॥८५॥

---

उपायस्येति—उपायस्याधिकारिभवनसमये इत्यर्थः। उपायाधिकारस्येति वा। तथैवोपेयस्येत्यत्राप्यर्थो बोध्यः। उपाय इति पाठे उपायविषय इत्यर्थः। एवमन्यत्रापि।

तद्वद्वर्तेतेत्यस्य तात्पर्यं दर्शयितुं तेषां प्रकाराननुक्रमेणाह—तत्र जानक्या द्रौपद्याश्च प्रकारान् वक्तुं प्रथममुभयोस्तारतम्यमाह—जानक्या इत्यादिना।

'तत्तस्य सदृशं भवे'दिति स्थिताया जानक्या 'रक्षमा'मिति स्थिताया द्रौपद्याश्च मिथस्तारतम्यं 'शीतोभवे'ति यथाग्निं जलमकरोत्तथा 'दग्धो भवे'ति विरोधिवर्गं भस्मीकृत्य स्वरक्षणक-

---

जानकीद्रौपदीमध्ये तारतम्यं त्विदं मतम्।
जानकी शक्तिरूपासीत् द्रौपदी शक्तिवर्जिता ॥ ८५ ॥

उपाय के लिये माने— उपाय का अधिकारी होनेके समय। अथवा उपायाधिकार के लिये। वैसा ही 'उपेय के लिये' इस को भी समझना।

उन के सदृश रहना चाहिये इस का अभिप्राय को दिखानेके लिये उन के अनुष्ठानों को दिखाते हैं,। उन में सीताजी और द्रौपदी के अनुष्ठानों को दिखानेके लिये पहिले दोनों के वैलक्षण्य को कहते हैं। सीताजी इत्यादि।

सीताजी और द्रौपदी के वैलक्षण्य शक्ति और अशक्ति है ॥ ८५ ॥

'वह उन का अनुरूप है' ऐसा रहनेवाली सीताजी 'मुझको रक्षा करो' ऐसा कहने वाली द्रौपदी इन दोनों में वैलक्षण्य 'शीत हो जाओ' ऐसा अग्नि को जैसा पानी बनायी तैसा 'जल जाओ' ऐसा विरोधि वर्ग को भस्म कर अपने को रक्षा करने की शक्तिमती होना। स्वरता से विरोधियों को हटा

जानकी स्वशक्तिमत्यजत्, द्रौपदी लज्जामत्यजत्,
तिरुक्कण्णमंगैयाण्डान् स्वव्यापारमत्यजत् ॥ ८६ ॥

---

रणार्हशक्तिमत्त्वम् । स्वयत्नेन विरोधिनो दूरीकृत्य स्वं रक्षितुं विचारे कृतेऽपि स्वरक्षणोपयुक्तशक्तेः स्वाकिञ्चनभावश्चेत्यर्थः ।

एवंभूतैः कृतं व्यापारमाह— जानकीत्यादिना ।

स्वशक्तित्यागो नाम— नायकेन स्वामिना रक्षणं कर्तव्यं अन्यथाऽस्माकं शक्त्या स्वरक्षणकरणं पारतंत्र्यनाशकमिति स्व शक्त्या कार्यकरणान्निवृत्तिः ।

'असंदेशात्तु रामस्य तपसश्चानुपालनात् ।
न त्वां कुर्मि दशग्रीव ! भस्म भस्मार्हतेजसा ॥'

---

तत्याज जानकी शक्तिं द्रौपदी ह्रीमथात्यजत ।
तिरुक्कण्णमंगैयाण्डान् स्वव्यापारं तथाऽत्यजत् ॥ ८६ ॥

अपने को रक्षा करलेने को विचार करनेपर भी तद्नुगुणशक्ति का अभाववाली होना ।

पूर्वोक्त कर्तृक व्यापार को कहते हैं सीताजी इत्यादि ।

सीताजी अपनी शक्ति को छोड दी, द्रौपदी लज्जा को छोड दी
तिरुक्कण्णमंगैयाण्डन् अपने व्यापार को छोड दिये ॥ ८६ ॥

अपनी शक्ति को छोडना माने— अपने पति श्रीराम ही रक्षा करेंगे हमारी शक्ति से हम को रक्षा करलेना हमारे पारतंत्र्य स्वरूप का नाशक है ऐसा समझ अपनी शक्ति से कार्य नहीं लेना ।—

'हे रावण ! श्रीरामजी की आज्ञा न होने से पारतंत्र्यस्वरूप को
मैं पालन करने से भस्म करनेके योग्य निज तेज से तुझे
भस्म नहीं करती ।'

इत्युक्तं हि। लज्जात्यागो नाम—दुःशासनेन सभामध्ये वस्त्रा-पकर्षणसमये लज्जाविशिष्टा एकस्मिन्पार्श्वे स्वयं निरोधमकृ-त्वा हस्तद्वयस्याप्युपरामः। महावैभवविशिष्टा जानकी स्वा-म्येव रक्षक इति विश्वस्य स्वशक्तिमत्यजदिति सुकरं; तादृश-वैभवाभावेपि महापद्दशायामिदानीं कृष्ण एव रक्षक इति म-हाविश्वासं कृत्वा महासभायामियं लज्जामत्यजदिति दुष्करम्।

तिरुक्कण्णमंगैयाण्डान्स्वव्यापारमत्यजदिति—स्वरक्षणहेतुस्व-व्यापारान् सर्वानत्यजदित्यर्थः। कस्यचिद्भटस्य श्वानं कस्मिं-श्चिद्भटे ताडयति स तदसहमानस्ताडयता सह युद्धं कृत्वा तं हत्वा स्वयमपि ममारेत्येतद्वृत्तांतं दृष्ट्वा कस्मिंश्चित् क्षुद्रचे-तने स्वाभिमानविषयतयाऽतिष्ठदित्येतन्निमित्तं स्वनाशपर्यंतं व्यापारान् कुर्वाणे दृष्टे परमचेतनाभिमानाश्रयणे कृते स क-थं स्यादिति स्वरक्षणव्यापारान् त्यक्त्वा तादृशश्ववत् स्वम-

ऐसा सीताजी कही है।

लज्जा को छोडना माने— दुःशासन सभा के वीच में मानभंग करनेपर लज्जावती हो आप अपने हाथ से न रोककर दोनों हाथों को ऊपर उठाना। ज्ञानाधिक होनेसे सीताजी स्वामी ही रक्षक है ऐसा विश्वास कर अपनी शक्ति को छोड सकी थी, उतना ज्ञान नहीं होनेपर भी महत् आपद दशा में श्रीकृष्ण ही रक्षक है ऐसा महाविश्वास पूर्वक महासभा के वीच में द्रौपदी का लज्जा छो-डना ही दुष्कर कार्य है।

तिरुकण्णमंगैयांडान् अपने व्यापार को छोड दिये माने—स्वरक्षण हेतुभूत स्वव्यापार को छोड दिये। एक भृत्य के कुत्ता को अन्यभृत्य मारनेपर उस को न सहकर मारनेवाले से युद्ध कर और उस को मार आप भी मरगया इस व्यापार को देख तिरुकण्णमंगैयाण्डान् 'एक क्षुद्र चेतन अपने अभिमत कुत्ता के

क्षुधिता यथा पक्वमन्नं भोक्तव्यं पच्यमानं च भोक्तव्यमिति वदंति तथा स्वामिनि वनं गच्छ-ति बालस्वामी विश्लेषे धारणाभावं पुरस्कृत्य कैंकर्यं कर्तव्यं सकलविधकैंकर्यं च कर्तव्यं प्रेरणा

---

नुसंदधानस्तदैवागत्य तिरुक्कण्णंगैभक्तत्राणमंदिरगोपुरद्वारस-मीपदेशे शिश्य इति प्रसिद्धम् ।

अथोपेयाधिकारिषु प्रधानस्य बालस्वामिनः प्रकारं विस्तारे-णाह—क्षुधिता इत्यादिना ।

---

पच्यमानं च पक्वं च क्षुधितेन मया कणम् ।
भोक्तव्यं हि यथा कश्चिदाह तद्वच्च लक्ष्मणः ।
विश्लेषे धारणाभावं पुरस्कृत्य प्रयत्नतः ।
कैंकर्यं सर्वकैंकर्यं कर्तव्यं प्रेरणा च मे ।

लिये जान छोडदिया तो परम चेतन सर्वेश्वर के अभिमान में अंतर्भूत होनेपर वह क्या न करेगा' ऐसा विचार स्वरक्षणव्यापारों को छोड जन्तुओं के तरह अपने को मानकर उसी समय तिरुक्कण्णंगै दिव्यदेश में जा भक्तजीवन नामक भगवान् के द्वार में लोटते भये । यह बात प्रसिद्ध है ।

अब उपेयाधिकारियों में प्रधान श्रीलक्ष्मण भगवान् के प्रकार को विस्तार पूर्वक कहते हैं— क्षुधातुर इत्यादि ।

यथा क्षुधातुर लोग किया हुआ और की जानेवाला भी अन्न को पावेंगे ऐसा कहते हैं तैसे अरण्य को जानेके समय श्रीलक्ष्मणजी राम विश्लेष में धीरज को छोड मैं सर्व प्रकार का कैंकर्य करूंगा आप की प्रेरणा भी चाहिये ऐसी प्रार्थना किये हैं अनंतर चतुर्दश वर्ष के बाद अयोध्या में प्रवेश करने पर अरण्य में एकांत में स्वयं

च कर्तव्येत्यवोचत् । पुरप्रवेशानंतरं वने एकांते स्वयंपाके उदरवर्धनात् सह भोक्तुमक्षमः एकहस्ते श्रीमच्छ्वेतच्छत्रमन्यहस्ते श्रीमच्छ्वेतचामरं च धृत्वा कैंकर्यमकरोत् ॥ ८७ ॥

---

क्षुधिताः स्वक्षुधाबाहुल्येनैतत्पूर्वं पक्वमन्नमिदानीं पच्यमानमन्नं चास्माभिरेव भोक्तव्यमिति यथा मनोरथं कुर्वंति तथा स्वामिनि वनं गच्छति 'बाल्यात्प्रभृति सुस्निग्धो' बालस्वामी नगरान्निर्गमनात्पूर्वं सहगमनायोद्योगमकरोत्, तद्दृष्ट्वा त्वं तिष्ठेति निर्बंधं कुर्वंति—

---

कर्तव्योवाच साकेतप्रवेशानन्तरं वने ।
एकान्ते स्वीयपाकेनोदरवर्द्धनहेतुतः ।
असहन्सह भोक्तव्यं श्वेतच्छत्रं शुभं करे ।
श्वेतचामरकं श्रीमत्करे धृत्वा तथाऽपरे ।
कैंकर्यमकरोत्सर्वं राघवस्य महात्मनः ॥ ८७ ॥

स्वयंपाक से पेट को बढानेसे पङ्क्ति में भोजन करने को असमर्थ हो एक हाथ से श्वेतछत्र अपर हस्त से श्वेत चामर को भी धारण कर सेवा किये हैं ॥ ८६ ॥

यथा क्षुधातुर अपनी क्षुधा की अधिकता से इस के पहिले किया हुआ अन्न इस वखत पकताहुआ अन्न सभी हम पावेंगे ऐसा मनोरथ करते हैं तैसे श्रीरामजी के अरण्य जानेके वखत 'बाल्य से ही स्नेह करने वाले' श्रीलक्ष्मणजी अयोध्या से निकलनेके पहिले संग जानेको प्रयत्न करनेपर तुम न जाओ ऐसा राम के निषेध करनेपर—

'कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते ।
कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्पते ॥'

इति, गंगातरणानंतरं पुनस्त्यक्तुमनेकधा वदति—

'न च सीता त्वया हीना न चाहमपि राघव! ।
मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ ॥'

इत्युक्तत्वात् विश्लेषे स्वसत्ताभावं पुरस्कृत्य 'कुरुष्व मामनुचरं' इत्यनंतरं—

'धनुरादाय सगुणं खनित्रपिटकाधरः ।
अग्रतस्ते गमिष्यामि पंथानमनुदर्शयन् ॥
आहरिस्यामि ते नित्यं मूलानि च फलानि च ।
वन्यानि यानि चान्यानि स्वाहाराणि तपस्विनाम् ॥'

इत्युक्त्या स्वशेषत्वानुगुणं कैंकर्यं कर्तव्यमित्युक्त्वा, तदनंतरं—

---

'हम को आप का अनुचर बना ओ इस में कोई अधर्म नहीं
मैं कृतार्थ होऊंगा आप का भी प्रयोजन सिद्ध होगा।'

ऐसा, गंगा के पार पहुंचने पर लक्ष्मणजी को छोडनेके लिये फिर भी रामजी बहुत कहे तो—

'आप को छोडकर सीता और मैं दोनों जल से बिछुडी
मछलियों के तरह क्षण भर भी नहीं जी सके'

ऐसा भी कहनेसे, विश्लेष में धारणासामर्थ्य को आगे कर मुझे अनुचर बनालो ऐसा कहनेके बाद—

'धनुष को चढाकर खनती और टोकरी लेकर
आप को रास्ता बताते हुए आप के सामने जाऊंगा,
प्रतिदिन आप के लिये कंदमूल फलों को लाऊंगा,
तपस्विलोगों के स्वादु आहार जो कुछ है उन सब को लाऊंगा।'

ऐसा कहनेसे शेषत्वानुगुण कैंकर्य करना चाहिये इस तरह प्रार्थना कर

'भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते ।
अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥'

इत्युक्त्वा तत्र चैतत्कैंकर्यमिति नियतिं विना सकलविधकैंकर्यं च कर्तव्यमिति च, पचंवट्यां स्थितिसमये जलच्छायाभ्यां समृद्धं कंचिद्देशविशेषं दृष्ट्वा पर्णशालां रचयेति स्वामिनि वदति—

'एवमुक्तस्तु रामेण लक्ष्मणः संयतांजलिः ।
सीतासमक्षं काकुत्स्थमिदं वचनमब्रवीत् ॥'

इति यदा स्वस्मिन् स्वातंत्र्यं पातितं तदा स्वाम्यत्यजादिति विकृतः जानकीं पुरस्कारेण सांजलिहस्तः स्थित्वा—

'परवानस्मि काकुत्स्थ ! त्वयि वर्षशतं स्थिते ।
स्वयं तु रुचिरे देशे क्रियतामिति मां वद ॥'

---

तदनंतर—

'आप सीताजी के साथ पर्वतप्रदेशों में जब विचरेंगे तब मैं सोते
और जागते हुए आप के सर्वप्रकारके कैंकर्य को करूंगा'

इस प्रकार कहनेसे , उस कैंकर्य में अमुक ही कैंकर्य करूंगा ऐसा नियम को छोड सर्वप्रकारके कैंकर्य की प्रार्थना किये हैं । पंचवटी में जब गये थे तब श्रीरामजी जल और छाया युक्त एक प्रदेश को देख पर्णशाला बनाओ ऐसा लक्ष्मण से कहनेपर—

'इस प्रकार रामजी से कहे गये लक्ष्मणजी हाथ जोड
सीता के संमुख श्रीरामजी से यह कहते भये ॥'

ऐसा अपने शिर में स्वातंत्र्यरूप भारको जब रक्खे हैं तब मुझ को छोडदिये इस प्रकार विकृत हो सीताजी को आगे कर हाथ जोड—

'हे राघव ! आप जबतक रहेंगे तबतक मैं परतंत्र हूं इस लिये आप
ही अपने इच्छित देश में पर्णशाला बनानेको मुझे आज्ञा दीजिये ॥'

इत्युक्त्या कैंकर्यकरणसमये स्वातंत्र्यरूपदोषमिश्रणं विनोचित-कैंकर्येषु प्रेरणा कर्तव्येति प्रार्थयामास। पुरेत्यादि– पुरमागत्य श्रीपट्टाभिषेकांगीकारसमये स्वेन सह कैंकर्यकर्त्रा एकेनापि रहितवन एकांते स्वयमेव कैंकर्यं कृत्वा कैंकर्याभिनिवेशस्य वर्द्धितत्वात् स्वयंपाके उदरवर्द्धको यथा सहभोजनं न सहते तथा श्रीभरतप्रभृतिभिः सह स्वयमप्येकं कैंकर्यं कृत्वा स्थातुमशक्तः श्रीमच्छ्वेतच्छत्रधारणं श्रीमच्छ्वेतचामरार्पणमित्युभयविधकैंकर्यमेककालेऽकरोदित्यर्थः। इदं च वृत्तांतं श्रीरामायणे नास्ति।

'छत्रचामरपाणिस्तु लक्ष्मणोऽनुजगामह।'

इति रामायणं न भवति किमिति चेद्वनगमनात् पूर्वमभिषेकार्थमलंकृत्य स्वदिव्यांतःपुरान्निर्गत्य चक्रवर्तिगृहमुद्दिश्य रथमारुह्य स्वामिनि गच्छति बालस्वामिकृतवृत्तांततया श्री-

---

इस तरहसे कहनेपर कैंकर्यरूप कार्य में जैसे स्वातंत्र्यरूप दोष न लगे तैसे आप के इच्छित कैंकर्यों में मुझ को आज्ञा मिले ऐसी प्रार्थना किये। राजधानी में इत्यादि—श्रीअयोध्या को प्राप्त हो और अभिषिक्त होनेपर, अपने साथ कैंकर्य करनेवाले न होनेसे अरण्य में आप ही सर्वविधकैंकर्य कर आशा को बढानेसे अकेले स्वयंपाक से उदर को बढानेवाले जैसे पंक्ति में भोजन नही कर सकैगा तैसे श्रीभरतसूरि आदियों के तरह आप भी एक कैंकर्य कर तृप्त न हो एक हाथ में श्वेतच्छत्र और दूसरे हाथ में श्वेतचामर धारणकर एक ही काल में दो कैंकर्य किये है। यह वृत्तांत श्रीरामायण में नहीं है,। 'छत्र और चामर हाथ में ले लक्ष्मणजी श्रीरामजी का अनुगमन करते भये' यह वचन श्रीरामायणका नहीं क्या? इस शंका में कहते हैं—अरण्य को जानेके पहिले श्रीअभिषेक के लिये अलंकृत हो अपने दिव्यांतःपुर से निकल चक्रवर्ती के श्रीगृह को जानेके लिये रथ में बैठ श्रीरामजी के जानेके समय लक्ष्मणजी का यह वृत्तांत अयोध्याकाण्ड में कहागया

अयोध्याकांड उक्तत्वात् अत्र तदसंगतम् । तर्ह्ययं किमवलंब्या-ऽवोचदिति चेत्- पद्मपुराणप्रक्रिययाऽवोचत् । —

'अथ तस्मिन् दिने पुण्ये शुभलग्ने शुभान्विते।
राघवस्याभिषेकार्थं मंगलं चक्रिरे जनाः ॥'

इत्यारभ्य विस्तरेणोक्त्वा ।—

मंत्रपूतैर्जलैः शुद्धैर्मुनयः शांसितव्रताः ।
जपंतो वैष्णवान् सूक्तान् चतुर्वेदमयान् शुभान् ॥
अभिषेकं शुभं चक्रुः काकुत्स्थं जगतां पतिम् ।
तस्मिन् शुभदिने लग्ने देवदुंदुभयो दिवि ॥
निनेदुः पुष्पवर्षाणि ववर्षुश्च समंततः ।
दिव्यांबरैर्भूषणैश्च दिव्यगंधानुलेपनैः ॥
पुष्पैर्नानाविधैर्दिव्यैर्देव्या सह रघूद्वहः ।
अलंकृतश्च शुशुभे मुनिभिर्वेदपारगैः ॥

---

वह इस स्थल में संगत नहीं। तब श्रीलोकाचार्यस्वामी किस आधार से ऐसा कहे हैं? इस शंका में कहते हैं- पद्मपुराण के रीति से कहते हैं—

'अनंतर उस पुण्यदिन और शुभलग्न में श्रीरामजी
के अभिषेक के लिये लोग मंगल मनाते भये'

ऐसा आरंभ कर विस्तारपूर्वक कहते हुए —

'तीक्ष्ण तपस्या वाले ऋषिलोग चतुर्वेदमय शुभ वैष्णव-
सूक्तों को जपते हुए मंत्रसे पवित्र जलों से जग-
त्पति श्रीरामचन्द्रजी का शुभाभिषेक करते भये ।
उस शुभलग्न में आकाश में देवताओं के नगारे बजते
भये, चारों तरफ पुष्पवृष्टि हुई और सीताजी के साथ
श्रीरामजी दिव्यवस्त्र, भूषण, और दिव्यगंध अनुलेप
और दिव्यनानाविध पुष्पों से अलंकृत हो वेदपार-

छत्रं च चामरं दिव्यं धृतवाँल्लक्ष्मणस्तदा ।
पार्श्वे भरतशत्रुघ्नौ तालवृन्तं विवेजतुः ॥
दर्पणं प्रददौ श्रीमान् राक्षसेन्द्रो विभीषणः ।
दधार पूर्णकलशं सुग्रीवो वानरेश्वरः ॥
जाम्बवांश्च महातेजाः पुष्पमालां मनोहराम् ।
वालिपुत्रस्तु तांबूलं सकर्पूरं ददौ प्रियात् ॥
हनूमान् दीपिकां दिव्यां सुषेणस्तु ध्वजं शुभम् ।
परिवार्य महात्मानं मंत्रिणः समुपासिरे ॥'

इति पद्मपुराणोत्तरखण्डे एकोनपंचाशत्तमाध्याय उक्तम् । 'छत्रं च चामरं दिव्यं धृतवा'नित्येतत्प्रत्यभिज्ञानार्थं हि'श्रीमच्छ्वेतच्छत्रं श्रीमच्छ्वेतचामरं च धृत्वे 'त्युक्तम् ।

---

गत ऋषियों के बीच में शोभते भये ।

लक्ष्मणजी दिव्य छत्र और चामर को धारण किये, दोनों पार्श्व में भरत और शत्रुघ्न पंखाओं को चलाते थे, श्रीमान् राक्षसेंद्र वीभिषण दर्पण दिखाते भये, वानरेश्वर सुग्रीव पूर्णकलश को धारण किये, महातेजस्वी जांबवान् मनोहर पुष्पमाला को पहनाये, वालिसूनु अंगद सकपूर तांबूल प्रीतिपूर्वक देते भये, हनुमानजी दिव्य दीपक को हाथमें ले दिखाये, सुषेण दिव्यध्वजा को धारण किये,इस तरह सभी मंत्रिलोग चारों तरफ से घेरकर श्रीरामजी की सेवा करते भये

ऐसा पाद्मपुराण के उत्तरखंड ४९ ऊनचासवाँ अध्याय में कहा है ।

' दिव्यछत्र और दिव्यचामर को लक्ष्मणजी धारण किये ' इस वचन के प्रमाण से 'श्वेत छत्र और श्वेत चामर को धारण किये' ऐसा कहेहैं ।

महराजः पिळ्ळैतिरुनरैयूररैयर्
आचार्य्यश्च शरीरमुपैक्षताम् ॥ ८८ ॥

---

जटायुमहाराजं महाराज इति हि अस्मत्पूर्वाचार्या व्यवहरंति । अयं स्वस्मिन् स्वामी पंचवट्यामागत्य स्वमंगीकृत्य 'इह वत्स्यामि सौमित्रे सार्धमेतेन पक्षिणा' इति यदाऽवदत्तदाप्रभृति चरणयोरत्यंतमंतरंगे स्वामिनिवासभूतदिव्याश्रमस्यासन्नतया वर्त्तमानेऽचिंतितं रावण आगत्य जानकीं विश्लेष्यादाय गच्छति जानकी एनं कस्मिंश्चिद्वृक्षे दृष्ट्वा मामयमपहरन् गच्छतीत्येतन्नामोक्त्या चुक्रोश, तदा स्वपन्नार्तध्वनिं श्रुत्वा प्रबुद्ध्य रावणेन ह्रियमाणां दृष्ट्वा ननु तवेदमनुचि-

---

तिरुनरैयुराचार्यो महाराजश्च गृध्रराट् ।
उपैक्षतां शरीरं स्वं चिन्तयंती स्वतो वपुः ॥ ८८ ॥

श्रीजटायु, पिळ्ळैतिरुनरैयूररैयर ये दोनों शरीर को उपेक्षा
किये हैं, चिंतयंती का शरीर स्वयमेव निवृत्त हुआ ॥ ८७ ॥

श्रीजटायु, इत्यादि—श्रीजटायु को 'महाराजा' ऐसे नाम से हमारे पूर्वाचार्यलोग कहते हैं। यह पंचवटी में रामजी पधार जटायु को स्वीकार कर 'हे लक्ष्मण ? इस पक्षी के साथ मैं यहां वास करूंगा ऐसा कहनेके बाद स्वामी के अत्यंत अंतरग हो भगवान के आश्रम के समीप वास करनेपर, अचानक रावण आ सीताजी को ले जानेपर सीताजी इन को एक वृक्ष के ऊपर देख मुझ को यह इस प्रकार अपहरकर ले जारहा है ऐसा इन का नाम पुकारने पर सोनेवाले यह उस आर्तध्वनि को सुन रावण के लेजानेका प्रकार को देख तुम को यह उचित नहीं ऐसा धर्मोपदेश करनेपर वह न सुननेसे हम जीते जी इस अक्रम को नहीं देख सकते इस के साथ युद्ध कर लौटा नहीं सकूंगा

चिंतयंत्या देहः स्वत एव गतः ॥८३॥

तस्मिन्निति धर्मोपदेशमकरोत् । तस्य तेनाम्बुलस्यागेन सहैतद्देह-
ष्ट्वा स्थातुं न योग्यः युद्धं कृत्वा निवर्तयिष्याम्यथवा
मरिष्यामीत्यध्यवस्यातिबलपराक्रमत्वात् तेन सह महायुद्धं
कृत्वा तद्धस्तेन विद्धो निपत्य स्वशरीरं तत्याज हि ।

पिळ्ळैतिरुनरैयूररैयर् सकुटुंबं श्रीनारायणपुरे वेदनाराय-
स्वामिनं सेवितुं गत्वा स्थितिसमये परसमयिषु तस्मिन्मंदिरे
अग्निं प्रक्षिपत्सु अंतःस्थितेषु सर्वेषु ततो निर्गत्य पलायमानेषु
तस्य भगवतो दिव्यमंगलविग्रहस्यागतावस्थं दृष्ट्वाऽसहमान-
प्रेमातिशयेन स्वयमपि शरीरं त्यक्तुमध्यवस्य स्थितत्वात् त-
त्पुत्राणामप्यमुं विहाय न गच्छाम इति स्थितत्वात् तैः सह
तत्र स्थित्वा शरीरं तत्याजेति प्रसिद्धम् । -चिंतयंत्या इत्यादि ।

---

तो मरूंगा ऐसा निश्चय कर अतिबलपराक्रमवाले हो से उस के साथ महा-
युद्ध कर उस के हाथ से मारा जाकर अपने शरीर को छोड दिये हैं ।

पिळ्ळैतिरुनरैयूररैयर सकुटुंब तिरुनारायणपुर में वेदनारायण भगवान के
दर्शनार्थ जा मंदिर में प्रवेश किये हैं, उस समय में नास्तिक लोग मंदिर में
अग्नि लगाये, भीतरके सब लोग बाहर निकल गये, तब भगवान के दिव्य-
मंगलविग्रह को जलते हुए देख असह्य हो अधिक प्रेम से आप भी मरनेको
तयारी किये, इन के पुत्र भी इन का साथ न छोड रूव उस मंदिर के भीतर
जलकर भस्म हो गये यह बात प्रसिद्ध है ।

चिंतयंती का शरीर स्वयमेव निवृत्त हुआ-

'काचिदावसथस्यांते स्थित्वा दृष्ट्वा बहिर्गुरुम् ।
तन्मयत्वेन गोविंदं दध्यौ मीलितलोचना ॥
तच्चित्तविमलाह्लादक्षीणपुण्यचया तदा ।
तदप्राप्तिमहादुःखविलीनाशेषपातका ॥
चिंतयंती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥'

इत्युक्तप्रकारेण रासक्रीडायां स्थित्वा कृतं श्रीवेणुनादं श्रुत्वा श्री वृन्दावने गंतुं निर्गता तदा गुरुदर्शनेन गंतुमशक्ता स्थित्वा कृष्णं ध्यात्वा तद्गतचित्तत्वप्रयुक्तनिर्मलसुखेन तदप्राप्तिनिबंधन-निरवधिकदुःखेन च प्रक्षीणाशेषपुण्यपापायास्तत्स्मरणे वर्तमाने तत्प्राप्त्यलाभक्लेशेन धारणासामर्थ्येन श्वासस्य निरुद्धत्वादस्याः स्वोपेक्षामंतरा देहः स्वत एव गत इति भावः ।

'किसी गोपीने घर के भीतर रहती हुई बाहर श्वशुरादि को देख न निकल सकी तब आंख मूंद तन्मय हो गोविंद को ध्यान करती भई । श्रीकृष्ण में चित लगनेसे महानंद की प्राप्ति द्वारा पुण्य से रहित हुई, ध्यान से निवृत्त होने-पर कृष्ण की अप्राप्ति जान जो दुःख पाई उस से पाप रहित हुई । जगत्सृष्टिकर्ता परब्रह्मस्वरूपी श्रीकृष्ण का चिंतवन करती हुई उच्छ्वासरहित हो गोपकन्या मुक्त हुई ।'

इस प्रकार रासक्रीडा के समय श्रीवेणुगान को सुन वृंदावन जानेको उद्युक्त हो श्वशुरदर्शन से न जा सकी, घर के भीतर श्रीकृष्ण का ध्यान कर उस के आनंद से, और उन की अप्राप्ति के कारण अत्यधिक दुःख से भी पुण्यपापरहित हो परमात्मा के अलाभ जनित क्लेश से श्वास बंद हुआ , इस गोपी का शरीर विना यत्न स्वयमेव निवृत्त हुआ ।

**उपायस्य शक्तिर्लज्जा यत्नश्च त्याज्याः,**
**उपेयस्य प्रेम स्वोपेक्षा धारणाभावश्चापेक्षिताः ॥९०॥**

---

एवं निदर्शनभूतानां प्रकारानुक्त्वा 'तद्वद्वर्तेते'त्यस्य तात्पर्यार्थमाह—उपायस्येत्यादिवाक्यद्वयेन ।

उपायस्याधिकारीभवनसमये स्वरक्षणस्य स्वेनैव कर्तव्यतायां निदानभूता शक्तिः, स्वपरिगृहीतोपायस्य विरोधिनां त्यागे लौकिकाः परिहसेयुरिति जायमाना लज्जा, स्वपारतंत्र्यविरोधिस्वयत्नश्च त्याज्याः । उपेयस्याधिकारीभवनसमये शेषिविश्लेषं विना स्थित्वा सकलविधकैंकर्यं च तत्प्रेरणाप्रकारेण कर्तव्यमिति प्रेम, तस्यावद्ये सति तदसहत्वात्स्वदेहोपेक्षा, तद्विग्रहानुभवा-

---

**प्रयत्नशक्ती लज्जा च त्याज्योपायस्य सर्वथा ।**
**स्वोपेक्षाधारणाभावौ प्रेमोपेये ह्यपेक्षिताः ॥९०॥**

तथाच—इस प्रकार दृष्टांतभूतों के प्रकार को कह 'इन के तरह रहना' इस का अभिप्राय को कहते हैं—उपायके लिये इत्यादि वाक्यद्वय से ।

उपाय के लिये शक्ति लज्जा और यत्न ये तीनों
निवृत्त होना चाहिए । उपेय के लिये प्रेम अपने
शरीर का अनादर और धारणाभाव ये तीनों चाहिए ॥ ९० ॥

उपाय के लिये अधिकारी होनेके समय अपना रक्षण आप करनेके अनुगुण शक्ति, अपने स्वीकृत उपाय के विरोधियों को छोडनेपर लोगों के हास्य को देख लज्जा और स्वपारतंत्र्यविरोधि स्वयत्न ये तीनों निवृत्त होना चाहिए । उपेय के अधिकारी होनेपर स्वामी को न छोड उन की आज्ञानुसार सर्व कैंकर्य करूं। ऐसा प्रेम, स्वामी को कोई आपदा आनेपर देखनेको असमर्थ हो स्वशरीर की उपेक्षा और स्वामी का विग्रहानुभव प्राप्त न होनेपर धारणाशक्ति से श्वास बंद होना ये

ाभे धारणाभावात् श्वासनिरोधश्चापेक्षित इत्यर्थः ।
तस्मात्तद्वद् वृत्तिर्नाम एतदधिकारवैशिष्ट्यमिति भावः ।

'विष्णोः कार्यं समुद्दिश्य देहत्यागो यदा कृतः ।
तदा वैकुंठमासाद्य मुक्तो भवति मानवः ॥'

इत्याग्नेयपुराणे,

'देवकार्यपरो भूत्वा स्वां तनुं यः परित्यजेत् ।
स याति विष्णुसायुज्यमपि पातककृन्नरः ॥'

इति वायवीये,

'रंगनाथं समाश्रित्य देहत्यागं करोति यः ।
तस्य वंशे मृताः सर्वे गच्छंत्यात्यंतिकं लयम् ॥'

इति वामनीये, विशेषेणाश्वमेधिकपर्वणि वैष्णवशास्त्रे पंच-माध्याये—

---

नीं चाहिये । इस कारण उन के तरह रहना माने—उनके तरह अनुष्ठान करना ।

'विष्णु कार्य को उद्देशकर मनुष्य जब देहत्याग करता है तब वैकुंठ को प्राप्त हो मुक्त होता है ।'

ऐसा आग्नेयपुराण में,

'देव कार्य में आसक्त हो जो अपने शरीर को छोडता है
वह पापात्मा होनेपर भी विष्णुलोक को जाता है ।'

ऐसा वायुपुराण में

,जो मनुष्य श्रीरंगनाथ को उद्देशकर देहत्याग करता है
उस के वंश में मरनेवाले सब मुक्त होंगे ।'

ऐसा वामनीयपुराण में भी कहते हैं, विशेषकर आश्वमेधिक पर्व वैष्णवधर्म शास्त्र पंचम अध्याय में ।

**अस्य वैधतया आगतो हि त्याज्यः, रागप्राप्ततयाऽऽगतस्त्यक्तुं न शक्यते खलु ॥९१॥**

---

'अग्निप्रवेशं यश्चापि कुरुते तद्गतात्मना ।
स यात्यग्निप्रकाशेन विमानेन ममालयम् ॥
प्राणांस्त्यजति यो मर्त्यो मां प्रपन्नोऽप्यनाशकम् ।
बालसूर्यप्रकाशेन व्रजेद्यानेन मद्गृहम् ॥'

इति भगवता स्वयमेवोक्तत्वात्, एवं मोक्षसाधनतयोक्ते भगवदर्थं स्वदेहत्यागोऽनन्यसाधनस्यास्य त्याज्यः खलु, प्रपन्नः पिळ्ळैतिरुनरैयूररैयर् अमुं कथमन्वतिष्ठदित्यत आह—अस्येत्यादि ।

---

**वैधत्वेनागतश्चेत्स त्याज्य एव न संशयः ।
न त्यक्तुं शक्यते स्वस्य रागप्राप्ततयागतः ॥९१॥**

'हमारे विषय में चित्त को लगा कर जो मनुष्य अग्निप्रवेश करता है वह अग्नि के सदृश प्रभावाले विमान में बैठ हमारे स्थान को जाता है। जो मनुष्य हमारी प्रपत्ति कर अनशनव्रत से प्राणों को त्याग करता है वह बालसूर्यप्रकाशवाले विमान में बैठ हमारे लोक को जाता है।'

ऐसा साक्षात् भगवान् का ही वचन होनेसे, इस प्रकार मोक्षसाधनतया कहेजानेवाले भगवदर्थ स्वदेह का त्याग अनन्यसाधन प्रपन्न को त्याज्य नहीं है क्या ? प्रपन्न पिळ्ळैतिरुनरैयूररैयर देहत्यागरूप साधन को अनुष्ठान कैसे किये ? इस आकांक्षा में कहते हैं—इस का इत्यादि ।

इस का विधिद्वारा आनेवाले ही त्याज्य होते हैं,
रागप्राप्त हो आनेवाले त्यागनेमें अशक्त हैं ॥९१॥

उपायत्वानुसंधानं निवर्तकं
उपेयत्वानुसंधानं प्रवर्तकम् ॥९२॥

---

'इदं कुर्या' दिति विधिप्रयुक्ततया आगतः खलु प्राप्ताप्राप्त-विवेककृतोऽस्य त्याज्यः, तथा विना स्वविरहेऽशक्यधारणा यथा तथा भोग्ये प्राप्तविषये रागप्राप्ततया आगतः कथंचिदपि त्यक्तुं न शक्यते इत्यर्थः ।

वैधतयागमनदशायां सुत्यजस्य रागप्राप्ततयाऽऽगमनदशायां दुस्त्यजत्वं कथमित्यत आह—उपायत्वेत्यादिना ।

उपायत्वानुसंधानं निवर्तकमिति—वैधतयाऽऽगमनदशायां देहत्यागरूपप्रवृत्तौ उपायत्वानुसंधानस्य सत्त्वादेतदनुसंधानममुं साधनतया संप्रतिपन्नाया एतद्देहत्यागरूपप्रवृत्तेर्निवर्तयतीत्यथः । उपेयत्वानुसंधानं प्रवर्तकमिति—रागप्राप्ततयाऽऽग-

---

उपायत्वानुसंधानं निवर्तयति भावुकम् ।
उपेयत्वानुसंधानं प्रवर्तयति तं तथा ॥९२॥

'यह करो' ऐसा एक विधिप्रयुक्त हो आनेवाले को स्वरूपाननुरूप समझ प्रपन्न छोड सकता है, ऐसा न हो ईश्वरविश्लेष को नहीं सहनकर भोग्य और प्राप्त विषय में प्रेम के कारण आनेवाले को बलात्कार से भी नहीं छोड सकते हैं। विधि के कारण आनेवाले छोडनेको शक्य हैं, प्रेम के कारण आनेवाले छोडनेको अशक्य हैं।

यह कैसे ? इस आकांक्षा में कहते हैं – उपायत्व इत्यादि से ।

उपायत्वानुसंधान निवर्तक है, उपेयत्वानुसंधान प्रवर्तक है ॥ ९२ ॥

उपायत्वानुसंधान निवर्तक माने—विधिरूप से जब आता है तब देहत्यागरूप प्रवृत्ति में उपायत्वानुसंधान करनेसे वह अनुसंधान साधनतया निश्चित इस देहत्यागरूप प्रवृत्ति से निवृत्त करता है। उपेयत्वानुसंधान प्रवर्तक माने—रागप्राप्त

अप्राप्तविषयेषु सक्ते तल्लाभ आवश्यक इति
स्थिते सति प्राप्तविषयप्रवणस्य न वक्तव्यं खलु ॥९३॥

---

मनदशायामेतद्विषयस्यागतां हानिं दृष्ट्वा स्थितेर्मरणमेव श्रेय इति देहत्यागस्य पुरुषार्थत्वेनानुसंधानादेतदनुसंधानममुं तत्र प्रवर्तयतीत्यर्थः । अथवा वैधतयागमनसमये भगवद्विषये उपायत्वानुसंधानमस्य निवर्तकं, रागप्राप्ततयाऽऽगमनसमये तद्विषये उपेयत्वानुसंधानमस्य प्रवर्तकमित्यर्थः ।

एवं साधनबुद्ध्या विना तद्विषयप्रावण्यातिशयेन स्वदेहत्यागोपयुक्ता स्थितिः कथं स्यादित्यत आह— अप्राप्तेत्यादि ।

स्वरूपाप्राप्तेषु हेयविषयेषु प्रवणे स्वनाशेनापि स विषयो लभ्यः इति स्वदेहत्यागे वर्तमाने सति स्वरूपप्राप्तविलक्षणवि-

---

अप्राप्तविषये सक्ते प्राप्तिरावश्यकी खलु ।
इति स्थिते न वक्तव्यं प्राप्तप्रवणकस्य हि ॥९३॥

होनेके समय इस विषय की हानि को देखनेकी अपेक्षा मरना ही अच्छा है ऐसा समझ देहत्याग को पुरुषार्थतया अनुसंधान करनेसे वह अनुसंधान इस चेतन को देहत्याग में लगाता है । यद्वा विधिप्रयुक्त होनेपर भगवद्विषय में उपायत्वानुसंधान देहत्याग को रोकता है, रागप्राप्त होनेपर उस विषय में प्राप्यत्वानुसंधान देहत्याग का प्रवर्तक है ।

इस प्रकार साधनबुद्धि को छोड भगवद्विषय में अधिक प्रेम से अपने देह को छोडनेकी अवस्था हो सकती है क्या ? इस आकांक्षा में कहते हैं— अप्राप्त इत्यादि से ।

अप्राप्तविषयों में आसक्त पुरुष उस को प्राप्त होनेके लिये व्याकुल
होता है तो प्राप्तविषय में आसक्त होनेवाला पुरुष को कहना ही क्या ॥९०॥

स्वरूप प्राप्त न होनेवाले हेय विषयों में आसक्त पुरुष अपने प्राण को छोड कर भी उस विषय को प्राप्त होनेके लिये यत्न करता है तो स्वरूपप्राप्त विलक्षण

अनुष्ठानं चाननुष्ठानं चोपायकोटौ नान्वेति ॥९४॥

---

पद्ये प्रवणस्य तद्विषये प्राणत्यागं स्वनाशनरूपोयं संभवतीति किंपुनरन्यथा सिद्धमित्यर्थः । कस्यां चिद्वेश्यायां कश्चित्सक्तस्तस्या व्याध्यतिशयसमये इयं स्वस्था तिष्ठति चेदहं मच्छिरश्छित्त्वार्पयामीति कांचिद्देवतां प्रार्थ्यानंतरं स्वमस्तकं छित्त्वा आर्पयदिति प्रसिद्धं हि ।

उपायोपेयाधिकारयोरावश्यकतयोक्तान्यानुष्ठानेभ्यो विलक्षणतया शास्त्रसिद्धत्वादनन्यसाधनस्याननुष्ठानरूपोयं देहत्यागो रागप्राप्ततया दुस्त्यजत्वेप्युपायकोटावन्वयं विना न तिष्ठतीत्याह—अनुष्ठानं चेत्यादि ।

अनुष्ठानतयोक्तस्वशक्तित्यागदयः प्रेमादयश्च उपायोपेया

---

अनुष्ठानतद्भावौ नोपायकोटौ समन्वितौ ॥९४॥

विषय परमात्मा में आसक्त पुरुष उस विषय को उद्देश कर प्राण को त्याग करेगा इस में क्या कहना । एक वेश्या के विषय में एक पुरुष अत्यासक्त होनेपर जब वेश्या व्याधिग्रस्त हुई तब वह पुरुष देवता के सामने प्रार्थना किया कि यह वेश्या व्याधि से मुक्त हो तो मैं अपने शिर को काट तुम्हें चढाऊंगा । बाद वेश्या नीरोग होनेपर अपने शिर को काटकर बलि दान दिया, यह बात प्रसिद्ध है ।

उपायोपेयाधिकारों के उपयुक्ततया कहेगये अनुष्ठानों के तरह न हो उपायतया शास्त्रसिद्ध होने से प्रपन्न को अनुष्ठान करनेके अयोग्य देहत्याग रागप्राप्त होनेसे किये विना न रहसकनेपर भी उपाय कोटि में मिले विना नहीं रहेगा इस शंका में— कहते हैं—

अनुष्ठान और अननुष्ठान उपाय कोटि में न गिना जायगा ॥९२॥

यथा अनुष्ठानतया उक्त स्वशक्तित्यागादि और प्रेमादि ये दोनों उपाय

अनन्योपायत्वं, अनन्योपेयत्वं, अनन्यदेवत्वं
च यथा नष्टं स्यात्तथा प्रवृत्तिं पश्यामः ॥९५॥

---

धिकारांतर्भूतत्वादुपायकोटौ यथा नानुयंति तथाननुष्ठानतयो-
क्तदेहत्यागश्च उपायबुध्यानुष्ठानाभावेन रागप्राप्तत्वादुपायको
टौ नान्वेति। उपायाधिकारेंतर्भवतीत्यर्थः। उपायतया शास्त्रसि-
द्धत्वेपि उपायबुध्याऽनुष्ठितस्यैव हि उपायत्वं, अन्यथा प्र-
पन्नेनोपायबुद्धिं विना क्रियमाणानां पुण्यदेशवासादीनामप्यु-
पायकोटावन्वयप्रसंगः।

अथवाऽस्याः प्रवृत्तेरुपायकोटावन्वयेप्यनन्योपायत्वस्य न्यू-
नता स्यादित्येतावदेव हि, इदं प्रेमपरवशानामवद्यं न भवतीति
वक्तुं प्रेमपरवशानां प्रवृत्तिं दर्शयति— अनन्योपायत्वमि-
त्यादिना।

---

अनन्योपायत्वं चानन्योपेयत्वमनन्यदेवत्वम्
नष्टं यथा स्यात्तथा हि प्रवृत्तिं पश्यामि सूरीणाम् ॥९५॥

और उपेयाधिकारांतर्गत होनेसे उपायकोटि में नहीं गिने जायंगे तद्वत् अनुष्ठान-
तया उक्त देहत्याग उपायबुद्धि से अनुष्ठित न हो रागप्राप्त होनेसे उपायकोटि में
नहीं गिना जायगा, किंतु उपेयाधिकार में गिना जायगा। उपायतया शास्त्र सिद्ध
होनेपर भी उपायबुध्या अनुष्ठान करनेसे ही उपाय माना जाता है, ऐसा न
मानै तो प्रपन्न से उपाय बुद्धि को छोड उपेय बुद्धि से किये जानेवाले पुण्यदेश-
वासादि उपायकोटि में गिने जायंगे।

यद्वा यह प्रवृत्ति उपायकोटी में गिनेजाने पर अनन्योपायत्व की हानि
होगी इतना ही किंतु प्रेमपरवशों को दोष नहीं ऐसा कहनेके लिये प्रेमपरवशों
की प्रवृत्तियों को दिखाते हैं—अनन्योपायत्व इत्यादि।

अनन्योपायत्व, अनन्योपेयत्व और अनन्यदैवत्व यह
तीनों जैसे नाश हों तैसे प्रवृत्तियों को देखते हैं ॥९५॥

अनन्योपायत्वभंजकप्रवृत्तिर्नाम– 'सम्यक् व्रतमनुतिष्ठामि' 'अनुष्ठीयमानं व्रतं बुध्यस्व' 'कुत्सितस्त्री सती मडल्ग्रहणं करोमि' 'श्रीनामग्रहणं कृत्वा' 'ग्रहणान्न निवर्तेहं दीर्घस्पृहणीयतालशाखायाः' 'लोकस्था यथा जानीयुस्तथा ग्रहणं करोमि स्पृहणीयतालशाखायाः' इति व्रतानुष्ठानमडल्ग्रहणप्रभृतिव्यापारेष्वन्वयः। अनन्योपेयत्वभंजकप्रवृत्तिर्नाम — तस्यैवातिशयवर्द्धनमेव पुरुषार्थ इति स्थितिं विहाय 'अस्माकमेवानंदः' इति 'परिशुद्धदलशीतलसुंदरतुलसीं गृहीत्वाऽलंकुर्मः' इति स्वातिशयसंपादने प्रवृत्तिः। अनन्यदैवत्वभंजकप्रवृत्तिर्नाम– 'कामदेव!'त्वां त्वदनुजं चाश्रये' 'वक्तव्यमेकमस्त्यत्र मत्स्वामिन्'इति कामविषये देवताबुद्धिं कृत्वाऽऽराधनकरणम्। पश्याम इति–प्राप्यवस्तुनि प्रावण्यातिशयेन महावैभववत्स्वप्येवं पश्याम इत्यर्थः। पूर्वोक्तप्रवृत्तेरुपायकोटावन्वयो वस्तु

---

अनन्योपायत्व को नाश करनेकी प्रवृत्ति माने— 'अच्छीतरह व्रत करता हूं' 'हमारे व्रतानुष्ठान को तुम देखो' दुष्ट स्त्री हो मैं मडल ग्रहण करूंगी' 'नामों को अभ्यास कर' 'मैं विशाल ताल शाखा लिये विना न रहूंगी' 'यथा लोग जानें तथा मडल ग्रहण करूंगी' ऐसा व्रतानुष्ठान और मडल ग्रहण इत्यादि व्यापारों में लगना। अनन्योपेयत्व को नाश करनेकी प्रवृत्ति माने– सर्वेश्वर को अतिशय करना ही पुरुषार्थ है ऐसा न रह 'हम को अच्छा होगा' 'परिशुद्ध दल शीतल तुलसी को हम धारण करेंगी' ऐसा अपने अतिशय को ढूंढना। अनन्यदैवत्व का नाशक प्रवृत्ति माने— 'कामदेव' 'तुम और तुमारे भ्राता को प्रणाम करते हैं' 'कहने की एक बात है हे स्वामिन्' ऐसा कामदेव में देवताबुद्धि से आराधना करना। देखते हैं माने– प्राप्यवस्तु में अधिक प्रेम से बडे बडे ज्ञानीलोगों में देखते हैं। पूर्वोक्त प्रवृत्ति को उपायकोटि में गिनना वस्तुस्वभाव से मात्र है, तैसा न हो साक्षात् उपाय बुद्धि से अनुष्ठित इन उपायों को भी प्रेम

## ज्ञानविपाककार्याज्ञानेनागताः सर्वे पदे सुवर्णार्घाः ॥

गत्या स्यादित्येतावदेवहि, तथा विना साक्षादुपायबुद्ध्याऽनुष्ठिताः खल्विमे; तस्मात्प्रेमपरवशानामिदमवद्यं न भवतीति तात्पर्यम् ।

एतत्सर्वं कालुष्येणागतं हि; अज्ञानमूलतयाऽऽगतं सर्वमनादरणीयं न भवति किमित्यत आह — ज्ञानेत्यादि ।

ज्ञानविपाको नाम — 'ज्ञानविपाकसुखं' इत्युक्तप्रकारेण ज्ञानस्य परिपाकरूपा भक्तिः । तत्कार्यमज्ञानं नाम — तादृशभक्त्यतिशयप्रयुक्तः प्राप्ताप्राप्तविवेकाभावः । तेनागताः प्रवृत्तिविशेषाः सर्वे पदे सुवर्णार्घाः इति—अतिश्लाघ्या इत्यर्थः । कर्मनिबंधनाज्ञानप्रयुक्तमेव हेयमिति भावः ।

---

ज्ञानविपाककार्येण ह्यज्ञानेनागताः खलु ।
सर्वे पदे सुवर्णार्घा भवंत्येव न संशयः ॥ ९६ ॥

स्वभाव से उपाय नहीं मानते हैं तो वस्तुस्वभाव से किये जानेवालों को उपाय कैसे मानेंगे, इस लिये प्रेमपरवशों को यह दोष नहीं ।

यह सब व्याकुलता से हुई है, अज्ञान द्वारा होनेवाले आदर करने योग्य नहीं है इस शंका में कहते हैं—

ज्ञानविपाक कार्य अज्ञान से होनेवाले सब पदपद में अमूल्य हैं ॥ ९६ ॥

ज्ञानविपाक माने—'ज्ञानफल आनंद' इस वचनानुसार ज्ञान का परिपाकरूप भक्ति है । उस का कार्य अज्ञान माने—उस भक्त्यतिशय से होनेवाले प्राप्ताप्राप्तविवेकाभाव । उससे होनेवाले प्रवृत्ति विशेष सब पदेपदे अमूल्य हैं माने—अति श्लाघ्य हैं । कर्म के कारण होनेवाले अज्ञान से किये जानेवाले ही हेय हैं ।

उपायफलं उपेयांतर्गता च
सा उपायप्रतिबंधिका न भवति ॥ ९७॥

---

तथाप्येतादृशातिप्रवृत्तिरेतस्य प्रवृत्तिषु किंचिदप्यसहमानस्य सिद्धोपायस्य कार्यकरत्वप्रतिबंधिका न भवति किमित्यत आह— उपायेत्यादि ।

उपायफलमिति—सिद्धोपायेन तेन कृतकृषिफलमित्यर्थः । 'अज्ञाननिवृत्तिपूर्वकभक्तिरूपापन्नं ज्ञानं प्रसादितवान्' 'महद्विवादजनककामं समुद्रतुल्यतया वर्द्धयन्मेघसदृशविग्रहो अस्मत्कृष्णः' इत्येवंभूतप्रवृत्तिहेतोर्भक्तेरुत्पादको वर्द्धकश्च स एव हि । तस्माद्भक्तिपारवश्यनिबंधना प्रवृत्तिरुपायफलमित्युच्यते । उपेयांतर्गताचेति— प्राप्यत्वरायास्तीव्रतया नेत्रभ्रमणेनैतस्य

---

उपायस्य फलं तद्वदुपेयांतर्गता च सा ।
प्रवृत्तिर्न भवत्येव ह्युपायप्रतिबंधिका ॥ ९७॥

तथापि यह अति प्रवृत्ति, चेतन की प्रवृत्तियों में किसी को न सहनेवाले सिद्धोपाय के अपना कार्य करनेमें प्रतिबंधक न होगी क्या ? इस शंका में कहते हैं—उपाय इत्यादि ।

उपाय के फल और उपेय के अंतर्गत होने-
वाले उपाय के प्रतिबंधक न होयंगे ॥ ९७॥

उपाय के फल—सिद्धोपायभूत सर्वेश्वर कर्तृक कृषि का फल, 'अज्ञाननिवृत्तिमत्यानंद दिये हैं' 'अत्यधिक काम को समुद्र के तुल्य बढानेवाले मेघसदृश विग्रह मेरा कृष्ण' इस प्रकार की प्रवृत्तिहेतु भक्ति को उत्पादक और वर्धक भी वही है । इस लिये भक्तिपारवश्यहेतुक इस प्रवृत्ति को उपायफल कहते हैं । उपेय के अंतर्गत—'प्राप्यवस्तु में त्वराके आधिक्य से नेत्र घूम यह आश्रित

**साध्यसमानं विलंबासहमिति हि साधनस्याधिक्यं, साध्यप्रावण्यहेतुना हि साधनेऽवगाहनम् ॥ ९८ ॥**

---

संभ्रमाः सर्वे मद्विषये आशां कृत्वा एवमवस्था लब्धेति तन्मुखविकासस्य हेतुत्वात्, मडल्ग्रहणप्रभृतय एताः प्रवृत्तयस्तन्मुखविकासार्थं क्रियमाणकैंकर्यवदुपेयांतर्भूता इत्यर्थः । उपायप्रतिबंधिका न भवतीति— एवं भूता उपायनिष्ठकार्यकरत्वविरोधिका न भवंतीत्यर्थः ।

एवं मडल्ग्रहणप्रभृतिः सिद्धोपायप्रतिबंधिका न भवतीत्युक्त्वाऽस्य सिद्धोपायसाम्यं विवक्षन्नाह–साध्यसमानमिति वाक्यद्वयेन ।

साध्यवस्तुन एव साधनत्वात्साध्यस्य समानमिति, फल-

---

साध्यतुल्यं त्वरा चेति साधनाधिक्यमुच्यते ।
साध्यप्रावण्यहेतोर्हि साधने चावगाहनम् ॥ ९८ ॥

व्याकुल होरहा है ये सब मेरी आशा से ही' ऐसा समझ सर्वेश्वर संतुष्ट होते हैं, इस लिये मडलग्रहण आदि ये प्रवृत्तियां उन के मुखोल्लासार्थ क्रियमाण कैंकर्य के सदृश हो उपेय में अंतर्गत होती हैं। उपाय के प्रतिबंधक न होयंगे–इस प्रकार के ये प्रवृत्तियां उपायभूत सर्वेश्वर के कार्य करनेमें प्रतिबंधक न होयंग ।

इस प्रकार मडलग्रहण प्रभृति सिद्धोपाय के प्रतिबंधक न होयंगे ऐसा कह, वे सिद्धोपाय के सदृश हैं ऐसा कहते हैं–साध्यसमान इत्यादि वाक्यद्वय से ।

साध्यसमान और विलंबासह होनेस ही साधन श्रेष्ट होता है ।

साध्य में प्रेमाधिक्य होनेसे ही साधन में प्रवृत्त होते हैं ॥ ९८ ॥

साध्यवस्तु ही साधन होनेसे साध्य के सदृश कहते हैं। फलविलंब को न

विलंबं न सहते शीघ्रं कार्यं करोतीति च खल्वितरसाधनेभ्यः सिद्धसाधनस्याधिक्यं, साध्ये प्रावण्येन हेतुना ह्येतत्साधनपरिग्रह अवगाहनं; तदुभयमप्यस्याप्यस्तीति तात्पर्यम् । तथा हि- मङ्गलग्रहणप्रभृतीनां प्रवृत्तीनां शेष्यातिशयकरत्वेन कैंकर्यरूपसाध्यस्य समानत्वाच्च, मङ्गलग्रहणं व्रतानुष्ठानं कुर्यामिति निश्चयसमय एव सर्वेश्वरः शीघ्रमागत्यैतेषां पादे यथा पतति तथा करणेन फलविलंबासहत्वाच्च, सिद्धसाधनवदितरसाधनेभ्य आधिक्यविशिष्टत्वात्, साध्यप्रावण्यहेतुकावगाहनरूपाकारस्यापि तौल्यात् । अनेन सिद्धोपायं विनाप्यस्यैव कार्यकरणशक्तत्वात तत्प्रतिबंधकरूपदूषणं नास्तीति भावः ।

अथवा 'उपायप्रतिबंधिका न भवति' इत्यमुमर्थं मुखभेदेनोपपादयति— साध्येत्यादिवाक्यद्वयेन । दुग्धस्यौषधत्ववत् साध्यवस्तुन एव साधनत्वात्, सारस्ये साध्येन तुल्यं, साध्य-

---

सह शीघ्र कार्य करनेवाले होनेसे ही इतरसाधनापेक्षया सिद्धसाधन श्रेष्ठ होता है । साध्य में प्रेमाधिक्य होनेसे ही इस साधन को ग्रहण करते हैं । वे दोनों पूर्वोक्त प्रवृत्तियो में हैं । तथाच- मङ्गल ग्रहण प्रभृत्ति प्रवृत्तियां शेषी के अतिशय करने वालीं होनेसे कैंकर्यरूप साध्य के समान होते हैं । इस लिये ' मङ्गल ग्रहण और व्रतानुष्ठान करूंगी ' ऐसा प्रवृत्त होनेपर यथा सर्वेश्वर त्वरा से आ इन के चरणों में गिरें तथा करने से फलविलंब को न सहते हैं । इस लिये सिद्धसाधनके तरह इतर साधनों की अपेक्षा श्रेष्ठ हो साध्य में प्रावण्यद्वारा इन में उतरनेके आकार भी समान होते हैं । इस से सिद्धोपाय के विना ये ही कार्य करने में समर्थ होनेसे सिद्धोपाय के प्रतिबंधकत्वरूप दोष से रहित हैं ।

अथवा- ' उपाय के प्रतिबंधक न होयंगे ' इस वाक्य को और एक प्रकार से उपपादन करते हैं- साध्य इत्यादि वाक्य द्वय से ।

जैसे दूध औषध होता है तैसे साध्यवस्तु ही साधन होनेसे भोग्यता में

प्रापणसमये विलंबमसहित्वा शीघ्रं प्रापयतीति खलु साधनांतरात् सिद्धसाधनस्याधिक्यं; इदनीमेतत्कथनं—एतदाकारद्वयं च साध्यप्रावण्यहेतुः स्यादिति ज्ञापयितुं; एवं स्थितत्वात्स्वेन हेतुनोत्पन्नेन क्षणकालविलंबासहव्याकुलतावहेनात्यंततीव्रेण साध्यप्रावण्येन हेतुना खलु मडल्ग्रहणप्रभृतिसाधनेऽवगाहनमित्यर्थः। तस्मादेवंभूतप्रावण्याधिक्येन नेत्रभ्रमणेन कृता एताः प्रवृत्तय उपायस्त्वरितं कार्यं कर्तुमुपयुक्ताः नतु तत्प्रतिबंधिका इति भावः।

एवं 'अस्य वैधतया आगतो हि त्याज्यः इत्यारभ्य एतावत् पिल्लैतिरुनरैयूररैयर्प्रवृत्तिव्याजेन भगवत्प्रपन्नत्वेऽपि उपेयपरस्य तद्विषयप्रावण्येनागतः स्वदेहत्यागो दुस्त्यजः, उपायबुद्ध्याऽनुष्ठितत्वाभावादयं चोपायकोटौ नान्वेति, वस्तुगत्यान्वयेऽपि प्रेमपरवशानां दोषाय न भवति, बुद्धिपूर्वकानन्योपायत्वादिभंज-

---

साध्य के समान होते हैं। साध्य प्राप्ति के लिये कालविलंब को न सह शीघ्र प्राप्त करावेगा ऐसा समझकर ही साधनांतरों की अपेक्षा सिद्धसाधन को श्रेष्ठ कहते हैं। अब इस का वैभव कहने का कारण— ये दोनों आकार साध्य प्रावण्य हेतु होते हैं ऐसा भान होनेसे सर्वेश्वर की अप्राप्ति से क्षणकाल विलंब को न सह व्याकुल करने वाले साध्यप्रावण्य द्वारा ही मडल ग्रहण प्रभृति इन साधनों में प्रवृत्त होते हैं। इस कारण इस प्रकारके प्रावण्य की अधिकता से की जानेवाली प्रवृत्तियां उपायभूत सर्वेश्वर ऊपर गिरके कार्य करने योग्य होती हैं, उस उपाय के प्रतिबंधक नहीं हैं ऐसा तात्पर्य है।

इस प्रकार 'उस चेतन के विधिप्रयुक्त आनेवाले ही त्याग करनेयोग्य हैं' ऐसा प्रारंभ कर यहां तक कहते हुए पिल्लै तिरुनरैयूररैयर की प्रवृत्ति के बहाने से, भगवत्प्रपन्न होनेपर भी उपेय में आसक्त चेतन को भगवद्विषयप्रावण्य द्वारा स्वदेहत्याग करने से हटना असंभव है, उपायबुद्धी से अनुष्ठित न होनेसे वह उपायकोटि में न गिनाजायगा; वस्तुस्वभाव से उपायकोटि में गिनेजानेपर भी

अस्योत्पद्यमानानामात्मगुणानां
सर्वेषामिदं प्रावण्यं प्रधानहेतुः ॥९९॥

---

कप्रवृत्तीनां विशदतमज्ञानवस्तु दृष्टत्वादासां चाज्ञानमूलत्वेपि प्रेमकार्याज्ञानप्रयुक्तत्वादतिश्लाघ्याः, सिद्धोपायप्रतिबंधिकाश्च न भवंति । तावन्मात्रं विना तत्तुल्यतया वक्तुं योग्यत्वरूपः खल्वासां वैभव इत्युक्तत्वादुपेयाधिकारे स्वोपेक्षेत्युक्तोयमनन्यसाधनस्योचितः किमित्यतिशंकापरिहारः कृतः ।

एवंभूतप्रावण्यं विषयवैलक्षण्याधीनं खलु, शमदमाद्यात्मगुणा एव हि अधिकारं प्रकाशयंतीत्याकांक्षायां तानपीदमेवोत्पादयतीत्याह– अस्येत्यादिना ।

'शमदमानियतात्मा' 'अमानित्वं' इत्यादिपूक्तप्रकारेणास्य चे-

---

चेतनोत्पद्यमाने च जीवात्मगुणसंनिधौ ।
इदं प्रावणयकं तत्र प्रधानं कारणं मतम् ॥९९॥

प्रेमपरवशों को दोषजनक नहीं हैं; बुद्धिपूर्वक अनन्योपायत्व भंजक व्यापार बडे बडे ज्ञानियों में भी दीखने से, ये अज्ञानमूल होनेपर भी प्रेमकार्य अज्ञान से आये हैं, इस लीये अति प्रशंसनीय हैं । सिद्धोपायप्रतिबंधक न होयंगे । इतना ही नहीं सिद्धोपाय के सदृश कहनेयोग्य इन का माहात्म्य है ऐसा कहनेसे, उपेयाधिकार में 'अपने को उपेक्षा करना' ऐसा कहा हुआ यह अनन्यसाधनत्व का उचित है क्या ? इस शंका का परिहार कियागया है ।

एवंभूत प्रावण्य विषयवैलक्षण्य के अधीन है, शमदमादि आत्मगुण ही अधिकार को प्रकाशित करते हैं– ऐसा पूछने पर, उन गुणों को भी यह प्रावण्य उत्पादन करता है ऐसा कहते हैं— इस में इत्यादि ।

इस में होनेवाले संपूर्ण आत्मगुणों का प्रधान हेतु यह प्रावण्य है ॥९९॥

'स्वामिविषये मनसि लग्ने' 'परमात्मनि यो रक्तः'
'दृष्ट्वा श्रुत्वा स्पृष्ट्वा घ्रात्वा भुक्त्वा ॥ १०० ॥

---

तनस्योत्पत्त्यर्हा आत्मगुणा अनेके, तेषां सर्वेषामस्य प्रावण्यस्य प्रधानहेतुत्वं नाम– अनुकूलसहवासशास्त्राभ्यासाचार्योपदेशादिभ्यो हेत्वंतरेभ्यो मुख्यहेतुत्वम् ।

अस्मिन्नर्थे प्रमाणमुपादत्ते-- स्वामिविषये इत्यादि ।

'स्वामिविषये मनसि लग्ने स्त्रीणां भुजे हस्तं त्यक्त्वा शास्त्रे मनः स्थापयितुं सुलभं भवति' इति सर्वेश्वरविषये हृदये प्रवणे भोग्यानां स्त्रीणां भुजालिंगने आशानिवृत्त्या प्रमाणेषु मनः स्थापयितुं सुलभं भवतीति । 'परमात्मनि यो रक्तो विरक्तोऽ-

---

'परमात्मनि यो रक्तः' 'स्वामिनो विषये मनः' ।
'दृष्ट्वा श्रुत्वा च' तत्राहुः प्रमाणं पाशुरादयः ॥१००॥

'शमदम स्वभाववाला' 'अभिमान का अभाव' इत्यादि में उक्त प्रकार इस चेतन में होने योग्य आत्मगुण बहुत हैं' उन सब गुणों का प्रधान हेतु यह प्रावण्य मानें– अनुकूलसहवास शास्त्राभ्यास और आचार्योपदेशादि रूप अन्य हेतुओं की अपेक्षा यह प्रावण्य मुख्य हेतु है ।

इस अर्थ में प्रमाण दिखाते हैं— सर्वेश्वर के विषय में इत्यादि ।

'सर्वेश्वर के ऊपर मन लगने पर' 'परमात्मा में जो
आसक्त होता है' 'देख सुन छू सूंघ खा' ॥ १०० ॥

'सर्वेश्वर के ऊपर मन लगने पर युवतियों के भुजाओं को छोड शास्त्र में मन लगाने लगेगा' ऐसा सर्वेश्वर के ऊपर हृदय के लगने पर भोग्यभूता युवतियों के भुजाओं से आलिंगन करनेकी आशा छोड प्रमाणों में मन लगने योग्य होगा, 'परमात्मा में जो आसक्त होता है वह परमात्म-

आत्मगुणेषु प्रधानः शमो दमश्च ॥ १०१ ॥

---

परमात्मनि' इति परमात्मविषये रक्तस्तेन परमात्मेतरविषये वि-रक्तो भवतीति च । 'तेजिष्ठकटकविशिष्टायां श्रियि च त्वयि च नित्यवासं कुर्वतोर्दृष्ट्वा श्रुत्वा स्पृष्ट्वा घ्रात्वा खात्वा भ्रमद्भिः पंचेंद्रियैर्दृष्टमानंदं दुर्ज्ञेयापरिनितक्षुद्रानंदं च त्यक्तवानस्मि' इति, महालक्ष्म्यां त्वयि च कस्मिंश्चिद्देशविशेषे तिष्ठतोः सहावस्थानं दृष्ट्वा तत्र प्रवण ऐश्वर्यकैवल्ययोर्विरक्तोऽभवमिति भगवद्विषयप्रावण्यमितरविरक्तिहेतुतयोक्तं हि ।

भगवद्विषयप्रावण्यमात्मगुणानां सर्वेषां प्रधानहेतुरिति प्रस्ताव्येतरविषयविरक्तिहेतुत्वमात्रे प्रमाणप्रदर्शनं कथमिति शंकायामाह — आत्मगुणेष्वित्यादि ।

---

शमो दमः प्रधानौ स्त आत्मनो गुणराशिषु ॥१०१॥

व्यतिरिक्त विषयों में विरक्त होता है ।' ऐसा— परमात्मा के विषय में रक्त होने से इतर विषयों में विरक्त होता है, 'भासमान कडावाली श्रीदेवी और आप दोनों नित्यवास करने पर देख चतुर हो, देख सुन छू सूंघ खा भ्रमण करने वाले पंचेंद्रियों से अनुभूत सुख और दुर्ज्ञेय अपारिमित अनिक्षुद्र सुख (इन दोनों) को छोडदिया हूं' महालक्ष्मी और आप दोनों परमपद में एकासन में विराजमान स्थिति को देख उस में प्रवण हो ऐश्वर्य और कैवल्यों में विरक्त हुआ हूं— ऐसा भी भगवत्प्रेम इतर विषयों में विरक्ति का कारण कहा गया है ।

भगवत्प्रावण्य सब आत्मगुणों का प्रधान हेतु कह इतर विषय विरक्ति का हेतुत्वमात्र प्रमाणों को दिखाये यह कैसा ? इस शंका में कहते हैं— आत्मगुणों में प्रधान शम और दम हैं इति ।

आत्मगुणों में प्रधान शम और दम हैं ॥ १०१ ॥

शमः— अंतःकरणनियमनं, दमः— बाह्यकरणनियमनम् । 'शमश्चित्तप्रशांतिः स्यात् दमश्चेंद्रियनिग्रहः' इत्युक्तं हि । 'क्षमा सत्यं दमः शमः' इत्यत्र दमः— बाह्यकरणानामनर्थविषयेभ्यो नियमनं, शमः— अंतःकरणानां तथा नियमनमिति भाष्यकृदवोचत् । वैपरीत्येन कथनस्थलमप्यस्ति । एतादृशशमदमसत्वस्थलेऽन्ये गुणाः स्वत एव भवेयुरित्युक्तत्वात्प्रधानभूतयोरेतयोर्हेतुरित्यत्र प्रमाणं प्रदर्शितमिति भावः । अथवा पूर्वोक्तविरक्तिहेतुत्वं सकलात्मगुणोत्पत्तेर्हेतुरित्यस्योपलक्षणमित्यभिप्रेत्य तादृशात्मगुणेषु प्रधानः क इति शंकायामात्मगुणेषु प्रधानः शमो दमश्चेत्याह ।

एतच्छमदमोत्पत्तावस्य जायमानफलपरंपरामाह — अनयोरुभयोरित्यादिना ।

---

शम माने— अंतःकरण को नियमन करना । दम माने— बाह्यकरणों को नियमन करना ।

'शम माने—चित्त को शांत रखना । दम माने— पंचेंद्रियों को निग्रह करना ।' ऐसा कहा है । 'क्षमा सत्य दम और शम' इस स्थल में— 'दम माने— बाहर के पंचेंद्रियों को अनर्थविषयों से रोकना, शम माने— अंतःकरणभूत मन को रोकना, ऐसा ही भाष्यकारस्वामी जी भी कहे हैं । व्यत्यास कर कहनेके स्थल भी हैं। ये शमदम जहां होते हैं तहां और गुण स्वयमेव होते हैं । इस लिये प्रधानभूत इन शमदमादि गुणों का कारण बताया गया । यद्वा— पूर्वोक्त विरक्ति और सकलात्मगुणोत्पत्ति इन दोनों का हेतु बताया गया । इन आत्मगुणों में मुख्य कौन हैं ? इस शंका में 'आत्मगुणों में प्रधान शम और दम हैं' ऐसा कहे हैं । ऐसा भी योजना हो सकेगी समझना ।

इन शमदमादियों के होनेपर इस चेतन के होनेवाले फलपरंपरा को कहते हैं— इन दोनों के इत्यादि ।

अनयोरुभयोरुत्पत्तावाचार्यो वश्यो भवति ।
आचार्यवश्यतानंतरं मूलमंत्रो हस्तगतो भवति ।
मूलमंत्रे हस्तगते ईश्वरो वश्यो भवति ।
ईश्वरवश्यतानंतरं 'वैकुंठमहानगरमन्यच्च हस्तगत-
मेव' इत्युक्तप्रकारेण प्राप्यभूमिः सुलभा भवति ॥

---

भगवत्प्रावण्यहेतुकपरिपूर्णशमदमयोः पूर्वमुक्तत्वेप्यत्राचा-
र्यांगीकारस्य पूर्वभावित्वात्संकोचेनोच्यते । अनयोः शमदम-
योरुभयोरुत्पत्तावाचार्यस्य वश्यत्वं नाम— एतदात्मगुणं दृष्ट्वा

---

उभयोर्जातयोश्चैवाचार्यो भवति वश्यकः ।
आचार्ये च वशं प्राप्ते मंत्रो हस्तगतो भवेत् ।
श्रीमंत्रे हस्तजाते तु वश्यो भवति माधवः ।
यदा स्यादीश्वरो वश्यः प्रपन्नस्याधिकारिणः ।
'महानगरवैकुंठस्तद्भिन्नश्च करे स्थितः ।'
इति चोक्तप्रकारेण प्राप्यभूः सुलभा भवेत् ॥ १०२ ॥

इन दोनों के होनेपर आचार्य हस्तगत होता है । आचार्य के हस्तगत होनेपर श्रीमंत्र हस्तगत होता है । श्रीमंत्र के हस्तगत होनेपर ईश्वर हस्तगत होता है । ईश्वर के हस्तगत होनेपर 'वैकुंठमहानगर और अन्य सब हस्तगत होते हैं' इस वचनानुसार प्राप्यभूमि हस्तगत होती है ॥ १०२ ॥

यद्यपि भगवत्प्रेम के कारण होनेवाले परिपूर्ण शमदमादिगुणों को पहिले कहे थे तथापि यहां आचार्यांगीकार के लिये पहिले होने योग्य समझ फिर भी कहते हैं ।

प्रीतः संसारनिवर्तकं महाश्रीमंत्रं यथा सार्थमुपदिशेत्तथैतद्व-श्यत्वम् ।

'तस्मै स विद्वानुपसन्नाय सम्यक् प्रशांतचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्याम्' इति शमदमोपेतस्यैवोपसन्नस्य हि ब्रह्मविद्योपदेष्टव्येत्युक्तम् । अस्यां श्रुत्यामाचार्योपसत्तिहेतुत्वेनोक्तयोः शमदमयोः 'एतेन श्रवणोपयुक्तमवधानं विवक्षितं, न तूपासनोपयुक्तात्यंतेंद्रियजयादिः' इति हि श्रुतप्रकाशिकाचार्यैर्व्याख्यानं कृतम् ।

'तन्मंत्रं ब्राह्मणाधीन'मिति श्रीमंत्रस्याचार्याधीनत्वादुपदेष्ट्राचार्यवश्यतानंतरं तदुपदेशमुखेन सार्थकमयं हृदये प्रतिष्ठितो भवतीत्यर्थः । 'ब्रह्मविद्ब्राह्मणो विदुः' इत्युक्तत्वात् 'ब्राह्मणा-

---

इन शमदम दोनों के होनेपर आचार्य हस्तगत होता है माने— इन आत्म-गुणों को देख संतुष्ट हो यथा संसारनिवर्तक बृहत् श्रीमंत्र को अर्थ सहित उपदेश करें तथा वश्य होता है ।

'वह विद्वान् आचार्य पास में आया हुआ शान्तचित्त शमविशिष्ट उस शिष्य को जिस विद्या से परिणामरहित त्रिकालवर्ति परमपुरुष को जानेगा उस ब्रह्मविद्या को यथार्थतया उपदेश करें।'

ऐसा शमदमविशिष्ट पास में आयाहुआ शिष्य को ब्रह्मविद्या का उपदेश करनेको कहा । इस श्रुति में आचार्य के पास जानेका उपयुक्ततया कहे हुए शमदमादियों का 'श्रवण करनेके उपयुक्त सावधानचित्तता मात्र कही गई, उपासनोपयुक्त अत्यंत इंद्रियजयादि नहीं कहागया' ऐसा श्रुतप्रकाशिकाचार्य व्याख्यान किए हैं ।

आचार्य हस्तगत होनेपर श्रीमंत्र हस्तगत होता है माने— 'वह मंत्र ब्राह्मणों के अधीन है' ऐसा श्रीमंत्र आचार्य्याधीन होनेसे उपदेशकर्ता के हस्तगत होनेपर तदुपदेश द्वारा अर्थसहित इस के हृदय में प्रतिष्ठित होता है । 'ब्रह्म के जाननेवाले को

## प्राप्यलाभः प्रापकेण, प्रापकलाभो मूलमंत्रेण,

---

धीन'मित्यत्र ब्राह्मणशब्देनाचार्य उच्यते ।

'मंत्राधीनं च दैवतम्' इति श्रीमंत्राधीनो वर्तत इत्युक्त्वा- दर्थसहिते तस्मिन्प्रातिष्ठिते तत्प्रतिमाद्य ईश्वरोऽस्यानिष्टनिवृ- त्तिपूर्वकेष्टप्राप्तेः प्रापको भवति ।

'दैवाधीनं जगत्सर्वम्' इत्युभयविभूतेरपीश्वराधीनत्वात्त- स्मिन्प्रापकत्वेन वश्ये सति प्राप्यभूमिभूतं श्रीवैकुंठमस्यात्यं- तसुलभं भवतीत्यर्थः ।

शमदमोत्पत्तावुत्तरोत्तरमेतत्सर्वं सिध्यतीति प्रकारमा- रोहक्रमेणोक्त्वास्मिन्यं प्रति यस्य हेतुत्वमुक्तं तन्नियतमित्यर्थ- मवरोहक्रमेणाह — प्राप्यलाभ इत्यादिना ।

---

ब्राह्मण कहते हैं' इत्युक्त प्रकार 'ब्राह्मणों के अधीन' इस स्थलमें ब्राह्मणशब्द आचार्य को कहता है ।

श्रीमंत्र के हस्तगत होनेपर ईश्वर हस्तगत होता है माने—'देवता मंत्र के अधीन हैं' ऐसा ईश्वर श्रीमंत्र के अधीन होनेसे अर्थसहित उस मंत्र के हस्तगत होनेपर उस से कहेजानेवाले सर्वेश्वर चेतन की अनिष्टनिवृत्ति पूर्वक इष्टप्राप्ति के लिये उपाय होता है ।

ईश्वर के हस्तगत होनेपर 'वैकुंठ महानगर और अन्य सब हस्तगत होते हैं' इस वचनानुसार प्राप्यभूमि हस्तगत होती है माने—'संपूर्ण जगत् देवता के अधीन है' इस प्रकार उभय विभूति ईश्वराधीन होनेसे वह उपायतया हस्तगत होनेपर प्राप्यभूमि श्रीवैकुंठ इस चेतन को अत्यंत सुलभ होता है ।

इस प्रकार शमदमों के होनेपर उत्तरोत्तर इन सब के सिद्धिप्रकार को आरोह क्रम से कह इन में किस को कौन हेतुतया कहागया वह वैसा ही है ऐसा समझाने को अवरोहक्रम से कहते हैं—प्राप्यलाभ इत्यादि ।

मूलमंत्रलाभ आचार्येण, आचार्यलाभ आत्मगुणेन ॥
अयं चैश्वर्यकामानामुपास-
कानां प्रपन्नानां चापेक्षितः ॥ १०४ ॥

---

एतस्य प्रयोजनमेतद्धेतुपरंपरायां प्रथमहेतुः शमदमौ तस्मादवश्यमेतदुभयमप्यस्यापेक्षितमिति । ईश्वरस्यैव प्रापकत्वात्प्राप्यलाभः प्रापकेणेत्युक्तम् ।

एते शमदमादय उपासकानामप्यपेक्षिता इत्याह– अयं चेत्यादिना ।

ऐश्वर्यकामानां शब्दादिभोगस्यैव पुरुषार्थत्वेपि तत्साधनानुष्ठानदशायां शमदमादय आवश्यकाः । 'इंद्रियाणि पुरा

---

प्राप्यप्रापकश्रीमत्रंदेशिकात्मगुणेषु हि ॥
कार्यकारणभावोयं क्रमेण कथितो भवेत् ॥१०३॥
अयमर्थार्थिभक्तानां प्रपन्नानामपेक्षितः ॥१०४॥

प्राप्यलाभ प्रापक से, प्रापक लाभ श्रीमंत्र से, श्रीमंत्र
लाभ आचार्य से, आचार्यलाभ आत्मगुणों से ॥ १०३ ॥

इस का प्रयोजन–इस हेतुपरंपरा में प्रधान हेतु शमदम होनेसे अवश्य इन दोनों के चेतनों के उपयुक्त होना । ईश्वर ही प्रापक होनेसे प्राप्यलाभ 'ईश्वर से' इस स्थान में 'प्रापक से' ऐसा कहा है ।

यह शमदमादि भोग और मोक्ष कामनावाले सब ही को आवश्यक है ऐसा कहते हैं–ये इत्यादि ।

ये ऐश्वर्यकाम, उपासक और प्रपन्नों को भी चाहिए ॥ १०४ ॥

ऐश्वर्यकामों को यद्यपि शब्दादिभोग ही पुरुषार्थ है तौभी ऐश्वर्य के लिये

जित्वा जितं त्रिभुवनं त्वया।' 'शरीरधृतान्याभरणानि रुचिना सह त्यक्त्वा पंचेंद्रियाणि जित्वा' इत्युक्तम्। 'पंचेंद्रियाणि जित्वे'ति मनोनियमनस्योपलक्षणम्। उपासकानां विद्यांगतया शमदमादय आवश्यकाः—

'तस्मादेवंविच्छांतो दांत उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्'।

'हेयविषयमार्गं निरुध्य जतुमुद्रया मुद्रित्वा समीचीनविषयमार्गमुद्घाट्य ज्ञानरूपसमीचीनप्रकाशं प्रकाश्य'।

इत्युक्तम्। प्रपन्नानामधिकारार्थं शमादयोऽपेक्षिताः।

'एकांती तु विनिश्चित्य देवताविषयांतरैः।
भक्त्युपायं समं कृष्णप्राप्तौ कृष्णैकसाधनः॥'

'नियमितुं दुःशकानि पंचेंद्रियाणि नियम्य तद्विषयाऽभिलाषारूपामाशां वासनया सह त्यक्त्वा त्वन्मुखविकासहेतु-

---

साधनानुष्ठान करनेके समय में शमदमादि अपेक्षित हैं। 'पहिले इंद्रियों को जीत अंनतर त्रिभुवन को जीते हो' 'शरीर में धृत आभरणों को सवासना त्याग कर पंचेंद्रियों को जीत' ऐसा कहा है। 'पंचेंद्रियों को जीतकर' इस से मन को जीतना भी सूचित होता है। उपासकों को उपासना के अंगतया शमादि चाहिये।

'इस प्रकार ब्रह्म की उपासना करनेवाला शम, दम, उपरति, क्षमा और एकाग्रता सहित हो मन से आत्मा को देखैं।'

'हेय विषय मार्ग को रोक लाख का छाप लगा सन्मार्ग को खोल ज्ञानरूप समीचीन दीप को प्रकाश कर' ऐसा कहा है। प्रपन्नों को अधिकार के लिये शमदमादि अपेक्षित हैं।

'एकांती भक्तिरूप उपाय को देवतांतर विषयांतर के तरह समझ कृष्ण की प्राप्ति के लिये कृष्ण ही को उपायतया आश्रयण करता है।'

**एतत्त्रयाणां मध्य अत्यंतमपेक्षा प्रपन्नस्य ॥ १०५ ॥**

**अनयोर्द्वयोर्निषिद्धविषयविरक्तिरेवालं, प्रपन्नस्य विहितविषयविरक्तिस्त्वाधिक्यम् ॥ १०६ ॥**

---

व्यापारेषु स्थितं मां' इत्युक्तम् ।

एवमधिकारित्रयस्यापेक्षायामप्यधिकमपेक्षा प्रपन्नस्येत्याह— एतत्त्रयाणां मध्य इत्यादिना ।

अस्यात्राधिक्यं वक्तुमन्येऽत्र प्रस्ताविताश्च ।

तदाधिक्यमाह— अनयोर्द्वयोरित्यादिना ।

शब्दादिभोगपरस्यैश्वर्यकामस्य साधनांतरपरस्योपासकस्य

---

त्रिषु मध्ये प्रपन्नस्यावश्यापेक्षा हि विद्यते ॥
अर्थार्थ्युपासकानां चानिषिद्धविषयेऽरुचिः ।
अलं विहितवैराग्यमाधिक्यं न्यासिनः खलु ॥१०६॥

'नियमन करनेको अशक्य पंचेंद्रियों को रोक विषय की आशा को छोड आप के कैंकर्य करनेके लिये आगे खडा हुआ मुझको' ऐसा कहा है ।

इस प्रकार तीनों अधिकारियों को अपेक्षित है तो भी अत्यंत आवश्यकता प्रपन्न को है ऐसा कहते हैं—तीनों में इत्यादि ।

तीनों में अत्यंत अपेक्षा प्रपन्न को है ॥ १०५ ॥

प्रपन्न को अवश्यापेक्षित ऐसा कहनेके लिये ही औरों को इस स्थल में कहे हैं ।

उस आधिक्य को दिखाते हैं— अन्य दोनों को इत्यादि ।

अन्य दोनों को निषिद्ध विषय की निवृत्ति ही अपेक्षित है,
प्रपन्न को विहितविषय की निवृत्ति भी अधिक है ॥ १०६ ॥

शब्दादिभोगासक्त ऐश्वर्यकाम और साधनांतर में आसक्त उपासक इन दोनों

च शास्त्रनिषिद्धविषयपरदारादिनिवृत्तिमात्रमलम् । तदुभयव्यावृत्तस्य प्रपन्नस्य शास्त्रविहितविषयस्वदारेषु निवृत्तिस्तदपेक्षयाऽस्याधिक्यमित्यर्थः । तयोरुभयोरैश्वर्यकामस्य स्वदारेषु साधनदशायां धर्मबुद्ध्या प्रवृत्तिः फलदशायां भोग्यताबुद्ध्या प्रवृत्तिश्च स्यात् । उपासकस्य भगवदनुभवस्यैव फलत्वात्तद्वत्फलदशायामन्वयाभावेऽप्युपासनदशायां धर्मबुद्ध्या प्रवृत्तिरपेक्षिता। प्रपन्नस्य धर्मबुध्या प्रवृत्तेरपि स्वाधिकारभंजकत्वाद्विहितविषयेपि निवृत्तिरावश्यकीत्युक्तम् ।

धर्मबुध्या प्रवृत्तेः परिहारकरणं भोग्यताबुध्या प्रवृत्तेर्निवृत्तौ हि, अनादिकालं वासितेषु विषयेषु निवृत्तिः कथं स्यादिति शंकायामाह—इयं चेत्यादि ।

को शास्त्रनिषिद्ध विषय परदारादियों में निवृत्ति मात्र अपेक्षित है, इन दोनों से विलक्षण प्रपन्न को शास्त्रविहित विषय स्वदारा में निवृत्ति आवश्यक है । यही इन दोनों से आधिक्य है । इन दोनों में ऐश्वर्यकाम को स्वदारा में साधनदशा में धर्मबुद्धि से प्रवृत्त होना फलदशा में भोग्यता बुद्धि से प्रवृत्त होना कहा है । उपासक को फल भगवदनुभव होनेसे ऐश्वर्यकाम के तरह फलदशा में संबंध नहीं है तथापि उपासनादशा में स्वदारा में धर्म बुद्धि से प्रवृत्त होना चाहिए, प्रपन्न को धर्मबुद्धि से प्रवृत्त होना भी स्वाधिकार रूप प्रपत्ति का भंजक होनेसे स्वदाराविषय में भी निवृत्ति अपेक्षित है ।

धर्म बुद्धि से प्रवृत्ति का परिहार तब करसक्ते हैं जब भोग्यताबुद्धि से प्रवृत्ति न हो, अनादिकाल से वासना लगे हुए विषयों से निवृत्ति कैसे होगी ? इस शंका में कहते हैं— यह इत्यादि ।

इयं च केषां चित्सौंदर्येण जायते, केषांचित्कृपया जायते, केषांचिदाचारेण जायते ॥ १०७ ॥

---

केषांचित्सौंदर्येण जायते इति– साक्षात्कृतभगवत्तत्वानां भक्तिपारवश्यप्रपन्नानां सकलजनमोहनतद्विग्रहसौंदर्यानुभवेन जायत इत्यर्थः। केषांचित्कृपया जायत इति– तत्त्वयाथात्म्य-दर्शिनां ज्ञानाधिक्यप्रपन्नानां 'अस्मदनुभवार्थमुत्पन्नं वस्त्वेवम-न्यविषयप्रवणमनर्थं प्राप्नोति खल्विति' त्यन्यविषयसंगनिवृत्त्यर्थं तेन क्रियमाणया परमकृपया जायत इत्यर्थः। केषांचिदाचारेण जायत इति– परिमितानामज्ञानप्रपन्नानामवतारेषु—

'मर्यादानां च लोकस्य कर्ता कारयिता च सः।'

इत्युक्तप्रकारेण अधिकारानुगुणं तेनाचरितानामाचारयिता-

---

इयं विरक्तिः केषांचित्सौंदर्येणैव जायते ।
केषांचित्कृपया तद्वदाचारेण क्वचिद्भवेत् ॥ १०७ ॥

यह कईएक को सौंदर्य से उत्पन्न होती है, कईएक को कृपा से उत्पन्न होती है, कईएक को आचार से उत्पन्न होती है ॥ १०७ ॥

कईएक को सौंदर्य से उत्पन्न होती है माने– भगवत्तत्व को साक्षात्कार किये हुए भक्तिपरवश प्रपन्नों को सकलजन मोहन सर्वेश्वर के विग्रह के सौंदर्य का अनुभव करनेसे उत्पन्न होती है। कईएक को कृपा से उत्पन्न होती है माने— तत्वयाथात्म्यदर्शी ज्ञानाधिक प्रपन्नों को 'हमारे अनुभव के लिये जन्म ले इस प्रकार अन्यविषय प्रवण हो अनर्थ को पाते हैं' ऐसा अन्यविषय आसक्ति छूटनेके लिये ईश्वरकर्तृक परम कृपा से उत्पन्न होती है। कईएक को आचार से उत्पन्न होती है माने– परिमित ज्ञानवाले अज्ञान से प्रपन्नों को अवतारों में—

'लोकमर्यादाओं को करने और कराने वाले वही हैं।'

उत्पत्तिक्रमः कथमिति चेत्सौंदर्यमज्ञानं जनयति, कृपा रुचिं जनयति, आचारो भयं जनयति ॥ १०८॥

---

नां च प्रकाराणामप्यपरिमितैः पूर्वाचार्यैराचारितानां च प्रकारा णां शास्त्रमुखेनाचार्योपदेशादिना च ज्ञातत्वात् तादृशाचारा- णामनुसंधानेन जायते ।

एतैर्हेतुभिरुत्पत्तिक्रमं तज्जिज्ञासुप्रश्नानुवादपूर्वकमाह–उत्प- त्तिक्रम इत्यादिना ।

सौंदर्यमज्ञानं जनयतीति– दृष्टिचित्तपहारित्वाद्विषयांतरेष्वय- मेक इति ज्ञानं प्रतिबध्नातीत्यर्थः । कृपाऽरुचिं जनयतीति- विषयांतरदर्शनेषु जुगुप्सया यथा निवर्तते तथाऽरुचिं जनय

---

सौंदर्येणाज्ञताऽऽयाता कृपयाऽरुचिरुच्यते ।
आचारेण भवेद्भीतिरित्युत्पत्तिक्रमः स्मृतः॥ १०८॥

इस वचनानुसार अधिकारानुगुण सर्वेश्वर आचरण कर और आचरण करा- कर संचार किये हैं, और ज्ञानाधिक पूर्वाचार्य आचरण किये हैं, इन दोनों प्रकार के आचारों को शास्त्र और आचार्य उपदेशादि द्वारा जानने से उत्पन्न होती है ।

इन हेतुओं से उत्पन्न होनेके क्रम को, उस के जिज्ञासु के प्रश्न का अनुवाद करते हुए कहते हैं–उत्पन्न होनेका क्रम इत्यादि ।

उत्पन्न होनेका क्रम कैसा ? इस शंका में—सौंदर्य
अज्ञान को उत्पन्न करेगा, कृपा अरुचि को उत्पन्न
करेगी, आचार भीति को उत्पन्न करेगा ॥ १०८॥

सौंदर्य अज्ञान को उत्पन्न करेगा माने—दृष्टि और चित्त को अपहरण करने वाले होने से सौंदर्य विषयांतर को तुच्छ मानने योग्य करेगा। कृपा अरुचि को उत्पन्नकरेगी माने– विषयांतरों को देखने वाले चेतन का जुगुप्सा उत्पादन कर

इदं चाधिक्यमपेक्ष्योच्यते ॥१०९॥

---

तीत्यर्थः । आचारो भयं जनयतीति-- रुचौ सत्यामपि तदाचार-प्रकारेणाकरणेऽस्माकमनर्थ एव फलतीति विषयं स्प्रष्टुं यथा कंपते तथा भयं जनयतीत्यर्थः । तस्मादेतत्क्रमेण जायते इति भावः ।

एतेषां त्रिविधप्रपन्नानां सौंदर्यादित्रये एकैकस्यैव विरक्ति-हेतुत्वकथनस्य निदानमाह— इदं चेत्यादिना॥

अज्ञानेन प्रपन्ना इत्यादिनैतेषामुक्तप्रपत्तिहेतुषु यथैकैक-स्याधिक्यमपेक्ष्योक्तं, तथा 'सौंदर्येण जायते' इत्यारभ्योक्त-विरक्तिहेतुष्वेतेष्वप्येकैकस्याधिक्यमपेक्ष्योच्यत इत्यर्थः । अनेन भक्तिपारवश्यप्रपन्नानामरुचिहेतोः कृपायाः, भयहेतोराचारानु-

---

अपेक्ष्य चेदमाधिक्यमुच्यते न ततोऽन्यथा॥ १०९॥

उनसे हटावेगी । आचार भीति को उत्पन्न करेगा माने— रुचि होनेपर भी 'पूर्वजों के आचारों के अनुसार नहीं करनेपर हम को अनर्थ ही होगा' ऐसा समझ विषयस्पर्श में भीति को उत्पन्न करेगा । इस कारण इस क्रम से उत्पन्न होती है समझना ।

ये तीनों प्रकार के प्रपन्नों को सौंदर्यादि तीनों में एक एक को ही विरक्ति हेतुतया कहनेके कारण कहते हैं—इन को इत्यादि ।

इन को भी आधिक्य के अपेक्षया कहते हैं ॥ १०९॥

'अज्ञान से प्रपन्न' इत्यादि से कहे हुए इन की प्रपत्ति के हेतु एक एक का आधिक्य को लेकर जैसे कहे गये तैसे, 'सौंदर्य से उत्पन्न होती है' ऐसा प्रारंभ कर कहे हुए विरक्ति हेतुभूत ये भी एक एक का आधिक्य को लेकर कहे गये हैं। इस से भक्तिपरवशता से प्रपन्नों को अरुचि के कारण कृपा और भय के

संधानस्य च सत्वेपि भगवद्विग्रहवैलक्षण्यं साक्षात्कृत्यानुभवितृत्वात्सौंदर्ये सदा हृदयस्य मग्नत्वाद्विषयांतराज्ञानापादकसौंदर्यमेव तेष्वधिकतया वर्तते ।

ज्ञानाधिक्यप्रपन्नानामज्ञानहेतोर्विग्रहसौंदर्यस्यार्चावतारेऽनुभूयमानत्वाद्भयहेतोः प्राक्तनशिष्टाचारानुसंधानस्य च सत्वेपि तेन स्वकृपां कृत्स्नप्रवाहं कृत्वांगीकृतविषयत्वादरुचिहेतुः कृपा तेष्वधिकतया वर्तते ।

अज्ञानप्रपन्नानामर्चावतारे कादाचित्कविग्रहसौंदर्यानुभवस्यारुचिहेतोः कृपायाश्चैकमर्यादायां स्थितत्वेपि पूर्वाचार्याचरणमेव सदानुसंधानाद्भयहेतुराचारस्तन्मनस्यधिकतया वर्तते । एतादृशाधिक्यमपेक्ष्यैकैकमेव विरक्तिहेतुतयोक्तमिति सिद्धम् ।

विषयवैलक्षण्याद्धि विषयांतराज्ञानं संभवति, आप्तानां शिष्टानामाचारानुसंधानेन विहितनिषिद्धविषयस्पर्शे भयोत्पत्ति-

---

कारण आचारानुसंधान होनेपर भी भगवद्विग्रहवैलक्षण्य को साक्षात्कार कर अनुभव करनेवाले होनेसे विग्रहसौंदर्य में सदा मन लगे रहनेसे विषयांतरों को नहीं जानने देनेवाले वह विग्रहसौंदर्य ही उन में अधिकतया भासमान है ।

ज्ञानाधिक्य प्रपन्नों में अज्ञानहेतुभूत विग्रहसौंदर्य को अर्चावतार में देख अनुभव करना, भयहेतुभूत पुरातन शिष्टाचार का अनुसंधान करना ये दोनों के रहनेपर भी सर्वेश्वर अपनी कृपा रूप प्रवाह को पूर्णतया बहाकर स्वीकार किये हुए विषय होनेसे अरुचि के कारण कृपा इन में अधिकतया रहती है ।

अज्ञान से प्रपन्नों में अर्चावतार में कदाचित् विग्रहसौंदर्यानुभव और रुचिहेतुभूत कृपा ये दोनों रहनेपर भी पूर्वाचार्यों के आचारों को ही सदा अनुसंधान करनेसे भयहेतुभूत वे आचार उन के मन में अधिकतया रहते हैं । इस आधिक्य को लेकर ही एक एक ही विरक्ति हेतुतया कहा गया ।

विषयवैलक्षण्यातिशय से विषयांतर में अज्ञान हो सकता है, आप्तभूत शिष्टों

अरुच्युत्पत्तौ दोषदर्शनमपेक्षितम् ॥११०॥
तत्प्रधानहेतुर्न भवति ॥१११॥

---

श्च संभवति, अनादिकालमाशां कृत्वाऽभिनिवेशेन परिगृहीतेषु विषयेष्वरुच्युत्पत्तिरघटिता हि, तादृशारुचेः कृपयोत्पत्तावपेक्षितांशमाह — अरुचीत्यादिना ।

दोषदर्शनं नाम — भोग्यताबुध्या परिष्वज्यमानो योषिद्देहो मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसमुदायश्चर्मावनद्धो दुर्गंधीति प्रकारस्य, भोगोऽल्पोऽस्थिरो दुःखमिश्रोऽनर्थावहश्चेति प्रकारस्य च प्रत्यक्षादिप्रमाणैर्दर्शनम् ।

तर्हि तदेवारुचिहेतुः किमत आह — तदित्यादि ।

---

अरुचेर्जननीये हि कारणं दोषदर्शनम् ॥ ११० ॥
न दोषदर्शनं तत्र प्रधानो हेतुरिष्यते ॥ १११ ॥

का आचारानुसंधान से अविहित और विहित विषयों के स्पर्श में भय भी हो सक्ता है, अनादिकाल से अपेक्षा करते हुए जिन विषयों को भोगते रहे तादृश विषयों में अरुचि का होना असंभव है, इस लिये तादृश अरुचि के सर्वेश्वर की कृपा से उत्पन्न होनेपर अपेक्षितांश को कहते हैं—अरुचि के उत्पन्न होनेपर इत्यादि ।

अरुचि के उत्पन्न होनेपर दोष को देखना भी अपेक्षित है ॥ ११०॥

दोष को देखना माने—भोग्यताबुद्धि से आलिंगनादि योग्य युवतियों के शरीर का – मांस रक्त पूय विष्टा मूत्र स्नायु मज्जा अस्थियों के समुदायरूप चर्म से ढका हुआ दुर्गंधि द्रव्य होना, भोगका भी अल्प, अस्थिर, दुःखमिश्र और अनर्थवह होना इन को प्रत्यक्षादिप्रमाणों से देखना ।

ऐसा होतो वही अरुचि का हेतु है क्या ? इस शंका में कहते हैं—वह इत्यादि से ।

वह प्रधान हेतु नहीं है ॥ १११ ॥

अप्राप्ततैव प्राधनहेतुः ॥११२॥

---

तच्चैको हेतुर्मुख्यहेतुर्न भवतीत्यर्थः ।

तर्हि प्रधानहेतुः क इत्यत आह – अप्राप्ततेत्यादि ।

अप्राप्तता नाम– भगवदेकभोगरूपस्वरूपस्याननुरूपत्वम् । अनेन कृपया रुच्युत्पादनसमये दोषदर्शनादिकं कारयित्वोत्पादनाद्दोषदर्शनमप्राप्तिदर्शनं च तत्वविदामरुचेर्गौणमुख्यहेतू इत्युक्तम् ।

'स्वामिविषये मनसि लग्ने' इत्यादिप्रकारेण प्रावण्यविषयतयोक्ते भगवद्विषये यथा गुणं दृष्ट्वावगाहते तथा दोषं दृष्ट्वाऽमुमपि त्यजतीत्युक्तौ को दोष इत्यत आह — भगवद्विषय इत्यादि ।

---

स्वरूपाप्राप्ततैव स्यात्प्रधानं तत्र कारणम् ॥११२॥

प्रधान हेतु नहीं है माने–वह भी एक हेतु है, परंतु मुख्य हेतु नहीं है ऐसा समझना ।

तब प्रधान हेतु कौन है ? इस शंका में कहते हैं–अप्राप्तता इत्यादि ।

अप्राप्तता ही प्रधान हेतु है ॥ ११२ ॥

अप्राप्तता माने—भगवान् का ही भोगरूप आत्मस्वरूप का अनुरूप न होना, इस से कृपा से अरुचि होनेपर दोषों को दिखाकर जनाने से दोषदर्शन और अप्राप्तिदर्शन ये दोनों ज्ञानीलोगों की अरुचि का गौण और मुख्य हेतु होते हैं ।

'परमात्मा में मन लगनेपर' इत्यादि प्रकार से प्रावण्यविषयतया कहा हुआ भगवद्विषय में गुण देख जैसे लगते हैं तैसा दोष देख छोडने में क्या अनुपपत्ति है ? इस शंका में कहते हैं–भगवद्विषय में इत्यादि ।

**भगवद्विषयेऽवगाहनं च गुणान् दृष्ट्वा**
**न भवति, स्वरूपप्राप्त इति ॥११३॥**
**एवमनंगीकारे गुणहीनमित्यनुसंधानदशा-**
**यां भगवद्विषयप्रवृत्तिः, दोषानुसंधान-**
**दशायां संसारे प्रवृत्तिश्च न स्यात् ॥११४॥**

---

तर्हि कथमित्यत आह— स्वरूपेत्यादि ।

भगवद्विषयावगाहनं च— तत्र कल्याणगुणान् दृष्ट्वा न भवति किंतु अस्यात्मनः प्राप्तविषय इति हेतुनेत्यर्थः ।

पूर्वं स्वोक्तप्रकारेणार्थस्यानंगीकारे विरोधं प्रदर्शयति — एवमित्यादिना ।

---

भगवद्विषये नो हि गुणान् दृष्ट्वाऽवगाहनम् ।
स्वरूपप्राप्त इत्येव प्रधानं तत्र कारणम् ॥११३॥
तदस्वीकारकरणे गुणेन रहितो हरिः ।
इति ध्यानेन विष्णौ न प्रवृत्तिः कस्यचिद्भवेत् ।
दोषध्यानदशायां च संसारे न प्रवर्तनम् ॥११४॥

भगवद्विषय में लगना भी गुण देख नहीं स्वरूपप्राप्त समझ ॥ ११३ ॥

तब किससे ? इस शंका में कहते हैं– स्वरूपप्राप्त समझ इति । भगवद्विषय को आश्रयण करना भी भगवान् के कल्याणगुणों को देखकर नहीं किंतु इस आत्मा का प्राप्तविषय समझने से ।

पहिले अपने कहे हुए प्रकार अर्थ को अंगीकार न करनेपर होनेवाला दोष को दिखाते हैं— इस प्रकार इत्यादि ।

इस प्रकार अंगीकार न करनेपर जब गुणहीन समझते हैं तब
भगवद्विषय प्रवृत्ति, जब दोषानुसंधान करते हैं तब संसार
में प्रवृत्ति ये दोनों नहीं हो सकीं ॥ ११४ ॥

एवमनंगीकार इति— इतरविषयारुचिं प्रति हेतुरप्राप्ततेति भगवद्विषये रुचिं प्रति हेतुः प्राप्ततेति चानंगीकृत्य दोषदर्शनस्य गुणदर्शनस्य च एतद्धेतुत्वस्वीकार इत्यर्थः। गुणहीनमित्यनुसंधानदशायां भगवद्विषयप्रवृत्तिरिति — विश्लेषदुःखस्योत्कूलत्वान्महाभिनिवेशेन व्याकुले सति शीघ्रमागत्य मुखदर्शनादानाद्गुणहीनमिति चिंतनदशायां पुनश्च 'तं विना न जानामि' इति तद्विषयेऽत्यभिनिवेशकरणम्। दोषानुसंधानदशायां संसारे प्रवृत्तिरिति— मातापित्रादिभिर्भार्यापुत्रादिभिर्ज्ञातिभिर्बंधुभिर्गृहक्षेत्रादिभिः सह शब्दादिभोगानामनुभवरूपे संसारे दुःखबहुलत्वादिदोषं प्रत्यक्षादिभिर्ज्ञात्वा तदनुसंधानदशायां तत्राभिनिवेशानुवृत्तिः, एतदुभयं च न स्यादित्यर्थः।

अथवा दोषानुसंधानदशायां संसारे प्रवृत्तिरिति—तत्वविदां महर्षिप्रभृतीनां सारासारविवेकतया विषयदोषानुसंधानसञ्ज्ञा-

---

इस प्रकार अंगीकार न करनेपर माने-- इतरविषयों में अरुचि का हेतु अप्राप्तता, भगवद्विषय में रुचि का हेतु प्राप्तता ऐसा अंगीकार न कर दोषदर्शन और गुणदर्शन इन दोनों को अरुचि और रुचि के हेतुतया अंगीकार करनेपर। जब गुणहीन समझते हैं तब भगवद्विषयप्रवृत्ति माने— विश्लेषव्यसन उत्कूल हो अत्यंत व्याकुल हो पुकारनेके समय शीघ्र आ मुंह नहीं दिखानेसे गुणहीन समझनेकी दशा में फिर भी 'उन को छोड अन्य को नहीं जानता हूं' ऐसा सर्वेश्वर के विषय में अत्यभिनिवेश करना।

दोषानुसंधानदशा में संसार में प्रवृत्ति माने— माता पिता भार्या पुत्र ज्ञाति बंधु गृह क्षेत्रादिरूप शब्दादिभोगों को अनुभव कर संसार के दुःखाधिक्यादि दोष को प्रत्यक्ष से देख और जान अनुसंधान करने पर भी उस में आशा लगी रहना। ये दोनों नहीं होसक्ते हैं।

यद्वा दोषानुसंधानदशा में संसार में प्रवृत्ति माने— तत्व वेत्ता महर्षि

'क्रूरं मन्मनः स एवेति वर्तते' 'दासभूतोहं पुनश्च तव श्रीमच्चरणं विना नाभिलषामि' इत्यवदन् खलु ॥

---

यद्दशायां शास्त्रविहिततया प्राप्तमिति बुध्या क्रियमाणपुत्रोत्पादनादिरूपा संसारे प्रवृत्तिरित्यर्थः । 'एवमनंगीकारे एतन्न स्यादित्युक्तत्वा'दिति विरोधस्य प्रदर्शितत्वादेवमनंगीकार आवश्यक इत्यर्थः स्थापितः ।

गुणहीनमित्यनुसंधानदशायां भगवद्विषयप्रवृत्तिः कुत्र दृष्टेत्यत आह— क्रूरं मन्मन इत्यादि ।

'कठिन' इत्यारभ्य 'ज्ञातुमशक्यविग्रहः' इत्यंतं स्वकार्यपरः अन्यदुःखं न जानाति कस्यापि सुलभो न भवति वंचको

---

क्रूरं मन्मनः स्वामी स एवेति च वर्तते ।
दासोऽहं नाभिलष्येऽन्यत् तव श्रीपादपंकजात् ।
इत्यवोचन्प्रपन्नानामुत्तंसेषु निवासिनः ॥११५॥

प्रभृति सारासारविवेकवाले होनेसे विषय का दोषानुसंधान करनेपर भी शास्त्रविहित होनेसे प्राप्त समझ कर प्रजोत्पादनरूप संसार में प्रवृत्त होना । 'ऐसा अंगीकार न करनेपर इन में प्रवृत्ति नहीं हो सक्ती' इस तरह विरोध को दिखाने से प्राप्ति और अप्राप्ति ये ही कारण हैं समझना ।

गुणहीन समझनेपर भगवद्विषयप्रवृत्ति कहां देखे हो इस शंका में कहते हैं— 'क्रूर हमारा मन' इत्यादि ।

'क्रूर हमारा मन उसी में लगा रहता है' 'दास मैं फिर भी आप के चरणों को छोड और को आदर नहीं करूंगा' ऐसा कहे हैं ॥११५॥

'कठिन' ऐसा प्रारंभ कर 'जानने को अशक्य मायावाले' इत्यंत स्वका-

गुणकृतदास्यात्स्वरूपप्रयुक्तदास्यं खलु प्रधानम् ॥

---

दुर्ज्ञेयस्वभाव इति गुणहानिमुक्त्वा एवं स्थितमप्यतिलोकक्रूरं मन्मनस्तं विना न जानातीति, निंबार्थमुत्पन्नः कृमिस्तादृशनिंबं भुंक्ते इक्षुं पश्यति चेदपि नाऽऽद्रियते तथा 'कडल्मल्लैशयानेक्षुः' इति प्रकारेण निरतिशयभोग्यस्त्वमेव निंबवद्विरसश्चेदपि त्वदनन्यार्हशेषभूतोहं मम प्राप्तशेषिणस्तव चरणौ विहाय नाशासे इति चाज्ञाननिवृत्तिपूर्वकं भक्तिरूपापन्नज्ञानं प्राप्ता अवदन् खल्वित्यर्थः ।

'गुणैर्दास्यमुपागतः' इति वदतोपि न संति किमित्यत आह — गुणकृतेत्यादि ।

गुणकृतदास्यं तद्गुणैर्जितस्य दासत्वम् । स्वरूपप्रयुक्तदास्यं

---

स्वरूपकृतदास्यं च गुणदास्याद्विशिष्यते ॥ ११६ ॥

येपर औरों के दुःख को नहीं जाननेवाले किसी के भी न जाननेयोग्य वंचक जाननेके अशक्य स्वभाववाले ऐसा उन के गुणहानि को कह, ऐसे होनेपर भी अत्यंत क्रूर हमारा मन उन को छोड और को नहीं जानता है । नीम का कीडा उस नीम को ही खायगा ऊख को देखनेपर भी आदर नहीं करेगा । ऐसा ही 'कढलूमलै में सोनेवाले ऊख' इस उक्ति अनुसार निरतिशय भोग्य आप नीम के तरह विरस होनेपर भी आप के अनन्यार्हशेषभूत मैं मेरे प्राप्त शेषी आप के चरणों के विना अन्य को नहीं चाहूंगा ऐसा अज्ञाननिवृत्ति मत्यानंद को प्राप्त हूए सूरी लोग कहे हैं ।

'गुणों से दास हुआ हूं' ऐसा कहने वाले नहीं हैं क्या ? इस शंका में कहते हैं गुणकृतदास्य इत्यादि ।

गुणकृतदास्य की अपेक्षा स्वरूपप्रयुक्त दास्य ही प्रधान है ॥ ११६ ॥

अनसूयां प्रति जानकीवार्ता स्मर्तव्या ॥११७॥

---

...म — शेषत्वैकनिरूपणीयस्वरूपदर्शनेन दासत्वम् । स्वरूप-स्यैतादृशत्वेपि गुणाधिकविषयत्वाद्गुणकृतदास्यं चैतद्विषयेऽनु-वर्तते । अत एव हि शेषत्वैकनिरूपको बालस्वामी स्वयं तथावोचत् । तथापि गुणकृतमौपाधिकत्वादप्रधानं, अन्यन्नि-रुपाधिकत्वात्प्रधानम् । अत एव तत्प्राधान्यप्रसिद्धिभानं यथा स्यात्तथोक्तम् ।

एतदर्थसंवादं जानकीवाक्यं स्मारयति-- अनसूयेत्यादिना ।

अत्रेर्भगवत आश्रमे स्वामिनि गत्वा महर्षिमनुवर्तमाने अनंतरं तत्पत्नीमनसूयां जानक्यां गत्वाऽनुवर्तमानायां तां प्रति बंधुजनाभिमानमैश्वर्यं च विहाय स्वामिना साकमागते-

---

जानक्युक्ताऽनसूयायां वार्ता ध्येया हि सा बुधैः ॥११७॥

गुणकृतदास्य माने— उन के गुणों से हारकर दास होना । स्वरूपप्रयुक्त दास्य माने– शेषत्वैकनिरूपणीय अपने स्वरूप को देख दास होना । स्वरूप ऐसा रहनेपर भी गुणाधिक विषय होनेसे गुणकृतदास्य भी इस विषय में अनुवर्तन करता है । इसी कारण शेषत्वैकनिरूपक बालस्वामी ऐसा कहे हैं । तथापि गुण-कृत दास्य आगंतुक होनेसे अप्रधान है स्वरूपप्रयुक्त दास्य स्वभाव सिद्ध होनेसे प्रधान है । इस लिये ही इस को प्रधान समझनेकेलिये ऐसा कहे हैं ।

इस अर्थ का दृष्टांततया सीताजी की वार्ता को स्मरण कराते हैं— अनसूया से इत्यादि ।

अनसूया से सीताजी की कही हुई वार्ता को स्मरण करना ॥ ११७॥

अत्रिभगवान के आश्रम में श्रीरामजी जा महर्षि को अनुवर्तन कर रहने के समय उन की पत्नी अनसूया को सीताजी अनुवर्तन करनेपर वह सीताजी

ति यदिदं दैवयोगेन भवत्या सम्यक् प्राप्तं, नगरस्थो वा वनस्थो वा समीचीनोवाऽसमीचीनो वा स्त्रीणां दैवं भर्त्तैव भवत्येवमेव स्वामिविषये सदा आनुकूल्येन तिष्ठत्वित्यनसूयायां वदन्त्यां जानक्या लज्जित्वा अधोमुखतया स्थित्वा मम स्वामिविषये भावबंधस्य स्वतः सत्त्वेपि तस्य गुणाधिकतया मद्भावबंधो गुणनिबंधन इति तिष्ठंति लौकिकाः, तस्याश्रयस्य गुणेभ्यो व्यातरिच्य प्रदर्शयितुमशक्यत्वादहं तद्विषये ममस्थितिं ज्ञापयितुमसमर्थास्मि, तस्य गुणहीनत्वे विरूपत्वेपि तद्विषये भनैतादृश्येव स्थितिरित्युक्ता वार्त्ता ।

**एवं स्वरूपप्रयुक्तं दास्यमेव प्रधानं चेत् शेषिकृतप्रकारं दृष्ट्वा स्थितिं विना अनन्योपायत्वादीनि यथा नष्टानि स्युस्तथा तद्विषयमुद्दिश्य क्रियमाणा स्वप्रवृत्तिरुचिता किमिति शंकामनुवदति--भगवद्विषयप्रवृत्तिरित्यादिना ।**

---

को देख 'बंधुजन, अभिमान और ऐश्वर्य को छोड श्रीरामजी के पीछे अरण्य में तुम आई हो यह दैवयोग से तुमारे लिये अच्छा हुआ, नगर में हो या वन में हो सज्जन हो या दुर्जन हो स्त्रियों का भर्ता ही देवता है, तुम इस प्रकार सदा स्वामी के विषय में अनुकूल होके रहो' ऐसा अनुसूया के कहनेपर सीताजी लज्जित हो शिर झुका 'मुझ को स्वामी के विषय में दृढ प्रेम स्वतः होने पर भी स्वामी गुणाधिक होनेसे मेरे प्रेमाधिक्य को गुण के कारण आया हुआ लौकिक लोग समझते हैं, स्वामी को गुणों से अलग कर नहीं दिखा सकते इस लिये उन के विषय में मेरे प्रेम को मैं दिखा नहीं सक्ती, उन के गुणहीन और विरूप होनेपर भी मैं उन के विषय में ऐसा ही रहूंगी'— इस प्रकार की वार्ता को स्मरण करना ।

इस प्रकार स्वरूपप्रयुक्त दास्य ही प्रधान हो तो शेषी के कार्य को देखते रहना छोड उस विषय को उद्देश कर क्रियमाण अनन्योपायत्वादि के भंजक

**भगवद्विषयप्रवृत्तिरुचिता किमिति चेत्**
**तस्या मूलं प्रावण्यम् । तस्य मूलं संबंधः ।**
**स चौपाधिको न भवति, सत्ताप्रयुक्तः ॥ ११८ ॥**

---

तां परिहरति तस्या मूलमित्यादिना । प्रावण्यं- अतिमात्र-स्नेहः । तादृशप्रावण्यस्य मूलं विषयवैलक्षण्यं खल्वित्यत आह-- तस्यमूलमित्यादि । संबंधः-- शेषशेषिभावः । स च गुणकृतो नागच्छति किमित्यत आह-- स चेत्यादि ।

स च सत्ताप्रयुक्त इति - अस्यात्मनः सत्तामारभ्य वर्तमान इत्यर्थः ।

---

**भगवद्विषये किंस्वित्प्रवृत्तिरुचितेति चेत् ।**
**प्रावण्यं मूलमस्याः स्यात्संबंधस्तस्य मूलकम् ।**
**औपाधिको न संबंधः सत्तायुक्तः स तु स्मृतः ॥ ११८ ॥**

स्वप्रवृत्ति कैसे संगत होगी ? इस शंका को अनुवाद करते हैं— भगवद्विषयप्रवृत्ति इत्यादि से, और उस को परिहार करते हैं— उस का हेतु प्रावण्य इत्यादि से ।

तथाहि— भगवद्विषय प्रवृत्ति कैसे संगत होगी ? इस शंका में ; (कहते हैं)
उस का हेतु प्रावण्य, उस (प्रावण्य) का हेतु संबंध,
वह (संबंध) आगतुक नहीं किंतु सत्ता (स्वरूप) प्रयुक्त है ॥ ११८ ॥

प्रावण्य माने— अतिमात्र स्नेह । उस प्रावण्य का हेतु विषयवैलक्षण्य नहीं क्या ? इस प्रश्न का उत्तर देते हैं — उस का हेतु संबंध इत्यादि से । संबंध माने — शेषशेषिभाव । वह शेषशेषिभाव गुणकृत हो नहीं आवेगा क्या ? इस प्रश्न का उत्तर देते हैं — वह आगंतुक नहीं सत्ता (स्वरूप) प्रयुक्त इत्यादि से । सत्ता (स्वरूप) प्रयुक्त माने — यह आत्मा जब से है तब से रहनेवाला ।

तादृशसत्ता प्रावण्यकार्यानुभवाभावे नश्यति । तद्-विनाशार्थमागतानि सर्वाण्यस्यावर्जनीयानि प्राप्तानि च । तस्माद्भगवद्विषयप्रवृत्तिरुचिता ॥ ११९ ॥

श्रीमल्लोकगुरुचरणावेव शरणम् ।

---

अनेन पूर्वोक्तशंकायाः कः परिहार इत्यत आह– उपरि-वाक्यत्रयेण ।

---

प्रावण्यकार्यानुभवस्य नाशे नष्टा हि सत्ता तद्नाशनार्थम् ।
सर्वाण्यवर्ज्यानि तथागतानि प्राप्तानि तत्सा हि प्रवृत्तिरुक्ता ॥

इस से पूर्वोक्त शंका का परिहार कैसे हुआ ? इस प्रश्न का उत्तर देते हैं– वह सत्ता इत्यादि से ।

वह सत्ता प्रावण्यकार्य अनुभव के न होनेपर नष्ट होती है । वह नष्ट न होनेके लिये किये जानेवाले सब छोडने को अशक्य और प्राप्त भी होते हैं । इस लिये भगवद्विषयप्रवृत्ति सुसंगत होती है ॥ ११९ ॥

श्रीमल्लोकाचार्यचरण ही शरण हैं ।

तादृशसत्ता प्रावण्यकार्यानुभवाभावे नश्यतीति– तादृश सत्ता च स्वप्रयुक्तसंबंधहेतुकप्रावण्यकार्यस्य भगवदनुभवस्याभावे क्षणकालमपि न तिष्ठतीत्यर्थः । तदविनाशार्थमागतानि सर्वाण्यवर्जनीयानि प्राप्तानि चेति– तादृशसत्ताया अविनाशार्थमागता मडल्ग्रहणप्रभृतयः सकलप्रवृत्तयश्च भगवदनुभवं विना धारणाभावात् त्यजाम इति स्थितावपि दुस्त्यजाः, सर्वासां शेषिणोऽतिशयकरत्वात् स्वरूपप्राप्ताश्च भवंतीत्यर्थः । तस्माद्भगवद्विषयप्रवृत्तिरुचितेत्युक्तं — हेतुत्वेन वदन् प्रकृतशंकां परिहृत्य निगमयति ।

इति प्रथमप्रकरणं समाप्तम् ॥

श्रीमद्वरवरमुनिचरणावेव शरणम् ।

---

वह सत्ता प्रावण्यकार्य अनुभव के न होनेपर नष्ट होती है माने– तादृश सत्ता– स्वहेतुक संबंध द्वारा होनेवाले प्रावण्यकार्य भगवदनुभव के न होनेपर क्षणकाल भी न ठहरेगी । वह नष्ट न होनेके लिये कियेजानेवाले सब छोडनेको अशक्य और प्राप्त भी हैं माने– उक्त सत्ता का नाश न होनेके लिये किये जानेवाले मडलग्रहण प्रभृति सकलप्रवृत्तियां, भगवदनुभव के विना सह नहीं सकनेसे छोडनेकी इच्छा करनेपर भी छोडने अशक्य हो सब ही शेषी परमात्मा को अतिशय करनेवाले होनेसे स्वरूपप्राप्त अनुरूप हैं । इस लिये भगवद्विषयप्रवृत्ति सुसंगत होती है माने-- पूर्वोक्त सब को हेतुतया मान प्रस्तुत शंका का परिहार किये हैं ॥

प्रथम प्रकरणं समाप्तम् ।

श्रीमद्वरवरमुनिचरण ही शरण है ॥

--=:ॐ:=--

## अथ द्वितीयप्रकरणम् ।

---

**प्रापकांतरपरित्यागस्य चाज्ञानाशक्ती न स्वरूपविरोध एव प्राधानहेतुः ॥ १२० ॥**

---

इतरविषयपरित्यागस्य भगवद्विषयपरिग्रहस्य च प्रधानहेतू उक्तौ । अस्मिन् प्रसंग इतरोपायपरित्यागस्य च प्रधानहेतुरयमित्याह – प्रापकांतरपरित्यागस्येत्यादिना ।

प्रापकांतराणि–प्रपत्युपायव्यतिरिक्तोपायाः । अज्ञानाशक्ती नेति- तानि ज्ञातुमनुष्ठातुं चोपयुक्तयोर्ज्ञानशक्त्योरभावः । तत्यागस्य प्रधानहेतुर्न भवतीत्यर्थः । स्वरूपविरोध एव प्रधान-

---

ज्ञानाशक्ती न विज्ञेये प्रापकांतरहापने ।<br>
स्वरूपस्य विरोधो हि प्रधानं तत्र कारणम् ॥ १२० ॥

दूसरा प्रकरण ।

इतरविषय परित्याग और भगवद्विषय परिग्रह इन दोनों के प्रधान हेतु पहिले बताये, इस प्रसंग में इतरोपाय परित्याग के प्रधानहेतु को बताते हैं–प्रापकांतर परित्याग का इत्यादि से ।

प्रापकांतर परित्याग का हेतु अज्ञान और अशक्ति<br>
नहीं, स्वरूप विरोध ही प्रधान हेतु है ॥ १२० ॥

प्रापकांतर माने—प्रपत्ति से भिन्न उपाय । अज्ञान और अशक्ति नहीं माने–उन के जानने और अनुष्ठान करनेके उपयुक्त ज्ञान और शक्ति का अभाव ये उन के त्याग का प्रधान हेतु नहीं । स्वरूपविरोध ही प्रधान हेतु माने–भगवत्स्वं

प्रापकांतरमज्ञानामुपायः ॥१२१॥

---

हेतुरिति–भगवदत्यंतपारतंत्र्यरूपस्वरूपस्यानुचितत्वमेव मुख्य-हेतुरित्यर्थः । अनेन 'अज्ञानेन प्रपन्नाः' इत्यत्रोक्ते अज्ञानाशक्ती मुख्यहेतू न भवत इत्युक्तम् । अज्ञानाशक्तिहेतुना त्यागे ज्ञान-शक्त्युत्पत्तौ परिग्राह्यताप्रसंगः खलु । स्वरूपविरोध इति त्यागे हि पुनरनुवृत्त्यभावः ।

एवं प्रापकांतरं विरोधीति कथं त्यज्यते तच्च मोक्षोपाय-तया खलु वर्त्तते तत्केषां पुनरुपाय इत्यत आह—प्रापकां-तरमिति ।

अज्ञानामुपाय इति--स्वरक्षणे स्वयत्नगंधासहस्वरूपं या-थार्थ्येन ज्ञातुमुपयुक्तज्ञानरहितानामुपाय इत्यर्थः ।

---

प्रापकांतरमज्ञानामुपायो ज्ञानिनां तथा ॥१२१॥

पारतंत्र्यरूप स्वरूप का अनुरूप न होना ही मुख्य हेतु है। इस से 'अज्ञान से प्रपन्न' इस स्थल में कहे हुए अज्ञान और अशक्ति मुख्य हेतु नहीं जानना । अज्ञान और अशक्ति के कारण छोडनेपर ज्ञान और शक्ति के होनेपर करना पडेगा । स्वरूप का विरोध मानकर छोडनेपर ही फिर भी उस में प्रवृत्ति न होगी ।

इस प्रकार उपायांतर को विरोधि मान छोड सकते हैं क्या ? वे भी तो मोक्ष के उपाय हैं, यदि मोक्ष के उपाय हों तो किनके प्रति ? इस शंका में कहते हैं—प्रापकांनर इत्यादि से ।

प्रापकांतर अज्ञानियों को उपाय हैं ॥ १२१ ॥

अज्ञानियों को उपाय माने—स्वरक्षण में स्वयत्नगंध को न सहनेवाले स्वरूप को यथार्थतया देखनेके उपयुक्त ज्ञान जिन को नहीं उन को उपाय होते हैं ।

ज्ञानिनामपायः ॥१२२॥
अपायो भवति स्वरूपनाशकत्वात् ॥१२३॥
'मार्गं दर्शयित्वा विश्लेषयसि किं'इत्यवदन् हि ॥१२४॥

---

तर्हि ज्ञानिनामिदं कथमित्यत आह--ज्ञानिनामित्यादि। स्वरूपयाथात्म्यज्ञानवतामपायो भवतीत्यर्थः।

एतेषां तदपायः कथमित्यत आह---अपायो भवतीत्यादि। स्वरूपं नाम — अत्यंतपारतंत्र्यम्। अस्य स्वयत्नरूपं तन्नाशकं हि।

तदपायत्वं ज्ञानिनामग्रेसराणां सूरीणां वचनेनाह— मार्गं दर्शयित्वेत्यादि।

---

अपायोऽस्ति स्वरूपस्य नाशकं हि यतः स्मृतः ॥१२३॥
विश्लेषयसि मार्गं च दर्शयित्वा किमु प्रभो।
इत्थवोचन् हि कारुण्यपूर्णहृदयसूरयः ॥१२४॥

तब ज्ञानियों को उपायांतर कैसे भासते हैं ? इस शंका में कहते हैं—ज्ञानियों को अपाय इत्यादि से।

ज्ञानियों को अपाय हैं ॥ १२२॥

स्वरूपयाथात्म्यज्ञान विशिष्ट महात्माओं को उपायांतर अपाय होते हैं।

इन को ये क्यौं अपाय होते हैं ? इस शंका में कहते हैं—अपाय इत्यादि से।

अपाय होते हैं स्वरूप नाशक होनेसे ॥ १२३॥

स्वरूप माने—अत्यंत पारतंत्र्य। इस को स्वपत्नरूप उपायांतर नाश करदेते हैं।

उन की अपायता को ज्ञानियों में अग्रेसर श्रीशठकोपसूरी की उक्ति से दिखाते हैं —

'मार्ग दिखाकर हटाते हौ क्या,' ऐसा कहे हैं ॥ १२४॥

'वर्तते मे महद्भयं' इत्युक्तत्वाद्भयजनकं,
'मा शुचः' इत्युक्तत्वाच्छोकजनकम् ॥ १२५॥

---

त्वद्व्यतिरिक्तमुपायं दर्शयित्वा त्वत्तो विश्लेषयितुं पश्यसि किमित्युक्तत्वात् प्रापकांतरापायत्वं सिद्धमित्यर्थः । विश्लेषणं नाम -- परतंत्रं वस्तु स्वतंत्रकृत्ये उपायानुष्ठाने प्रेरयित्वा स्वस्माद्बहिष्करणम् ।

अस्य स्वरूपनाशकत्वप्रयुक्तदूषणविशेषावाह--'वर्तत' इत्यादिवाक्येन ।

'कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ।
शरीरे च गतौ चापि वर्तते मे महद्भयम् ॥'

इति उपायांतरानुष्ठानस्य योग्यकालदेशदेहाविषये उपायांत-

---

मा शुच इति गीतातो वर्तते मे महद्भयम् ।
इति वाक्याच्च शोकस्य भयस्य जनकं भवेत् ॥१२५॥

आप को छोड अन्य उपायों को दिखा आप से अलग करनेको देखते हौ क्या ? ऐसा कहनेसे उपायांतर का अपायत्व सिद्ध हुआ। हटाना माने—परतंत्रवस्तु को स्वतंत्र का कृत्यरूप उपायानुष्ठान में लगा अपने से अलग करना ।

उपायांतर का स्वरूपनाशकत्व से होनेवाले दूषणों को कहते हैं – 'वर्तते' इत्यादि वाक्यद्वय से ।

'हम को अधिक भय होता है' ऐसा कहनेसे भयजनक है ।
'शोक मत करो' ऐसा कहनेसे शोकजनक है ॥ १२५ ॥

हे अच्युत! संपूर्ण काल और संपूर्ण दिशाओं में भूतकाल और वतमान काल के शरीर में हम को अधिक भय होता है । 'ऐसा उपायांतरों के अनुष्ठान का योग्य काल, देश, देह और उपायांतरों के विषय में भी मुझ को अधिक भय

एवमनंगीकार एतत्प्रवृत्तौ प्रायश्चित्तविधेरसंभवः॥१२६

---

राणां विषये च मम महाभयं वर्तते इत्युक्तत्वात्, उपायांतरश्रवणानंतरमर्जुनस्य शोक उत्पन्ने स्वरूपानुरूपोपायमुपदिश्य 'माशुचः' इति शोकापनोदनस्य कृतत्वात्स्वरूपविरोधिप्रापकांतरं ज्ञानिनां भयजनकं शोकजनकं च भवतीत्यर्थः।

पूर्वोक्तप्रकारेणार्थस्यानंगीकारे विरोधं प्रदर्शयति — एवमनंगीकार इत्यादिना।

एवमनंगीकारे इति– स्वरूपनाशकमित्यनंगीकारे इत्यर्थः। एतत्प्रवृत्तौ प्रायश्चित्तविधेरसंभव इति—

'सकृदेव हि शास्त्रार्थः कृतोयं तारयेन्नरम्।
उपायापायसंयोगे निष्ठया हीयतेऽनया।

---

स्वीकाराभाव एवं च तदनुष्ठानवर्तने।
प्रायश्चित्तविधिर्नैव दृश्येत शास्त्रचक्षुषा॥१२६॥

होता है ऐसा कहनेसे, उपायांतरों के सुनने के बाद अर्जुन को शोक होनेपर स्वरूपानुरूप उपाय को उपदेश कर 'शोक मत करो' ऐसा शोक को दूर करनेसे स्वरूपविरोधिरूप उपायांतर ज्ञानियों को भयजनक और शोकजनक होते हैं।

पूर्वोक्त प्रकार अर्थ को अंगीकार न करनेपर होनेवाले विरोध को दिखाते हैं– ऐसा अंगीकार न करनेपर इत्यादि।

ऐसा अंगीकार न करनेपर उन के अनुष्ठान में
प्रायश्चित्तविधि न होनी चाहिये॥ १२६॥

ऐसा नहीं अंगीकार करनेपर माने— स्वरूपनाशक ऐसा नहीं अंगीकार करनेपर। इन के अनुष्ठान में प्रायश्चितविधि न होनी चाहिये माने—

'यह प्रपत्ति एक ही वखत की जाकर मनुष्य को तारती है।
उपाय और अपाय के करनेपर यह नष्ट होती है।

श्रीकुरुकाधिनाथस्य सूक्तिप्रकारः 'मदिरा-बिंदुमिश्रितशातकुंभमयकुंभगततीर्थसलिलवदहंकारमिश्रमुपायांतरम् ॥ १२७ ॥

---

अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेत् ।
प्रायश्चित्तिरियं साऽत्र यत्पुनः शरणं व्रजेत् ।
उपायानामुपायत्वस्वीकारेप्येतदेव हि ॥

इति प्रपन्नस्य प्रामादिकतयोपायांतरप्रवृत्त्यागमनकाले अपायप्रवृत्ताविव पुनःप्रपदनरूपप्रायश्चित्तस्य विधिर्न संभवेदित्यर्थः । पुनः प्रपदनं नाम पूर्वप्रपदनस्मरणं, नतु पुनः प्रयोगः ।

एवं स्वरूपनाशकस्योपायांतरस्यात्यंतनिषिद्धत्वमभियुक्तवचनेन दर्शयति—श्रीकुरुकाधिनाथस्येत्यादिना ।

---

कुरुकाधिनाथसूक्तिविधा सुरायुतहाटकमयघटे हि ।
तीर्थजलवदहंकारमिश्रमुपायांतरमिति जानीहि ॥ १२७ ॥

अपाय अर्थात् निषिद्धानुष्ठान करनेपर प्रायश्चित्त करें ।
इस का प्रायश्चित्त यह है की फिर भी प्रपत्ति करना ।
उपायानुष्ठान करनेपर भी यही प्रायश्चित्त है ।

ऐसा प्रपन्न प्रमाद से उपायांतर में प्रवृत्त होनेपर, अपाय में प्रवृत्त होनेपर जैसा, तैसा पुनःप्रपत्ति रूप प्रायश्चित्त का विधान न होना चाहिये । पुनःप्रपत्ति माने—पूर्वकृत प्रपत्ति का स्मरण करना ही है, फिर भी नवीन प्रपत्ति नहीं ।

इस प्रकार स्वरूपनाशक उपायांतर की अत्यंत निषिद्धता पूज्यों के वचन से दिखाते हैं— श्रीकुरुकाधिनाथ इत्यादि से ।

श्रीकुरुकाधिनाथ की सूक्ति— मदिराबिंदुमिश्रित स्वर्णमयपात्र
गत तीर्थ जल के तरह अहंकार मिश्रित उपाय है ॥ १२७ ॥

श्रीकुरुकाधिनाथस्तु– सर्वज्ञस्य भाष्यकारस्य चरणयोः सेवित्वा तदभिमतविषयः सकलशास्त्राण्यप्यालोड्य निश्चित्य वर्तमानत्वादाप्ततमो हि । मदिरानाम-- अत्यंतनिषिद्धद्रव्यं स्वस्पर्शलेशवद्वस्तून्यपि स्वमिव निषिद्धानि कुर्वद्वस्तु हि । अस्याहंकारस्य दृष्टांतकरणात् तस्यात्यंतनिषिद्धत्वं तत्स्पर्शलेशवद्वस्त्वपि तद्वन्निषिद्धमिति च ज्ञायते । शातकुंभं नाम-- सुवर्णं, तन्मयकुंभेति– अंतर्द्रव्यांतरस्योपरि सुवर्णानुलेपनेन विनास्वयमुपादानभूतेन कृतकुंभेत्यर्थः । अनेन पात्रशुद्धिरुक्ता । तद्गततीर्थसलिलवदित्युक्तत्वात्-- तदंतः स्थितस्य जलस्य पावनत्वमुक्तम् । तद्वदहंकारमिश्रमुपायांतरमित्युक्तत्वादत्रापि पात्रशुद्धिस्तद्गतपदार्थशुद्धिश्च वक्तव्या । 'आत्मा ज्ञानमयोऽमल' इत्युक्ते स्वतोनिर्मलतया भगवदनन्यार्हशेषतया च परिशुद्धं खलु भक्त्याश्रयमात्मवस्तु वर्तते । तद्गतभक्तिश्च भगवदे-

---

श्रीकुरुकाधिनाथ माने – सर्वज्ञ भाष्यकार के चरणो में आश्रित उन के अभिमत विषय, और सकल शास्त्रज्ञान संपन्न होनेसे आप्ततम हैं । श्रीसूक्ति माने-- अनुगृहीत प्रकार । मदिरा माने अत्यंत निषिद्ध द्रव्य, अपने स्पर्शवाले संपूर्ण वस्तुओं को अपने सदृश निषिद्ध बनाने वाली है । इस को अंहकार का दृष्टांत देनेसे अंहकार की अत्यंत निषिद्धता, उस के स्पर्शवाले वस्तु उस के तरह निषिद्ध होते हैं ऐसा भान होता है । स्वर्णमय पात्र माने – भीतर में दूसरा द्रव्य और बाहार में स्वर्ण का लेप न हो स्वर्ण ही से बनायाहुआ पात्र समझना । इस से पात्र की शुद्धि कही गई । तद्गत तीर्थ जल कहनेसे उस के भीतर के जल की पावित्रता कही गई । उस के तरह अंहकार मिश्रित उपायांतर कहनेसे यहां भी पात्र की शुद्धि और तद्गत पदार्थ की शुद्धि कहनी चाहिये, – वह यह है – 'आत्मा ज्ञानमय और निर्मल है' ऐसा स्वभाव से निर्मल भगवदनन्यार्हशेष होनेसे आत्मा परिशुद्ध होता है । उस आत्मा की भक्ति भी भगवदेकाग्र-

रत्नस्य वराटिकावद्राज्यस्य लिकुचफ-
लवच्च फलस्य सदृशं न भवति ॥१२८॥

---

काग्रतया परिशुद्धा हि । अहंकारमिश्रणाभावे न कोऽपि दोषः ।

एवमनेनोक्तं किमिति चेत्-- स्वर्णपात्रगतं तीर्थजलं पात्रशुद्धिसत्वेऽपि स्वयं परिशुद्धमपि सुराबिंदुमिश्रतया यथा निषिद्धं भवति तथा स्वतो निर्मलत्वादिभिः परिशुद्ध आत्मवस्तुनि वर्तमाना भगवदेकविषयतया परिशुद्धा भक्तिश्च स्वयत्नमूलाहंकारस्पर्शेन ज्ञानिनामंगीकारानर्हतया निषिद्धा भवतीत्युक्तम्। 'सूक्तिप्रकारः' इत्यस्यान्वयार्थं वाक्यांते इतिशब्दोऽध्याहृत्य योजनीयम् ।

अथास्य फलविसदृशत्वं चैकं दूषणमस्तीत्याह— रत्नस्येत्यादिना ।

---

रत्नस्य वराटिकावद्राज्यस्य लिकुचफलवच्च फलस्य हि ।

तया परिशुद्ध है । अहंकार का स्पर्श न होनेपर कुछ दोष नहीं है ।

तथाच इस से सुवर्णपात्र गत तीर्थजल, पात्र की शुद्धि और अपनी शुद्धि होनेपर भी सुराबिंदु के मिलाप से यथा निषिद्ध होता है तथा स्वतो निर्मलत्वादि से परिशुद्ध आत्मवस्तु में रहनेवाली भगवदनन्यविषय होनेसे परिशुद्धा भक्ति स्वयत्नमूल अहंकार स्पर्श से ज्ञानियों के अनादर योग्य होती है ।

और भी इस के फल के सदृश न होनारूप दोष को कहते हैं — रत्न के इत्यादि ।

रत्न के बदले में कौडी के तरह राज्य के बदले
में निंबु के तरह फल के सदृश नहीं ॥१२८॥

**स्वस्य दरिद्रत्वात्स्वेन दातव्यं नास्ति १२९ ॥**

---

द्वीपांतरेषु कैश्चित् वराटिकाया आभरणतया धारणाद्वराटिकां ददद्भ्यो रत्नं ददाति, उदारा राजानो राज्यार्थितया आगत्य लिकुचफलं ददते राज्यं ददाति, एवं ददतीति महार्घस्य रत्नस्य महासंपद्रूपस्य राज्यस्य च वराटिका लिकुचफलं च यथा सदृशसाधनं न भवति तथा 'भक्त्यालभ्यस्त्वनन्यया' 'भक्त्या त्वनन्यया शक्यः' इत्युक्तप्रकारेण भक्तिचपलः परमोदार ईश्वर एतस्मिन् भक्तिमात्रमवलंबनं कृत्वा परमपुरुषार्थलक्षणमोक्षं ददाति चेदपि फलस्येयं सदृशसाधनं न भवतीत्यर्थः ।

तर्हि विसदृशवराटिकां लिकुचफलं च उपहारत्वेन दत्त्वा रत्नं राज्यं च लभतां लब्धिप्रकारः कथं ? तद्वद्भवतीति चेत् अस्यापि योग्यता नास्तीत्याह — स्वस्येत्यादि

---

**सदृशं न भवति स्वस्य दरिद्रत्वात्स्वदेयं नास्ति ॥ १२९ ॥**

द्वीपांतर में कई लोग कौडी को आभरणतया धारण करनेसे कौडीयों के देनेवालों को रत्न देकर लेते हैं। उदार राजालोग राज्यार्थी हो एक निंबु देनेवाले को राज्य देते हैं। ऐसा देनेसे महामूल्य रत्न और महासंपत् राज्य के कौडी और निंबु ये दोनों जैसा सदृश नहीं हो सकते तैसा 'अनन्यभक्ति से लभ्य' 'अनन्यभक्ति से प्राप्त होने का शक्य' इन वचनानुसार भक्तिचपल परमोदार सर्वेश्वर चेतन के भक्तिमात्र को अवलंबन कर परमपुरुषार्थलक्षण मोक्ष को देनेपर भी यह भक्ति मोक्षरूप फल के सदृश नहीं हो सकती है।

तब विसदृशरूप कौडी और निंबु को भेंट देकर रत्न और राज्य को जैसा पाते हैं तैसा यह भी होसकता है इस शंका में – वैसा कहनेको भी योग्यता नहीं ऐसा कहते हैं – आप के इत्यादि ।

आप के दरिद्र होनेसे अपने पास देनेयोग्य कुछ नहीं है ॥ १२९ ॥

**तद्दत्तस्य दानसमये क्रमेण ददाति चेदनुपायः स्यात्, अक्रमेण ददाति चेच्चौर्यं प्रकटितं स्यात् ॥**

---

तत्र स्वयं स्वोपयुक्तः स्वस्येति वराटिकाया लिकुचफलस्य सत्त्वात् तत्कुर्यात्, अत्र तथा विना 'अहमेव त्वं' मम वस्तु च त्वमेव' इत्युक्तप्रकारेणात्मात्मीययोरुभयोस्तदीयत्वात् स्वस्य किंचिद्यथा न स्यात्तथाऽकिंचनत्वात्, फलस्य हेतुत्वेन तद्विषये स्वस्य समर्पणीयं किंचिन्नास्तीत्यर्थः ।

गोदाने पित्रे पुत्रो यथा दक्षिणां ददाति तथा तेन दत्तं तस्मै ददाति चेत् किमित्यत आह— तदित्यादि ।

तद्दत्तस्य दानं नाम—

'विचित्रा देहसंपत्तिरीश्वराय निवेदितुम् ।

---

**तद्दत्तार्पणसमये क्रमेण ददाति चेदनुपायः स्यात् । अक्रमेण दाने सति चौर्यं प्रकटितं स्यात्सर्वदा ॥ १३० ॥**

दृष्टांत में स्वयं स्वतंत्र हो अपनी वस्तु कौडी या निंबु का मालिक आप होनेसे उन को दे सक्ता है, दार्ष्टांत में 'हम आप के और हमारी चीजें भी आपकी हैं' इस वचनानुसार आत्मा और आत्मसंबंधी वस्तु ये दोनों परमात्मा के हो अपने लिये एक भी न होनेसे चेतन अकिंचन है, ऐसा होनेपर फल का साधनतया सर्वेश्वर के विषय में अपने को समर्पण करनेयोग्य कुछ भी नहीं ।

गोदान अर्थात् चौलकर्म में पिता को जैसा पुत्र दक्षिणा देता है तैसा उन के दियेहुए को उन को देने में क्या हरकत है ? इस शंका में कहते हैं—उन के इत्यादि ।

उन के दियेहुए को देनेपर क्रम से दे तो उपाय
नहीं होता है, क्रम छोड देनेपर चोरी प्रकट होगी ॥ १३० ॥

उन के दिये हुए को देना माने—

पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुता ॥'

इति 'तदानीं त्वद्दत्तशरीरस्य मार्गे भ्रमे'इत्युक्तप्रकारेण तद्दत्तकरणकलेवराणि –

'मन्मना भाव मद्भक्तो मद्याजी मां नमस्कुरु' इति

'सततं कीर्तयंतो मां यतंतश्च दृढव्रताः'

इति चोक्तप्रकारेण ध्यानार्चनप्रणामादिभिस्तच्छेषकरणम् । क्रमेण दानं नम — तदीयमिति बुद्ध्या समर्पणम् । एवं ददाति चेदनुपायः स्यादिति – तदीयं तस्मै दत्तं नतु स्वेन किंचिद् दत्तमतः फलस्य तत्साधनं न भवतीत्यर्थः । अक्रमेण दानं नाम — मदीयमिति बुद्ध्या समर्पणम् । एवं ददाति चेच्चौर्यं प्रकटितं स्यादिति — भगवद्द्रव्यापहारः प्रकाशेत इत्यर्थः । यथा राजमहेंद्राभरणं रहस्ये चोरयित्वा सदसि

---

'हस्त पाद आदि विशिष्ट विचित्र देहसंपत्ति ईश्वर को निवेदन करनेके लिये पहले ही सृष्ट हुई ।'

ऐसा और 'उस रोज आपका दियाहुआ शरीर' ऐसा भी आदि सृष्टि में सर्वेश्वर के दियेहुए करणकलेबरों को—

'हमारे विषय में मन को लगाओ, मेरे भक्त होओ मुझ को आराधन करो और मुझ को नमस्कार करो ।'

ऐसा, और 'सदा मुझ को कीर्तन करते हुए यत्न करते हुए दृढव्रतवाले' ऐसा भी कहेहुए प्रकार ध्यान अर्चन और प्राणामादिओं से उन के शेष बनाना । क्रमसे देना माने—तदीय समझ समर्पण करना । ऐसा देने में उपाय नहीं होता माने—उन की वस्तु को उन को दिये हैं इतना ही, अपनी चीज को आप न देनेसे वह फलसाधन नहीं होगा । क्रम छोड देना माने—हमारा ऐसी बुद्धि से समर्पण करना । ऐसा देनेपर चोरी प्रकट होगी माने—भगवद्द्रव्य का अपहार प्रगट होगा । राजमहेंद्र से समर्पित कौस्तुभ मणि (जिस को सदा श्रीरङ्गनाथ अपने वक्षस्थल में

भर्तृभोगमुदरपोषणस्य हेतुं करोति
चेद्यथा तथोभयोरप्यवद्यम् ॥ १३१ ॥

---

ददाति चेत्तथैतद्दानम् ।

अथोपायांतरस्यैकं दूषणमाह — भर्तृभोगमित्यादिना ।

भार्या स्वयंप्रयोजनं भर्तृभोगं स्वोदरपोषणस्य साधनतया स्वीकरोति चेत् स्वं भार्यात्वेनाभिमत्य आदृत्य स्थितस्य भर्तुः, तद्भार्येति नाम कृत्वा स्थिताया आत्मनश्च यथाऽवद्यं भवति; तथा भगवद्वैलक्षण्यानुभवेनोत्पन्नां भोगरूपां भक्तिं मोक्षसाधनं करोति चेत् स्वं शेषभूतत्वेन आदृत्य स्वेन संश्लिष्य विनियोक्तुरीश्वरस्य, तच्छेषभूत इति नाम कृत्वा स्थितस्य स्वस्य चावद्यं पर्यवस्यतीत्यर्थः । 'रात्रौ भर्त्रा संश्लि

---

उदरपोषणस्य चेद्धि हेतुं करोति भर्तृभोगजातम् ।
यथा तथोभयोरप्यवद्यं जायेत शाश्वतं हि ॥ १३१ ॥

धारण करते हैं) को एकांत में चोरी कर चार जनों के सामने समर्पण करनेसे जैसे चोरी प्रकट होगी तैसा समझना ।

और भी उपायांतर का एक दूषण कहते हैं—भर्तृभोग का इत्यादि ।

भर्तृभोग को उदरपोषणार्थ करनेवाली के तरह दोनों को दोष होगा ॥ १३१ ॥

भार्या स्वयं प्रयोजनरूप भर्ता के भोग को स्वोदरपोषण के लिये साधन माननेपर अपने को पत्नीतया आदर करनेवाले भर्ता और उस की भार्यारूपेण प्रसिद्ध अपने को भी दोषदायक है, ऐसा ही भगवद्वैलक्षण्यानुभव से होनेवाली भोगरूप भक्ति को मोक्षसाधन करनेपर अपने को शेषभूत मान आदरपूर्वक संश्लेष करनेवाले ईश्वर और तच्छेषभूततया प्रसिद्ध अपने को भी दोषदायक होगा । 'रात्रि भर्ता के साथ संश्लेष कर प्रातः उठ मजूरी दो ऐसा अंचल पकडनेपर जैसा

वेदांतेष्वियमुपायत्वेन कथं
विधीयत इति चेत् ॥ १३२ ॥

---

व्य प्रभाते निष्क्रयं दातव्यमित्यनुरुंधेच्चेद्यथा तथा भक्तिमु-पायत्वेन स्वीकरोतिचेत्' इति हि कुरुकाधिनाथेनोक्तम् ।

एवं स्वरूपविरोधादिदोषदुष्टाया अस्या हितानुशासनं कु-र्वद्भिर्वेदांतैः 'ओमित्यात्मानं ध्यायथ' 'आत्मानमेव लोकमुपा-सीत' 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्या-सितव्यः' इत्यस्य मोक्षोपायत्वेन विधाने निदानं विवक्षुः त-ज्जिज्ञासुप्रश्नमनुवदति–वेदांतेष्वित्यादिना ।

तन्निदानमाह—औषधसेवामित्यादिना ।

---

उपायत्वेनेयं हि वेदांते कथं विधीयत इति चेत् ॥ १३२ ॥

दोष मानाजाय तैसा ही भक्ति को उपाय समझनेसे' ऐसा कुरुकाधिनाथ कहे हैं ।

इस प्रकार स्वरूपविरोधादिरूप दोष से दुष्ट इस उपाय को हित का उपदेश करनेवाले वेदांत 'ॐ इस मंत्र का उच्चारण कर आत्मा का ध्यान करो' 'आत्मा को ही देखने योग्य समझ उपासना करो' 'आत्मा ही देखने योग्य है इस लिये श्रवण मनन निदिध्यासन करना चाहिये' ऐसा इस चेतन को मोक्षोपायतया विधान करनेके हेतु को कहनेके लिये तज्जिज्ञासु प्रश्न को अनुवाद करते हैं–वेदांत इत्यादि ।

वेदांत उपायतया क्यौं विधान करते हैं ? ॥ १३२ ॥

उस का हेतु को कहते हैं—औषधसेवा इत्यादि ।

**औषधसेवामकुर्वाणानामभिमतवस्तु-**
**नि तं मिश्रीकृत्य यथा ददाति तथे-**
**श्वरं मेलयित्वा विदधाति ॥ १३३ ॥**

---

अत्यंतरुग्णेषु भ्रमत्सु तस्याविलंबेन निवर्तकमहौषधं सेवध्वमित्युक्तौ तदनंगीकुर्वतां बालपुत्रादीनां तैराशां कृत्वा विनियुज्यमानेषु वस्तुषु तदौषधं मिश्रीकृत्य दातारो वत्सला मातापित्रादय इव शीघ्रं संसारव्याधिनिवर्तकं सिद्धोपायरूपं विश्वसनीयं महौषधं स्वप्रवृत्तिनिवृत्तिपूर्वकं सेवध्वमिति प्रथमत उपदेशे कृतेऽनादितयाऽऽगतया स्वयत्नवासनया तमनंगीकुर्वाणान् चेतनान् त्यक्तुमशक्यत्वात् तेषामभिमते स्वयत्नरूपोपासने तदंगत्वेन सिद्धोपायमीश्वरं मेलयित्वा तादृश

---

**औषधकटुभीरूणामभिमतवस्तुना साकं तम् ।**
**यथा ददति तथेश्वरं मेलयित्वा विदधाति शास्त्राणि खलु ॥**

जैसे औषधसेवन न करनेवालों को अभिमत
वस्तुओं में उस औषध को मिलाकर खवाते हैं
तैसे ईश्वर को मिलाकर विधान करते हैं इतनाही ॥ १३३ ॥

अत्यंत रोगग्रस्त हो संचार करनेपर भी उस को शीघ्र नाश करनेवाले उत्तम औषध की सेवा करनेको कहनेपर उस में संमति न करनेवाले वालपुत्रादिओं को उन के इच्छित खाद्य वस्तुओं में उस औषध को मिलाकर खवानेवाले माता आदिओं के तरह शीघ्र संसारव्याधि को दूर करनेवला सिद्धोपायरूप अमृत को स्वप्रवृत्ति निवृति पूर्वक सेवन करनेको प्रथम ही उपदेश करनेपर अनादिसे होनेवाली स्वयत्नवासना से उस में सम्मति न करनेवाले चेतनों को भी छोड नहीं सकनेसे उन के अभिमत स्वयत्नरूप उपासना में तदंगतया सिद्धोपायभूत ईश्वर को

इमां प्रवर्तयति परहिंसां निवर्तयितुम् ॥१३४॥

---

मुपासनं तेषां मोक्षोपायतया विदधतीत्यर्थः । दृष्टांत अभिमतवस्तु व्याधिहरं न भवति तान्मिश्रतया प्रयुक्तमौषधमेव व्याधिहरं भवति तथा दार्ष्टांतिके चोपासनं न भवति तान्मिश्र ईश्वर एवोपाय इत्यर्थः संप्रातिपन्नः ।

अव्यवधानेन सेवने कृतेऽविलंबेन व्याधिनिवर्तकमौषधमभिमतवस्तुमिश्रं चेद्विलंब्य कार्यकरं भवति, तथोपासनमिश्रतासमये ईश्वरो विलंब्य फलप्रदो भवति ।

अथैवमस्या विधानं पूर्वां स्थितिं निवार्योपर्यारोपयितुमित्याह — इमामित्यादिना ।

---

पूर्वविहितहिंसावद्वेतद्विधिनिषेधयोः ।
न विरोध इति प्राहुः सर्वशास्त्रार्थकोविदाः ॥१३४॥

मिला तादृश उपासना को मोक्षोपायतया उन के लिये विधान करते हैं इतना ही । दृष्टांत में अभिमतवस्तु व्याधिनाशक न हो उस के साथ मिलाहुआ औषध ही जैसा व्याधिहर होता है, दार्ष्टांतिक में भी उपासना उपाय न हो उस के साथ मिलाहुआ ईश्वर ही उपाय होते हैं ऐसा समझना । जैसा साक्षात् अपने को सेवन करनेवालों की व्याधि को शीघ्र हटानेवाले औषध अभिमत वस्तु से मिला सेवन करनेपर विलंबसे व्याधि को हटाती है, ऐसा ही उपासनामिश्रित ईश्वर विलंब से फल देते हैं ।

अब उपासना को विधान करनेके कारण—पहिली स्थिति को नाश कर ऊपर लेजानेके लिये—ऐसा कहते हैं ।

इस को प्रवर्तन किया है परहिंसा निवृत्ति के लिये ॥१३४॥

शास्त्रं नाम-'त्रैगुण्यविषया वेदा' इत्युक्तप्रकारेण प्रसवित्री माता अंधबधिरादिविकलकरणेषु पटुकरणेषु चाविशेषेण यथा वत्सला भवति तथा मातापितृसहस्रेभ्योऽपि वत्सलत्वात् तमःप्रचुरान् रजःप्रचुरान् सत्वप्रचुरांश्चाविशेषेण तानपथेप्रवर्तमानांश्च पश्यतस्त्यक्तुमक्षमत्वात्तत्तद्गुणानुगुणं पुरुषार्थांस्तत्साधनानि चोपदिश्योपन्नशाखायामारोपयितुं यथाल्पशाखामर्पयंति तथा तत्तद्द्वारा स्वतात्पर्यांश आरोपयितुं प्रवर्त्तयतीति श्येनविधिमारभ्य प्रपत्तिपर्यंतमागमनपर्यंतं चेतनानां तत्तदधिकारानुगुणं उत्तरोत्तरपुरुषार्थसाधनेषु प्रवर्तयित्वा पूर्वपूर्वान्निवर्तयितृ भवेत् । अतोऽनुपायं 'प्रवर्तयति परहिंसां निवर्तयितुं'। परहिंसामिति—उपरितनहिंसामित्यर्थः । परदेवतेति परगतिरित्यादिस्थलेषु यथा उपरित-

'वेद तीन गुणवालों के विषय हैं' इस वचनानुसार जन्मदात्री माता अंध बधिर आदि विकल करणवाले और समर्थ करणवाले दोनों में भेद न देख जैसे प्रेम करती है तैसे हजारों माता पिताओं से भी अधिक वात्सल्यवाले होनेसे तमःप्रचुर रजःप्रचुर और सत्वप्रचुरों में भेद न देख उन का दुर्मार्ग प्रवृत्ति से नाश को न सह सकने से उन उन के गुणों के अनुगुण पुरुषार्थ और उन के साधनों को उपदेश कर लता को ऊपर चढानेके लिय जैसे अल्पयष्टि गाडते हैं तैसे इन के द्वारा वेदांत के तात्पर्यार्थ सर्वेश्वर में पहुंचाने के लिय उद्योग कराता है । इस लिये श्येनविधि प्रभृति प्रपत्तिपर्यंत चेतनों के गुणानुगुण उत्तरोत्तर पुरुषार्थसाधनों को प्रवर्तन करा पूर्वपूर्वों को हटाता है । इस कारण उस उपासना का प्रवर्तन कराना 'परहिंसा से हटाने के लिये।'

परहिंसा माने—उत्कृष्ट हिंसा, 'परदेवता' 'परगति' इत्यादि स्थलों में जैसे 'उत्तम देवता' 'उत्तम गति' अर्थ होता है तैसा जानना । इस से- श्येन-

नदेवता उपरितनगतिरित्यर्थो भवति। सा श्येनविधेरुपरिविधीयमानाः पश्वालंभनादय इत्युक्तम्। सा हिंसेति कथमुच्यते? 'अग्नीषोमीयं पशुमालभेत' इत्यत्र 'आलंभः स्पर्शहिंसयोः' इत्युक्तत्वादालंभशब्दो हिंसावाची खलु। अनेन काम्यकर्मोच्यते। पूर्वविहितहिंसेति श्येनविधेरुक्तत्वाच्च तदुपरि विहितं काम्यकर्मैवात्र विवक्षितम्।

अथवा विहितत्वेऽपि भगवच्छेषत्वज्ञानपूर्वकमनन्यप्रयोजनेनाग्नींद्रादिदेवतांतर्यामिसमाराधनतया क्रियमाणपश्वालंभनादियुक्तयागादिकर्मापेक्षया स्वतंत्रेण स्वर्गादिफलसाधनतयाग्नींद्रादिदेवतामात्रमुद्दिश्य क्रियमाणपश्वालंभनादियुक्तकाम्यकर्मणो विशेषज्ञानां—परहिंसाप्रायमिति वक्तुमर्हतयात्यंतनिकृष्टत्वादनेनाकारेणैतत्परहिंसेत्याह। शास्त्रविहितं भगवदेकविषयं प्रापकांतरं ज्ञानिनामपाय इतिवदिदं चाधिकारिविशेषापेक्षया

---

विधि के ऊपर विधान किये हुए पशुहिंसा आदि कहेजाते हैं। याग में पशुहिंसा को हिंसा कैसे कह सक्ते हैं? इस शंका में कहते हैं कि, उस को विहित हिंसा कहा है, इस लिये। 'अग्नि और सोम संबंधि पशु को हिंसा करो' इस वचन में आलंभ शब्द 'आलंभः यह स्पर्श और हिंसा इन दोनों का पर्याय पद हैं।' इस से काम्यकर्म कहागया। 'पूर्व विहितहिंसा' ऐसा श्येनविधि को कहते हैं, तदुपरि विहितहिंसा को काम्यविधि कहते हैं।

यद्वा विहित होनेपर भी भगवत् शेषत्व ज्ञान पूर्वक अनन्यप्रयोजन हो अग्नींद्रादि देवतांतर्यामी का आराधनतया क्रियमाण पशुहिंसादि युक्त यागादि कर्म की अपेक्षा स्वतंत्र हो स्वर्गादि फल साधनतया अग्नि इंद्रादि देवताओं को मात्र उद्देश कर क्रियमाण पशुहिंसादि युक्त काम्यकर्म विशेषशास्त्र नियों को परहिंसा कहनेके योग्य अत्यंत निकृष्ट होनेसे इस आकार को लेकर उस को परहिंसा कहते हैं। जैसा शास्त्रविहित और [illegible] विषय उपायांतर को 'ज्ञानियों को अपाय'

एतच्च पूर्वविहितहिंसावत् वि-
धिनिषेधयोर्न विरोधः ॥ १३५ ॥

---

वक्तुं शक्यते हि । 'अथ पातकभीतस्त्वं' इत्युपायांतरं पातक-
शब्देनावोचद्धर्मदेवता च । बुभुक्षोरुपादेयं पुण्यमेव च मुमुक्षोः
पापशब्दवाच्यं भवति हि । एवं सर्वैरप्यत्र काम्यकर्मैवोच्यते ।
एवं योजना क्रियते उपासनविधेर्निवर्त्यतया काम्यकर्मणो-
ऽनेनैव परंदरहस्ये उक्तत्वात् ।

तर्ह्येवमिदं पुनः कथं निषिध्यत इत्यत आह—एतच्चेत्यादि ।

एतच्चेति—पूर्वोक्तमुपासनम् । पूर्वविहितहिंसा—'श्येनेना-
भिचरन् यजेत' इति प्रथमं विहितमभिचारकर्म । तत्तमः-

---

पूर्वविहितहिंसावदेतद्विधिनिषेधयोः ।
न विरोध इति प्राहुः सर्वशास्त्रार्थकोविदाः ॥ १३५ ॥

कहा, तैसा इस को भी अधिकारिविशेष के उद्देश से हिंसा कहने में विरोध नहीं। 'पाप से डरनेवाला तू' ऐसा उपायांतर को पापतया धर्मदेवताने कहा है । बुभुक्षु का उपादेय पुण्य मुमुक्षु के लिये पापशब्द से कहा जाता है । तथाच सर्वप्रकार से इस स्थल में काम्यकर्म कहा जाता है । इस योजना के कारण 'उपासना विधि से काम्यकर्म निवृत्त होता है' ऐसा स्वयं लोकाचार्यस्वामीजी परंदरहस्य ग्रंथ में कहे हैं ।

ऐसा हो तो इस प्रकार विधान कर फिर निषेध क्यों करते हैं ? इस शंका में कहते हैं—यह इत्यादि से ।

यह पूर्व विहितहिंसा के तरह विधि और
निषेधों के विषय होनेमें दोष नहीं ॥ १३५ ॥

यह—पूर्वोक्त उपासना । पूर्व विहितहिंसा माने—'अभिचार करनेवाले श्येन-

तच्छास्त्रविश्वासार्थं व्यदधात्,
इदं स्वरूपविश्वासार्थं व्यदधात् ॥ १३६ ॥

---

प्रचुरान्नास्तिकान्प्रति विहितमास्तिकान् कारीर्यादिकर्मस्ववगाहनार्हान् रजःप्रचुरान् प्रति यथा निषिध्यते, तथा इदमुपासनं च स्वातंत्र्यान्यशेषत्वनिवृत्तिपूर्वकं भगवच्छेषत्वेऽवगाह्य वर्धनार्हान् सत्वप्रचुरान् प्रति विहितम्। पारतंत्र्यज्ञानोत्पत्त्या भगवदेकोपायत्वस्थित्यर्हान् परमसत्त्वनिष्ठान् प्रति निषिध्यते इति न विरोधः ।

एवं निषिध्यमानमेतत्प्रथमं किमर्थं व्यदधादित्यत आह—तच्छास्त्रेत्यादि ।

---

उपासनादिकं शास्त्रविश्वासार्थं व्यधात्किल ॥
अयं स्वरूपविश्वासप्रयोजनतया विधिः ॥१३६॥

याग करे' ऐसा प्रथम विहित अभिचारकर्म। तमोगुण विशिष्ट नास्तिकलोगों को उद्देश कर विधान किया गया, यही आस्तिक हो कारीरी आदि काम्यकर्मों के अनुष्ठान के योग्य रजोगुण विशिष्ट लोगों को उद्देश कर निषेध किया जाता है; ऐसा ही उपासना स्वातंत्र्य–अन्यशेषत्व निवृत्तिपूर्वक भगवत्शेषत्व में दृढ होने योग्य सत्वगुण विशिष्ट लोगों को उद्देश कर विधान की गई, वही पारतंत्र्यज्ञानवाले भगवदेक उपायत्व में दृढ होनेयोग्य परमसत्वनिष्ठों को उद्देश कर निषेध की जाती है तो कोई विरोध नहीं।

इस प्रकार निषेध किये जानेवाले उपायांतरों को पहिले विधान क्यों किया? इस शंका में कहते हैं—उस को इत्यादि से।

उस को शास्त्रविश्वास के लिये विधान किया,
इस को स्वरूपविश्वास के लिये विधान किया ॥ १३६ ॥

तच्चर्मस्पर्श्येव गच्छति, इदं मर्मस्पर्शि ॥ १३७॥

'शठचित्तशास्त्रवशतोपायोऽभिचारश्रुतिः' इत्युक्तप्रकारेणाऽभिचारकर्म व्यदधात् — शास्त्रं नास्तीति स्थितस्य नास्तिकस्य शास्त्रविश्वासोत्पादनार्थम् । उपासनं व्यदधात् — स्वयं स्वतंत्रोऽन्यशेष इति च भ्रमवतश्चेतनस्य तद्द्वयमप्यागंतुकं भगवच्छेषत्वमेव नित्यवेष इति स्वस्वरूपे विश्वासोत्पादनार्थमित्यर्थः ।

एवमेकैकविश्वासार्थं विधाय निषेधस्य तुल्यत्वेपि एतदुपासनमपरित्यज्य तिष्ठति चेदभिचारकर्मवत् क्रूरं न भवति खल्वित्यतस्ततोपि क्रूरमित्याह— तदित्यादिना ।

---

चर्मस्पर्शि हि तद्याति मर्मस्पर्शि भवेदिदम् ॥ १३७॥

'नास्तिकलोगों को शास्त्रवश बनानेके लिये अभिचार श्रुति उपाय होती है' इस प्रकार अभिचारकर्म का विधानशास्त्र को नहीं अंगीकार करनेवाले नास्तिकों को शास्त्रों में विश्वास होनेके लिये । इस को माने—उपासनाविधि को । अपने को स्वतंत्र और अन्यशेष समझ भ्रांत चेतन को वे दोनों आगंतुक हैं, भगवत्शेषत्व ही स्वभावसिद्ध आकार है ऐसा अपने स्वरूप में विश्वास होनेके लिये विधान किया ।

इस प्रकार एक एक विश्वास के लिये विधान कर निषेध करना समान होनेपर भी इस उपासना को विच्छेदरहित अनुष्ठान करने पर अभिचारकर्म के तरह यह क्रूर न होगी ऐसा समझने पर, उस से भी अधिक क्रूर ऐसा कहते हैं—वह इत्यादि ।

वह चर्म से जाता है, यह मर्म को स्पर्श करता है ॥ १३७॥

इदं कर्मसाध्यत्वाद् दुष्करं च भवति ॥ १३८ ॥

---

परहिंसारूपं तदभिचारकर्म देहात्माभिमानिना कर्तव्यं विशिष्टवेषविरोधि तत्प्रयुक्तं फलं च किंचिद्दुःखानुभवमात्रं, स उपर्येव गच्छतीति–चर्मस्पर्श्येव गच्छतीत्युक्तम्। अहंकारगर्भमेतदुपासनमुत्पन्नात्मज्ञानेन कर्तव्यं निष्कृष्टवेषविरोधि भगवदेकपारतंत्र्यरूपस्वरूपनाशकमिति मर्मस्पर्शीत्युच्यते।

एतावन्मात्रमेव न किंतु दुष्करं चेत्याह– इदमित्यादिना।

एवं स्वरूपविरोधीदमुपासनं — 'यज्ञेन दानेन तपसाऽनाशकेन ब्राह्मणा विविदिषंति' 'अविद्यया मृत्युं तीर्त्वा' 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्'

'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः।

---

दुष्करं भवतीदं च कर्मसाध्यत्वहेतुतः ॥ १३८ ॥

परहिंसारूप वह अभिचार कृत्य देहात्माभिमानी का कार्य हो शरीर विशिष्ट आकार का विरोधी हो उस से होनेवाला किंचिद्दुःखानुभवमात्र हो ऊपर ऊपर चलेजानेसे चर्म से जाता है ऐसा कहे हैं। अहंकार मिश्रित यह उपासना आत्मज्ञानी का कृत्य हो शेषत्व का विरोधी हो भगवदेकपारतंत्र्यरूप स्वरूप का नाशक होनेसे मर्म को स्पर्श करता है ऐसा कहे हैं।

इतना ही नहीं यह उपासना दुष्कर भी है ऐसा कहे हैं यह इत्यादि से।

यह कर्मसाध्य होनेसे दुष्कर भी है ॥ १३८ ॥

एवं स्वरूपविरोधी यह उपासना–

'यज्ञ दान तपस्या और उपवास से ब्राह्मणलोग जानने की इच्छा करते हैं।' 'कर्मानुष्ठान से संसार को तर ज्ञान से मोक्ष को पाता है' 'उपासना के

कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते ॥'
'जन्मांतरसहस्रेषु तपोज्ञानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥'

इत्यादिषूक्तप्रकारेण कायक्लेशकर्मानुष्ठानेन साधनीयत्वादशक्तेनानेन कृत्वा समापयितुमप्यशक्यमित्यर्थः ।

एवं 'प्रापकांतरपरित्यागस्य' इत्यारभ्य एतावतोपायांतरदोषो विस्तरेण प्रतिपादितः ।

उपायांतरदोषप्रकरणं समाप्तम् ।

---

लिये कर्मानुष्ठान की अपेक्षा है– यज्ञादि श्रुति से घोडे के माफक' (अर्थात् बाहर जानेके लिये घोडा लाओ कहने से चढने के उपयुक्त सजावट कर लाओ ऐसा अर्थ होता है )

'कर्मानुष्ठान से पाप दूर होता है, ज्ञान मुक्ति का साधन होता है। कर्मानुष्ठान से पाप नाश होनेपर ज्ञान उत्पन्न होता है'

'हजारों जन्मों में किये हुए कर्म ज्ञान और ध्यान से पाप से मुक्त मनुष्यों को श्रीकृष्ण में भक्ति उत्पन्न होती है'

इत्यादि वचनानुसार कायक्लेश कर कर्मानुष्ठान से साधने योग्य होने से अशक्त यह चेतन उपासना नहीं करसक्ता ऐसा तात्पर्य समझना ।

एवं 'प्रापकांतर परित्याग का' ऐसा प्रारंभ कर यहां तक उपायांतर का दोष विस्तार पूर्वक कहागया ।

उपायांतर दोष प्रकरण समाप्त हुआ ।

प्रपत्त्युपायस्य एतेषु दोषेषु कोऽपि नास्ति ॥१३९॥

## अथ सिद्धोपायाधिकाप्रकरणम् ।

—=:=—

एवं प्रापकांतरस्यानेकान् दोषान् प्रत्यपादिष्ट, प्रपत्त्युपायस्य कोऽपि दोषो नास्ति किमित्यत आह– प्रपत्त्युपायस्येत्यादि ।

एतेषु दोषेष्विति — स्वरूपविरोधादिदुष्करत्वपर्यंतमुक्ताः सर्वे परामृश्यंते । कोऽपि नास्तीति — कोऽपि दोषोऽस्य नास्तीत्यर्थः । एतेषु दोषेषु कोऽपि नास्तीत्युक्तत्वादन्यः कश्चन दोषोस्तीति ज्ञायते, स च वस्तुत उपायत्वस्य स्वस्मिन्नभावेऽपि आपातप्रतीत्योपायप्रतिपत्त्यर्हत्वम् । एते दोषा अस्य न संतीत्यमुमर्थं प्रकाशयितुमस्याः स्वरूपोचितत्वसुकरत्वे आह —

प्रपत्त्युपाय एतेषु कश्चिद्दोषो न विद्यते ॥१३९॥

### अथ सिद्धोपायाऽधिकार प्रकरण ।

एवं उपायांतरों का अनेक दोष प्रतिपादन किये हैं, प्रपत्ति रूप उपाय का एक भी दोष नहीं है क्या ? इस शंका में कहते हैं—प्रपत्त्युपाय को इत्यादि ।

प्रपत्त्युपाय को इन दोषों में एक भी नहीं है ॥ १३९ ॥

इन दोषों में माने—स्वरूपविरोध प्रभृति दुष्करत्व पर्यंत कहे हुये सब दोषों को समझना । एक भी नहीं है माने—एक दोष भी इस को नहीं है। इन दोषों में एक भी नहीं कहनेसे इन से भिन्न कोई एक दोष है मालूं होता है। वह दोष वस्तुतः उपायत्व अपने को न होनेपर भी ऊपरी दृष्टि से उपाय समझने

आत्मयाथात्म्यज्ञानकार्यत्वात्स्वरूपस्योचिता,
'न व्याप्रियताम्' इत्युक्तप्रकारेण
निवृत्तिसाध्यत्वात्सुकरा च भवति ॥१४०॥

---

आत्मयाथात्म्येत्यादिना ।

अस्याः प्रपत्तेरात्मयाथात्म्यज्ञानकार्यत्वं नाम—श्रीमंत्रे मध्यमपदोक्तप्रकारेणात्मनो यथाऽवस्थितवेषस्य भगवदत्यंतपारतंत्र्यस्य प्रतिसंधानेनागतत्वम् । स्वरूपस्योचितत्वं नाम—तादृशपारतंत्र्यरूपस्वरूपस्यानुरूपत्वम् । 'न व्याप्रियताम्' इति एकोऽपि व्यापारो न कर्तव्य इत्यर्थः । निवृत्तिसाध्यत्वात्सुकरा च भवतीति—'भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिनिवृत्तिः प्रपत्तिः'

---

स्वयाथात्म्यज्ञकार्यत्वात्स्वरूपस्योचिता खलु ।
स्वया चेष्टा न कर्तव्येति श्रीसूक्तिप्रकारतः ।
स्वयं निवृत्तिसाध्यत्वात्सुकरा च प्रकीर्तिता ॥१४०॥

योग्य होना ।

ये दोष इस में नहीं हैं, इस को प्रकाश करनेके लिये इस का स्वरूपोचितत्त्व और सुकरत्त्व को कहते हैं—आत्मयाथात्म्य इत्यादि से ।

आत्मयाथात्म्यज्ञान का कार्य होनेसे स्वरूप का
उचित और 'प्रयत्न मत करो' इस वचनानु-
सार निवृत्तिसाध्य होनेसे सुकर भी है ॥१४०॥

आत्मयाथात्म्यज्ञान का कार्य माने—अष्टाक्षरी मंत्र के मध्यम पद में उक्त प्रकार आत्मा का यथार्थ आकार भगवदत्यंतपारतंत्र्य को जाननेसे कर्तव्य कृत्य । स्वरूप का उचित है — उस पारतंत्र्य स्वरूप का अनुरूप । 'प्रयत्न मत करो'—कोई व्यापार मत करो । निवृत्तिसाध्य होनेसे सुकर भी है—'भगवत्प्रवृत्ति

इत्युक्तप्रकारेण स्वप्रवृत्तिनिवृत्त्या साधनीयत्वात् सुलभतया कर्तुं योग्या भवतीत्यर्थः ।

एतयोरुभयोरुक्तयोरेव पूर्वोक्तदोषेषु कोपि नास्तीति कथं सिध्यतीति चेत् अपायत्वभयजनकत्वशोकजनकत्वाहंकारमिश्रतया निषिद्धत्वावद्यकरत्वानां, स्वरूपविरोधित्वप्रयुक्तत्वात्, फलविसदृशत्वस्य—अस्याः फलसाध्यत्वं विना सिद्धोपायस्यैव फलसाध्यत्वेनास्यास्तद्वरणमात्रतयाऽधिकारिविशेषणत्वेनास्यामवकाशाभावात्- एतेषां षण्णामपि दोषाणामभावः 'स्वरूपस्योचिता' इत्यत्र सिद्धो हि । कर्मसाध्यतयाऽऽगतं दुष्करत्वं नास्तीति 'निवृत्तिसाध्यतया सुकरा' इत्यत्र सुस्पष्टं हि । तस्मात्स्वरूपौचित्यसुकरत्वे एते उभे अस्याः स्त इत्युक्त्यैव पूर्वोक्तदोषेषु कोप्यस्या नास्तीत्यर्थः प्रकाशितः ।

---

विरोधि स्वप्रवृत्ति निवृत्ति प्रपत्ति' इस वचनानुसार स्वप्रवृत्ति को छोड साधन करने योग्य , इस लिये सुखपूर्वक कर सक्ते हैं ।

इन दोनों का कहनेसे पूर्वोक्त दोषों में एक भी नहीं यह अर्थ कैसे सिद्ध होता है ? इस शंका में—अपायत्व भयजनकत्व शोकजनकत्व अहंकारमिश्रतया निषिद्धत्व अवद्यकरत्व रूप ये संपूर्ण दोष स्वरूपविरोधित्व को अवलंबन कर होनेसे, प्रपत्ति फलसाधन न हो सिद्धोपायभूत सर्वेश्वर ही फल साधन हो यह प्रपत्ति उस का स्वीकाररूप मात्र हो अधिकारि विशेषण होनेसे फलविसदृशत्वरूप दोष इस में न हो सक्ता है । यह छः दोष भी इस में न होना—स्वरूप का उचित इस वाक्य से सिद्ध होता है । कर्मसाध्यतया होनेवाले दुष्करत्वरूप दोष इस को नहीं है यह अर्थ निवृत्तिसाध्य होनेसे सुकर है इस वाक्य से स्पष्ट होता है । इस कारण स्वरूपउचितत्व सुकरत्वरूप ये दोनों इस में हैं ऐसा कहनेसे पूर्वोक्त दोषों में से एक भी इस में नहीं है यह अर्थ प्रकाशित हुआ ।

पूर्णविषयत्वात्तद्वैभवानुगुणमुप-
हारो न कल्पयितुं शक्यते ॥ १४१ ॥

---

एवमुपायः स इत्यध्यवसाय स्वप्रवृत्तिनिवर्तनमुचितं किं ? तत्संतोषार्थमनेन कश्चनोपहारो न कल्पनीयः किं? इत्यत आह— पूर्णविषयत्वादित्यादिना ।

लोके उपहारकल्पकास्तद्विषयस्य गौरवानुगुणं खलु कल्पयंति, अत्रोपहारः कल्पनीय इति विचारे तथा कल्पनीयः, तस्यावाप्तसमस्तकामतया परिपूर्णत्वेन स्थितत्वात्तस्य वैभव-स्यानुगुणमनेनोपहारो न कल्पयितुं शक्यत इत्यर्थः ।

तर्हि तस्यैतद्विषये संतोषः कथं वर्द्धेत इत्यत आह — आभिमुख्येत्यादि।

---

अवाप्तसर्वकामत्वात्तद्वैभवानुसारतः ।
कथंचिदुपहारो हि कल्पयितुं न शक्यते ॥ १४१ ॥

एवं उपाय वह है ऐसा विश्वास कर अपनी प्रवृत्ति से निवृत्त होना उचित है क्या ? ईश्वर के संतोष के लिये इस चेतन को भी कुछ करना चाहिये न ? ऐसी शंका में कहते हैं पूर्णविषय इत्यादि से ।

पूर्णविषय होनेसे महत्वानुसार भेंट नहीं दे सक्ता !! १४१ ॥

लोक में भेंट देनेवाले जिस को देते हैं उस के गौरव के अनुसार देते हैं वहां भेंट देनेका विचार करनेपर गौरवानुसार ही देना चाहिये, वह अवाप्त समस्तकाम और परिपूर्ण होनेसे उस के वैभवानुसार इस चेतन से देनेलायक कुछ भी नहीं है ।

ऐसा हो तो परमात्मा इस चेतन के विषय में कैसे संतुष्ट होंगे इस शंका में कहते हैं— आभिमुख्य इत्यादि से ।

आभिमुख्यसूचकमात्रे संतोषो वर्द्धते ॥ १४२ ॥
पूर्तिर्निवृत्तिमकृत्वा आदरणे हेतुः ॥ १४३ ॥

---

अनादिकालं 'यत्किंचिदवलंब्य व्यावृत्तिव्रतमारोप्य' स्वस्माद्विमुखोऽयं तादृशव्यवसायनाशेन स्वस्मिन्नभिमुखोऽभवदित्यस्य सूचके, कस्मिंश्चिद्व्यापारे प्राप्ते 'एतावत्कालं विमुख इदानीमभिमुखः प्राप्तः खलु' इति तस्य हृदयमत्यंतं संतुष्टं भवतीत्यर्थः ।

तस्य तथा स्थितत्वेपि तत्पूर्तिः 'अकिंचनैरस्माभिस्तस्य प्रीतिमुपपाद्यानुसर्तुं न शक्यत' इति अमुं न निवर्तयेत्किमित्यत आह— पूर्तिरित्यादि ।

तस्यावाप्तसमस्तकामत्वमाश्रयणोन्मुखस्यास्य अस्माभिः स

---

संतोषो वर्द्धते तस्य ह्याभिमुख्यस्य सूचनात् ॥ १४२ ॥
पूर्तिरादरणे हेतुरकृत्वा तन्निवर्तनम् ॥ १४३ ॥

आभिमुख्य को दिखाने मात्रसे संतोष उत्पन्न होता है ॥ १४२ ॥

अनादिकाल से 'किसी एक व्रत को अवलंबन कर' ईश्वर से विमुख होनेवाला यह चेतन विमुखता छोड अपने विषय में आभिमुख्य का सूचक कृत्य को करनेपर इतना काल विमुख होनेवाला आज अभिमुख हुआ ऐसा उन का हृदय अत्यंत प्रसन्न होता है ।

ईश्वर ऐसा होनेपर भी उन की पूर्ति 'अकिंचन हमलोग उन को संतुष्ट कर समीप नहीं जासक्ते' ऐसा समझ हटजाने के योग्य नहीं करेगी क्या ? इस शंका में कहते हैं— पूर्ति इत्यादि से ।

पूर्ति हाथ न खींच ऊपर गिरनेका हेतु है ॥ १४३ ॥

उस का अवाप्तसमस्तकामत्व— आश्रयणोन्मुखचेतन 'हम किसी प्रकार

केनापि प्रकारेण संतोषयितुं न शक्यत इति तदाश्रयणात् निवृत्तिं विनाऽस्मदर्पितस्वीकारप्रयुक्ततृप्तिमत्त्वाभावेन परिपूर्णतयाऽस्मद्विषये प्राप्तं स्वीकृत्य संतुष्यतीत्यभिनिवेशेनाश्रयितुं हेतुर्भवतीत्यर्थः ।

अथवा तत्पूर्तिस्तं न संतोषयेदुपेक्षया निवर्तयेदित्यत आह— पूर्तिरित्यादि । तत्पूर्तिरमुमुपहारं नाकल्पयदित्यनादृत्यांगीकारान्निवृत्तिं विनाभिमुख्यसूचकमात्रोपर्यस्माकमनेन किं कर्तव्यमित्यादरेणांगीकारोपयुक्ता भवतीत्यर्थः ।

एवमयमल्पसंतुष्ट इत्यस्य प्रमाणमस्ति किमित्यत आह — 'पत्रं पुष्पं' इत्यादि ।

---

सर्वेश्वर के संतुष्ट करने में अशक्य हैं ' ऐसा समझ उस के आश्रयण से अलग न कर 'हमारे दियेहुए को लेकर तृप्त न हो जैसा परिपूर्ण होनेसे हमारे समर्पित वस्तु से संतुष्ट होगा ' ऐसा समझ प्रेम के साथ आश्रयण करनेके योग्य होता है ।

यद्वा उनकी पूर्ति चेतन से दिये हुए वस्तु से उन को संतुष्ट करेगी क्या ? उपेक्षा कराकर नहीं हटावैगी क्या ? इस शंका में कहते हैं— पूर्ति इत्यादि ।

उनकी पूर्ति ईश्वर को चेतन भेंट नहीं दिया जान इस को अनादर कर अंगीकार करने से न हट आभिमुख्यसूचक मात्र व्यापार से अधिक हमारे विषय में इस को कर्तव्य कुछ है क्या ? ऐसा विचार आदर पूर्वक अंगीकार करने योग्य बनाती है ।

एवं यह सर्वेश्वर अल्प से संतुष्ट होता है इस अर्थ में प्रमाण क्या है ? इस शंका में कहते हैं—पत्रं पुष्पं इत्यादि ।

'पत्रंपुष्पं' 'अन्यत्पूर्णात्' 'समर्पणीयो धूमः पुष्पमेव' ॥

---

'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥'

इति पत्रं वा पुष्पं वा फलं वा तोयं वा कश्चिन्मह्यं भक्त्या ददाति, अनन्यप्रयोजनतारूपशुद्धियुक्तमनसस्तस्य तादृशभक्त्योपहृतं अवाप्तसमस्तकामोहं स यथा प्रेम्णा कलुषितो ददाति तथा व्यामोहेन कलुषितोऽक्रमेण विनियोजयामीति स्वयमेवावोचत् खलु ।

'अन्यत्पूर्णादपां कुंभादन्यत्पादावनेजनात् ।
अन्यत्कुशलसंप्रश्नान्नचेच्छति जनार्दनः ॥'

दौत्येन गमनसमये धृतराष्ट्रे 'पांडवपक्षपाती कृष्ण आगच्छति

---

अन्यत्पूर्णाच्च पत्रं च देयौ च धूमपुष्पकौ ॥१४४॥

'पत्रं पुष्पं' 'जलपूर्ण घडे से और को' 'देने योग्य धूप और पुष्प ही हैं'। १४३॥

'जो मनुष्य भक्तिपूर्वक पत्र या पुष्प फल या जल को हमारे लिये अर्पण करता है, भक्ति से समर्पित उस को मैं प्रीतिपूर्वक पाता हूं'

ऐसा पत्र हो पुष्प हो फल हो या जल जो कोई पुरुष भक्ति पूर्वक मुझ को देता है अनन्यप्रयोजनतारूप शुद्धिविशिष्ट मनवाले उस का भक्ति पुरस्सर दिये हुए को अवाप्तसमस्तकाम मैं, जैसा वह प्रेम से व्याकुल हो देता है वैसा मैं भी व्यामोह से व्याकुल हो क्रम छोड विनियोग कर लेता हूं—ऐसा आप ही कहे हैं ।

'जलपूर्ण घडा से अन्य चरण धोनेके जल से अन्य, कुशलप्रश्न से अन्य, कुछ भी जनार्दन भगवान् नहीं चाहते हैं' ।

श्रीदूत्यकृत्य करनेके लिये जब श्रीकृष्ण पधारेथे तब धृतराष्ट्र 'पांडवपक्षपाति

तस्मै कांश्चन देशान् दत्वा सुवर्णं च दत्वाऽस्मदधीनं करवामहे' इत्येतादृशानि कानिचिद्ददाते, एकरूपमनोवाग्रहितस्य वंचकस्य तात्पर्यं जानन् संजयः— 'आगच्छन् स तादृशो न भवति ननु तस्यापेक्षितमेतावदेव' इति वदति। तथाहि— 'स्वपेयं जलमेकस्मिन् घटे पूरयित्वा शीतलतया निदध्यादेव, तस्य तदागमनमार्गे द्वारि निधानमलं तदुपरि किंचिन्नापेक्षितं; स्वगृहेऽतिथिरागतश्चेत् पादौ प्रक्षालयेदिति सामान्यशास्त्रं व्यदधाद्धि, तद्वत्तस्य श्रीपादयोरवनेजनमलं, तदुपरि तस्यासाधारणवैलक्षण्यानुगुणं विशिष्य कर्तव्यं नास्ति, बहुदूरमागतं प्रति कुशलप्रश्नः कर्तव्यः खलु तद्वत्कस्याश्चित्कल्याण्या वाचः कथनमेवालमधिकतया किंचिन्नापेक्षितं, एतानि विनाऽन्यत्किंचन नेच्छति ननु स' इत्यर्थः। अनेन 'तव दातव्यतयाऽभिमतान् देशान् सुवर्णं च एकवस्तुत्वेनापि

कृष्ण आरहा है उस को किसी देश और द्रव्य को दे हमारा बनालेंगे' ऐसा कहने पर मन और वचन में कापट्य को जाननेवाला संजय 'आनेवाला तादृश नहीं इन का अपेक्षित इतना ही है— अपने पीनेके टंडा जल को एक मिट्टी के घडे में रख और उस को उस के आनेके रास्तेमें द्वार में रक्खे इस से अधिक और कुछ नहीं चाहिये। अपने घर में अतिथि आ प्रवेश करनेपर चरण धोनेके लिये सामान्यशास्त्र विधान किया है, उस तरह इन के चरणारविंदों को धोनेसे तृप्त हो जायगा, उन के महत्वानुसार कुछ करनेकी अपेक्षा नहीं, बहुत दूर चलकर आये हुए को कुशल प्रश्न करना चाहिये इसी तरह एक मीठी बात कहनेसे वह तृप्त हो जायगा अधिकतया कुछ करनेकी आवश्यकता नहीं है, इतना छोड और कुछ श्रीकृष्ण नहीं चाहते हैं' ऐसा कहा। इस से यह मालूमहोता है कि 'तुम जिस द्रव्य और देश को देनेकी इच्छा करते हो वह उस को कुछ भी नहीं समझते, इच्छा हो तो अपने अति मुख्य सूचक व्यापारों को करनेका विचार करो।

मन्यते किं, यदि शक्तोऽपि, तर्हि— त्वदाऽभिमुख्यसूचकतयै-तानि कुरु इत्युक्तम् । 'दुःखरहितमीशम्' इत्यारभ्य समर्पणीयो धूपः पुष्पमेव' इति— हेयप्रत्यनीकं सर्वेश्वरं संसारान्मुक्त्वाऽनुभूय अनुभवजनितप्रीत्या 'एतत्साम गायन्नास्ते' इत्युक्तप्रकारेण गीत्वा विस्तृतत्वप्रेप्सवः! उपकरणेषु न्यूनतादर्शननिमित्तानिवृत्तिं विहाय असंस्कृतं जलं येन केन प्रकारेण प्रयुज्य पुनस्तस्य महाप्रसाददत्ततया दातव्यः कश्चन धूमो यत्किंचित्पुष्पं चैतावदेवालमिति, तस्य स्वाराधनतां सुस्पष्टं पराङ्कुश अवोचत् ।

पूर्णविषयत्वात् इत्यारभ्य एतावत्पर्यंतं प्रसक्तानुप्रसक्ततयाऽऽगतं खलु, प्रपत्तिवैलक्षण्यं किल पूर्वमुक्तं, तस्मात्तस्याः पुनरेकं वैलक्षण्यं वक्तुं सिद्धोपायस्य फलस्य च विद्यमानमैक्यं प्रथममाह— तृणं प्रदर्श्येत्यादिना ।

---

देनेके योग्य धूप और पुष्प ही हैं— हेयप्रत्यनीक सर्वेश्वर को संसार से मुक्त हो अनुभव कर उस अनुभव से होनेवाली प्रीति से 'इस साम को गान करते हुए रहता है' इस वचनानुसार गान कर उज्जीवित होनेकी इच्छा करनेवाले ! उपकरणों में न्यूनता देख न हट साधारण जल को किसी एक प्रकार से समर्पण कर फिर उन को प्रीतिदानतया देनेयोग्य किसी एक धूप और किसी एक फूल ही, इतना ही अपेक्षित है । इस प्रकार उनकी सुख पूर्वक आराध्यता को सुस्पष्ट शठकोपसूरि कहे हैं ।

'पूर्णविषय' ऐसा आरंभकर यहां पर्यंत प्रसक्तानुप्रसक्त कहे हैं इतना ही, प्रपत्तिवैलक्षण्य ही पहिले कहागया इस कारण उस की और एक विशेषता कहने के लिये सिद्धोपाय और फल इन की एकता को पहिले पहिले कहते हैं— घास दिखा इत्यादि ।

तृणं प्रदर्श्याहूय तृणं यथा ददाति
तथा फलसाधनयोर्भेदो नास्ति ॥ १४
तस्मात्सुखरूपा च भवति ॥ १४६ ॥

---

गामाहूय पश्चात्तस्या धारकादीनि दत्वा रिरक्षिषद्भिस्तद्भोग्यतृणमेव तद्वशीकारसाधनत्वेन पुरस्कृत्याहूय तस्मिन्नेवोपदत्ते फलसाधनयोर्यथा भेदो नास्ति तथा विलक्षणगुणविशिष्टस्य स्वस्यैव प्रथममर्मुं मेलयितुमुपायत्वादनंतरं सदैकरूपतयोपेयत्वेन स्थितत्वाच्च फलसाधने उभयमपि एकवस्त्वेव भवतीत्यर्थः ।

अनेन प्रपत्तिवैलक्षण्यफलितप्रकारमाह— तस्मादित्यादिना ।

---

तृणं प्रदर्श्य चाहूय तृणं यद्वत्प्रयच्छति ।
साध्यसाधनयोस्तद्वद्भेदो नास्तीति युक्तिमत् ॥ १४५ ॥
तस्मात्सर्वप्रकारेण सुखरूपा च विद्यते ॥ १४६ ॥

जैसा घास दिखाकर बुला घास ही को देते हैं
तैसा फल और साधन में भेद नहीं है ॥ १४५ ॥

गौ को बुला उस के धारकादि [ घास पानी ] को देने की इच्छा करने वाले गौ का भोग्य घास को ही उस को वशकरने को साधन त्या आगे दिखा समीप में बुला घास ही को देते हैं, इस में जैसा फल और साधन में भेद नहीं तैसा ही विलक्षणगुणविग्रहविशिष्ट आप ही पहिले इस चेतन के वश करने का उपाय हो अनंतर सदा इस के अनुभव के योग्य होने से फल और साधन ये दोनों एक ही वस्तु होता है ।

इस से प्रपत्ति की श्रेष्ठता फलित हुई ऐसा कहते हैं— इस कारण इत्यादि ।

इस कारण सुखरूप होती है ॥ १४६ ॥

साध्यवस्तु एव साधनत्वात्तद्वरणरूपेयं दुःशका न भवति, सुखरूपा भवतीत्यर्थः।

अथवा पुनश्च प्रपत्तेरेकं वैलक्षण्यमाह– तृणमित्यादिना। तृणं प्रदर्श्य धेनुमाहूय पुनस्तृण एव दत्ते फलसाधनयोर्यथा भेदो नास्ति तथा 'सकृत्कृतोंजलिः' 'नमश्चक्रुर्जनार्दनम्' इत्यादुक्तप्रकारेणांजल्यादिरूपां प्रपत्तिं पुरस्कृत्येश्वरे वशीकृते पुनस्तस्य मुखोल्लासार्थं क्रियमाणं कैंकर्यं च—

'बद्धांजलिपुटा हृष्टा नम इत्येव वादिनः।'

'हस्ताभ्यां पूर्णं प्रणम्य प्रणम्य त्वाम्' इत्यादिसूक्तप्रकारेण स्वस्वरूपानुरूपांजल्यादिवस्तुविशेषा एव। अतः फलसाधनयोर्भेदो नास्ति। एवं फलस्यैव साधनत्वादियं प्रपत्तिः दुःशका न भवति, अस्य सुखरूपा भवतीत्यर्थः।

---

साध्यवस्तु ही साधन होनेसे तत्स्वीकार रूप यह प्रपत्ति दुःशक न हो सुखरूप होती है।

यद्वा और भी प्रपत्ति की एक विशेषता कहते हैं– घास इत्यादि से। घास को दिखाकर गौ को बुला फिर उसी घास को देते हैं तो जैसा फल और साधन में भेद नहीं तैसा 'एक वार की हुई अंजलि' 'जनार्दन को नमस्कार किये हैं' इन वचनानुसार अंजल्यादिरूप प्रपत्ति को आगे कर ईश्वर को वश करनेपर उन के संतोष के लिये क्रियमाण कैंकर्य भी 'अंजलि बांध हृष्ट हो नमः ऐसी उक्ति को ही कहनेवाले' 'हाथों की तृप्ति होने तक आप की सेवा कर' इत्यादि वचनानुसार अपने स्वरूपानुरूप अंजल्यादि वृत्ति विशेष होनेसे फल और साधन में भेद नहीं। एवं फल ही साधन होनेसे यह प्रपत्ति दुःखरूप न हो सुखरूप होती है।

एवं 'प्रपत्युपायस्य' इत्यारभ्यैतावत्प्रपत्तेर्दोषराहित्यं चोक्तम् ।

उपायांतरदोषप्रकरणं संपूर्णम् ।

अथ सिद्धोपायनिष्ठवैभवप्रकरणम् ।

**एवं प्रस्तुतायाः प्रपत्तेरनुपायत्वं तत्प्रतिकोटिपरगतस्वीकारोपायत्वं च 'इयं दृष्टा चेत्' इत्यादिना 'प्राप्तेरुपायस्तदिच्छा' इत्यादिना च पूर्वोक्तप्रकारेण विना मुखांतरेणाह ।**

---

तथा च प्रपत्त्युपाय का इत्यादि यहां तक प्रपत्ति का दोषाभाव और गुणाधिक्य कहे गये ।

उपायांतर दोष प्रकरण समाप्त हुआ ।

अथ सिद्धोपायनिष्ठों का वैभव प्रकरण ।

इस प्रकार प्रस्तुत प्रपत्ति का अनुपायत्व, उस की प्रतिकोटि परगतस्वीकार का उपायत्व 'इस को देखनेसर' 'प्राप्तिका उपाय उस की इच्छा' इत्यादि से पूर्व यथा प्रतिपादन किये हैं तथा विना दूसरी रीति से कहते हैं ।

अयं तं प्रेप्सति चेदियं प्रपत्तिश्च नोपायः ॥ १४७॥

---

तत्रैवं स्वरूपानुरूपामिमां साधनीकृत्य स्वतंत्रमथ प्राप्तुमिच्छति चेत्तदिच्छायाः सहकारित्वाभावे इयं न फलतीत्याह—अयं तमित्यादिना ।

अयमर्थः— वस्तु वस्तुमान् गत्वा यथा स्वीकरोति तथा स्वामिना स्वयमागत्य क्रियमाणमंगीकारं पश्यन् वर्तितुं योग्यः परतंत्रोऽयं चेतनः स्वयं फली सन् स्वस्वीकारेण स्वतंत्रं तं प्राप्तुमिच्छति चेत् तदिच्छाऽभावे एवं विलक्षणा प्रपत्तिश्च तल्लाभसाधनं न भवति ।

अथ स एव स्वीकरोति चेत् विद्यमानं वैलक्षण्यमाह— सोऽमुमित्यादिना ।

---

अयमिच्छति तं चेदियं प्रपत्तिर्न साधनम् ॥१४७॥

उस में इस प्रकार स्वरूपानुरूप इस प्रपत्ति को साधन मान स्वतंत्र ईश्वर को यह चेतन पाने की इच्छा करनेपर उस की इच्छा न हो तो यह विफल होगी ऐसा कहते हैं— यह चेतन ईश्वर को इत्यादि ।

यह चेतन ईश्वर को पानेकी इच्छा
करनेपर यह प्रपत्ति भी उपाय नहीं है ॥ १४७ ॥

वस्तु को मालिक जाकर यथा स्वीकार करता है तथा मालिक रूपेश्वर अंगीकार करनेपर देखते रहनेके योग्य परतंत्र यह चेतन आप ही फल भोक्ता हो अपने स्वीकार से स्वतंत्र ईश्वर को पाने की इच्छा करे तो उस की इच्छा न होनेपर इस प्रकार सर्वोपाय श्रेष्ठ प्रपत्ति भी उस के लाभ का साधन न होगी ।

अथ वही स्वीकार करनेपर होने वाले वैलक्षण्य को कहते हैं— वह इत्यादि ।

वह इस चेतन को पानेकी इच्छा करनेपर

## सोऽनुं प्रेप्सति चेत् पातकमपि न प्रतिबंधकम् ॥१४८॥

---

स्वामी स्वतंत्रः स्वंपरतंत्रममुं स्वेच्छया प्रेप्सति चेत् पापेषु प्रधानतया परिगण्यमानपातकमपि प्रतिबंधकं न भवतीत्यर्थः । एतद्द्वाभ्यामपि स्वगतस्वीकाराऽनुपायत्वं परगतस्वीकारोपायत्वं च प्रदर्शितम् ।

'चितः परमचिल्लाभे प्रपत्तिरपि नोपधिः ।
विपर्यये तु नैवास्य प्रतिषेधाय पातकम् ॥'

इत्युक्तं हि ।

एवमेतद्द्वयमपि कुत्र दृश्यते इत्यत आह--एतदित्यादि ।

---

## सोमुमिच्छति चेत्पापकर्म न प्रतिबंधकम् ॥१४८॥

पाप भी प्रतिबंधक नहीं है ॥ १४८ ॥

मालिक स्वतंत्र अपना वस्तु परतंत्र इस चेतन को अपनी इच्छा से पाने के विचार करनेपर पापों में प्रधानतया गिने जाने वाले पाप भी प्रतिबंधक नहीं होगा । इन दोनों से चेतन का स्वीकार उपाय नहीं और परमात्मा का स्वीकार उपाय है ऐसा दिखाया गया ।

'चेतन का परमात्मा की प्राप्ति में प्रपत्ति भी उपाय नहीं ।
परमचेतन का चेतन की प्राप्ति में चेतन गत पाप भी प्रति
बंधक नहीं ॥'

ऐसा कहा है ।

ऐसा इन दोनों को कहां देख सक्ते हैं ? इस शंका में कहते हैं—इन दोनों को इत्यादि ।

इन दोनों को श्रीभरतसूरि और श्रीगुहदेव में देख सक्ते हैं ॥ १४९ ॥

इन दोनों में देखनेका प्रकार कैसा ? इस शंका में कहते हैं ।

श्रीभरतसूरि का इत्यादि

एतदुभयमपि श्रीभरते गुहे च दृश्यते ॥ १४९ ॥
श्रीभरतस्य समीचीनमेवाऽसमीचीनं जातं,
श्रीगुहस्यासमीचीनमेव समीचीनं जातम् ॥ १५० ॥

---

तयोरिदं कथं दृश्यते? इत्यत आह—श्रीभरतस्येत्यादि-वाक्यद्वयेन ।

स्वामिनं निवर्तयन्नागत्याभिषेकं कारयित्वा स्वस्वरूपानुरूपं कैंकर्यं प्राप्य वर्धितुं 'एभिश्च सचिवैः सार्धं' इत्यादिप्रकारेण मार्गादारभ्य मनोरथयन् गत्वा महत्यार्त्या सह तच्चरणयोः प्रपत्तिं कुर्वाणस्य श्रीभरतस्य तथाकृतप्रपत्तिरूपं समीचीनमेव शरण्यस्य स्वामिनो हृदयस्यानिष्टत्वादसमीचीनं जातम् । 'ज्ञानहीनः संबंधरहितः' इत्यादिप्रकारेण भगवता स्वयमेवागत्यांगीक्रियमाणस्य श्रीगुहस्य दोषस्यैवोपहारत्वेनांगीकृतत्वात्पातकरूपाऽसमीचीनमेव समीचीनं जातमित्यर्थः ।

---

दृश्यते द्वयमेतद्धि श्रीभरते च श्रीगुहे ॥ १४९ ॥
भरतस्य समीचीनमेवासम्यग्गतं किल ।
श्रीगुहस्यासमीचीनमेव सम्यग्गतं तथा ॥ १५० ॥

श्रीभरतसूरि का पुण्य हीं पाप हुआ,
श्रीगुहदेव का पाप हीं पुण्य हुआ ॥ १५० ॥

श्रीरामजी को लौटकर पट्टाभिषेक कर अपने स्वरूपानुरूप दास्य को प्राप्त हो उज्जीवन के लिये 'इन मंत्रियों के साथ' इस वचनानुसार मार्ग से लेकर मनोरथ करते हुए जाकर बडा आर्ति से श्रीरामजी के चरणारविंदों में प्रपत्ति करनेवाले श्रीभरतसूरि का वह प्रपत्तिरूप पुण्य ही शरण्य श्रीरामजी का अनिष्ट होनेसे पाप हुआ । 'पापी क्षुद्र' इस वचनानुसार आप ही श्रीरामजी से अंगीकार कियेगये श्रीगुहदेवजी का दोष ही को भेंट मानकर अंगीकार करने से पाप ही पुण्य हुआ है ।

सर्वापराधानामपि प्रायश्चित्तरूपा प्रप-
त्तिश्चापराधकोटावन्विता क्षमापण
कर्तव्यतार्हा स्थिता खलु ॥ १५१ ॥

---

'यत्त्वत्प्रियं तदिह पुण्यमपुण्यमन्यद्'

इति हि पुण्यपापलक्षणं, अतोऽनयोर्दृश्यते इत्यर्थः ।

अनेन क्रियमाणं प्रपदनं शरण्यहृदयानुसारि न भवति चेदपराधकोटिघटितं स्यादित्यवोचत्पूर्वं, इदं चास्य पूर्ववृत्ते दृष्टेऽपि अपराधकोटौ भवतीत्यमुमर्थं प्रकाशयितुं भाष्यकारानुष्ठानप्रकारमाहोपरि—सर्वापराधानामपीत्यादिना ।

'अहमस्म्यपराधानामालयः' इत्युक्तप्रकारेणापराधानां सर्वेषां भाजनेऽस्मिन् चेतने प्रपत्तिं कुर्वति 'सर्वपापेभ्यो मोक्ष-

---

निष्कृतिः सर्वपापानां प्रपत्तिः पातकेऽन्विता ।
क्षमापणस्य कर्तव्यतार्हा तिष्ठति सर्वथा ॥ १५१ ॥

'जो आप का प्रिय है वही पुण्य है और आप का अप्रिय पाप है'

ऐसा पुण्यपाप का लक्षण है; इस लिये इन दोनों में 'देखसक्ते हैं' ऐसा कहा है ।

इस चेतनकर्तृक प्रपदन शरण्य हृदयानुसार न होनेपर अपराध कोटि में गिना जायगा ऐसा पहिले कहे हैं, अत्र इस के पूर्ववृत्त को देखनेपर भी अपराध कोटि में गिना जायगा इस अर्थ को प्रकाश करनेके लिये भाष्यकार के अनुष्ठान प्रकार को दिखाते हैं ।

संपूर्ण अपराधों का प्रायश्चित्तरूप प्रपत्ति अपराध
कोटि में गिनी जाकर क्षमापण करने योग्य होती है ॥ १५१ ॥

'मैं अपराधों का स्थान हूं' इस वचनानुसार अपराधों का स्थानभूत इस चेतन के प्रपत्ति करनेपर 'सर्वपापों से मुक्त करूंगा' इस वचनानुसार इस चेतन

यिष्यासि' इत्येतद्विषये सर्वेश्वरहृदयस्य प्रसन्नत्वात्सर्वापराधानामपि प्रायश्चित्तरूपा खलु प्रपत्तिर्वर्तते । एवं भूतां प्रपत्तिं

'त्वत्पादारविंदयुगलं शरणमहं प्रपद्ये'

इति कृतवतो भाष्यकारस्य स्वपूर्ववृत्तानुसंधानानंतरं तस्या अपराधकोटौ स्थितत्वात् 'त्वमेव माता च' इत्यारभ्यैतद्विषयेऽपराधं क्षंतुमुपयुक्तान् संबंधविशेषान् सर्वान् विज्ञापयन् 'तस्मात्प्रणम्य' इत्यादिना 'एवमग्रतो निःसंकोचं स्थित्वा प्रपत्तिः कृता अमुमपराधं क्षमस्व' इति क्षमापणकर्तव्यतार्हा स्थितेत्यर्थः । तस्मादेतद्रीत्यापीयमपराधकोटिघटितेत्यर्थः ।

अनादिकालमपराधं कृत्वा पश्चादेकस्मिन् दिवसे आभिमुख्ये कृतेपि 'रिपूणामपि वत्सलः' 'यदि वा रावणः स्वयं' इति स्थितस्येश्वरस्य हृदये दृष्टे तत्स्वीकारस्य काचिन्न्यूनता नास्ति । तस्य तथा स्थितत्वेपि स्वपूर्ववृत्ते स्मृतेऽस्येममराधं ज्ञात्वा क्षमापणं कर्तव्यं भवति हि ।

---

के ऊपर सर्वेश्वर का हृदय प्रसन्न होनेसे प्रपत्ति सर्वापराधों का प्रायश्चित्तरूप है । इस प्रकार की प्रपत्ति को 'आप के चरणारविंदयुगलों में मैं शरणागति करता हूं' ऐसा प्रपत्ति करनेवाले श्रीभाष्यकार स्वामी अपने पूर्ववृत्त को अनुसंधान कर उस प्रपत्ति को अपराध कोटि में जान 'आप ही माता हो' ऐसा प्रारंभ कर अपने अपराध को क्षमा करनेके उपयुक्त संबंध विशेषों को विज्ञापन कर 'उस लिये प्रणाम कर' इत्यादि से 'इस प्रकार आप के सामने निडर खडा हो प्रपत्ति करनेके इस अपराध को क्षमा कीजिये' ऐसा क्षमापण कराना आवश्यक हुआ । इस कारण यह प्रपत्ति अपराध कोटि में गिनी जाती है ।

अनादिकाल अपराध कर बाद एक दिन में आभिमुख्य करनेपर भी 'शत्रुओं के विषय में भी वत्सल' 'स्वयं रावण हो तो भी' ऐसा रहनेवाले ईश्वर के हृदय को देखनेपर उस के स्वीकार करने में संशय नहीं है । उस सर्वेश्वर के ऐसा होनेपर भी अपने पूर्ववृत्त को जाने तो यह चेतन इस प्रपत्ति को अपराध जान क्षमापण कराना आवश्यक है ।

बहुकालमन्यपरा भार्या लज्जाभये त्यक्त्वा
भर्तृसकाशे स्थित्वा मामंगीकुरुष्वेत्य-
पेक्षते चेद् यथा स्यात्तथा वर्तमानः
कश्चन खल्वनेन क्रियमाणा प्रपत्तिः ॥ १५२

---

अनेन क्रियमाणा प्रपत्तिः स्वपूर्ववृत्तानुसंधानेऽपराधकोटौ वर्तत इत्यमुमर्थं दृष्टांतमुखेन दर्शयत्युपरि—बहुकालमित्यादिना ।

बहुकालं भर्त्रा सह संबधं त्यक्त्वा परपुरुषगामिनी तन्निग्रहपात्रं च काचन भार्या एतावद्दयहं तत्सान्निधौ निःसंकोचं गत्वा कथं तिष्ठामीति लज्जां, एतावत्कालं स्वस्य कृतान्

---

बहुकालान्यपरा स्त्री त्यक्त्वा लज्जां भयं तथा ।
भर्तुरन्ते स्थिता त्वं मे स्वीकुरुष्वेत्यपेक्षते ।
चेद्यथा स्यात्तथा कश्चिद्वर्तमानः प्रकारकः ।
अनेन क्रियमाणा हि प्रपत्तिः कथिता खलु ॥१५२॥

चेतनकर्तृक प्रपत्ति स्वपूर्ववृत्त का अनुसंधान करनेपर अपराध कोटि में गिनी जाती है इस अर्थ को दृष्टांत द्वारा दिखाते हैं—दीर्घकाल इत्यादि ।

दीर्घकाल अन्यासक्त हो रहनेवाली भार्या लज्जा और
भय दोनों को छोड भर्तृसमीप में आ मुझ को अंगीकार
करो ऐसी अपेक्षा करनेसे यथा अपराधकर होता है
वैसा चेतनकर्तृक प्रपत्ति अपराधकर जानना ॥ १५२ ॥

दीर्घकाल पति का संग छोड परपुरुषकामिनी हो भर्ता के निग्रहपात्र हो संचार करनेवाली स्त्री इस प्रकार मैं पतिसंनिधि में स्थिर हो कैसे जासक्ती हूं इस प्रकार की लज्जा और इतना काल हमारे दुष्कृत्य को देखते रहनेवाले भर्ता अब हम

सर्वान् व्यापारान् पश्यन् स्थित इदानीमस्मानागत्यैवम-पेक्षते किलेति दंडयति चेत् किं करोमीति भयं च त्यक्त्वा तदग्रतो गत्वा स्थित्वा मामंगीकुरुष्वेत्यपेक्षते चेत् यावान-पराधः, तथा वर्तमानः कश्चन खलु—भगवदनन्यार्हशेषत्वनादि कालं तेन सह संबंध विनाऽन्यपरतया स्थितेनानेन स्वपूर्व-वृत्तानुसंधानेनागतां लज्जां, स्वतंत्रो दंडयति चेत् किं कर्तव्य-मिति भयं च विना तत्संनिधौ गत्वा स्थित्वा मामंगीकुरुष्वेति क्रियमाणं शरणवरणमित्यर्थः। एवमेतावता स्वगतस्वीकारा-नुपायत्वं परगतस्वीकारोपायत्वं च प्रतिपादितम्। एतत्स्वीकारं दृष्ट्वा कृपां कृत्वाऽसावस्य परतंत्रो भवतीत्येतत्पारतंत्र्यात् स्वस्वातंत्र्येणागत्य परतंत्रो भवतीतीदं पारतंत्र्यं प्रबलमि-त्याह— कृपयेत्यादिना।

---

को इस प्रकार अपेक्षा करती है समझ दंड देंगे तो क्या होगा ऐसा डर भी छोड उन के सामने आकर खडी हो मुझ को अंगीकार करो ऐसी अपेक्षा करनेसे जितना अपराध होगा उतना ही भगवदनन्यार्हशेषभूत यह चेतन अनादिकाल से परमात्मा का संबंध छोड अन्यपर हो संचार करनेवाला स्वपूर्ववृत्तानुसंधान से होनेवाली लज्जा और स्वतंत्र परमात्मा दंड देनेसे क्या करेंगे ऐसा डर को भी छोड उन की सन्निधि में जा खडे हो हम को अंगीकार करो ऐसा कह क्रियमाण प्रपत्ति से अपराध होगा।

तथा च चेतनकर्तृक स्वीकार उपाय नहीं परमात्मकर्तृक स्वीकार ही उपाय है ऐसा प्रतिपादन किया गया।

अब चेतन के स्वीकार को देख दया कर सर्वेश्वर इस चेतन का परतंत्र होनेकी अपेक्षा अपने स्वातंत्र्य से आकर परतंत्र होना ही प्रबल है ऐसा कहते हैं।

कृपया आगतात् पारतंत्र्यात्
स्वातंत्र्येणागतं पारतंत्र्यं प्रबलम् ॥ १५३ ॥

---

आर्तेष्वनन्यशरणेषु स्वचरणयोः शरणागतेषु स्वस्य विद्यमानया कृपया तदुक्तं कर्तुमुपयुक्तं पारतंत्र्यं, पट्टस्यार्हो हस्तीव राजेव च स्वनिरंकुशस्वातंत्र्येण निर्हेतुकं कांश्चनांगीकृत्य स्वस्य तदधीनत्वापादनं चेत्युभयमपीश्वरस्यास्ति, अत्र पूर्वं कासुचिद्दशासु स्वातंत्र्यनिरुद्धं सद्विफलं च भवेत्, चरमं त्वप्रतिहतमिति कदापि बाधो नास्ति । तस्मात्तदपेक्षया इदं प्रबलमित्यर्थः ।

अयमर्थो वेदाभिमत इत्याह— अमुमर्थमित्यादिना ।

---

कृपया चागतात्पारतंत्र्यात्स्वातंत्र्यकेण वै ।
आगतं पारतंत्र्यं यत्प्रबलं तद्विदुर्बुधाः ॥ १५३ ॥

कृपा से होनेवाला पारतंत्र्य की अपेक्षा
स्वातंत्र्य से होनेवाला पारतंत्र्य प्रबल है ॥ १५३ ॥

पीडित हो अन्य उपाय न देख अपने चरणों में शरणागति करनेवालों के विषय में अपनी कृपा से उनके कहे प्रमाण करनेयोग्य परतंत्र होना, पट्टाभिषिक्त चढनेयोग्य हाथी और स्वतंत्र राजा ये दोनों जैसे अपने निरंकुश स्वातंत्र्य से निर्हेतुक किसी एक को अंगीकार कर उन के अधीन अपने को बनाना ये दोनों ईश्वर का स्वभाव है। इस में पहिले कहा हुआ पारतंत्र्य किसी एक समय में स्वातंत्र्य गुण से रुका जाकर निष्फल भी होसक्ता है, पीछे कहा हुआ पारतंत्र्य विना रोक रहनेसे कभी निष्फल नहीं होसक्ता है। इस कारण उस से यह प्रबल है।

यह अर्थ वेद का अभिमत है ऐसा कहते हैं—इस अर्थ को इत्यादि ।

## अमुमर्थं वेदपुरुषोऽपेक्षितवान् ॥ १५४ ॥

---

अमुमर्थमिति—पूर्वं प्रबलतयोक्तः परगतस्वीकार उच्यते। वेदपुरुषोऽमुमर्थमपेक्षितवानिति—

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥'

इति कठवल्ल्यां मुण्डकोपनिषदि चोक्तत्वात्—आदृतवानित्यर्थः। असकृत्कीर्तनमपेक्षाकार्यं हि। अस्मिन्नपेक्षाभावेपि तद्विषयीकारं प्राप्तः सन्ति किमित्यत आह—अपेक्षानिरपेक्षमित्यादि।

---

## अमुमर्थं च वेदश्चापेक्षितवान् स्वयं खलु ॥ १५४ ॥

इस अर्थ को वेदपुरुष चाहता है ॥ १५४ ॥

इस अर्थ को—पूर्व में प्रबलतया उक्त परगत स्वीकार को। वेदपुरुष चाहता है माने—

> 'यह परमात्मा मनन से ध्यान से श्रवण से नहीं मिलते हैं। जिस चेतन को यह परमात्मा स्वीकार करता है उस से ही प्राप्त होनेयोग्य है, उस ही को यह परमात्मा अपना स्वरूप रूप गुण विभूतियों को विस्तार कर दिखाते हैं ॥'

ऐसा कठवल्ली और मुंडकोपनिषद में कहा है, इस से वेदपुरुष चाहता है ऐसा कहे हैं। बार बार कहना अपेक्षा कार्य है।

इस चेतन के अपेक्षा नहीं करनेपर भी परमात्मा किस को अपेक्षा किये हैं ऐसी शंका में कहते हैं—बिना अपेक्षा इत्यादि।

## अपेक्षानिरपेक्षं मारुतेः श्रीगुहस्य चायं जातः ॥१५५॥

स्वास्मिन्स्वस्मिन्नपेक्षःभावेऽपि पंपातीरे गंगातीरे च स्वामिना स्वयमेवागत्यांगीकृतयोः श्रीमारुतिगुहयोरयं परगतस्वीकारो जात इत्यर्थः ।

एवं स्वतंत्रेण तयोरंगीकारसमये

'तमभ्यभाष सौमित्रे सुग्रीवसचिवं कपिम् ।'

'सुंदरहरिणवल्गव्यनेत्रे त्वन्मित्रं त्वदनुजो मदनुज' इति बालस्वामिनं जानकीं च पुरस्कृत्य यथांगीकृतवान्, तथान्यत्र च पुरुषकारं पुरस्कृत्यांगीकारस्थलं दृश्यते किमित्यत आह— अनेनेत्यादि ।

---

## विनापेक्षामयं जातो मारुतेः श्रीगुहस्य च ॥१५५॥

विना अपेक्षा मारुति और श्रीगुहदेव को यह अंगीकार हुआ है ॥ १५५ ॥

अपने अपने की अपेक्षा न होनेपर भी पंपातीर और गंगा के किनारे श्रीरामजी आप ही जाकर श्रीमारुति और श्रीगुहदेवजी को अंगीकार करनेसे यह परगतस्वीकार उन दोनों में देखाजाता है ।

इस प्रकार स्वतंत्र हो इन के अंगीकार करने के समय—

'हे लक्ष्मण सुग्रीव के मंत्री हनुमानजी से बातकरो', 'सुंदर मृगनयनी सीता तुमारी सखी है हमारा भ्राता तुम्हारा भ्राता है' ऐसा लक्ष्मण सूरि और सीताजी को जैसा आगे किये हैं तेसा अन्यस्थल में भी पुरुषकार को आगे कर अंगीकृत चेतन को देखसक्ते हैं क्या ? इस शंका में कहते हैं—यह इत्यादि ।

अनेन पुरस्क्रियमाणान् स पुरस्करोती-
त्ययमर्थोऽभयप्रदाने च द्रष्टव्यः ॥ १५६ ॥

---

अनेन चेतनेन स्वाश्रयणसमये पुरुषकारत्वेन पुरस्क्रिय-माणान् सोप्यंगीकारसमये पुरस्करोतीत्ययमर्थः— मारुतेः श्रीगुहस्य चांगीकारस्थलयोर्मात्रं विना श्रीविभीषणस्यांगीका-रस्थले च दृश्यत इत्यर्थः। तथाहि—

'सोऽहं परुषितस्तेन दासवच्चावमानितः ।
त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ॥
सर्वलोकशरण्याय राघवाय महात्मने ।
निवेदयत मां क्षिप्रं विभीषणमुपस्थितम् ॥'

इति स्थितस्य विभीषणस्याभयप्रदानपूर्वकमंगीकारस्थले--

---

एतत्पुरस्कृतान् सोपि पुरस्करोति सर्वदा ।
द्रष्टव्योऽभयदानेयमर्थो रामायणेन हि ॥ १५६ ॥

यह चेतन जिस को आगे करता है उस ही को सर्वेश्वर भी
आगे करते हैं यह अर्थ अभयप्रदान में देखसक्ते हैं ॥ १५६ ॥

यह चेतन आश्रयण करनेके समय जिन को पुरुषकारतया आगे करता है उन ही को ईश्वर भी अंगीकार करनेके वखत आगे करते हैं यह अर्थ श्रीमारुति और श्रीगुहदेव इन दोनों के अंगीकार करनेके स्थल में मात्र विना श्रीविभीषण सूरि को अंगीकार करनेके स्थल में भी देख सक्ते हैं।

'मैं उस रावण से कठिनवचन कहा जाकर दास के तरह अप
मानित हो पुत्र दाराओं को त्याग राघव के शरण में आया हूं।'

ऐसा शरणागति कर,

'सर्वलोकरक्षक महात्मा श्रीरामजी की संनिधि में
उपस्थित हुआ मुझ विभीषण को निवेदन कीजिये।'

ऐसा आकाश में स्थित श्रीविभीषणसूरि को अभयप्रदानपूर्वक अंगीकार करनेके समय में—

'आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया ।
विभीषणो वा सुग्रीव! यदि वा रावणः स्वयम् ॥'

इति वानराणां सर्वेषां मूलभूतं महाराजं पुरस्कृत्य ह्यंगीकृतः । मारुतेः श्रीविभीषणस्यांगीकारसमये जानक्याः सन्निहितत्वाभावेन तत्पुरस्करणस्याभावेपि जानकी लंकागमनसमये यत्र महाराजमारुती आतिष्ठतां तत्राभरणानि प्रक्षिप्य कटाक्षयित्वाऽगमत्, लंकाप्राप्त्यनंतरं श्रीविभीषणं स्वामिनश्चरणावाश्रयत्विति सा कटाक्षितवती । अतः स्वामी उभयोरप्यंगीकारस्थले जानकीं पुरस्कृत्यैवांगीचकारेत्यंगीकर्तव्यम् । परतंत्राया अस्या एतच्चित्तानुविधानं विना प्रत्येकमेकापि प्रवृत्तिर्न संभवति खलु, अत एव हि परगतस्वीकारकथनस्थले श्रीविभीषणस्वीकारं च सहापठत् ।

---

'हे सुग्रीव विभीषण हो या स्वयं रावण हो उसको मैं अभयदान दियाहूं इस लिये उस को हमारे पास ले आओ ।'

ऐसा समस्तवानरों के राजा सुग्रीव को आगेकर ही अंगीकार किये हैं ।

हनुमान जी और श्रीविभीषणसूरि को अंगीकार करनेके स्थल में सीताजी की सन्निधि न होनेसे उन की पुरुषकारपना नहीं दीखती तो भी सीताजी लंका को पधारनेके समय सुग्रीव और हनुमान जी के वासस्थल में आभरणों को गिरा कटाक्षकर जानेसे, लंका में जानेके बाद श्रीविभीषण सूरि को श्रीरामजी के चरणों में शरण लेनेयोग्य कटाक्ष करनेसे, श्रीरामजी इन दोनों को अंगीकार करनेके समय सीताजी को आगे कर ही अंगीकार किये हैं ऐसा मानना चाहिये । परतंत्रभूता सीताजी को श्रीरामजी की इच्छा के व्यतिरिक्त इच्छा नहीं होसक्ती है । इस कारण ही परगतस्वीकार कहनेके समय श्रीविभीषणसूरि के अंगीकार को भी श्रीलोकाचार्य स्वामीजी साथ ही पठन किये हैं ।

उभावपि पुरस्कुरुतः स्वस्वापराधं शमयितुम् ॥ १५७॥

---

अस्य निरुपाधिकशेषभूतत्वेन तस्य निरुपाधिकशेषित्वेन चाऽव्यवधानेनाश्रयणांगीकारयोः संभवतोरेवमुभाभ्यामपि पुरस्कारस्य पुरस्करणं किमर्थमित्यत आह— उभावपीत्यादि

चेतनस्यापराधो नाम—अनादिकालं तस्माद्विमुखेनान्यविषये प्रवणेन तदाज्ञातिलंघनं कृत्वा राशीकृतोऽपराधः। ईश्वरस्यापराधो नाम—अवर्जनीयसंबंधे सत्यप्यपराधमेव गणयित्वाऽनादिकालममुं दूरीकृत्य स्थितिः। अस्य स्वापराधशमनं नाम—अमुं दृष्ट्वा ईश्वरो यथा न कुप्येत् तथा करणम्। तस्य स्वापराधशमनं नाम—अमुं स्मृत्वा चेतनो यथा न बिभीयात्तथा करणम्।

---

स्वस्वापराधनाशाय द्वौ पुरस्कुरुतः खलु ॥ १५७॥

इस चेतन के निरुपाधिक शेषभूत होनेसे और सर्वेश्वर के निरुपाधिक शेषी होनेसे साक्षात् आश्रयण करने और अंगीकार करने की योग्यता होनेपर भी इस प्रकार ये दोनों पुरुषकार को क्यों आगे करते हैं इस शंका में कहते हैं—ये दोनों इत्यादि।

ये दोनों अपने अपने अपराधों को क्षमा करानेके लिये आगे करते हैं ॥ १५७॥

चेतन का अपराध माने—अनादिकाल से परमात्मा के विमुख हो अन्य विषय प्रवण हो उस की आज्ञा को उल्लंघन कर संचय किया हुआ अपराध। ईश्वर का अपराध माने—अवर्जनीय संबंध के होनेपर भी अपराध ही को गिनकर अनादिकाल से इस चेतन को अपने से अलग रखना। चेतन का अपने अपराध को क्षमाकराना माने—इस अपराध के देख यथा ईश्वर क्रुद्ध न हो तथा बनाना। ईश्वर का अपने अपराध को क्षमा कराना माने—इस क्रोध को स्मरण कर चेतन जैसा न डरे वैसा करना।

स्वरूपसिद्धिश्चानेन ॥ १५८॥
इदं चौपाधिकं, नित्यं पार-
तंत्र्यमुभयोरप्यस्ति हि ॥ १५९॥

---

तावदेव नान्यच्चास्य प्रयोजनमस्तीत्याह— स्वरूपेत्यादिना। स्वरूपं चास्य तदीयपारतंत्र्यं, तस्याश्रितपारतंत्र्यम्. 'देवत्वं स्वात्मानं च' इति— आश्रितपारतंत्र्यं खल्वस्य स्वासाधारणस्वभावत्वेन सूरिरवोचत् । इदमुभयमप्युभयोरपि सिध्यति पुरुषकारपुरस्करणेनेत्यर्थः ।

पूर्वं स्वरूपेत्युक्तमुपपादयति— औपाधिकमित्यादिना ।

चेतनस्यास्मिन् विषये पारतंत्र्यं तदीयत्वप्रयुक्तत्वेनौपाधिकं, तस्योपाधेर्नित्यत्वेन निरुपाधिकभगवत्पारतंत्र्यवन्नित्यं

---

स्वरूपसिद्धिश्चानेनोभयोरपि प्रकीर्तिता ॥ १५८ ॥
इदं चौपाधिकं नित्यं पारतंत्र्यं द्वयेऽस्ति हि ॥ १५९ ॥

इतना ही नहीं और भी इस पुरुषकार का एक प्रयोजन है, ऐसा कहते हैं— स्वरूप इत्यादि ।

स्वरूप की सिद्धि भी उस से ही है ॥ १५८ ॥

स्वरूप माने— इस चेतन का तदीयपारतंत्र्य, और ईश्वर का स्वरूप आश्रित पारतंत्र्य । 'देवत्व और अपनी स्वभाव को' ऐसा आश्रितपारतंत्र्य को ही उस का स्वरूप कहा है । ये दोनों चेतन और ईश्वर के पुरुषकार को आगे करनेसे सिद्ध होते हैं ।

ऊपर कहा हुआ स्वरूप का उपपादन करते हैं— औपाधिक इत्यादि ।

औपाधिक और नित्यभूत ये दोनों पारतंत्र्य इन दोनों को है ॥ १५९ ॥

चेतन का लक्ष्मीजी के विषय में पारतंत्र्य भगवदीयत्वप्रयुक्त होनेसे औपाधिक हो, उस उपाधि के नित्य होनेसे निरुपाधिक भगवत्पारतंत्र्य के सदृश नित्य

अनित्यस्य पारतंत्र्यस्य नाशोऽनेन ॥ १६० ॥

च भवति । ईश्वरस्यास्मिन् विषये पारतंत्र्यं – आश्रितत्व-प्रयुक्तत्वेनौपाधिकं, उपाधेर्नित्यत्वेन स्वयं नित्यं च भवती-त्यर्थः । उभयोरप्यस्तीत्यनुक्त्वाऽस्तिही युक्तं – अस्मिन्नर्थे प्रमाण-प्रसिद्धिज्ञापनार्थम् ।

एतावदेव न, अन्यच्चैकं प्रयोजनमस्तीत्याह— अनित्यस्ये-त्यादिना ।

अनित्यं पारतंत्र्यं नाम— कर्मपारतंत्र्यम् । तत्र चेतनस्य कर्मपारतंत्र्यं— अवश्यानुभोक्तव्यशुभाशुभकर्मणां विषये आकृष्य नीयमानस्य संचरणम् । ईश्वरस्य कर्मपारतंत्र्यं–स्वकृतकर्म स्वयमनुभवति चेदहं किं करोमीत्येतत्कृतं कर्म प्रधानं कृत्वा

---

अनित्यपारतंत्र्यस्य नाशोऽनेन प्रकीर्तितः ॥ १६० ॥

भी होता है । ईश्वर को लक्ष्मी के विषय में पारतंत्र्य आश्रितत्वप्रयुक्त होने से औपाधिक हो, उस उपाधि के नित्य होनेसे नित्य भी होता है । ही कहनेसे इस अर्थ में प्रमाण की प्रसिद्धि दिखाते हैं ।

इतना ही नहीं और भी इस का एक प्रयोजन है ऐसा कहते हैं—अनित्य इत्यादि ।

अनित्यभूत इन दोनों का पारतंत्र्य पुरुषकार से ही नष्ट होता है ॥ १६० ॥

अनित्यपारतंत्र्य माने—कर्मपारतंत्र्य । उस में चेतन का पारतंत्र्य माने—अवश्य अनुभोक्तव्य शुभाशुभ कर्मों के वश में खींचा जाकर संसारी होना । ईश्वर का कर्मपारतंत्र्य माने—'अपने किये हुए कर्म को आप भोगता है तो हम क्या करेंगे' ऐसा चेतनकर्तृक कर्म को प्रधान समझ उस के अनुगुण निर्वाह

तदनुरूपं निर्वहणम् । अस्य सद्भावः 'सर्वपापेभ्यो मोक्षयि-ष्यामि' इत्युक्तिपर्यंतं, अत इदमनित्यमित्युच्यते । अस्य पुरुषकारपुरस्करणेन नाशो नाम— अनेन पुरस्करणसमये तं वशीकृत्य तेन पुरस्करणसमये इमं वशीकृत्य चोभावपि रक्ष्यरक्षकभावेन यथा युक्तौ भवतः तथाकरणादनयोः स्वत एव निवृत्तिः ।

अनादिकालं स्वतंत्रो यत्किंचिदवलंब्य व्यावृत्तः संचरन्न-यमद्य स्वल्पाभिमुख्यमकरोत् , प्रकृत्या सह स्थितत्वाद् दुर्वासनाधिक्येनाश्रयणांगीकाराभ्यामुद्भूतममुं रक्ष्यरक्षकसंबंधं दूरीकृत्य पूर्ववदेव वर्तते चेत् , निरंकुशस्वतंत्रः कर्मानुगुण-ममुमस्मिन्ननादिकालं विनियोक्तेश्वरः स्वयममुं संबंधं दूरीकृत्य पूर्ववदस्य कर्मानुगुणं निर्वहति चेत्किं स्यादित्यत आह— ससाक्षिकत्वादित्यादि ।

---

करना । यह 'सर्वपापों से छुडाऊंगा' इत्युक्तिपर्यंत होनेसे इस को अनित्य कहते हैं। ये दोनों पुरुषकार को आगे करनेसे नष्ट होते हैं माने—चेतन के पुरुषकार को आगे करनेपर ईश्वर को शोधन करती है, ईश्वर के पुरुषकार को आगे करने-पर चेतन को शोधन करती है । दोनों को रक्ष्यरक्षक संबंध से मिलानेपर दोनों का कर्मपारतंत्र्य नष्ट होता है ।

अनादिकाल से स्वतंत्र हो किसी एक को अवलंबन कर भगवान् से अलग हो संचार करनेवाला यह चेतन आज ही अभिमुख हुआ, प्रकृति के साथ रहनेसे दुर्वासना बढ आश्रयण और अंगीकारों से उत्पन्न हुआ इस रक्ष्यरक्षक संबंध को नहीं कर प्राचीनरीति से स्वतंत्र होनेको देखना, निरकुंश स्वतंत्र कर्मानुगुण इस चेतन को लीला में अनादिकाल विनियोग करते हुए संचार करनेवाले सर्वेश्वर इस संबंध को नहीं मान पूर्ववत् इस चेतन के कर्मानुगुण निर्वाह करनेको देखे तो क्या कियाजाय ? इस शंका में कहते हैं—साक्षी सहित इत्यादि ।

ससाक्षिकत्वादयं संबंध उभाभ्या-
मपि दूरीकर्तुं न शक्यते ॥ १६१ ॥
'मां त्यजत्यपि' सुंदरपुष्पवासिन्याः स्नेहरूपः ॥ १६२ ॥

---

अस्य रक्ष्यरक्षकभावसंबंधस्योभाभ्यां ज्ञातत्वमात्रेण विना पुरुषकाररूपसाक्षिसमेतत्वेनागतत्त्वादित्ययमुभाभ्यामपि नाशयितुं न शक्यत इत्यर्थः ।

अस्य प्रमाणं दर्शयति मामित्यादिना ।

नप्पिन्नै (नीलादेवी) पुरुषकारपूर्वकं नित्यसूरीणां मध्ये मामंगीकृत्यानंतरं सर्वशक्तिः स्वयमपि न त्यजतीत्युक्तत्वात् 'मांत्यजत्यपि' इति गाथा – तेनाऽयं संबंधो दूरीकर्तुं न शक्यते इत्यत्र प्रमाणम् । महालक्ष्म्याः स्नेहित्वात् तत्परिग्रहे मय्य-

---

उभाभ्यामपि संबंधो ह्ययं त्यक्तुं न शक्यते ।
ससाक्षिकत्वहेतोस्तु मां त्यजत्यपि सर्वदा ॥ १६१ ॥
रम्यपुष्पनिवासिन्यां स्नेहरूपः प्रकीर्तितः ॥ १६२ ॥

साक्षी सहित होनेसे इस संबंध को दोनों नाश नहीं करसक्ते ॥ १६१ ॥

यह रक्ष्यरक्षक संबंध इन दोनों मात्र जाना हुआ न होकर पुरुषकाररूप साक्षी सहित होनेसे इस संबंध को दोनों नहीं न कर सक्ते हैं ।

इस को आगे प्रमाण दिखाते हैं—हम को इत्यादि ।

'हम को छोडनेपर भी' 'सुंदर पुष्पपुत्री के प्रिय' ॥ १६२ ॥

नीलादेवी के पुरुषकार से नित्यसूरियों के बीच में हम को अंगीकार करने पर सर्वशक्ति आप भी नहीं छोड सक्ते हैं, ऐसा कहनेसे 'हम को छोडनेपर भी' इस गाथा को परमात्मा से यह बंध नहीं न किया जायगा इस का प्रमाण समझना । लक्ष्मी को प्रिय होनेसे उन के दास हमारे विषय में अतिस्नेह कर

**कर्मणि व्युत्पत्तौ स्वरूपगुणप्रयुक्तं**
**कर्तुः संकोचराहित्यं स्मर्तव्यम् ॥ १६३ ॥**

---

तिरोही सन् दुष्करं कृत्वाऽऽगत्य मया संश्लिष्यंतं त्वां प्राप्य अथ त्यजामि किमित्युक्तत्वात् — 'सुंदरपुष्प' इत्यादि गाथा पुरुषकारस्य पुरत आगतोयं संबंधश्चेतनेनापि दूरीकर्तुं न शक्यत इत्यस्य प्रमाणम् ।

ससाक्षिको बंधो दूरीकर्तुं न शक्यत इत्युक्तिः — साक्षिभूतपुरुषकारविषये उभयोर्विद्यमाननित्यपारतंत्र्यप्रयुक्तत्वात् , उभयोरेतद्विषये विद्यमाननित्यपारतंत्र्ये प्रमाणं दर्शयति कर्मणीत्यादिना ।

**कर्मणि व्युत्पत्तिर्हि 'श्रीञ् सेवायां' इति धातोः 'श्रीयते'**

---

**स्वरूपगुणयुक्तं च श्रीयत इति कर्मणि ।**
**कर्तुः संकोचराहित्यं व्युत्पत्तौ स्मरणं विदुः ॥१६३॥**

दुष्कर कृत्यों को करनेसे हमारे साथ मिलनेवाले आप को प्राप्त हुए बाद छोड सक्ता हूं क्या ? ऐसा कहने से 'सुंदर पुष्पपुत्री के प्रिय' इस गाथा को पुरुषकार के पुरस्कार से होनेवाले इस संबंध को चेतन भी नहीं न कर सक्ता, इस में प्रमाण समझना ।

'साक्षीसहित होनेवाले इस संबंध को नहीं न करसक्ते' साक्षीभूत पुरुषकारविषय में दोनों के नित्यपारतंत्र्य को अवलंबन करनेसे , दोनों के इस विषय में नित्यपारतंत्र्य का प्रमाण दिखाते हैं— कर्मणि इत्यादि ।

कर्मणि व्युत्पत्ति में स्वरूपगुणों से होनेवाले
कर्तृसंकोचाभाव को स्मरण करना ॥ १६३ ॥

कर्मणि व्युत्पत्ति माने— 'श्रीञ् सेवायां' इस धातु में 'श्रीयते' यह

## अधिकारित्रयस्यापि पुरुषकारोऽवर्जनीयः ॥ १६४ ॥

इति व्युत्पत्तिः । सेव्यत इत्यर्थः । अस्यां व्युत्पत्तौ स्वरूप-गुणप्रयुक्तं कर्तुः संकोचराहित्यं नाम – शेषत्वरूपेण प्रणयि-तृत्वरूपगुणेन चागतः चेतनपरमचेतनरूपसेवाकर्त्रोः संकोचा-भावः । स च उभयोरेतद्विषये विद्यमानायाः सेवाया अविच्छि-न्नत्वम् । इदं स्मर्तव्यमिति – एवमेतद्विषये उभयोर्विद्यमानं पारतंत्र्यं स्मर्तव्यमित्यर्थः ।

एवं स्थितत्वादयं पुरुषकारः प्रपत्त्यधिकारिणां सर्वेषामपे-क्षित इत्याह– अधिकारीत्यादिना ।

अधिकारित्रयं च – 'अज्ञा ज्ञानाधिका भक्तिपरवशाश्च' इत्युक्तास्त्रयोधिकारिणः । एतेषां पुरुषकारोऽवर्जनीय इति— अपराधशमनप्रभृतेः पुरुषकारान्वयोऽपेक्षितत्वात् सर्वथा त्यक्तुं

---

## कार्यो पुरुषकारोऽयमधिकारित्रयस्य हि ॥ १६४ ॥

व्युत्पत्ति है । इस का अर्थ सेवा की जाती है । इस व्युत्पत्ति में 'स्वरूपगुणों से होनेवाले कर्तृसंकोचाभाव' माने--शेषत्वरूप स्वरूप से, प्रणयित्वरूप गुण से होनेवाले चेतन परमचेतनभूत सेवाकर्ताओं के संकोचभाव । तथाच दोनों की लक्ष्मी जी के विषय में सेवा अविच्छिन्न होती है । इस को स्मरण करना माने—लक्ष्मी जी के विषय में चेतन और ईश्वर के विद्यमान पारतंत्र्य को स्मरण करना ।

ऐसा होनेसे प्रपत्ति के सब अधिकारियों को यह पुरुषकार अवश्यापेक्षित है ऐसा कहते हैं—तीनों अधिकारियों को इत्यादि ।

तीनों अधिकारियों को भी पुरुषकार अवर्जनीय है ॥ १६४ ॥

तीनों अधिकारी माने—अज्ञ ज्ञानाधिक और भक्तिपरवश इन को । पुरुष-कार अवर्जनीय माने अपराध को क्षमा कराकर भगवान के साथ मिला देने में पुरुष-

न शक्यत इत्यर्थः ।

अथवा अयं पुरुषकारोऽनन्यप्रयोजनत्वेन प्रपत्तिं कुर्वतामेव वा प्रयोजनांतरपरत्वेन कुर्वाणानामप्यपेक्षितो वेत्यत आह—अधिकारीत्यादि । अधिकारित्रयमिति—ऐश्वर्यकैवल्यभगवच्चरणार्थिनः । एतेषां त्रयाणां पुरुषकारोऽवर्जनीय इति—स्वस्वाभिलषितसिद्धिं प्रतीश्वरस्योपायत्वेन स्वीकारसमये एतेषामपराधं क्षमित्वा स यथाऽङ्गीकुर्यात् तथा कर्तुं पुरुषकारोऽवश्यापेक्षित इत्यर्थः । पूर्ववाक्ये पुरुषकारपूर्वकोपायवरणस्य प्रयोजनांतरपराणामपि साधारणत्वादुत्तरवाक्येनानन्यप्रयोजनताप्रकाशनमावश्यकम् । 'पूर्ववाक्ये प्रतिपादितः साधनविशेषः फलचतुष्टयसाधारणः खलु वर्तते, तत्रास्याधिकारिणोऽभिलषितः फलविशेषोऽयमिति प्रकाशयतीदं वाक्यम्' इति परंदपडिप्रबंधे,'पूर्वोक्तसाधनस्य फलचतुष्टयस्य साधारणत्वाद्-

कार का संबंध अपेक्षित होनेसे सर्वथा छोड नहीं सके ।

अथवा यह पुरुषकार अनन्यप्रयोजन हो प्रपत्ति करनेवालों को चाहिये या प्रयोजनांतर पर हो प्रपत्ति करनेवालों को चाहिये ऐसा पूछनेपर कहते हैं—तीनों अधिकारी माने—ऐश्वर्य, कैवल्य और भगवत्प्राप्ति कारूनावाले । इन तीनों को भी पुरुषकार अवर्जनीय माने—स्वस्वाभिलषित सिद्धि के लिये ईश्वर को उपायतया आश्रयण करनेके समय इन के अपराधों को क्षमाकर उन के अंगीकार करने के योग्य बनानेके लिये पुरुषकार अवश्यपेक्षित है । पूर्ववाक्य में पुरुषकाराश्रयण पूर्वक उपायस्वीकार प्रयोजनांतरपरों को भी समान होनेसे उत्तर वाक्य से अनन्यप्रयोजनता को प्रकाश करनेकी आवश्यकता हुई । 'पूर्ववाक्य में प्रतिपादित साधन फलचतुष्टय का साधारण ही है, उन में इस अधिकारी का अभिलषित फल विशेष अमुक है ऐसा उत्तर वाक्य प्रकट करता है' ऐसा परंदपडि रहस्य में,

स्यापेक्षितफलविशेष उच्यते' इति श्रियःपतिपडिप्रबंधे, 'उत्तरवाक्येन फलमुच्यते, प्राप्यांतराय न भवति' इत्यादिना मुमुक्षुपडिप्रबंधे चार्थं स्वयमेवावोचत्खलु । 'लक्ष्मीव्यामोहशालिनं प्रत्यंजलिं कुर्वतः 'दासजनसंबंधविघटकश्रियःपतिः' इत्युक्तप्रकारेण पुरुषकारपूर्वकमाश्रित्य प्रयोजनांतरमादाय निवृत्तिं विना तत् त्यक्त्वा 'उज्ज्वलाग्रहस्तवलयया श्रिया त्वयि' इत्युक्तमिथुने कैंकर्यं फलमिति पूर्वोक्तोपायफलं प्रदर्शयत्यनंतरभागेन' इति ह्यस्यानुजोपि अरुलिचैयल् रहस्येऽवोचत् ।

एवं अयंतं' इत्यारभ्य एतावता स्वगतस्वीकारानुपायत्वं, परगतस्वीकारोपायत्वं, तत्प्राबल्यं, तेनैव स्वीकारसमयेऽपि पुरुषकारपूर्वकमेव स्वीकारप्रकारः, उभाभ्यामपि पुरुषकारस्य पुरस्करणप्रयोजनं, प्रपत्त्यधिकारिणां सर्वेषामपि पुरुषकारोऽव-

---

'पूर्वोक्त साधन फलचतुष्टय का भी साधारण होनेसे इस का अपेक्षित फलविशेष को उत्तरवाक्य कहता है' ऐसा श्रियःपतिपडि रहस्य में, 'उत्तर वाक्य से फल कहाजाता है, फलांतर के लिये नहीं ऐसा अर्थ होता है' इत्यादि से मुमुक्षुपडि में भी यह श्रीलोकाचार्य स्वामीजी ही कहे हैं। 'श्रियःपति को हाथ जोडनेवाले' 'दासों के प्रकृतिसंबंध को छुडानेवाले श्रियःपति' इन वचनानुसार पुरुषकार को सामने कर आश्रयण कर प्रयोजनों को ले नहीं हट उन प्रयोजनों को छोड सुंदर आभरणवाली श्रीदेवी और वह इन दोनों क संग रहनेपर कैंकर्य करना फल है, ऐसा पूर्वोक्त उपायफल को उत्तरभाग दिखाता है' ऐसा इन के कनिष्ठभ्राता अरुलिचयल् रहस्यग्रंथ में कहे हैं।

तथाच 'चेतन ईश्वर को' ऐसा आरंभकर यहां तक स्वगतस्वीकार उपाय नहीं, परगतस्वीकार ही उपाय है, और वही प्रबल है, परमात्मा स्वीकारकरनेपर भी पुरुषकार को आगे कर ही स्वीकार करते हैं, चेतन और ईश्वर दोनों पुरुषकार को आगे करनेसे प्रयोजन अमुक है, प्रपत्ति के समस्त अधिकारियों को

जनीय इत्यर्थश्चोक्तः ।

प्रथमप्रकरणे पुरुषकारवैभवकथनमुखेन श्रीमत्पदार्थस्य, उपायवैभवकथनमुखेन नारायणचरणौ शरणमिति पदानामर्थानां च प्रतिपादनानंतरं 'प्रपत्तेर्देशानियमः' इत्यारभ्य 'प्रपद्ये' इति पदेनोक्तायाः प्रपत्तेर्देशादिनियमाभावस्य, तस्या विषयनियमं वक्तुं 'गुणपूर्तिमत एव विषयत्वं' इत्यारभ्य मुक्तकंठं पुनश्च नारायणपदार्थस्य, अत्र 'प्रपत्तिकर्तारोऽधिकारिणस्त्रयः' इति उत्तमाक्षिप्ताधिकारिणं, प्रपत्तौ साधनत्वाभावस्य, प्रपत्त्यधिकारापेक्षितशक्तिलज्जायत्ननिवृत्तिशमदमातिशयप्रभृतेः, प्रपत्त्यंगतया त्याज्योपायांतरानिष्टदोषभूयस्त्वस्य, तत्प्रतिकोटितया प्रपत्तेर्नैर्दोष्यादीनां, प्रपत्तिप्रसंगे मुखभेदेन स्वगतस्वीकारानुपायत्वस्य, परगतस्वीकारोपायत्वस्य, तेन स्वीकारसमयेऽपि पुरुषकारं पुरस्कृत्यैव स्वीक्रियत इत्यर्थस्य, उभा

---

पुरुषकार की अत्यावश्यकता आदि कहेगये हैं ।

प्रथम प्रकरण में पुरुषकारवैभव कथनद्वारा 'श्रीमत्' पदार्थ, उपायवैभव कथन द्वारा 'नारायणचरणौ शरणं' इन पदों के अर्थों को भी प्रतिपादन करनेके बाद 'प्रपत्ति का देश नियम' ऐसा आरंभकर 'प्रपद्ये' इस पद से कहे जानेवाली प्रपत्ति के देशकालादि नियमाभाव, उस का विषयनियम कहने के लिये 'गुणपूर्तिवाले ही विषय हैं' ऐसा प्रारंभकर मुक्तकंठ फिर भी नारायणपदार्थ, 'इस में प्रपत्ति करनेवाले अधिकारी तीन' ऐसा उत्तम पुरुष से भान होनेवाला अधिकारी, प्रपत्ति को साधन नहीं समझना प्रपत्त्यधिकारापेक्षित शक्ति लज्जा यत्नों के त्याग, शमदमातिशय प्रभृति, प्रपत्त्यंगतया त्याज्य उपायांतर का दोषाधिक्य, तत्प्रतिकोटि होने से प्रपत्ति की निर्दोषता, प्रपत्तिप्रसंग से दूसरे प्रकार से स्वगत स्वीकार का उपायत्वाभाव, परगत स्वीकार का उपायत्व, उस की प्रबलता वही स्वीकार करनेपर भी पुरुषकार को आगेकर ही स्वीकार करनेका प्रकार, दोनों

स्वस्य स्वेन मृग्यमाणो गुणो
दोषवत् प्रतिबंधको भवति ॥ १६५॥

---

भ्यामपि पुरुषकारस्य पुरस्करणस्य विद्यमानानां प्रयोजनविशेषाणां, अधिकारित्रयस्यापि पुरुषकारावर्जनीयत्वस्य च प्रतिपादनात् एतावता पूर्वखंडार्थमेवावोचत् । एतत्प्रकरणादौ 'उपेयस्य' इत्यारभ्योपेयाधिकाराणां केषांचिदुक्तत्वेपि तत्प्रासंगिकम् ।

अथोपेयाधिकारप्रकरणविशेषेणोत्तरखण्डार्थ उच्यते । तत्र च भाष्यकारैर्गद्य उत्तरखण्डार्थस्यानुसंधानक्रमेण नमःशब्दार्थपूर्वकमुच्यते । तत्रास्य नमसः प्राप्यविरोधिनिवृत्तिप्रतिपादकत्वात् प्राप्यविरोधिनो दर्शयितुं विचार्य प्रथमं तेष्वेकमाह— स्वस्य स्वेनेत्यादिना ।

---

स्वस्य स्वेन मृग्यमाणो गुणो दोषविवर्धकः ॥ १६५ ॥

पुरुषकार को आगे करनेसे होनेवाले प्रयोजन, तीनों अधिकारी को पुरुषकार की अवश्यापेक्षा इत्यादि को प्रतिपादन करने से यहां तक पूर्वखंडार्थ को कहे हैं समझना । इस प्रकरण आदि में 'उपेय को' ऐसा आरंभ कर कई उपेयाधिकार कहे गये हैं तो भी वह प्रासंगिक हैं ऐसा समझना ।

अब उपेयाधिकार को प्रतिपादन करनेवाले शेषप्रकरण से उत्तरखंडार्थ को कहते हैं, उस में भाष्यकार शरणागतिगद्य में उत्तरखंडार्थ को अनुसंधान करनेके क्रम से नमः शब्दार्थपूर्वक कहते हैं । उस में यह नमःशब्द प्राप्यविरोधि के निवृत्ति को प्रतिपादन करनेसे प्राप्यविरोधियों को दिखानेके लिये उद्देश कर पहिले उन में एक को कहते हैं—अपने को आप इत्यादि ।

अपने को आप से अन्वेषण कियेजानेवाले
पुण्य, पाप के तरह प्रतिबंधक होता है ॥ १६५ ॥

पूर्वं 'भरतस्य समीचीनमेवासमीचीनं जातं' इति स्वगत प्रपत्तिः शरण्यहृदयानुसारित्वाभावे दोषरूपा भवतीत्युक्त्वा, उपायदशायां 'स्वस्य स्वेन मृग्यमाणो गुणो दोषो भवति' इत्युक्तत्वात् तत्प्रसंगे उपेयदशायां च 'स्वस्य स्वेन मृग्यमाणो गुणो दोषो भवति' इत्याहेति पूर्वग्रंथेनास्यसंगतिः।

स्वस्येत्यादि—शेषिणि भोगदशायां स्वव्यामोहेन 'कस्यात्मना प्राप्ता मदात्मना प्राप्ता' इति वदति यथा तथा स्वविषयेऽत्यंतनैच्येन स्थित्वा विनियोगं कुर्वाणे—'अहं शेषभूतः खलु स्वशेषत्वं न रक्षणीयं किं' इति स्वनैच्यानुसंधानेन निवृत्य स्वस्य स्वेन मृग्यमाणः शेषत्वरूपो गुणोऽनादिकालं 'स्वतंत्रोऽहं' इति स्थितदोष इव तद्भोगस्य प्रतिबंधको भवतीत्यर्थः। दोषोऽकृत्यकरणादिर्वा।

शेषिण आदरस्य निदानं आत्मनोऽलंकारः शेषत्वं भोगविरोधि कथं भवतीत्यत आह—सौंदर्यायेत्यादिना।

---

पहिले 'श्रीभरत सूरि का पुण्य ही पाप हुआ है' ऐसा चेतनकर्तृक प्रपत्ति शरण्य हृदय के अनुसार न होनेपर पाप होगी ऐसा कहनेसे उपायदशा में 'अपने को अपने से कियेजानेवाले पुण्य पाप होगा' इस अर्थ को कह इस के प्रसंग में उपेयदशा में आप अपने से अन्वेषण कियेजानेवाले पुण्य पाप होगा इस अर्थ को कहते हैं—ऐसा पूर्वोक्त के साथ इस की संगति समझना।

शेषी परमात्मा भोगदशा में अपने व्यामोह से 'किस का आत्मा पाया है हमारे आत्मा पाया हुआ को' ऐसा चेतन के विषय में अत्यंत नैच्य से विनियोग करनेपर हम शेषभूत हैं हमारे शेषत्वस्वरूप को रक्षा करलेनी चाहिये ऐसा स्वनैच्यानुसंधान से पीछे हटकर अपने को आप से ढूंढजानेवाले पुण्य, अनादिकाल में स्वतंत्र हूं ऐसा समझनेपर जितना पाप है उतना ही ईश्वर के भोग का प्रतिबंधक होनेसे पाप होता है। पापमाने—अकृत्यकरणादि को समझना।

शेषी के आदरण के उपयुक्त आत्मा का अलंकारभूत शेषत्व भोगविरोधि कैसा होता है? इस शंका में कहते हैं—अलंकार के इत्यादि।

सौंदर्यायार्पितो कंचुको यथा
आलिंगनस्य विरोधी ॥ १६६ ॥
'हारोऽपि' ॥ १६७ ॥

---

स्त्रीभिः सौंदर्यायार्पितः कंचुको नायकस्य प्रीतिविषयः सन् तस्या अलंकारोऽपि भोगदशायां यथाऽऽलिंगनविरोधि भवति तथेदमपि विरोधि भवतीत्यर्थः ।

सौंदर्यस्य निदानमनुभवविरोधि स्यादित्यर्थं शेषिवचनेन दर्शयति— हारोपीत्यनेन ।

'हारोऽपि नार्पितः कंठे स्पर्शसंरोधभीरुणा ।
आवयोरंतरे जाताः पर्वताः सरितो द्रुमाः ॥'

---

यथालिंगनविरोधी स्यात्सौंदर्यार्पितकंचुकः ॥ १६६ ॥
हारोपीति प्रमाणं तत् जानकीरघुनाथयोः ॥ १६७ ॥

यथा अलंकार के धारण कियाहुआ
कंचुक आलिंगन का विरोधि होता है ॥ १६६ ॥

जैसे अलंकार के लिये धारण कियाहुआ कंचुक पति के संतोष जनक हो स्त्री का अलंकार होता है तो भी भोगदशा में जैसा आलिंगन का विरोधि होता है वैसा यह शेषत्व भी ईश्वर के भोग का विरोधि होता है ।

सौंदर्य के उपयुक्त अनुभव का विरोधि होता है इस अर्थ को शेषि वचन से दिखाते हैं हार भी इत्यादि ।

'हार भी' ॥ १६७ ॥

'स्पर्श को रोकनेके भय से हार भी कंठ में नहीं अर्पण कियागया ।
इन हम दोनों के बीच में पर्वत नदी और वृक्ष हुए हैं ॥'

पुण्यमिव पारतंत्र्यमपि परानुभवस्य विरोधि स्यात् ॥

---

इति संश्लेषदशायां स्पर्शविरोधि स्यादिति भयेन जानकी कंठे एकं मुक्ताहारमपि न धृतवतीत्यवोचत् खलु स्वामी। भीरुणेत्यत्र लिंगव्यत्यय आर्षः। अथवा सौंदर्यायार्पित आलिंगनस्य विरोधीत्यर्थज्ञापनमेव प्रयोजनं कृत्वा लिंगानुगुणं स्वामिविषये वा योजनीयम्।

तर्हि पारतंत्र्यमेव किं समीचीनमित्यत आह—पुण्यमिवेत्यादि।

पुण्यमिति— पूर्वं गुणशब्देनोक्तं शेषत्वम्। तत्पूर्वोक्तप्रकारेण स्वनैच्यानुसंधानेन निवृत्तिकारणं सत् यथा भोगविरोधि भवति तथैव भोगदशायां तस्य प्रतिदृष्टिप्रदानमकृ-

---

सुकृतवद्विरोधी हि पारतंत्र्यमपि स्मृतम् ॥ १६८ ॥

ऐसा संश्लेषदशा में स्पर्शविरोधि समझ डर से श्रीसीताजी अपने कंठ में एक मुक्ताहार भी नहीं धारण करती है, ऐसा श्रीरामजी की उक्ति है। भीरुणा ऐसा पुल्लिंगता आर्ष समझना, यद्वा सौंदर्य के लिये धारण कियेजानेवाले आलिंगन का बिरोधि होता है इस अर्थ को जनानेके लिये पुल्लिंगानुगुण श्रीरामजी के पक्ष में योजना करलेना।

तव पारतंत्र्य ही श्रेष्ठ है क्या ? इस शंका में कहते हैं—पुण्य के तरह इत्यादि।

पुण्त के तरह पारतंत्र्य भी परानुभव का विरोधि है ॥ १६८ ॥

पुण्य माने—पहिले पुण्य शब्द से कहा हुआ शेषत्व है। वह शेषत्व पूर्वोक्त प्रकार से स्वनैच्यानुसंधान से भागनेके उपयुक्त हो जिस प्रकार भोगविरोधि होता है उसी प्रकार से भोगदशा में उन के सामने दृष्टि प्रदान न कर अचित्के तरह

स्वाऽचिद्वत्स्थितेर्मूलं केवलपारतंत्र्यमपि प्रतिदृष्टिसापेक्षस्येश्वरस्य भोगस्य कंठग्रहं भवतीत्यर्थः ।

अथवा पुण्यमिति— सत्कर्मोच्यते । तद्यथा वा पापाद्व्यावृत्तत्वेपि भगवत्प्राप्तिप्रतिबंधकं भवति, तथा पश्चाद्गमनहेतोः शेषत्वात् अचिद्वत्प्रतिसंबंध्यधीनताया हेतुत्वेन व्यावृत्तं पारतंत्र्यमपि प्रतिदृष्टिप्रदानस्याहेतुत्वेन परस्यानुभवस्य प्रतिबंधकं भवतीत्यर्थः । अनेन केवलशेषत्वं केवलपारतंत्र्यं चैकैकाकारेण भोगविरोधि भवति, पारतंत्र्ययुक्तं शेषत्वमेवोद्देश्यमिति सिद्धम् ।

एवमुपेयदशायां शेषत्वपारतंत्र्ययोः परानुभवप्रतिबंधकत्वकथनानंतरं प्राप्तिदशायामस्य निर्बंधमूलतया जायमानदोषनिवृत्तेः परानुभवप्रतिबंधकत्वमाह– गुण इवेत्यादिना ।

---

रहनेके योग्य पारतंत्र्य भी प्रतिदृष्टि की अपेक्षा करनेवाले ईश्वर के भोग को रोकता है ।

यद्वा पुण्य माने—सत्कर्म । वह पाप से अत्यंत भिन्न होनेपर भी जैसा भगवत्प्राप्ति का प्रतिबंधक होता है तैसा पीछे भागनेके उपयुक्त शेषत्व की अपेक्षा अचिद्वत् स्वामी के अत्यंत आज्ञाकारी होनेके उपयुक्त होनेसे अति विलक्षण पारतंत्र्य भी सामने दृष्टिदान करनेके उपयुक्त न होनेसे परमात्मा के अनुभव का विरोधि (प्रतिबंधक) होता है । इस से केवल शेषत्व और केवल पारतंत्र्य एक एक आकार से भोगविरोधि होते हैं । पारतंत्र्य के साथ मिला हुआ शेषत्व ही उद्देश्य है ।

इस प्रकार उपेय दशा में शेषत्वपारतंत्र्य परमात्मा के अनुभव का प्रतिबंधक है । ऐसा कहनेके बाद प्राप्तिदशा में चेतन के निर्बंध द्वारा होनेवाली दोषनिवृत्ति परमात्मा के अनुभव का प्रतिबंधक होती है इस अर्थ को कहते हैं—गुणके तरह इत्यादि ।

## गुण इव दोषनिवृत्तिः ॥ १६९ ॥

गुण इति पूर्वं विरोधित्वेनोक्तं शेषत्वपारतंत्र्यद्वयमुच्यते। अयंचाऽत्मनोंतरंगगुणत्वेन खलु वर्तते। अयमिव दोषनिवृत्तिरिति—एतदात्मगुणद्वयं च पूर्वोक्तप्रकारेण यथा परानुभवस्य प्रतिबंधकं भवति तथैवानेन निर्बंधेन कार्यमाणा प्रकृति संबंधस्य निवृत्तिः। चरमशरीरत्वादनेन किंचित्कालं स्थापयित्वाऽनुभवितुमिच्छतस्तस्यानुभवस्य विरोधिनी भवतीत्यर्थः। गुण इवेति— पारतंत्र्यमेकमेव वा दृष्टांतीक्रियते।

दोषनिवृत्तावात्मस्वरूपमत्यंतपरिशुद्धं सद्भोगयोग्यं भवति खलु, तथासति दोषनिवृत्तिरनभिमता दोषोऽभिमतः कथं स्यादित्यत आह— आभरणमित्यादि।

---

## परानुभवरूपस्य गुणवद्दोषवर्जनम् ॥ १६९ ॥

गुण के तरह दोषनिवृत्ति ॥ १६९ ॥

गुण कहते हैं—पूर्व विरोधितया उक्त शेषत्वपारतंत्र्यों को। ये आत्मा के अंतरंग निरूपक गुण हैं। इस तरह दोष निवृत्ति माने—इस आत्मा के ये दोनों पूर्वोक्त प्रकार जिस तरह परमात्मा के अनुभव का प्रतिबंधक होते हैं तैसा ही चेतन से निर्वंधपूर्वक करालिया जानेवाली प्रकृतिसंबंधरूप दोष की निवृत्ति भी परमात्मा के भोग का प्रतिबंधक होती है। चरमशरीर होनेसे इस शरीर के साथ किंचित्काल रख अनुभव करनेकी इच्छा करनेवाले सर्वेश्वर के अनुभव का प्रतिबंधक होती है। गुणवत् ऐसा पारतंत्र्य एक ही को दृष्टांततया कहते हैं ऐसा भी योजना हो सक्ती है।

दोषनिवृत्ति होनेपर आत्मस्वरूप अत्यंतपरिशुद्ध और भोग्य भी होता है तो दोषनिवृत्ति अनभिमत और दोष अभिमत क्यों होता है ? इस शंका में कहते हैं— आभरण इत्यादि।

**आभरणमनभिमतं मालिन्य-**
**मभिमतमभूत् खलु ॥ १७० ॥**
**स्नानं रोषजनकमिति वार्ता स्मर्तव्या ॥ १७१ ॥**

---

लोके विषयप्रवणानामभिमतविषयस्यौज्ज्वल्यहेतुराभरण-मनभिमतमनौज्ज्वल्यहेतु मालिन्यमभिमतमभूत्खल्वित्यर्थः।

इदं लौकिके मात्रं न भवति किंतु जानकीविषये तस्याप्येवं स्थितिरित्यर्थस्य सूचिकां वार्तां स्मारयति– स्नानमित्यादिना।

जानक्याः स्नात्वा आगमनं स्वामिनो रोषजनकमित्यर्थं प्रकाशयंती।

'दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढम्।'

इति वार्ता एतदर्थनिदानतया स्मर्तव्येत्यर्थः। सपंकामनलं-

---

**भूषणं दूषणं जातं मालिन्यमभवत्प्रियम् ॥ १७० ॥**
**स्मरणीयात्र वार्ता सा यत्स्नानं रोषकारणम् ॥ १७१ ॥**

आभरण अनभिमत हो मालिन्य अभिमत हुआ है ॥ १७० ॥

लोक में विषयप्रवण को अभिमत ( स्त्री आदि ) विषय को औज्वल्य हेतु आभरण अनभिमत हो अनौज्वल्य हेतु मालिन्य अभिमत होता है। यह लौकिक में मात्र नहीं किंतु सीताजी के विषय में श्रीरामजी को भी ऐसा हुआ है इस अर्थ का सूचक वचन को स्मरण करते हैं— स्नान इत्यादि।

'स्नान रोषजनक है' इस वचन को स्मरण करें ॥ १७१ ॥

सीताजी स्नान करके आयी सो श्रीरामजी को रोषजनक हुआ। इस अर्थ को प्रकट करने वाले 'नेत्ररोगी को दीप के तरह मुझ को निश्चय प्रतिकूल होती है' इस वचन को इस अर्थ का प्रमाणतया स्मरण करें। मालिन्य सहित

कारां' इत्यादिप्रकारेण दशमासपर्यंतं स्नानाकरणेन मलिनं देहं द्रष्टुमाशया स्थितस्य अस्याः स्नात्वा आगमनं रोषजनकमिति न वक्तव्यं खलु ।

तर्हि 'दीर्घमुष्णं विनिःश्वस्य मेदिनीमवलोकयन् ।
उवाच मेघसंकाशं विभीषणमुपस्थितम् ॥
दिव्यांगरागां वैदेहीं दिव्याभरणभूषिताम् ।
इह सीतां शिरःस्नातामुपस्थापय माचिरम् ॥'

इत्ययमेव हि स्नानं कृत्वाऽलंकृत्वाऽऽगच्छत्विति श्रीविभीषणं प्रत्यवोचत् , एवं च सति रोषः कथमुत्पन्न इति चेत्— 'वयं समीचीनां वार्तां वदामः स्वयमेव न जानाति किं' इत्युक्तत्वात् सा सहृदयमुक्ता वार्ता न भवति; अन्यथा रोषोऽनुपपन्नः खलु । सा च—

'अस्नाता द्रष्टुमिच्छामि भर्तारं राक्षसाधिप ।'

---

अलंकार रहित सीताजी को' इत्यादि प्रकार दसमास स्नान नहीं कर मालिन्य विशिष्ट रूप को देखनेकी इच्छा करनेवाले स्वामी को उन के स्नान कर आना रोषजनक हुआ ऐसा कहने में क्या हरकत है । ऐसा होतो—

'दीर्घ और उष्ण श्वास लेकर भूमि का देखते हुए पास में खडाहुआ मेघ सदृश विभीषण से शिरः स्नान कर दिव्यचन्दनादि से लिप्त और दिव्याभरण भूषित सीताजी को शीघ्र हमारे पास पहुंचाओ'

ऐसा श्रीराम ही स्नान कर अलंकृत हो आनेके लिये श्रीविभीषणसूरी को देख कहे हैं तो रोषजनक कैसा हुआ ? इस शंका में, 'हम अच्छी बात कहकर भेजेंगे आप नहीं जानती हैं क्या' ? ऐसा विचार कहे हैं इतना ही, वह हृदय पूर्वक कही हुई वार्ता नहीं है, नहीं तो रुष्ट न हो सके । सीताजी भी—

'हे विभीषण ! बिना स्नान किये भर्ता को देखना चाहती हूं'

इति स्थिता ।

'यथाह रामो भर्ता ते तथा तत्कर्तुमर्हसि ।'

इति निर्बंधपूर्वकं श्रीविभीषणोक्त्यनंतरं स्नानमकरोत् इतिचेत्, स स्वामिहृदयमज्ञात्वोक्तां वार्तामादयोक्तवान् , सर्वथा दशमासपर्यंतं रावणभवने स्थितायाः 'कारागृहस्थितवेषेण गत्वा पश्यामि स्नानं न कुर्या' इति स्थातव्यं; एवमकृत्वा शीघ्रं स्नात्वाऽऽगताकिल, इदं तादृशस्थितिदर्शन आशावतो दोषहेतुरभूत् । तस्मात् 'स्नानं रोषजनकं'इत्यत्र न विरोधः ।

अथवा स्नानं रोषजनकमिति वार्ता नाम— श्रीविभीषणे स्नानं कर्तव्यमिति वदति स्वामिहृदयाभिज्ञत्वात्स्वामिनस्तस्यानभिमतत्वाद्रोषजनकं स्यादिति विचार्य–

'अस्नाता द्रष्टुमिच्छामि भर्तारं राक्षसाधिप'

---

ऐसा होते हुए भी–

'जैसा तुमारे भर्ता कहे हैं तैसा तुम को करना चाहिये' ऐसा श्रीविभीषणसूरि निर्वंध पूर्वक कहनेके बाद ही स्नान की है । ऐसा पूछनेपर विभीषण श्रीरामजी के हृद्गत अभिप्राय को न जान ऊपरी वार्ता को सुन कहा है इतना ही, कितना भी होतो दशमास रावण के घर में बास करनेवाली 'कारागार में जिस वेष से रही थी उस वेष से ही मैं देखूंगी स्नान न करूंगी' ऐसा रहना चाहिये, वैसा न कर शीघ्र स्नान कर आई है । वह स्नान पूर्व आकार को देखनेकी इच्छा करनेवाले श्रीरामजी को रोष का हेतु हुआ है । इस कारण स्नान रोषजनक हुआ ऐसा कहने में हानि नहीं ।

यद्वा स्नान रोषजनक है इस वचन को माने—श्रीविभीषणसूरि सीताजी से जब स्नान करनेको कहे हैं तब श्रीरामजी के अभिप्राय को जाननेवाली होनेसे उन को यह अभिमत नहीं है इस लिये रोषजनक होगा ऐसा समझ विना स्नान किये पति के देखनेको चाहती हूं ऐसा सीताजी की कही हुई वार्ता समझना ।

## 'वंचकः कपटो''नश्यतु' ॥१७२॥

इति जानक्योक्ता वार्ता वा । रोषजनकमित्यर्थं प्रकाशयंती वार्तेति पूर्वोक्तन्यायोऽपि समानः ।

एवमभिमतविषये मालिन्यं यथा प्रीतिहेतुर्भवति तथात्मज्ञानवता मलिनदेह इति त्यज्यमानममुं देहमीश्वर आद्रियत इति क दृष्टमित्यत आह—वंचक इत्यादि ।

'वंचकः कपट' इत्यारभ्य 'नश्यतु'इत्यंतं स्वविग्रहेऽत्यादरं कृत्वा तदनुभवप्रकारान् तावन्मात्रं विनाऽतिचापल्येनानेन शरीरेण सह स्वं श्रीवैकुंठं गमयितुं कृताभिनिवेशप्रकारं च दृष्ट्वा 'उपकारकैवं माकुरु' इति निर्बंधं कृत्वा देहदोषं तं ज्ञापयित्वा 'एवं हेयमिदं यथा नष्टं स्यात्तथाऽनुकूलो भवेति चरणौ निरुध्य स यथेदं निवर्तयित्वा प्रापयेत् तथा प्रयासेनांगीकारप्रकारं चावदन् खलु परांकुशाः ।

---

**वंचकः कपटो नश्येदिति श्रीस्वामिपाशुरः ॥१७२॥**

रोषजनक इस अर्थ को दिखानेवाली वार्ता ऐसा पूर्वोक्तन्याय यहां भी समान है ।

इस प्रकार अभिमत विषय के मालिन्य को जैसे चाहते हैं वैसा आत्मज्ञानी मलिन शरीर समझ त्यागने योग्य देह को ईश्वर चाहते हैं इस को कहां देख सक्ते हैं ? इस शंका में कहते हैं ।

'वंचक कपट' 'नाश होनेके लिये अनुमति करो ॥ १७२ ॥

'वंचक कपट' ऐसा आरंभकर 'नाश होनेके लिये अनुमति करो' यहां तक अपने दिव्यशरीर में अत्यादर करते हुए परमात्मा के अनुभव प्रकार, इतना ही नहीं अति चपलता से इस शरीर के साथ अपने को परमपद में लेजाने को वह अत्यंत अभिलाषा कररहा है इस प्रकार को भी देख हे उपकारक ऐसा मन कीजिये इति निर्बंधकर इस के दोष को उसे जनाकर एवं हेयरूप यह शरीर नाश होनेके लिये अनुमति करना ऐसा चरण को पकड इस को छुडाकर लेजानेके लिये निर्बंधपूर्वक अनुमति करानेके प्रकार को श्रीशठकोपसूरि कहे हैं ।

उशीरधतारो यथा मृत्संबंधं न दूरीकुर्वंति
तथा ज्ञानिनं देहेन सहाद्रियते ॥ १७३ ॥

---

अभिमतविषये मालिन्यवदाद्रियत इत्येतावदेव न, अस्य ज्ञानपरिमलस्यास्मिन्देहे प्रकाशमानत्वादमुमाद्रियत इत्यर्थं सदृष्टांतमाह— उशीरेत्यादिना ।

परिमले वैलक्षण्यं ज्ञात्वोशीरं दधंतो भोगिनो मृदो दूरीकरणे परिमलो गच्छतीति मृत्संसर्गमदूरीकृत्य यथा दधति तथा परमभोगी सर्वेश्वरो ज्ञानिनममुमाहृत्य यदानुभवति तदा 'आह्लादशीतनेत्राम्बुः' इत्यादिप्रकारेण ज्ञानकार्यविकृतीनां सर्वासामाश्रयेण अस्य ज्ञानपरिमलानां सर्वेषां प्रकाशकेन विग्रहेण सहाद्रियत इत्यर्थः ।

---

मृत्संबंधः प्रियो यद्वदुशीरधर्तृणां तथा ।
ज्ञानिनः सह देहेनाद्रियंते च परात्मना ॥ १७३ ॥

अभिमतविषय में मालिन्य के तरह आदर करते हैं इतना ही नहीं इस चेतन का ज्ञानरूप परिमळ इस देह में भासमान होनेसे इस देह को आदर करते हैं इस अर्थ को दृष्टांत पूर्वक कहते हैं—उशीर इत्यादि ।

जैसा उशीर को धारण करनेवाले मृत्संबंध को न छुडा धारण
करते हैं वैसा ज्ञानी को विग्रह के साथ आदर करते हैं ॥ १७३ ॥

परिमल को जान उशीर को धारण करनेवाले भोगीलोग मृत्तिका को छुडानेसे परिमळ नष्ट होगा समझ मृत्संबंध को न छुडा जैसा धारण करते हैं वैसा परमभोगी सर्वेश्वर इस ज्ञानी को आदर कर अनुभव करनेके समय 'आनंद से शीतल नेत्रजलवाला' इस वचनानुसार ज्ञान का कार्यभूत संपूर्ण विकारोंके आश्रय और इस का संपूर्ण ज्ञान परिमळ का प्रकाशक इस शरीर के साथ आदर करेगा ऐसा समझना ।

**परमार्तस्यास्य शरीरस्थितेर्हेतुः**
**केवलभगवदिच्छैव हि ॥ १७४ ॥**

---

पुनश्च मुखांतरेणास्य देहे तदादरं दर्शयति — परमार्तस्येत्यादिना ।

परमार्त्तो नाम—'एतत्स्वभावमपि वयं न सहामहे' 'कदाहं त्वामितःपरमागत्य प्राप्स्यामि' 'कथं संगमिस्यामि' 'कालं न जानामि' 'न धरेयेतःपरं' 'आह्वानकाल इतःपरमपि ह्रस्वो न भवेत्किं' इति संसारे पाददाहेन भगवदनुभवे महाभिनिवेशेन च इतःपरं नास्ति इति वक्तुं योग्यतयाभिवृद्धार्तिमान् । एवंभूतस्य शरीरस्थितिहेतुः प्रारब्धकर्मेति न वक्तुं शक्यते—

---

**स्वार्तस्यास्य शरीरस्य स्थितिहेतुश्च केवलम् ।**
**हरीच्छैव तिर्वित्यादि सूक्तितोऽभिमतस्थले ॥ १७४ ॥**

और एक प्रकार से इस के देह में ईश्वर के आदर को दिखाते हैं परमार्त इत्यादि ।

परमार्त इस चेतन की शरीरस्थिति
का हेतु केवल भगवदिच्छा ही है ॥ १७४ ॥

परमार्त माने—'इस शरीर के स्वभाव को इतः पर हम नहीं प्राप्त होंगे' 'कदा वा मैं आप के पास आ आप को मिलूंगा' 'कहां अब आप को प्राप्त होसक्ता हूं' 'उस दिन को नहीं जानता' 'इतः पर धारण नहीं करसक्ता' 'बुला लेनेका काल अभी आया नहीं क्या' ऐसा संसार में पाँवों के जलनेसे भगवदनुभव में अत्यंत आर्ति से इस से अधिक नहीं कहने योग्य अत्यंत दुःख उत्पन्न हुआ जिस को वह । एवं भूत भक्त की शरीरस्थिति का हेतु प्रारब्ध कर्म नहीं कह सक्ते, क्यौं कि 'संपूर्ण पापों से छुडाऊंगा' इस वचन के विरोध होनेसे ।

'तिरुमालिरुंशोलै' इत्युक्तप्रकारेणा-
भिमतदिव्यदेशेषु सर्वेषु क्रियमाण-

---

'सर्वपापेभ्यो मोक्षयिष्यामि'इत्यनेन विरोधात्,
'आर्तानामाशुफलदा सकृदेव कृताह्यसौ।
दृप्तानामपि जंतूनां देहांतरनिवारिणी॥' इति खलु प्रपत्तिस्वरूपम्। तस्मातस्य शरीरस्थितेर्हेतुः'इतः परं किंचित्कालममुं शरीरेण सह स्थापयित्वाऽनुभवेयमितीश्वरेच्छां विना ऽन्यन्न भवति। अतः' 'केवलभगवदिच्छैव' इति वदति। प्रारब्धकर्महेतुना वर्तमानदृप्तविषयेऽपि भगवदिच्छायाः सत्वात् तद्व्यावृत्त्यर्थं केवलशब्दः।
एवं स्वादरविषयेऽस्य शरीरे तदादरप्रकारमाह– तिरुमालिरुंशोलै इत्यादिना।

---

सर्वत्र क्रियमाणा च प्रीतिरस्य शरीरके।

'आर्तों को एक ही वखत की हुई प्रपत्ति तत्क्षण फल देती है, दृप्तलोगों को भी दूसरे जन्म का निवारण करती है' ऐसा प्रपत्ति का स्वभाव है। इस कारण इस की शरीरस्थिति का हेतु–'और भी थोडे दिन इस को इस शरीर के साथ रख अनुभव करेंगे' ऐसा ईश्वरेच्छा छोड दूसरा नहीं, प्रारब्धकर्म हेतु से रहनेवाले दृप्तविषय में भी भगवत् इच्छा के होनेसे उस को अलग करते हैं 'केवल' शब्द से।

इस प्रकार अपने आदर का विषय इस के शरीर में परमात्मा के आदरण के प्रकार को कहते हैं—तिरुमालिरुंशोलै मलै (सुंदरबाहु का पर्वत) इत्यादि।

'तिरुमालिरुंशोलै मलै एव' इत्युक्तप्रकार अभिमत
समग्र दिव्यदेशों में जितना आदर करते हैं उतना
आदर इस के शरीर के एकदेश में करते हैं॥ १७५॥

मादरमस्य शरीरैकदेशे करोति ॥ १७५ ॥

---

'दक्षिणवृषाद्रिं क्षीरसमुद्रं ममोत्तमांगं चाविशेषणाद्रियते, श्रीवैकुंठमुत्तरवृषाद्रिं मच्छरीरं चाविशेषेणाद्रियत' इत्यवदन् हि परांकुशाः । एवमेकैकस्मिन्नवयवे द्वयोर्द्वयोर्दिव्यदेशयोः क्रियमाणमादरमकरोत्, इदं सर्वेष्वपि दिव्यदेशेषु क्रियमाणमादरमेकैकस्मिन्नवयवे कुर्वन्नतिष्ठदित्यस्योपलक्षणम् । तस्मात्तद्गाथोक्तप्रकारेण स्वाभिमतेषु दिव्यदेशेषु सर्वेषु क्रियमाणमादरं ज्ञानिनोऽस्य शरीरैकदेशे करोतीत्यर्थः ।

अभिमतदिव्यदेशेषु सर्वेष्वपि क्रियमाणमादरमस्मिन् विषय एकस्मिन्नेव करोतीति पूर्वमुक्तवान्, अस्मिन् विषये सिद्धेऽभिमतदिव्यदेशेष्वादरस्तस्य संकुचितः स्यादिति वक्तुमुभयत्र विद्यमानं तारतम्यमाह—तत्र वास इत्यादिना ।

---

एकदेशे करोत्येव साध्यसाधनज्ञानवान् ॥ १७५ ॥

दक्षिण श्रीपर्वत ( सुंदरबाहुपर्वत ) क्षीराब्धि हमारा उत्तमांग इन सब को समतया आदर किया है । श्रीवैकुंठ उत्तरश्रीपर्वत ( वेंकटगिरि ) हमारा शरीर इन तीनों को बराबर आदर किया ऐसा श्रीशठकोप सूरि कहे हैं । इस प्रकार एक एक अवयव में दो दो दिव्य देश में जितना आदर करते हैं उतना आदर किया है यह संपूर्ण दिव्यदेशों में क्रियमाण आदर को प्रत्येक अवयव में किया है इस को दिखाता है । अत एव इस गाथा में उक्त प्रकार ईश्वर से संपूर्ण दिव्य देशों में क्रियमाण आदर को ज्ञानी के शरीरैकदेश में करते हैं समझना ।

अभिमत संपूर्ण दिव्यदेशो में क्रियमाण आदर को इस एक विषय में ही करते हैं ऐसा पहिले कहा है, इस ज्ञानी के मिलने पर अभिमत दिव्यदेशों में सर्वेश्वर का आदर संकुचित होता है; इस अर्थ को कहने के लिये दोनों स्थलों में विद्यमान तारतम्य को कहते हैं— वहां इत्यादि ।

तत्र वासः साधनं, अत्र वासः साध्यम् ॥ १७६ ॥

'शिलाः शब्दायमानसमुद्रः' इत्युक्तप्रकारेणा-

---

अभिमतदेशेषु प्रीत्या वास उचितोपायैश्चेतनानामंगीकारार्थं, अतस्तत्र वासः साधनमित्युच्यते। अस्मिन् चेतने वशीकृते ऽस्य हृदये स्वस्य वासस्तत्र स्थित्वा कृतायाः कृषेः फलं- अतोऽत्र वासः साध्यमित्युच्यते । 'शेषशयने कुंभघोणे' 'पर्वते स्वयं स्थित्वा' 'शीतलसमुद्रे शयनं' इत्यादिष्वेतत्सा- ध्यसाधनभावो भासते ।

एतत्साधनसाध्यत्वप्रयुक्तादरतारतम्यमाह– शिलेत्यादिना ।

---

अत्र वासो भवेत् साध्यं तत्र वासस्तु साधनम् ॥ १७६ ॥

शिला शब्दायमानो हि समुद्र इति सूक्तितः ।

वहां वास साधन है, यहां वास साध्य है ॥ १७६ ॥

दिव्यदेशों में आदर पूर्वक वास करने का प्रयोजन उचित उपायों से चेतनों को वश करनेके लिये होने से, वहां वास साधन ऐसा कहा है । यह चेतन शुद्ध हो इस के हृदय में अपने को वास मिलनेपर दिव्यदेश में रह किया हुआ कृषि का फल होनेसे यहां वास साध्य है ऐसा कहा है । 'नागशयन के ऊपर कुंभकोण में' 'पर्वत के ऊपर आप स्थित हो' 'शीतलसमुद्र में शयन' इत्यादियों में इन का साधनत्व और साध्यत्व भान होते हैं ।

इस साधन साध्यत्व प्रयुक्त आदर का तारतम्य को कहते हैं पत्थर इत्यादि ।

'पत्थर और घोषमाणसमुद्र' इत्युक्तप्रकार

इस के सिद्ध होनेपर उन में आदर कम होता है ॥ १७७ ॥

स्मिन् सिद्धे तत्रादरः परिमितो भवति ॥ १७७॥
'बालालयं मात्यजेः' इत्यनेन
प्रार्थना कर्तव्या स्यात् ॥ १७८ ॥

---

स स्वहृदये प्रवेशानंतरं स्वस्यान्यत्र क्वचिदप्यादरो नास्तीति यथा ज्ञायते तथा तेनास्मिन्नत्यादरं कृत्वा वासस्य करणात् श्रीवेंकटाचलः स्वसन्निधानेन घोषायमाणक्षारस-मुद्रो दुष्प्रापं परमपदं चापकृष्टा जाताः किमित्यवदन् खलु दिव्यसूरयः। तथैवं साध्यभूते चेतनहृदये सिद्धे एतत्साध-नतया पूर्वमादृतेषु दिव्यदेशेष्वादरः संकुचितो भवतीत्यर्थः। साध्यसिद्धिपर्यंतं हि साधन आदरो वर्तते।

आदरन्यूनतायामवधिं दर्शयति बालालयमित्यादिना।

---

अस्मिन् सिद्धेऽनुरागस्तु तस्मिन् परिमितो भवेत् ॥१७७॥
बालालयं त्यज त्वं मा इति श्रीसूक्तिभावतः।
कर्तव्या प्रार्थना स्याद्धि तत्र वासाय माधवे ॥ १७८ ॥

अपने हृदय में प्रवेशकिये बाद बाहर के किसी विषय में भी आदर नहीं ऐसा भान होनेके लिये सर्वेश्वर इस शरीर में अत्यादर कर नित्यवास करनेसे 'श्री-पर्वत अपनी संनिधि से घोषमाण क्षीराब्धि किसी को भी अप्राप्य परमपद इन सब में घास जमगयी है क्या' ऐसा भट्टनाथ सूरि कहे हैं। इस प्रकार साध्य भूत इस चेतन का हृदय प्राप्त होनेपर इस के साधनतया पूर्व आदृत दिव्यदेशों में आदर संकुचित होता है। साध्य हस्तगत होने तक ही साधन में आदर अधिक होता है।

आदर की न्यूनता की अवधिको दिखाते हैं—बालालय इत्यादि।

बालालय को मत छोडो ऐसा इस चेतन
की प्रार्थना की आवश्यकता होती है ॥ १७८ ॥

प्राप्यप्रीतिविषयत्वेन कृतज्ञतया
च पश्चात्तेऽभिमता भवंति॥ १७९॥

---

श्रीभूतयोगी स्वप्राप्त्यर्थं पूर्वमादृतदिव्यदेशेषु पूर्वादरं विना स्वहृदयेऽत्यादरं कृत्वा स्थितिप्रकारं दृष्ट्वा तान् दिव्यदेशान् त्यजति किमित्यतिशंकां कृत्वा मद्धृदये प्रवेष्टुं बालालयरूपक्षीरसमुद्रं मात्यजोरिति वदति हि। अत एवमनेन प्रार्थनीयो यथा स्यात्तथाविधं तस्य तत्रादराल्पत्वमित्यर्थः ।

एवमनेन प्रार्थनायां कृतायामपि साध्यसिध्यनंतरं तस्य ते कथमभिमता भवेयुरित्यत आह—प्राप्येत्यादिना ।

प्राप्यप्रीतिविषयत्वं नाम—स्वस्य प्राप्यभूतस्यास्य चेतनस्य

---

कृतज्ञतापरामर्शात् प्राप्यप्रीतेश्च गोचरात् ।
पश्चात्तेऽभिमताः सर्वे दिव्यदेशा भवंति तु ॥ १७९॥

श्रीभूतयोगी अपनी प्राप्ति के लिये पहिले ईश्वर से आदृत दिव्यदेशों में पूर्ववत् आदर न कर अपने हृदय में अत्यादर करनेके प्रकार को देख उन दिव्यदेशों को छोड देंगे क्या ? ऐसा अतिशंका कर मेरे हृदय में प्रवेश करनेके लिये साधनभूत बालालयरूप क्षीरसमुद्र को मतछोडो ऐसी प्रार्थना किये हैं। इस लिये इस चेतन के प्रार्थना की आवश्यकता जैसा हो तैसा उन दिव्यदेशों में आदर कम होता है ।

इस प्रकार इस के प्रार्थना करनेपर भी साध्य के सिद्ध होनेपर उन को वे अभिमत होयंगे क्या ? इस शंका में कहते हैं—प्राप्य के इत्यादि ।

प्राप्य के प्रीति विषय होनेसे और
कृतज्ञता से भी वे अभिमत होते हैं ॥ १७९॥

अपने को प्राप्यभूत इस चेतन की प्रीति के विषय होना—'कंडियूर, रंग,

प्रीतेर्विषयत्वं। 'कंडियूर श्रीरंगः तिरुमेय्यं कांची तिरुप्पेर् मल्ले' इत्याभिनिवेशेन खलु वर्तते। कृतज्ञता नाम—एतद्देशवासेन खल्वस्माभिरयं प्राप्त इति स्वविषये तद्देशेन कृतस्योपकारस्यानुसंधानम्। एतद्द्वाभ्यामस्मिन् चेतने प्राप्तेऽपि तस्या तत्तद्देशा अभिमता भवंतीत्यर्थः।

एवं गुण इव दोषनिवृत्तिरिति पूर्वोक्तशेषत्वपारतंत्र्यरूपात्मगुण इव 'दोषनिवृत्तिश्च परानुभवस्य विरोधिनी' इति कृतायाः प्रतिज्ञाया उपपादनार्थं 'अभिमतविषये मालिन्यमभिमतं भवति' इत्यर्थं, अनेन 'मलिनदेह' इति त्यज्यमाने तस्यात्यादरप्रकारं, ज्ञानिनोऽस्य सविग्रहमादरे हेतुविशेषं च, परमार्तस्यास्य देहस्थितिमादायैवास्य देहे तस्यादरो ज्ञातुं शक्यत इत्यर्थं, तस्यास्य देहे आदरप्रकारं, साध्येस्मिन् सिद्धे साधनादराल्पत्वं, तदवधिं, अस्मिन् 'तत्तद्देशान्मात्यजेः' इति

---

मैऽयम्, कांची, पेर, मल्ले,' ऐसा मग्न होना। कृतज्ञता माने—इन दिव्यदेशों में वास करनेसे ही हम इस को प्राप्त हुए हैं ऐसा विचार उस दिव्यदेश के अपने को कियाहुआ उपकार का अनुसंधान करना। इन दोनों से साध्यभूत इस चेतन के हस्तगत होनेपर भी ईश्वर को वे दिव्यदेश अभिमत होते हैं।

तथाच गुण के तरह दोषनिवृत्ति भी है ऐसा पूर्वोक्त शेषत्व पारतंत्र्यरूप आत्मगुणों के तरह दोषनिवृत्ति भी परमात्मा के अनुभव का प्रतिबंधक होता है ऐसा प्रतिज्ञा कर उस को उपपादन करनेके लिये अभिमतविषय में मालिन्य अभिमत होनेका प्रकार, इस चेतन से 'मलिन शरीर' कह परित्याग किये जानेवाले इस शरीर में उस के आदर करनेका प्रकार, ज्ञानी को विग्रह सहित आदर करनेके हेतु विशेष, परमार्त की देहस्थिति को लेकर ही इस के देह में उस के आदर को जान सक्ते हैं यह अर्थ, सर्वेश्वर चेतन के देह का आदर करनेके प्रकार, साध्यभूत इस चेतन के हस्तगत होनेपर साधन में आदर के कम होनेका प्रकार, उस की

तस्माद्दोषनिवृत्तिवदांतरगुणश्च विरोधी भवति ॥

---

प्रार्थयमाने स्वसाध्ये सिद्धेऽपि हेतुद्वयेन तस्य तेऽभिमता भवंतीत्यर्थं, तद्वधिं चावोचत् ॥

एवं दोषनिवृत्तिः परानुभवस्य विरोधिनीत्यर्थः स्पष्टो यथा स्यात्तथा बहूनां हेतूनामुक्तत्वात् तमर्थं साधितवान् । तद्दृष्टांतीकृत्य सिंहावलोकनन्यायेन पूर्वोक्तशेषत्वपारतंत्र्यरूपात्मगुणस्य परानुभवविरोधित्वं स्थिरीकरोति तस्मादित्यादिना ।

तस्मादिति—पूर्वं साधितमर्थमनुवदति । दोषनिवृत्तिवदिति-दोषनिवृत्तेः स्वरूपौज्ज्वल्योपयोगित्वेपि दोषं भोग्यतया आदर्तुः प्रणयिनोऽनभिमतत्वात्, यथा वा परानुभवविरोधिनी भवति

---

शमादिश्च विरोधिः स्यात् तस्माद् दोषनिवृत्तिवत् ॥

सीमा, उन उन देशों को मत छोडो ऐसी प्रार्थना करने पर स्वसाध्य हस्तगत होने पर भी दो हेतुओं से सर्वेश्वर को उन दिव्यदेशों के अभिमत होवेके प्रकार को भी कहे हैं ।

एवं दोषनिवृत्ति परमात्मा के अनुभव का प्रतिबंधक होता है इस अर्थ के सुस्पष्टता के लिये बहु हेतुओं को कहनेसे उस को सिद्धहुआ समझ उसी को दृष्टांत कर सिंहावलोकन न्याय से पूर्वोक्त शेषत्वपारतंत्र्यरूप आत्मगुणों की परानुभवविरोधिता को स्थिर करते हैं—इस कारण से इत्यादि ।

इस कारण से दोषनिवृत्ति के तरह
आंतरगुण भी विरोधि होता है ॥ १८० ॥

इस कारण से— ऐसा पहिले सिद्ध कियेहुए अर्थ को अनुवाद करते हैं । दोषनिवृत्ति के तरह माने—दोषनिवृत्ति स्वरूपौज्वल्य के लिये उपयुक्त होनेपर भी दोष ही का योग्यतया आदर करनेवाले प्रणयिभूत सर्वेश्वर को अभिमत होनेसे जिस प्रकार से परानुभव का विरोधि होती है । आंतरगुण माने—

दोषनिवृत्तिरेव दोषः स्याद्धि ॥ १८१ ॥

तथेत्यर्थः । आंतरगुण इत्युच्यते शेषत्वपारतंत्र्यम् एतयोरांतरगुणत्वं— ज्ञानानंदाभ्यामात्मनोऽतरंगगुणत्वात् । परानुभवविरोधित्वप्रकारः पूर्वमुक्तः खलु, तत्राचांतरगुण इति पारतंत्र्यमेकमेवोच्यते ।

एवं वक्तुं दोषनिवृत्तौ को वा दोष इत्यतोऽन्यः कश्चन दोषो नापेक्षितोऽयमेव दोष इत्याह— दोषेत्यादिना ।

कामिनी यथा स्वशरीरे मालिन्यं दूरीकृत्य भोगेऽन्विविषति तथा स्वतः परिशुद्धस्यात्मस्वरूपस्यागंतुकदोषं दूरीकृत्य स्वशेषिणो भोग्यतया विनियोज्य इति निर्बंधेनानेन कार्यमाणा दोषनिवृत्तिरेव, कामिनीदेहमालिन्यस्य प्रीतकामुकवद् दोषस्या-

---

दोषनिवृत्तिरेवात्र दोषः स्याद्धीति निश्चयः ॥ १८१ ॥

शेषत्वपारतंत्र्य । इन को आंतरगुण कहते हैं—ज्ञानानंदों की अपेक्षा आत्मा के अंतरंगहोनेसे इस का परानुभव विरोधित्व प्रकार पहिले कहा गया । इस स्थल में भी आंतरगुण यह पारतंत्र्य एक ही को कहता है ऐसा भी योजना समझना ।

दोषनिवृत्ति से होनेवाले दोष कौन ? ऐसा पूंछनेपर और कोई दोष की आवश्यकता नहीं यही दोष ऐसा कहते हैं—दोष इत्यादि से ।

दोपनिवृत्ति ही दोप होता है ॥ १८१ ॥

कामिनी स्त्री अपने शरीर के मालिन्य को छुडाकर भोग में सम्मिलित होने की जैसे इच्छा करती है वैसा स्वतः परिशुद्ध आत्मस्वरूप का आगंतुक दोष को हटाकर अपने शेषी को भोग्यतया विनियुक्त होयंगे ऐसा समझ अपने निर्बंध से यह चेतन जिस दोषनिवृत्ति को करालेता है वह कामिनी के मालिन्य को आदर करनेवाले कामुक के तरह दोष ही अभिमत हो इस के साथ अपने को अनुभव

भिमतत्वेन तेन सह स्वं भोक्तुमादतुः परस्य भोगस्य विरोधित्वाद्दोषो भवतीत्यर्थः । तस्यानिष्ट एव हि दोषः । हीति प्रसिद्धिद्योतनायोक्तं, अयमर्थः पूर्वमुपपादित इत्यभिप्रायेण ।

एवं 'समीचीनमेवासमीचीनं जातं' 'स्वेन मृग्यमाणो गुणो दोषवत्प्रतिबंधको भवति' 'दोषनिवृत्तिरेव दोषः स्याद्धि' इति च स्वस्य स्वेन मृग्यमाणो गुणो हेय इत्युक्तत्वात्तेन मृग्यमाणो गुण एव उपादेय इति फलितं हि । एवं 'स्वेन स्वस्य मृग्यमाणो गुणो हेयस्तेन मृग्यमाणो गुण उपादेयः' इत्युक्तमर्थं दर्शयति–स्वेनेत्यादिना ॥

---

करनेकी इच्छाकरनेवाले परमात्मा के भोग का प्रतिबंधक होनेसे दोष होती है। परमात्मा के अनिष्ट ही को दोष कहते हैं। 'ही' कहनेसे पूर्वोपपादित सब को स्मरण कर इस अर्थ में प्रसिद्धि को दिखाते हैं।

तथाच 'पुण्य ही पाप हुआ', 'अपनेसे अन्वेषण किये जानेवाले पुण्य पाप के तरह प्रतिबंधक होता है,' 'दोषनिवृत्ति ही दोष होती है' अपने प्रयत्न से संपादित पुण्य हेय है, ऐसा कहनेसे परमात्मा से अन्वेषण किये जानेवाले पुण्य ही उपादेय ऐसा सिद्ध हुआ। इस प्रकार स्वान्वेषित पुण्य हेय परमात्मा अन्वेषित पुण्य उपादेय इस अर्थ को आप्तवचन से दिखाते हैं—अपने से इत्यादि।

'स्वेनागतो गुणः क्रीतदुग्धवत्,
तेनागतो गुणः स्तन्यदुग्धवद्'
इति कुरुकाधिनाथवार्ता ॥१८२॥

---

स्वेनागतो गुणो नाम –स्वयत्नेन स्वेन स्वस्योत्पाद्यमानोगुणः। क्रीतदुग्धवदिति– औपाधिको विरसोऽप्राप्तश्च भवतीत्यर्थः। तेनागतो गुणो नाम– निरुपाधिकस्वामिनैवास्यायमावश्यक इत्युत्पाद्यमानो गुणः। स्तन्यदुग्धवदिति– निरुपाधिकः सरसः प्राप्तश्च भवतीति कुरुकाधिनाथेनोक्ता वार्ता इत्यर्थः।

एतावद्विना भगवता विना स्वस्मिन् स्वस्य गुणं संपादयितुमुद्युक्ते, एवं विरसाप्राप्तरूपमात्रं विना स्वविनाशप-

---

स्वेनागतो गुणः क्रीतदुग्धस्तेन चागतः।
स्तन्यदुग्धवदित्युक्तिः कुरुकाधिपतेर्भवेत् ॥ १८२॥

'अपने से होनेवाले पुण्य बाजार के दूध के
सदृश, भगवान से होनेवाले पुण्य माता के दूध
के सदृश' ऐसा कुरुकाधिनाथ का वचन है ॥ १८२॥

अपने से होनेवाले पुण्य माने—स्वयत्न से आप अपनेलिये संपादन किया हुआ। बाजार के दूध माने—औपाधिक विरस और अप्राप्त भी होता है। परमात्मा से होनेवाले पुण्य माने—निरुपाधिक स्वामी होनेसे इस चेतन को यह अपेक्षित है ऐसा समझ उत्पाद्यमान पुण्य माता की दूध के तरह—निरुपाधिक सरस और प्राप्त भी होता है।

इतना ही नहीं, भगवान को छोड आप अपने लिये पुण्यार्जन का यत्न

तेन विना स्वेन स्वस्य गुणसंपादनं
स्तनंधयप्रजां मातापितृहास्तादा-
कृष्य घातकस्याजावाणिजस्य हस्ते
ददाति चेद्यथा तथा भवेत् ॥ १८३ ॥

---

यंतपर्यवसाने स्यादित्यमुमर्थं सनिदर्शनमाह—तेन विने-त्यादिना

प्राप्तेनाप्तेन तेनास्य गुणसंपादनमुचितं, तथा विना तत्प्रातिकोटिना स्वेन स्वस्य स्वोज्जीवनार्थं गुणसंपादनं स्वर क्षणोपयोगिज्ञानशक्त्याद्यभावात् स्वमात्रादिभिर्ज्ञात्वा रक्ष-णीयां स्तनंधयप्रजां रक्षकयोर्मातापित्रोर्हस्ताद्बलादाकृष्य हिंसनेऽनुतापं विना सजीवहिंसां कृत्वा मांसैर्मेलयित्वा विक्रेतुर्घातुकस्याजावाणिजस्य हस्ते इमां रक्षेति ददाति

---

स्वेन तेन विना स्वस्य गुणसंपादनं तथा ।
स्तनंधयप्रजां मातुः पितुराकृष्य साहसात् ॥ १८३ ॥

करे तो अपना विनाश ही सिद्ध होगा इस अर्थ को दृष्टांत पूर्वक कहते हैं—उस को इत्यादि ।

उस को छोड अपने आप पुण्यार्जन करना माने—स्तन्यपान
करनेवाली प्रजा को मातापिताओं के हाथ से लेकर
घातुक कसाई के हाथ में देनेके सदृश है ॥ १८३ ॥

प्राप्त आप्त सर्वेश्वर इस चेतन के लिये पुण्यार्जन करना उचित है, ऐसा न कर उस के प्रतिकोटि आप अपने उज्जीवन के लिये पुण्यार्जन करना माने—स्वरक्षणोपयोगि ज्ञानशक्त्यादि न होने की अवस्था में स्वमाताप्रभृति जानकर रक्षाकरने योग्य स्तनंधयप्रजाको रक्षकभूत मातापिताओं के हाथ से छीन हत्या में संकोच न करनेवाले चित्रवधकर मांसों के साथ मिलाकर बेचदेनेवाले घातुक कसाई के हाथ में 'इस प्रजा को रक्षा करो' ऐसा कह सौंप देनेके सदृश है । इस

स्वं स्वयमेव नाशयेत् ॥ १८४ ॥

चेद्यथा स्यात्तथा भवेदित्यर्थः । अनेनेश्वर एव रक्षकः स्वयं स्वस्य नाशक इत्युक्तम् । एवमयं स्वात्मानं स्वयमेव कथं नाशयेदित्यत आह—स्वमित्यादि ।

सर्वेश्वरस्य एतदुज्जीवनार्थमवसरप्रतीक्षकत्वेन वर्तमानत्वादस्य विनाशस्य कदापि न हेतुर्भवति, अथ 'असन्नेव' इत्यादिप्रकारेण स्वं नाशयति स्वयमेव खल्वित्यर्थः । अहमेव मां' इति गाथायां—'अहमेव' इति—ममानर्थो भगवत्कृतो न भवति, तस्मिन् सम्मुखो रक्षणाय संचरति नन्वहमेव विनाशमापादितवानित्यवोचन् हि परांकुशाः ।

---

पशुघ्नस्येश्वरस्यापि रक्षकत्वं यथा भवेत् ।
स्वयं हि नाशयेत् स्वं तद् यस्स्वयं गुणमार्गणम् ॥१८४॥

से सर्वेश्वर ही रक्षक है, आप अपने को नाशक है—यह अर्थ कहागाया ।

इस प्रकार यह चेतन अपने को आप नाश करलेगा क्या ? इस शंका में कहते हैं— अपने को इत्यादि ।

अपने को आप ही नाश करलेना है ॥ १८४ ॥

सर्वेश्वर इस चेतन के उज्जीवन के लिये अवसर प्रतीक्षक होनेसे इस के नाश के लिये कभी कारण नहीं होता है, 'असत् ही' इस वचनानुसार अपने को नाश करलेनेवाला आप ही होता है ।

'मैं ही मुझ को' इस गाथा में मैं ही कहनेसे मेरी हानि का कर्ता भगवान् नहीं वह सामने मेरी रक्षा करने के लिये संचार करने पर भी मैं ही मेरे नाश का कारण हुआ ऐसा श्रीशठकोपसूरि कहे हैं ।

स्वयमेव स्वविनाशनं— अहंका-
रस्य विषयाणां चादरणम् ॥ १८५॥

---

अस्य स्वयमेव विनाशकरत्वं कीदृशमित्याकांक्षायामाह— स्वयमेवेत्यादिना ।

अहंकारो—देहाभिमानः, स्वातंत्र्याभिमानश्च । विषयाः विहितनिषिद्धविषयाः । तेषामादरणं नाम—तेष्वत्यंतप्रावण्यम् । आत्मस्वरूपं भगवदनन्यार्हशेषं भगवदेकभोगं खलु वर्तते, एतादृशस्वरूपनाशनं खलु—अत्रास्य प्रावण्यम् । उत्तरवाक्ये नमःशब्दार्थं वदामि चेदेतत्सर्वं किं? उत्तरवाक्ये नमसा पुरुषार्थस्य मध्यभित्तिभूतविरोधिनः सर्वे निवर्त्यंत इति ज्ञापनार्थं हि

---

शब्दाद्यहंकृतिप्रीतिः स्वेनैव स्वविनाशनम् ॥ १८५॥

यह चेतन अपने आप को नाश करलेना माने क्या है ? इस आकांक्षा में कहते हैं— अपने को इत्यादि ।

अपने को आप नाश करलेना माने— अहंकार
और विषयों को आदर करना ॥ १८५ ॥

अहंकार माने— देहात्माभिमान और स्वातंत्र्याभिमान । विषय माने— विहित और निषिद्ध विषय । इन को आदर करना माने—इन में अतिप्रेम करना । आत्मस्वरूप भगवदनन्यार्हशेष और भगवदेकभोगरूप होता है । तादृशस्वरूप को अहंकार और विषयों में प्रवण हो नाश करलेता है । उत्तरवाक्य के नमःशब्दार्थ को कहनेकी प्रतिज्ञा कर ये सब बातें क्यों करते हैं ? इस शंका में, उत्तरवाक्य के नमःशब्द से पुरुषार्थ के प्रतिबंधक संपूर्ण विरोधि निकाले जाते हैं, इस अर्थ के भान होने के लिये 'मनो वचन कायों से' ऐसा आरंभ

अहंकारोऽग्निस्पर्शवत् ॥ १८६ ॥

---

'मनोवाक्कायैः' इत्यादिचूर्णिकात्रयेण सकलविरोधिनिवृत्तिं च भाष्यकारोऽवोचत् । अयं च मुमुक्षुपडिप्रबंधे नमःशब्दार्थकथनसमये 'अत्राविद्यादयोऽपि निवर्तंत' इत्यवोचच्चि । तस्मादत्र च देहात्माभिमानादिरूपमहंकारं तत्कार्यं विषयप्रावण्यं तदुभयकार्यं भागवतापचारप्रभृतिविरोधिनः सर्वान्प्रसक्तानुप्रसक्तं वदति, तस्मान्न विरोधः ।

एतदहंकारादीनां क्रौर्यं विस्तरेणोपपादयितुं मनसि विचार्य प्रथममहंकारस्य क्रौर्यमाह— अहंकारस्येत्यादिना ।

अग्निस्पर्शवदिति—अग्निस्पर्शोऽन्नितस्थलं [illegible] दग्ध्वा नाशयति तद्वदयं चाश्रयाशी स्वरूपं साक्षान्नाशयतीत्यर्थः ।

---

अहंकारो भवेदग्निस्पर्शवदिति निश्चितम् ॥ १८६ ॥

कर तीन चूर्णिका से सकलविरोधि निवृत्ति को श्रीभाष्यकार स्वामी कहे हैं । यह लोकाचार्य भी मुमुक्षुपडी में इन नमःशब्दार्थ के कहनेके समय में 'इस में अविद्यादि निवृत्त होते हैं' ऐसा कहे हैं । इस कारण इस स्थल में भी देहात्माभिमानादि रूप अहंकार तत्कार्यरूप विषयप्रावण्य उन दोनों के कार्यभूत भागवतापचार आदि संपूर्ण विरोधियों को प्रसक्तानुप्रसक्त कहने से विरोध नहीं है ।

इन अहंकारादिओं के क्रौर्य को विस्तारपूर्वक उपपादन करनेके लिये विचार, पहिले अहंकार के क्रौर्य को कहते हैं— अहंकार इत्यादि से ।

अहंकार अग्निस्पर्श के सदृश है ॥ १८६ ॥

अग्निस्पर्श स्वसंबंधि पदार्थ को जलाकर जैसे नाश करता है तैसा यह भी स्वसंबंधि को जलाकर साक्षात् भस्म करता है ।

## 'न कामकलुषं चित्तम्' ॥१८७॥

अस्याहंकारस्य कार्ये प्रमाणानि दर्शयति, तत्र प्रथमं ऋग्वेद-खिलं जितंतेवचनमाह—'न काम' इत्यादिना।

'न कामकलुषं चित्तं मम ते पादयोः स्थितम्।
कामये वैष्णवत्वं तु सर्वजन्मसु केवलम् ॥'

अस्यार्थः—'निरुपाधिकशेषिणो निरतिशयभोग्यस्य भगवतश्चरणयोः व्यवस्थितं मम मनः श्रीवैकुंठादिरूपमन्यदेवमपि स्वयंपुरुषार्थत्वेन विचार्य कलुषं न भवति, सर्वजन्मस्वपि तवैव रसो यथा स्यात्तथाविधं दास्यमेवाशासे' इति। केवलपदेनास्यापि साधारणी स्थितिर्व्यावर्त्यते। तुशब्दोऽवधारणार्थः। अनेन मोक्षपर्यंतं स्वप्रीत्याऽऽगतं सर्वमहंकारगर्भत्वात् त्याज्यमित्युक्तम्।

---

इस अंहकार के कार्य में प्रमाण दिखाते हैं, उस में पहिले ऋग्वेद खिल भूत जितंतेवचन को दिखाते हैं— काम से इत्यादि।

'काम से चित्त कलुषित नहीं है' ॥ १८७ ॥

'आप के चरणारविंद में स्थिरीभूत मेरा चित्त काम से कलुषित नहीं है। सर्वजन्मों में केवल वैष्णवत्व को चाहता हूं'

'निरुपाधिक शेषी निरतिशय भोग्य आप के चरणारविंदों में व्यवस्थित मेरा मन श्रीवैकुंठादि और किसी को स्वयं पुरुषार्थतया समझ व्याकुल नहीं होता है। सर्वजन्मों में आपही का रसदायी दास्य को ही अपेक्षा करता हैं'। केवल पद से स्वप्रयत्न रूप स्वातंत्र्य को दूर करता है। तु शब्द ही का अर्थ में है। इस से मोक्षपर्यंत अपने संतोष के लिये आनेवाले सब अंहकारगर्भित होनेसे त्याज्य होते हैं ऐसा कहागया।

## न हि मे जीवितेनार्थः ॥ १८८ ॥

---

अनंतरं जानकीवचनमाह—'न हि मे' इत्यादि ।

'न हि मे जीवितेनार्थो नैवार्थैर्न च भूषणैः ।
वसंत्या राक्षसीमध्ये विना रामं महारथम् ॥'

अस्यार्थः—महारथं स्वामिनं विश्लिष्य राक्षसीनां मध्ये वसंत्या मम प्राणेन किंचित्प्रयोजनं नास्ति, अर्थैः किंचित्प्रयोजनं नास्ति, आभरणैः किंचित् प्रयोजनं नास्तीति । अनेन प्राणादिकं सर्वं तस्य विनियोगार्थं विना स्वस्य यदा भवति तदाऽहंकारस्पर्शित्वात्त्याज्यमित्यर्थ उक्तः ।

अनंतरं परमाचार्यस्य यामुनमुनेर्वचनमाह—'न देहं' इति ।

---

## न कामकलुषं चित्तं नार्थं मे जीवितेन हि ॥ १८८ ॥

अंनतर जानकी के वचन को कहते हैं—मुझे इत्यादि ।

मुझे जीनेसे प्रयोजन नहीं ॥ १८८ ॥

'महारथ श्रीरामजी के बिना राक्षसियों के बीच में वास करनेवाली
मुझे जीनेसे प्रयोजन नहीं, द्रव्यों से नहीं और भूषणों से नहीं ॥'

इसका अर्थ– महारथ स्वामी के विश्लेष पाकर राक्षसियों के बीच में वासकरनेवाली मुझ को प्राण से कुछ भी प्रयोजन नहीं है, धनों से भी कुछ प्रयोजन नहीं है, आभरणों से भी कुछ प्रयोजन नहीं है । इस से प्राणादि सब उन के विनियुक्त न हो अपनेलिये हो तो अहंकारगर्भित होनेसे त्याज्य होते हैं यह अर्थ कहा गया ।

अनंतर परमाचार्य श्रीयामुनमुनि के वचन को कहते हैं—देहको इत्यादि ।

'न देहम्' ॥ १८९ ॥

'न देहं न प्राणान्न च सुखमशेषाभिलषितं
न चात्मानं नान्यत्किमपि तव शेषत्वविभवात् ।
बहिर्भूतं नाथ क्षणमपि सहे यातु शतधा
विनाशं तत्सत्यं मधुमथन ! विज्ञापनमिदम् ॥'

अस्यार्थः—'मम प्राप्तशेषिन् ! तव शेषत्वरूपैश्वर्याद् बहिर्भूतं देहं क्षणमपि न सहे, अस्य देहस्य धारकान् प्राणांश्च न सहे, सर्वैरप्यभिलषितं सुखं च न सहे, पुत्रमित्रकलत्रादिकमन्यत्किंचिदपि न सहे, एतेषां सर्वेषां भोक्तारमात्मानं स्वयमपि न सहे, तत्सर्वं यथा स्वरूपमपि न दृश्येत तथा शतधा नश्यतु, इदं विज्ञापनं सत्यं, अन्यथा भवतोऽसत्यवादिना मधुना यत्प्राप्तं तत् प्राप्नुयामिति । अनेनास्मिन् शेषत्वाद्बहिर्भूतं

न देहं न च तन्मुक्तिप्रकारं वा वदाम्यहम् ॥ १९० ॥

'देह को नहीं चाहता हूं' ॥ १८९ ॥

'आप के शेषत्व से बहिर्भूत होनेपर देह, प्राण, सुख, संपूर्ण अभिलाषा, आत्मा और अन्य किसी को भी क्षणकालतक भी न सहूंगा, सौ तरह से नाश को प्राप्त हों, हे मधुसूदन ! यह विज्ञापन सत्य है" ॥

इस का अर्थ— हे मेरे प्राप्त शेषिन् ! आप के शेषत्वरूप ऐश्वर्य के बहिर्भूत देह को क्षणमात्र भी न सहूंगा । इस देह के धारक प्राणों को भी न सहूंगा, सर्वापेक्षित सुख को भी न सहूंगा, पुत्रमित्रकलत्रादिरूप अन्य किसी को भी न सहूंगा, इन सब के भोक्ता आत्मा को भी न सहूंगा, ये सब जैसा न दीखे तैसा सौ तरह से नष्ट हो जाय यह विज्ञापन सत्य है, सत्य न हो तो आप के विषय में असत्याचरण करनेवाला मधुनामक राक्षस से प्राप्त हुआ अनर्थ मुझ को भी प्राप्त होय ।

'सुमहापद्प्रकारमपि' ॥ १९० ॥
प्रतिकूलविषयस्पर्शो विषस्पर्शवत्, अनुकू-

---

सर्वमहंकारदुष्टत्वात् त्याज्यमित्युक्तम् ।

अनंतरमज्ञाननिवृत्तिमत्यानंदं प्राप्तानामग्रेसरस्य वचनमाह—सुमहापदमित्यादिना ।

'सूरे मोक्षं स्वीकुरु' इत्युक्ते 'मम प्रीत्यर्थं दीयमानस्य मोक्षस्य सर्वप्रकारेण च विलक्षणत्वेऽपि तस्य प्रकारं च न प्रसंजयामः' इत्यर्थः । अनेन स्वप्रीत्यर्थं मोक्षश्चाहंकारगर्भत्वादैश्वर्यादिवत्त्याज्य इत्युक्तम् ।

एवमहंकारस्य क्रौर्यमुक्त्वाऽनंतरं विषयाणां क्रौर्यमाह—प्रतिकूलविषयस्पर्श इत्यादिना ।

---

निषिद्धाभिन्नभोगो हि विषभोगवदिष्यते ।

इस से भगवत्-शेषत्व से बहिर्भूत रूप ही अंहकारदूषित होनेसे त्याज्य है यह अर्थ कहा गया ।

अनंतर अज्ञाननिवृत्तिपूर्वक मत्यानंद को प्राप्त होनेवालों में अग्रेसर शठकोपसूरी के वचन को कहते हैं — महापद के प्रकार को इति ।

'महापद के प्रकार को भी' ॥ १९० ॥

इस का अर्थ 'हे सूरि! मोक्ष को लेवो ऐसा ईश्वर के कहनेपर मेरा संतोष के लिये दियेजानेवाले मोक्ष अत्यंत विलक्षणहोने पर भी उस की बात को भी प्रस्ताव करनेवाला नहीं हूं । इस से अपने संतोष के लिये होनेवाला मोक्ष भी अंहकारगर्भित होनेसे एश्वर्यादियों के तरह त्याज्य होता है—यह अर्थ कहा गया ।

तथाच अंहकार का क्रौर्य कहा गया, अब विषयों के क्रौर्य को कहते हैं—प्रतिकूलविषयस्पर्श इत्यादि ।

लविषयस्पर्शो विषमिश्रान्नभोजनवत् ॥ १९१ ॥

---

प्रतिकूलविषयो नाम–लोकविरुद्धो नरकहेतुश्च निषिद्ध-विषयः। तत्स्पर्शो विषस्पर्शवदित्युक्तं- प्राणबाधकत्वेन प्रसिद्धत्वात्, प्रातिकूल्ये भासमानेसति प्राणं नाशयद्विषस्पर्शवत्, शास्त्रनिषिद्धतया प्रसिद्धत्वेन प्रतिकूल इति भासमानत्वे सति स्वरूपनाशकत्वात्। अनुकूलविषयो नाम–लोकाविरुद्धो नरक-हेतुत्वरहितो विशिष्टवेषानुकूलश्च विहितविषयः। तत्स्पर्शो विषमिश्रान्नभोजनवदित्युक्तं–विषमिश्रान्नभोजनं हि यथाऽजानतोऽनुकूलत्वेन भासमानं सत् तत्प्राणं नाशयति, तथा शास्त्रविहिततया प्रसिद्धत्वेनानुकूलवद्भासमानत्वे सति आत्मनोऽनन्यभोगत्वरूपस्वरूपनाशकत्वात्।

---

विहिताभिन्नभोगश्च विषमिश्रान्नभोगवत् ॥ १९१ ॥

प्रतिकूलविषयों के स्पर्श विषस्पर्श के सदृश है,
अनुकूल विषयों के स्पर्श विषमिश्र भोजन के सदृश है ॥ १९१ ॥

प्रतिकूल विषय माने—लोकविरुद्ध और नरक हेतु निषिद्ध विषय। उन के स्पर्श को विषस्पर्श सदृश कहना—प्राणों के बाधकत्वेन प्रसिद्ध होनेसे प्रातिकूल्य भासमान होते हुए प्राण को नाश करनेवाले विषस्पर्श के तरह शास्त्रनि-षिद्धत्वेन प्रसिद्ध होनेसे प्रतिकूलतया भासमान हो स्वरूप को नाश करनेसे।

अनुकूल विषय माने—लोकविरुद्ध और नरकहेतु न हो विशिष्टवेष (शरीरगत वर्णाश्रमादि) के अनुकूल होनेवाले विहित विषय। उन का स्पर्श को विषमिश्र-भोजनके तरह कहना—विषमिश्रान्नभोजन नहीं जाननेवालों को अनुकूलतया भासमान होते हुए पानेवालों के प्राण को जैसा नाश करता है वैसा शास्त्रविहित-तया प्रसिद्ध होनेसे अनुकूलवत् भासमान हो आत्मा के अनन्यभोग्यत्वरूप स्वरूप को नाश करनेसे।

**अग्निज्वालां निगीर्य पिपासां शमयितुमिच्छे-
व, नृत्यतः सर्पस्य छायायां स्थातुमिच्छेव**

'विषस्य विषयाणां च दूरमत्यंतमंतरम् ।
उपभुक्तं विषं हंति विषयाः स्मरणादपि ॥'

इति भोजनमपि नापेक्षितं स्मरणमात्रेण नाशयतीति विषा-
दपि विषयोऽतिक्रूर इत्युक्तम् ।

एवं नाशकरविषयेषु प्रावण्येन सुखितुमिच्छा विपरीत-
ज्ञानकार्यमित्यर्थं प्रमाणप्रसिद्धदृष्टांतमुखेनाह— अग्निज्वाले-
त्यादिना ॥

पिपासया परिश्रांतो वह्निज्वलां निगीर्य हि ।
पिपासाशमनेच्छावद्विषयप्रवणे सुखम् ।
चलन्नागफणच्छायामवलंब्य यथा स्थितिः ।

'विष और विषयों के बीच में अनंत वैषम्य है,
विष खाया जाकर मनुष्य को नाश करता है,
विषय तो स्मरण से भी नाश करता है ।'

ऐसा, भोजन की अपेक्षा विना स्मरणमात्र से नाश करनेसे विषकी अपेक्षा विषय अति क्रूर कहा गया ।

इस प्रकार विनाशकर विषयों में प्रवण हो सुख पाने की इच्छा करना विपरीतज्ञान कार्य है ऐसा प्रमाणप्रसिद्ध दृष्टांत द्वारा कहते हैं—अग्निज्वाला को इत्यादि ।

अग्निज्वाला को निगलकर प्यास को शांत करने
की इच्छा के तरह, (और) नाचता हुआ सर्प को
छाया में बैठ ताप को दूर करनेकी इच्छा के तरह

च विषयप्रावण्येन सुखितुमिच्छा ॥ १९२ ॥

---

'आस्वाद्य दहनज्वालामुदन्याशमनं यथा ।
तथा विषयसंसर्गात् सुखाचिंता शरीरिणः ॥' इति,
विषयाणां तु संसर्गाद्यो बिभर्ति सुखं नरः ।
नृत्यतः फणिनश्छायां विश्रमायाश्रयेत सः ॥'

इति चोक्तप्रकारेण जलस्य पिपासितो विपरीतज्ञानेन ताप-हेतुमग्निज्वालां निगीर्य स्वपिपासां निवर्तयितुं यथेच्छति, आदित्यकिरणैरतिमात्रतप्तस्तादृशतापं शमयितुं छायेति मात्र-मवलंब्य आगामिनमनर्थमनिरूप्यात्यंतकुपितस्य फणां विस्तीर्य नृत्यतः सर्पस्य छायायां स्थातुं यथेच्छति तथा वर्तते, बाध-कविषयाः सुखप्रदा इति भ्रांत्या तत्र प्रवणस्ताननुभूय सुखितुमिच्छतीत्यर्थः ।

---

तद्बद्विषयप्रावण्येच्छानिबंधनजं सुखम् ॥ १९२ ॥

भी—विषयप्रवण हो सुख पानेकी इच्छा करना ॥ १९२ ॥

'अग्निज्वाला को निगल जैसा प्यास को शमनकरलेना
वैसा विषयसंबंध से मनुष्य को सुख पानेकी इच्छा ।'

ऐसा,

'विषयों के संबंध से जो मनुष्य सुख पाता है, वह नाचने-
वाले सर्प की छाया को विश्रान के लिये आश्रयण करता है ।'

ऐसा भी कहा हुआ प्रकार जल के लिये प्यासा विपरीतज्ञान से तापहेतु अग्निज्वाला को निगल अपनी प्यास को शांत करनेकी इच्छा करनेके तरह, और आदित्य किरणों से अत्यंत तप्त मनुष्य उस ताप को शमन करनेके लिये छायामात्र समझ होनेवाले अनर्थ को न जान अत्यंत कुपित फणा को फैलाकर खेलनेवाले सर्प की छाया में ठहरने की इच्छा करनेके तरह भी होता है, बाधक विषयों को सुखप्रद समझ उन में आसक्त हो उन को भोग सुख पानेकी इच्छा करना ।

अशुणमा (केकयपक्षी) यथा
नश्यति तथा भगवद्गुणपरो
मृदुप्रकृतिर्विषयदर्शनेन नश्यति ॥ १९३ ॥

---

विषयस्पर्शः स्वरूपनाशकः, विषयप्रवणः सुखितुमिच्छतीतीदं विपरीतज्ञानकार्यमिति हि पूर्वमुक्तं; एतद्विषयस्पर्शो नापेक्षितः, भगवद्गुणेष्ववगाह्य स्थितः एतस्मिन् दृष्टे नश्यतीत्याह—अशुणमा (केकयपक्षी) इत्यादि ।

अशुणमा (केकयपक्षी) इति कश्चित्पक्षी अतिमधुरगानश्रवणेन मनसो जलद्रव्यतापन्नस्य द्रवगदशायामतिकठिनवाद्येऽभिहते श्रुत्वा यथा नश्यति, तथा भगवदनुभव एकस्मिन्नेव तत्परस्तद्गुणरसे शिथिलीभूयेतरविषयाणां नामश्रवणेऽपि व्याकुलीभवन् मृदुप्रकृतिर्भगवदेकभोगत्वरूपस्वरूपना-

---

भगवद्भोगजुष्टस्य मृदुप्रकृतिकस्य च ।
केकयस्य यथा नाशो नाशो विषयदर्शने ॥१९३॥

विषयस्पर्श स्वरूप को नाश करता है, विषयप्रवण हो सुख पाने की इच्छा करना विपरीतज्ञान कार्य है ऐसा पहिले कहा । विषयस्पर्श की अपेक्षा भी नहीं चाहिये, भगवद्गुणों में शिथिल होनेवाला इन (विषयों) को देखनेमात्र से नष्ट होता है ऐसा कहते हैं—अशुणमा (केकय) पक्षी इत्यादि ।

अशुणमा (केकय) पक्षी जैसा नष्ट होता है वैसा, भगवदनुभव में ही आसक्त मृदुस्वभाववाला विषयदर्शन से नष्ट होता है ॥ १९३ ॥

अशुणमा (केकय) पक्षी अत्यंत मधुर गान के श्रवण से मन के जलरूप में गलनेकी दशा में अति कठिन बाजा बजानेपर सुन जैसा नष्ट होता है वैसा, भगवदनुभव एक हीमें आसक्त हो उन के गुणों के रस में शिथिल हो इतरविषयों के नाम सुनने से भी नष्ट होनेके मृदुस्वभाववाला भगवदेकभोगत्वरूप स्वरूप को

'दर्शयित्वा नाशयसि किं' इत्युक्तं हि ॥१९४॥

---

शकानां विषयाणां दर्शनमात्रे दुःखितो नश्यतीत्यर्थः ।

अमुमर्थमाप्तवचनेन घटयति—दर्शयित्वेत्यादिना ।

अयमर्थः—अल्परसान् अनेकविधान् दुर्विषयान् दर्शयित्वा तैः सह सहवासमसहमानत्वे सति तदुचितस्थले स्थातुं निदानं पापं कृतवंतं मां नाशयितुं पश्यसि किमित्यर्थः ।

एवंभूतविषयदोषस्याज्ञानेनात्र प्रवणस्य तं ज्ञात्वैव प्रवणस्य च तारतम्यमाह—अज्ञ इत्यादिना ।

---

दर्शयित्वा विनाशो मे करोषीत्युक्तिरस्ति हि ॥१९४॥

नाश करनेवाले विषयों को देखनेमात्रसे रो रो कर नष्ट होता है ।

इस अर्थ को आप्तवचन से स्थिर करते हैं—दिखाकर इत्यादि से ।

'दिखाकर नाश करोगे क्या ?' ऐसा कहे हैं ॥ १९४ ॥

अल्परस और अनेकप्रकार के दुर्विषयों को दिखाकर उन के साथ संबंध असह्य हो उन के रहनेके उचित संसार में पडे रहनेके कारण पाप किया हुआ मुझ को नाश करने के विचार करते हो क्या ? ऐसा शठकोपसूरि कहे हैं ।

एवंभूत विषयदोष को नहीं जान इन में आसक्त होनेवाला और इस दोष को जान इन में आसक्त होनेवाला इन दोनों के तारतम्य को कहते हैं—न जानकर इत्यादि ।

**अज्ञो विषयप्रवणः--केवलनास्तिकवत्, ज्ञान-वान् विषयप्रवणः-- आस्तिकनास्तिकवत् ॥ १९५॥**

---

अज्ञो विषयप्रवणः—विषयाणां दोषभूयस्त्वं स्वरूपविरुद्धतां चाज्ञात्वा तत्राशां कृत्वा ताननुभोक्ता। केवलनास्तिकः—धर्माधर्मपरलोकचेतनेश्वरादीनां प्रतिपादकशास्त्रे प्रामाण्यबुद्धिं किंचिदपि बिना स्वैरसंचारपरशुद्धनास्तिकः। ज्ञानवान् विषयप्रवणः— विषयाणां दोषदुष्टतां स्वरूपविरुद्धतां च ज्ञात्वैव तत्रादरेणासक्तः। आस्तिकनास्तिकः-- धर्माधर्मादिसकलप्रतिपादकशास्त्रं प्रमाणमिति स्थितत्वादास्तिक इति वक्तुं योग्यः, तादृशशास्त्रमर्यादायामतिष्ठन् यथेच्छं कुर्वन् स्थित इति नास्तिकसमः।

---

अज्ञो हि विषयासक्तः परं नास्तिकवद्भवेत्।
ज्ञानवान् विषयासक्त आस्तिको नास्तिको यथा॥१९५॥

न जानकर विषयों में आसक्त केवल नास्तिक के तरह,
जानकर विषयों में आसक्त आस्तिक नास्तिक के तरह ॥ १९५॥

न जानकर विषयों में आसक्त—विषयों के दोषाधिक्य और स्वरूपविरुद्धता को न जान उन की इच्छा कर ऊपर गिरनेवाला। केवल नास्तिक है—धर्म अधर्म परलोक चेतन ईश्वर आदि को प्रतिपादन करनेवाले शास्त्र में प्रामाण्यज्ञान रहित यथेष्ट संचार करनेवाला शुद्धनास्तिक है। जानकर विषयों में आसक्त—विषय दोषों से दुष्ट और स्वरूपविरुद्ध हैं ऐसा जानकर भी उन की इच्छा कर ऊपर गिरनेवाला। आस्तिकनास्तिक है—धर्म अधर्म आदि सकल प्रतिपादक शास्त्र को प्रमाण माननेसे आस्तिक कहनेके योग्य, उस शास्त्र की मर्यादा में न रह यथेष्ट संचार करनेसे नास्तिक के सदृश होता है।

केवलनास्तिको वशीकर्तुं शक्यः, आस्तिक
नास्तिकः कदापि वशीकर्तुं न शक्यते ॥ १९६ ॥

---

दृष्टांतभूतयोरनयोः को विशेष इत्यत आह—केवलेत्यादि। शास्त्रं नास्तीत्युक्त्वा यथेच्छं कुर्वन् संचरमाणः शास्त्रे आस्तिक्योत्पत्तये उपदेशान् कृत्वा यथा विधिनिषेधवश्यः स्यात्तथा कर्तुं शक्यते। शास्त्रास्तिक्यवतः तत्प्रतिपाद्यप्रमेयांश्च ज्ञात्वा पापभयं विना नास्तिकवत् स्वैरं संचरमाणस्य तस्योक्त्वा ज्ञापनीयस्याभावादुपदेशमुखेन कदापि वशीकर्तुं न शक्यत इत्यर्थः। अनेनाज्ञो विषयप्रवणो विषयदोषाद्युपदेशमुखेन यथा विरक्तः स्यात्तथा वशीकर्तुं शक्यते, ज्ञानवान् विषयप्र-

---

वशीकर्तुं स शक्यः स्यात्केवलं नास्तिको हि यः।
कदापि न तथा शक्य आस्तिको नास्तिको हि यः ॥१९६॥

दृष्टांतभूत इन दोनों में क्या विशेष है? इस शंका में कहते हैं—केवल इत्यादि।

केवलनास्तिक को वशकर सक्के हैं, आस्तिक
नास्तिक को कदापि वश नहीं करसक्के हैं ॥ १९६ ॥

शास्त्र नहीं है समझ यथेष्ट संचार करनेवाले को शास्त्र में आस्तिक्य बुद्धि उत्पन्नहोनेके लिये उपदेशकर जैसा विधिनिषेधशास्त्र के वश्य हो वैसा करसक्के हैं। शास्त्र में आस्तिक्यबुद्धि से शास्त्रप्रतिपाद्य प्रमेयों को जानकर भी पापभयरहित हो नास्तिक के तरह यथेष्ट संचार करनेवाले को कह जनानेके योग्य किसीवचन के न होनेसे उपदेश द्वारा कदापि वश नहीं करसक्के हैं।

इस से अज्ञानी विषयप्रवण को विषय दोष आदि के उपदेशद्वारा जैसा विरक्त हो वैसा शोधन करसक्के हैं। ज्ञानवान् विषयप्रवण को विषयदोषादियों की स्पष्ट

इदं द्वयमपि स्वरूपेण नाशयतीत्येतावन्मात्रं विना भागवतविरोधं च वर्द्धयित्वा नाशयति ॥ १९७॥

---

वणो विषयदोषादिकं ज्ञात्वैव प्रवर्तमानत्वात्तदुपदेशेन कदापि वशीकर्तुं न शक्यत इत्युक्तम् ।

'अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रंजयति ॥'

इत्युक्तं किल । अतस्तस्मादप्ययं निकृष्टतम इति हृदयम् ।

'स्वस्य स्वेन' इति वाक्ये स्वरूपनाशकत्वेनोक्तानामहंकारस्य विषयाणां च क्रौर्यं पृथक् पृथगुक्तवान्, अथोभयोरपि विद्यमानं क्रौर्यविशेषं तंत्रेणाह--इदमित्यादिना ।

---

एतद् द्वयं स्वरूपेण नाशयतीति तद्विना ।
वर्धयित्वा विरोधं च महाभागवतैः सह ।
नाशयत्येव तस्मात्तद् द्वयं विद्वान् परित्यजेत् ॥ १९७॥

जानकर भी प्रवृत्त होनेसे उन दोषों के उपदेश द्वारा कदापि शोधन नहीं करसक्ते हैं ऐसा तात्पर्य होता है ।

'अज्ञानी को सुख से समझा सक्ते हैं, विशेषज्ञ को
अत्यंतसुख से समझा सक्ते हैं, लवलेश ज्ञान से
पंडितमानी मनुष्य को ब्रह्मा भी नहीं समझा सक्ते हैं ।'

ऐसा कहा है । इस लिये उस की अपेक्षा यह अत्यंत नीच है समझना ।

'अपने को आप ही' इस वाक्य में स्वरूपनाशकतया कहे हुए अहंकार और विषयों के क्रौर्य को अलग अलग पहिले कहे हैं, दोनों के क्रौर्यविशेष को एकवाक्य से कहते हैं---ये इत्यादि ।

ये दोनों अपने स्वरूप से नाश करते हैं इतना ही नहीं,
भागवतापचार को उत्पादन कर भी नाश करते हैं ॥ १९७॥

**नामरूपविशिष्टाः संतो भागवता-**
**पचारं कुर्वंतो दग्धपटवत् ॥१९८॥**

---

उक्तदोषयुक्ताहंकारविषयप्रावण्यरूपमेतद् द्वयमपि स्वासा-धारणाकारेण स्थित्वा नाशयतीत्येतावदेव न, भागवतापचार-रूपमहानर्थं च वर्धयित्वा स्वरूपनाशं करोतीत्यर्थः । स्वरूपे-णेति—स्वेन रूपेणेत्यर्थः । अहंकारादौ प्रवणश्चेद्यावान् भवति तावान् न भवति भागवतापचारे कृते विद्यमानो भगव-न्निग्रहः ।

तर्हि भागवतविरोधो यदा जायते तदैव स्वरूपनाशो जायते चेत् भागवतविरोधे कृतेपि स्वरूपानुरूपनामरूपवि-शिष्टाः कथं तिष्ठंतीत्यत आह—नामरूपेत्यादि ।

---

**नामरूपविशिष्टा ये वैष्णवस्यापचारकाः ।**
**ते वै दग्धपटाकारा विज्ञेयाः सूक्ष्मदर्शिभिः ॥१९८॥**

पूर्वोक्त दोषविशिष्ट ये अहंकार और विषयप्रावण्य दोनों अपने स्वरूप से नाश करते हैं इतना ही नहीं, भागवतापचाररूप महानर्थ को उत्पादन कर स्वरूप को नाश करते हैं समझना। अहंकारादियों में आसक्त होनेपर जितना दोष होता है उतना मात्र नहीं भागवतापचार से होनेवाला भगवान् का निग्रह—अर्थात् उस से अधिक समझना ।

इस प्रकार भागवतापचार होते ही स्वरूप नाश हो तो भागवतापचार करते हुए संचार करनेपर भी स्वरूपानुरूप नामरूपविशिष्ट हो कैसे रहते हैं ? इस शंका में कहते हैं—नामरूपविशिष्ट इत्यादि ।

नामरूपविशिष्ट हो भागवतविरोध
करनेवाले दग्धवस्त्र के तरह होते हैं ॥ १९८ ॥

**पिंडीकृतपटो दग्धोऽपि आतानविताने**
**समे तिष्ठतः, वायौ संचरत्युत्पतेत् ॥ १९९॥**

---

वैष्णवत्वचिह्नभूतदास्यनाम्ना तदनुगुणरूपेण च विशिष्टाः संतः अंतरार्द्रतां विनाऽहंकारादिवश्याः भागवतविषये विरोधं कृत्वा वर्तमानाः, स्वरूपनाशं दग्धत्वेपि आकारविशिष्ट इव भासमानेन दग्धपटेन सदृशा इत्यर्थः ।

दग्धपटस्य प्रकारं दर्शयति— पिंडीकृतेत्यादिना ।

सम्यक्पिंडीकृतपटः सर्वतो दग्धोपि आतानविताने पूर्ववत्तिष्ठतः । एकस्मिन् वायौ सम्यक् संचरति यथा स्वरूपमपि न दृश्येत तथा शिथिलो गच्छतीत्यर्थः । तथैवापचाराग्निदग्धा

---

पिंडीभूते पटे दग्धे आताने च वितानके ।
समेऽपि वायुसंचारे ह्युत्पतत्येव सर्वदा ॥१९९॥

वैष्णवत्व चिह्नभूत दास्यनाम और तदनुगुण रूप के रहते हुए भीतर किसी प्रकार के सुगुण से रहित अहंकारादि के वश हो भागवतविषय में विरोध करनेवाले संपूर्ण दग्ध होनेपर भी रूपविशिष्ट के तरह भान होनेवाले जला हुआ वस्त्र के सदृश होते हैं ।

जलाहुआ वस्त्र के प्रकार को दिखाते हैं—घडी कियाहुआ इत्यादि ।

घडी किया हुआ वस्त्र दग्ध होतो आतानवितान
पहिलेके तरह रह वायु बहने पर उड जाता है ॥ १९९ ॥

घडीकिया हुआ वस्त्र सर्वत्र दग्ध होनेपर भी आतानवितान पहिलेके तरह समान रहेगा, परंतु एक हवा जोरसे बहनेपर रूप भी जैसा नहीं रहे तैसा उड जायगा । इसी तरह अपचाररूप अग्नि से दग्ध होनेपर भी नामरूपों से रहनेवाले

'ईश्वरोऽवतीर्याऽकरोदतिमानुषचेष्टितानि
भागवतापचारासहिष्णुत्वाद्' इति यतिर्वदेत् ॥२००॥

---

नामरूपाभ्यां युक्ता भगवन्निग्रहविशेषेण सम्यक् ताडिताः स्वरूपभ्रष्टा भवंतीति हृदयम् ।

भागवतापचारे कृते ईश्वरोऽसहमान उचितदंडं करोतीत्यमुमर्थमाप्तवचनेनाह— ईश्वर इत्यादिना ।

'संकल्पमात्रेण सर्वमपि निर्वोढुं शक्तेन सर्वशक्तिना सर्वेश्वरेण स्वस्वरूपं विहायेतरसजातीयोऽवतीर्य कायिकव्यापारयुक्तेन कृतानि हिरण्यरावणादिनिरसनरूपातिमानुषचेष्टितानि सर्वाणि, प्रह्लादमहर्षिप्रभृतिषु तत्तद्भागवतेषु तैस्तैः कृतापचारस्यासहिष्णुत्वाद्' इत्याप्ततमो यतिर्वदेदित्यर्थः ।

---

अवतीर्याकरोदीशो दिव्यचेष्टाश्च या हि वै ।
विष्णुभक्तापचारस्यासहिष्णुत्वादिति स्मृतिः ॥२००॥

भगवन्निग्रहविशेष से अत्यंत पीडित हो भस्म हो जाते हैं ऐसा तात्पर्य जानना ।

भागवतापचार करनेपर ईश्वर न सह उचित दंड देते हैं इस अर्थ को आप्तवचन से कहते हैं—ईश्वर के इत्यादि ।

'ईश्वर के अवतार लेकर किये हुए अतिमानुष चेष्टित
सभी भागवतापचार को न सहनेसे' ऐसा वेदांती कहे हैं ॥२००॥

संकल्पमात्र से सब को निर्वाह करनेवाले सर्वशक्ति सर्वेश्वर के अपने स्वरूप को बिगाड इतर सजातीय हो अवतार कर हाथ से स्पर्श कर किये हुए हिरण्यरावणादि निरसनरूप आदि अतिमानुषचेष्टित सभी प्रह्लाद, महर्षि प्रभृति उन उन भागवतविषयों में उन उन के कर्तृक अपचार को न सहनेसे, ऐसा आप्ततम वेदांती कहे हैं ।

'अवमानक्रिया' ॥ २०१ ॥
भागवतापचारोऽनेकविधः ॥ २०२ ॥

---

एतद्भागवतापचारस्य क्रौर्ये भगवदुक्तिं दर्शयति— अव-मानेत्यादिना ।

'या प्रीतिर्मयि संवृत्ता मद्भक्तेषु सदास्तु ते ।
अवमानक्रिया तेषां संहरत्यखिलं जगत् ॥'

इत्युक्तम् ।

एतादृशभागवतापचारस्य वैविध्यमाह— भागवतापचार इत्यादिना ।

अनेकविध इति— जन्मनिरूपणं, ज्ञाननिरूपणं, वृत्तनि-रूपणं, आकारनिरूपणं, बंधुनिरूपणं, वासनिरूपणमित्यादि-भिरनेकप्रकरो भवतीत्यर्थः ।

---

अवमानक्रियेत्यादि प्रमाणं तत्र कीर्तितम् ॥२०१॥
विष्णुभक्तापचारश्चानेकधा परिकीर्तितः ॥२०२॥

इस भागवतापचार का क्रौर्य में भगवद्वचन को दिखाते हैं—'अवमान क्रिया' इति ।

'अवमान क्रिया' ॥ २०१ ॥

'तुम को जो प्रीति मुझ में है मेरे भक्तों में भी वही प्रीति हो; उन के अपमान करनेसे अखिलजगत का संहार होता है ॥'
ऐसा स्वयं भगवान्ने ही कहा है ।

इस प्रकार के भागवतापचार अनेक विध हैं ऐसा कहते हैं—भागवतापचार इत्यादि से ।

भागवतापचार अनेक विध हैं ॥ २०२ ॥

अनेकविध हैं—जन्मनिरूपण, ज्ञाननिरूपण, वृत्तनिरूपण, आकारनिरूपण बंधुनिरूपण, वासनिरूपण इत्यादि बहु प्रकारके हैं ।

तत्रैकं तेषु जन्मनिरूपणम् ॥ २०३ ॥
इदं चार्चावतारे उपादानस्मृतेरपि क्रूरम् ॥ २०४ ॥

---

तेषां मध्ये जन्मनिरूपणस्य क्रौर्यं वक्तुं तदुपादत्ते—तत्रेत्यादिना ।

जन्मनिरूपणं नाम— निकृष्टकुलेष्ववतीर्णानां भागवतानां भगवदीयत्वप्रयुक्तमाहात्म्यमदृष्ट्वा निकर्षबुध्या तज्जन्मनिरूपणम् ।

एतत्क्रौर्यमाह— इदं चेत्यादिना ।

इदं चेति— भागवतजन्मनिरूपणं [illegible]श्यते । अर्चावतारे उपादानस्मृतिर्नाम— आश्रिताभिमतं यत्किंचिद् द्रव्यं स्वस्य विग्रहत्वेनांगीकृत्य तत्राप्राकृतदिव्यविग्रहे क्रियमाणमादरं कृत्वा स्थितिरूपवैभवमज्ञात्वा निकर्षबुद्धिं कृत्वा विग्रहोपादा-

---

तत्रैकं जन्मनां तेषां निरूपणमुदाहृतम् ॥ २०३ ॥
अर्चामूर्तेरुपादानस्मृतेः क्रूरं बुधा जगुः ॥ २०४ ॥

उन में जन्मनिरूपण का क्रौर्य को कहनेके लिये उस को उपादान करते हैं—उन में इत्यादि ।

उन में एक— उनके विषय में जन्मनिरूपण ॥ २०३ ॥

जन्मनिरूपण माने—निकृष्टकुलों में अवतीर्ण भागवतों के भगवत्संबंधप्रयुक्त माहात्म्य को नहीं देख नीचता बुद्धि से उन उन जन्मोंको निरूपण करना । इस का क्रौर्य को कहते हैं—यह इत्यादि ।

यह अर्चावतार में उपादानस्मृति की अपेक्षा क्रूर है ॥ २०४ ॥

अर्चावतार में उपादानस्मृति माने—आश्रित के अभिमत किसी एक द्रव्य को अपने दिव्यविग्रहतया स्वीकार कर उस में अप्राकृत दिव्यविग्रह में क्रियमाण आदर करते हुए विराजनेके वैभव को न जान निकृष्टतया मान 'विग्रह के उपादान

तन्मातृयोनिपरीक्षया सममिति शास्त्रं वदति ॥२०५॥

---

नद्रव्यमेतत्खल्विति चिंतनम् । ततोप्यस्य क्रूरत्वं नाम— एतदपेक्षया सर्वेश्वरस्यात्यंतनिग्रहहेतुत्वम् ।

तस्य क्रौर्यं च कियदित्यत आह— तदित्यादिना ।

'अर्चावतारोपादानं वैष्णवोत्पत्तिचिंतनम् ।
मातृयोनिपरीक्षायास्तुल्यमाहुर्मनीषिणः ॥'

इत्युक्तम् । एवमुभयमपि मातृयोनिपरीक्षायाः सममिति शास्त्रेणोक्तावपि तदर्चावतारे उपादानस्मृतेर्निदर्शनं भवति, वैष्णवोत्पत्तिचिंतनं ततोऽपि क्रूरमित्यस्य हृदयम् । मातृयोनिपरीक्षा नाम— अन्यस्त्रीयोनिवैलक्षण्यावैलक्षण्यवासनयाऽस्यापि तथा निरूपणम् । तत्तुल्यमिति— एवं निरूपणे कृते

---

महाभागवतानां यदिदं जन्मनिरूपणम् ।
मातृयोनिपरीक्षायाः सममाहुर्मनीषिणः ॥ २०५ ॥

द्रव्य अमुक है' ऐसा विचारना । उस की अपेक्षा क्रुर माने—वैसा विचारनेपर कितना सर्वेश्वर निग्रह करते हैं उस की अपेक्षा भागवतों के जन्मनिरूपण करनेपर अत्यधिक निग्रह करते हैं ।

उस का क्रौर्य कितना है इस प्रश्न में उत्तर देते हैं—उस को इत्यादि ।

उस को मातृयोनिपरीक्षा के तरह शास्त्र कहता है ॥ २०५ ॥

'अर्चावतार के उपादान द्रव्य और वैष्णवोत्पत्ति चिंतन इन दोनों को मातृयोनिपरीक्षा के तरह विद्वान् लोग कहते हैं ।' ऐसा कहा है ।

इस प्रकार दोनों को मातृयोनिपरीक्षा सदृशतया शास्त्र के कहनेपर भी वह अर्चावतार में उपादानद्रव्य चिंतन के लिये दृष्टांत होता है इतना ही, वैष्णवोत्पत्ति चिंतन उस की अपेक्षा क्रूर है ऐसा लोकाचार्य का अभिप्राय है । मातृयोनिपरीक्षा माने—अन्य स्त्री योनि वैलक्षण्य अवैलक्षण्य के निरूपणकरनेके वासना से इस को भी वैसा निरूपण करना । उस के तरह माने—ऐसा मातृयोनि को निरूपण कर-

त्रिशंकुवत्कर्मचंडालो भवेत्— वक्षसि
यज्ञोपवीतमेव चर्मरज्जुर्भवेत् ॥ २०६ ॥

---

तस्य यावत्पापं स्यात्, अर्चावतारविग्रहोपादानचिंतने च तावत्पापं स्यादित्यर्थः ।

तदपचारस्य फलं दग्धपटवन्नष्टकल्पतया स्थित्वा देहावसाने स्वरूपनाशनं भवत्येतावदेव न, एतदपचारकरणसमय एव कर्मचंडालो भवेदित्याह— त्रिशंकुवदित्यादिना ।

इक्ष्वाकुवंश्यः त्रिशंकूराजा कुलगुरुं वाशिष्ठमहर्षिं 'सशरीरस्वर्गावाप्त्यर्थं मां याजय' इत्यपेक्षत, महर्षिश्च 'ममाशक्यं' इत्यवदत्, तत्स्थानात्तत्पुत्रतपोनुष्ठानस्थले गत्वा एतद्वृत्तांतमुक्त्वा तानत्यंतमनुवर्त्य 'यूयं मामेवं याजयत' इतिनिरब-

---

भवेत्त्रिशंकुवत्कर्मचाण्डालो हृदि यागजम् ।
सूत्रमेव भवेच्चर्मरज्जुवद्ध्यपराधतः ॥ २०६ ॥

नेसे कितना दोष होता है उतना दोष अर्चावतारोपादानद्रव्य के चिंतन में होता है ऐसा तात्पर्य जानना ।

इस अपचार का फल दग्धवस्त्र के सदृश नष्ट प्राय हो देहावसान काल में रूपरहित भस्म होना मात्र नहीं किंतु इस अपचार के करते ही कर्मचंडाल हो जाता है ऐसा कहते हैं—त्रिशंकु के तरह इत्यादि ।

त्रिशंकु के तरह छाती में का यज्ञोपवीत ही चर्मरज्जु हो जाता है ॥२०६॥

इक्ष्वाकुवंश्य त्रिशंकु नामक राजा के अपने कुलगुरु वसिष्ठ महर्षि से 'शरीर के साथ स्वर्गप्राप्ति के लिये मुझ से याग कराओ ऐसा प्रार्थना करनेपर उन के मैं नहीं करसक्ताहूं' ऐसा इनकारनेपर, वहां से तपस्या करनेवाले उन के पुत्रों के पास जा इस वृत्तांत को कह उन के अत्यंत अनुवर्तन कर 'आप मुझ से

ध्रात्, 'त्वं दुर्बुद्धिर्महर्षिणाऽशक्यमित्युक्तमस्माभिः कथं कर्तुं शक्यं' इत्यवोचन् ।

'तेषां तद्वचनं श्रुत्वा क्रोधपर्याकुलाक्षरम् ।
स राजा पुनरेवैतानिदं वचनमब्रवीत् ॥
प्रत्याख्यातो भगवता गुरुपुत्रैस्तथैव च ।
अन्यां गतिं गमिष्यामि स्वस्ति वोऽस्तु तपोधनाः! ॥'

इति क्रुद्धे तस्मिन् गुरुस्तत्पुत्रा यूयं च न कुर्म इति वदेयुश्चेत् अहमन्यत्र गमिष्यामि यूयं सुखं तिष्ठत इति वदति,—

'ऋषिपुत्रास्तु तच्छ्रुत्वा वाक्यं घोराभिसंहितम् ।
शेपुः परमसंक्रुद्धाश्चंडालत्वं गमिष्यसि ॥'

आचार्यं तत्पुत्रान् स्वांश्चानेनावमतिं कृत्वोक्तां वार्तां श्रुत्वा तेऽत्यंतं क्रुद्धा शेपुः ।

---

इस प्रकार के याग कराओ' ऐसा निबंध करनेपर 'तुम दुर्बुद्धि हो, महर्षि जिस में असमर्थ हैं वह हम से कैसे बनेगा' ऐसा उन के कहने पर—

'उन के कोपव्याकुल वचन को सुन वह राजा फिर भी इस बात को कहा—— भगवान् वसिष्ठ इनकार किये तथा उन के पुत्र आपलोग, भी इनकार करते हो तो मैं औरकिसी के शरण में जाऊंगा, आप को मंगल होय ।

ऐसा वह क्रुद्ध हो 'गुरु वसिष्ठ और उन के पुत्र आपलोग भी इनकार करते हैं तो मैं किसी अन्य के शरण लूंगा, आपलोग सुखी हों' ऐसा कहा है। तब-

'ऋषि के पुत्र उसवचन को सुन अत्यंत क्रुद्ध हो घोररूप
से तुम चंडाल हो जाओ ऐसा शाप दिये हैं ।' ऐसा

स्वाचार्य वसिष्ठ उन के पुत्र आप इन दोनों को अपमानित कर कहा हुआ वचन को सुन वे अत्यंत क्रुद्ध हो 'तुम चंडाल हो जाओ' ऐसा शाप देनेपर—

अथ रात्र्यां व्यतीतायां राजा चंडालतां गतः ।
'नीलवस्त्रधरो नीलः परुषोध्वस्तमूर्धजः ।
चित्रमल्यांगरागश्च आयसाभरणोऽभवत् ॥'

इत्युक्तप्रकारेणानंतरं कर्मचांडालोऽभवत् । तथैव भागवतापचारकरणसमय एव ब्रह्मवर्चस्त्वोपयुक्ततया वक्षसि धृतं यज्ञोपवीतं चंडालवेषानुरूपं चर्मरज्जुर्भवेदित्यर्थः । तत्र शापसिद्धत्वात्प्रत्यक्षं जातं, अत्र शास्त्रसिद्धत्वाज्ज्ञानदृष्टिविषयं वर्तते ।

'अनाचारान् दुराचारानज्ञातॄन् हीनजन्मनः ।
मद्भक्तान् श्रोत्रियो निंदन् सद्यश्चंडालतां व्रजेत् ॥'

इत्युक्तं हि ।

चंडालवदयमपि कदाचित् पुरुषार्थयोग्यो भवेदिति चिंताया

---

'अनन्तर रात्रि के बीतनेपर चंडालता को प्राप्त हुआ राजा काला वस्त्र कालारूप, बिखरा हुआ केश, चित्रमाला और चंदन, लोहें के आभरण इन से युक्त हुआ ।

इस वचनानुसार वह कर्मचंडाल हुआ है । वैसा ही भागवतापचार करते ही कर्मचंडाल हो ब्रह्मवर्चस्त्व के लिये छाती में धारण कियाहुआ यज्ञोपवीत ही चंडालवेष के अनुगुण चर्मरज्जु हो जाता है । त्रिशंकुविषय में शापसिद्ध होने से प्रत्यक्ष गोचर हुआ है । भागवतापचारविषय में शास्त्रसिद्ध होनेसे ज्ञानदृष्टि के गोचर होता है ।

'अनाचार या दुराचार, अज्ञानी या ज्ञानहीनजन्म ऐसे मेरे भक्तों को वेदवेदांत पारंगत भी निंदा करेगा तो उसी क्षण चंडाल होगा' ऐसा कहा है ।

चंडाल के तरह यह भी किसी न किसी काल में उज्जीवित होगा ऐसा चिंतन

जातिचांडालस्य कालांतरे भाग-
वतो भवितुं योग्यतास्ति, सापि
नास्त्यस्य--आरूढपतितत्वात् ॥ २०७॥

---

अपि यथावकाशो नास्ति तथा जातिचंडालात् कर्मचंडालस्य विद्यमानां हेयतामाह-- जातिचंडालस्येत्यादिना ।

जातिचंडालस्य तज्जन्मनि वा जन्मांतरे वा भगवत्कटाक्षे सति कस्मिंश्चित्कालविशेषे नामरूपविशिष्टो भगवत्संबंधनिरूपितो भवितुं योग्यतास्ति, तादृशयोग्यता च नास्ति भागवतापचाररूपकर्मचंडालस्यास्य पापिष्ठस्य ।

तद्धेतुर्भागवतत्वरूपोच्चस्थान आरुह्य--

---

जातिप्रयुक्तचाण्डालो महाभागवतो भवेत् ।
कालान्तरे न चायं स्यादारूढपतितत्वतः ॥२०७॥

करनेको भी जैसा अवकाश न हो तैसा जातिचंडाल की अपेक्षा कर्मचंडाल की नीचता को कहते हैं--जातिचंडाल को इत्यादि ।

जातिचंडाल को कालांतर में भागवत होने की योग्यता
होती है, वह भी नहीं है इस को ऊपर चढ गिरनेसे ॥२०७॥

जाति से चंडाल हुए को उस जन्म या जन्मांतर में भगवत्कटाक्षविशिष्ट किसी काल में नामरूपविशिष्ट हो भगवत्संबंध से कहेजानेकी योग्यता होती है, वह योग्यता भी नहीं है भागवतापचाररूप कर्म से चंडाल हुए इस पापिष्ठ को ।

उस का कारण कहते हैं--ऊपर चढ इत्यादि ।

भागवतत्वरूप ऊंचे शिखर पर चढ 'सैकडोंपद्मकोटिवर्षो के बीतनेपर भी

अस्याधिकारिनियमो नास्ति ॥ २०८ ॥
'तदीयश्रेष्ठाः जातिब्राह्मणा अपि' इत्युक्तत्वात् ॥२०९॥

---

'पद्मकोटिशतेनापि न क्षमामि' इति प्रकारेणातिक्रूरभगवन्निग्रहस्य हेतुभूतभागवतापचारेणात्यंतं ताडितो भूत्वाऽधःपतितत्वादित्यर्थः ।

अयं च जन्मादिना ज्ञानादिना चापकृष्टैरुत्कृष्टविषये कृत एव वा, तैरुत्कृष्टैरपकृष्टविषये कृतोऽपि तुल्यो वेत्यत आह– अस्येत्यादिना ।

भागवतापचारस्य तादृशी काचनाधिकारिनियतिर्नास्तीत्यर्थः ।

अस्य प्रमाणमस्ति किमित्यत आह तदीयेत्यादि ।

---

नैवाधिकारिनियमो विद्यतेऽस्य महामते ! ॥ २०८ ॥
'तदीयेषु वरा जाता ब्राह्मणा अपि' वाक्यतः ॥ २०९ ॥

क्षमा नहीं करूंगा' इस वचनानुसार अतिक्रूर भगवन्निग्रह के हेतुभूत भागवतापचार से अत्यंत पीडित हो अधः पतित होनेसे ।

यह—जन्मादि और ज्ञानादियों से अपकृष्ट उत्कृष्टविषय में करनेसे ही होता है, जन्मादियों से उत्कृष्ट अपकृष्टविषय में करनेसे नहीं होता है ऐसा नियम है क्या ? इस शंका में कहते हैं—इस को इत्यादि ।

इस को अधिकारिनियम नहीं है ॥ २०८ ॥

भागवतापचार को तादृश अधिकारि नियम नहीं है ।

इस में प्रमाण है क्या इस शंका में कहते हैं—भागवतों में इत्यादि ।

'भागवतों में अग्रगण्य हो जाति से ब्राह्मण हो तो भी' ऐसा कहनेसे ॥ २०९ ॥

अत्र वैनतेयवृत्तांतः, पिळ्ळैपिळ्ळैयाळ्वानित्य-
स्य कूरेशोक्ता वार्ता च स्मर्तव्या ॥ २१० ॥

---

सांगं सकलवेदानधीतवंतस्तदीयश्रेष्ठा उत्कृष्टजन्मानो भवंति चेदपि भगवच्चरणयोः संबंधैकनिरूपकान् श्रीवैष्णवान् जन्मादिना निंदंति चेत्— कालांतरे देशांतरे विना तदानीमेव तत्रैव चंडाला अपीषत्सदृशा इति वक्तुं योग्यास्तेभ्योप्यत्यंत-नीचा भवंतीति तत्त्वयाथात्म्यदर्शिभिर्भक्तांघ्रिरेणुभिरुक्तत्वादि-त्यर्थः ।

एतदर्थविषयौ द्वावितिहासौ स्मारयति अत्रेत्यादिना ।

वैनतेयवृत्तांतः— विश्वामित्रसमीपे सर्वा विद्या अधीत्य

---

विनतासुतवृत्तांतः पिळ्ळैआचार्यकं प्रति ।
कूरेशोक्ता तु वार्ता च स्मरणीया मनीषिभिः ॥ २१० ॥

'अंगसहित संपूर्ण वेदों को अध्ययन कर भागवत श्रेष्ठ और उत्कृष्टजन्मवाले हो तो भी आप के चरणों से संबंध के ही निरूपणकरनेयोग्य श्रीवैष्णवों को जन्मादियों को लेकर निंदा करेंगे तो कालांतर और देशांतर में विना उसी क्षण और उसी देश में वे जातिचंडाल भी इन के एक अंश का समान हो जैसा उन से भी अत्यंत नीच होते हैं—ऐसा तत्वयाथात्म्य को जाननेवाले श्रीभक्तांघ्रिरेणुस्वामी कहे हैं ।

इस अर्थ के विषय में दो ऐतिह्य को स्मरण कराते हैं—इस स्थल में इत्यादि ।

इस स्थल में वैनतेयवृत्तांत, और पिळ्ळैपिळ्ळैसूरी से
कूरेशस्वामी की कही हुई वार्ता को भी स्मरण करना ॥ २१० ॥

वैनतेयवृत्तांत माने—विश्वामित्र के पास संपूर्ण विद्याध्ययन करचुके गाल-

गालव इति ब्राह्मणः 'गुरुदक्षिणामदत्वा ममेमा विद्या न स्थिरी-भवंति' इति विचार्य 'मया भवते दक्षिणात्वेन किं देयं' इत्यपृच्छत्, 'त्वया मह्यं किमपि न देयमहं तव शुश्रूषया भक्त्या चात्यंतं प्रीतोऽभवं, अथ तवेष्टस्थले गत्वा वस' इति बहुवारं तेनोक्तोऽपि स एवमकृत्वा 'सर्वथा मत्तो दक्षिणां गृहाण' इत्यतिनिर्बंधमकरोत्, तस्मात्—

'किंचिदागतसंरंभो विश्वामित्रोऽब्रवीदिदम् ।
एकतः श्यामकर्णानां शतान्यष्टौ तु देहि मे ।
हयानां चंद्रशुभ्राणां गच्छ गालव माचिरम् ॥'

इति संकुपितोऽमुं दृष्ट्वा 'सर्वशरीरेषु चंद्रमंडलवच्छ्वेतान् एकस्मिन् कर्णे हरितान् अष्टौ शतानि अश्वानानीय ददस्व' इत्यवदत्, तच्छ्रुत्वा व्याकुले तस्मिन् 'अथ किं कुर्यां' इति

---

वनामक ब्राह्मण गुरुदक्षिणा दिये विना हम को ये विद्या फलित न होयँगे ऐसा विचार 'हम से आप को देनेयोग्य दक्षिणा को बताईये' ऐसा पूंछनेपर 'तुम हम को कुछ भी मत दो, हम तुमारे शुश्रूषा और भक्ति से ही अत्यंत प्रसन्न हुए हैं, अब तुमारी इच्छा के अनुसार जाओ' ऐसा बहुत आज्ञा करने पर भी यह नहीं सुन 'सर्वप्रकार से मेरे हाथ से दक्षिणा को स्वीकार करना चाहिये' ऐसा निर्बंध करने पर—

'विश्वामित्रमहर्षि कुपित हो चंद्र के तरह सुफेद,
और एक कान श्यामवर्णवाले आठ सौ घोडों को
लाकर हमको दो, हे गालव जाओ और शीघ्र लाओ ।'

ऐसा वह विश्वामित्र कुपित हो गालव को देख 'सब शरीर चंद्रमंडल के तरह सुफेद हो एक कान श्याम हो रहनेवाले आठ सौ घोडों को ला हम को दो ऐसा कहनेपर सुन अत्यंत व्याकुल हो इस के लिये कर्तव्य क्या ? ऐसा बहुप्रकार

वहुमुखं विचार्य 'सर्वापेक्षितप्रदं सर्वेश्वरमुपासे'इत्युद्योगयति पूर्वमेवास्य सख्यौ वैनतेये आगत्य अस्याग्रतास्तिष्ठति सति तं स्तुत्वा 'अस्य किं कर्तव्यं'इत्यपृच्छत् , तस्मिन् 'त्वामादाय सर्वभूमौ संचरामि, उभावपि मार्गयाव'इत्युक्त्वैनमादाय संचरति सति, परिश्रमे सति 'अत्र विश्रम्य गच्छाव'इति पश्चिमसमुद्रे ऋषभनामकपर्वतोपरि वसंतीं ज्ञानाधिकां शांडिल्यां भागवतां दृष्ट्वा अभिवादनादिकं कृत्वा तस्यामत्यादरेण सत्कुर्वत्यामनंतरं विश्रांतावशयातां; तदानीं 'एवं विलक्षणाया अस्या विलक्षणदेशे वासो न लब्ध'इति वैनतेयो विचार्य 'इमामस्माद् देशात्कस्मिंश्चिद् दिव्यदेशे नीत्वा स्थापयामि' इति विचारयन्नतिष्ठत् , तदानीं तादृशभागवतवासदेशस्य न्यूनत्वचिंतनरूपापचारेण पक्षयोर्भग्नयोर्निश्चेष्टोऽभवत् । एतेन सह गतो ब्राह्मणः—

विचार सर्वापेक्षितप्रद सर्वेश्वरकी उपासना करनेके उद्योग करनेपर, पहिले इन के सखा गरुडजीने आ सामने खडाहुआ, उन को स्तुति कर 'इस कार्य के लिये कर्तव्य क्या है' ऐसा पूछनेपर वह 'तुम को मैं इस भूलोक में सर्वत्र ले जाऊंगा हम दोनों मिल ढूंढेगे आओ' ऐसा कह इन को लेकर संचार करते हुए थकजाने पर 'यहां विश्रामकर जायंगे' ऐसा पश्चिमसमुद्र में ऋषभनामक पर्वत के ऊपर वास करनेवाली ज्ञानाधिका शांडिल्यानामक भागवता के पास पहुंच दर्शन और नमस्कार करनेपर वह अत्यादरपूर्वक अत्यंत सत्कार करती भई। अनंतर विश्रमित हो सोनेके समय 'इस प्रकार यह विलक्षण भागवता किसी एक दिव्यदेशों में वास करनेके भाग्यवती नहीं हुई' ऐसा श्रीगरुडजी विचार 'इन को यहांसे हम ले जा एक दिव्यदेशों में स्थापन करेंगे' ऐसा चिंतन करते भए। उस भागवता के वासस्थल को हीन माननेके अपचार से पाँखें गिरनेपर निश्चेष्टित हो गिरगये। इस को संग जानेवाले गालव महर्षि कृत—

'किंनु ते मनसा ध्यातमशुभं पततां वर
नह्ययं भवतः स्वल्पो व्यभिचारो भविष्यति ॥'

इति 'यत्किंचिद्भवतो मनसा अशुभं विचारितं किं, भवतोऽल्पस्यापि व्यभिचारस्याऽऽगमनयोग्यतापि नास्ति इत्यवदत्, 'ननु व्यभिचारो जात' इति स्वस्य तद्भागवतविषये चिंताप्रकारं तस्योक्त्वा 'अयं क्षंतव्य' इति तामनुवर्त्य तदनुग्रहेणैतदपचारे नष्टे पूर्ववद्भवादिति । अयं च कृष्णस्य दौत्येन गमनसमये नारदादिमहर्षिषु बहुषु तिष्ठत्सु कृष्णहृदयाभिप्रायमनुसर्तुं धृतराष्ट्रं प्राति अनेककथाकथनप्रकरणे श्रीनारदेन भगवतानुगृहीत इत्युद्योगपर्वण्युक्तत्वाद्वेदोपबृंहणासिद्धः खलु ।

पिळ्ळैपिळ्ळैयाल्वानित्यस्य कूरेशोक्तावार्ता– तस्यांगीकारकाले अस्याभिजात्यादिनोत्कृष्टत्वाद्भागवतविषयेष्वविनयं वर्तनप्रकारं

---

'हे पक्षिराज ! आप अपने मन में कौनसी पाप को
चिंतन किये हो, यह तो आपके स्वल्पपाप का फल नहीं है ।'

अर्थात् किसी पाप को आप मन में लाये हो क्या, आप को स्वल्पपाप भी लग नहीं सक्ता है ऐसा पूंछनेपर 'पाप हुआ है' ऐसा उस भागवतके विषय में अपना चिंतनप्रकार को सुनाये, पश्चात् 'इस अपराध को क्षमा कीजिये' ऐसा उन के चरण में गिर अनुवर्तनकरनेसे उन के अनुग्रह से उस अपचार के दूरहोने पर पहिलेके तरह सुस्वस्थ हुए हैं । यह वृत्तांत श्रीकृष्ण के दूत हो जानेके समय नारदजी के महर्षिलोगों की संनिधि में श्रीकृष्ण के अभिप्राय को अनुवर्तन करनेके लिये धृतराष्ट्र से अनेककथाओं के कहनेके प्रकरण में कहा हुआ ऐसा उद्योगपर्व में उक्त होनेसे वेदांतों के उपबृंहण (भारत) से सिद्ध हुआ जानना ।

पिळ्ळैपिळ्ळैसूरी से कूरेशस्वामी की कही हुई वार्ता माने—पिळ्ळैपिळ्ळैसूरी के अंगीकारानंतर इन के आभिजात्यादियों से उत्कृष्ट होनेसे भागवतविषयों में अवि-

दृष्ट्वा 'अस्यायं भागवतापचारो ज्ञानानुष्ठानादिकमधः कृत्वा स्वयमुपरि स्थित्वा विनाशपर्यंतं कुर्यादस्य वृतिः कल्पनीय इति विचार्यैकस्मिन्नयनादिने स्नात्वा कूलारोहणसमये अमुं दृष्ट्वा 'सर्वैरपि दानकरणसमये त्वमपि मह्यमेकं दानं न करोषि किं ?' इति पृच्छति 'दासः किं ददामि सर्वं भवदीयं खलु वर्तते' इति सोऽवदत् । अर्थस्थितिः खल्वेतादृशी तावन्नालं करणत्रयेणापि भागवतापचारमकृत्वा वर्तयमिति मद्धस्त उदकं दातव्यं' इत्यवदत् , तथैवायमप्युदकमदात् । अनंतरं कस्यचिद्भागवतस्य दोषं पूर्ववासनया स्मृत्वा 'अहं नष्ट' इति भयेन कपाटं मुद्रित्वा स्वगृहे अशेत, अस्य पूर्वमागमनकाले आगमनादर्शनात् कूरेशोऽस्य गृहं गत्वा 'किमर्थं शोचसि' इति पृच्छति, स्वयं मनसा चिंतितं विज्ञाप्य 'करणत्रयेणाप्यपचारो

---

नीत (धृष्ट) हो बर्तनकरनेके प्रकार को देख 'इन के यह भागवतापचार ज्ञानानुष्ठानादि सकलगुणों को दबाकर आप ही प्रबल हो विनाश पर्यंत कर देगा, उस को घेरा करना चाहिये' ऐसा कूरेशस्वामी विचार एक अयनरूप पुण्यकाल में स्नान कर किनारे में आते ही इन को देख सब लोगों के दान करनेके इस पुण्यकाल में आप भी हम को एक दान दीजिये' ऐसा पूंछनेपर 'दास किस को दान दें सब आप ही का है' ऐसा कहते भये। तब 'यह तो ठीक है उतनेमात्र से तृप्त नहीं हूं त्रिकरण से भी भागवतापचार नहीं करेंगे 'ऐसा हमारे हाथ में जल छोडो' ऐसा कहनेपर उसी प्रकार उन के हाथ में जल छोडते भये । अनंतर किसी एक भागवत के दोष को पूर्ववासना से स्मरण कर 'हम नष्ट हुए हैं ऐसा भीत हो कपाट बंदकर अपने घरमें पडे रहे। इन के प्रतिदिन आनेके समय व्यतीत होने पर श्रीकूरेशस्वामी इन के घर जा 'क्यों जी क्या विचारते हो' ऐसा पूंछनेपर अपनी मन की बात को विज्ञापन कर 'तीनों करणों से यथा अपचार न हो तथा

यथा न भवेत् तथाऽनेन देहेन वर्तनं दुर्लभं किं कुर्यां' इति चरणौ संगृह्याधः पतित्वा क्लेशमकरोत् , 'एतावाननुतापोऽस्य संजात' इत्यत्यंतं प्रीतेन तेन 'मनसा चिंतितस्यानुतापे सतीश्वरः क्षमेत प्रत्यक्षदण्डभयेन कायिकेन कोऽपि न बाधनीयः अत एतदुभयमपि तुभ्यमदां, अथ वाचमेकामपि सम्यक् पश्यन् सन् वर्तस्व' इत्युक्तवार्ता ।

भगवल्लाभहेतुभ्यां ज्ञानानुष्ठानाभ्यामुभाभ्यामपि पूर्णस्य कस्यचिद्भागवतापचारे जातेऽपि भगवांस्तस्य लघुभूतमेकं दंडं कृत्वा न प्रापयेत्किं ? अनयोरुभयोरसत्समतया अपचारस्यैव प्रबलतया भगवतोऽप्राप्तिरेव स्यादिति कथमुच्यते ? इत्यत आह— ज्ञानानुष्ठानाभ्यामित्यादि ।

---

इस शरीर के साथ रहना दुष्कर है क्या कियाजाय ?' ऐसा श्रीचरणों को लपेट भूमि में गिर क्लेशित होनेपर 'इतना अनुताप इन को हुआ है यह हमारा भाग्य ही है' ऐसा संतुष्ट हो 'मन से कृत दोष को अनुताप होते ही ईश्वर क्षमा करेंगे, प्रत्यक्ष दंड भय से काया से किसी को हिंसा नहीं कर सक्ते इस लिये वे दोनों तुम को लौटा देता हूं, केवल वागिंद्रियमात्र को अच्छीतरह से रोक कर वर्तन करो गे' ऐसा कही हूई वार्ता को स्मरणकरना ।

भगवान के लाभ हेतु ज्ञान अनुष्ठान ये दोनों परिपूर्ण हैं जिस में उस में भागवतापचार के होनेपर भी भगवान् उस के लिये अल्पदंड दे अपने साथ नहीं मिला लेगा क्या ? ये ज्ञानानुष्ठान दोनों असत्के तरह हो अपचार ही प्रबल हो भगवान को प्राप्त नहीं होगा ऐसा कैसे कह सक्ते है ? इस शंका में कहते हैं— ज्ञानानुष्ठान इत्यादि ।

**ज्ञानानुष्ठानाभ्यां, रहितत्वेपि फलस्य**
**यथा तत्संबंध एवालं, तथा तयोः**
**सत्त्वेप्यप्राप्तेस्तेष्वपचार एवालम् ॥ २११ ॥**

---

'उभाभ्यामेव पक्षाभ्यामाकाशे पक्षिणां गतिः ।
तथैव ज्ञानकर्मभ्यां प्राप्यते भगवान् हरिः ॥'

इति 'वीज्यमानपक्षाभ्यामुड्डीयमानानां युष्माकं परमपदं सुलभं' इति चोक्तप्रकारेण भगवल्लाभहेतुभूततत्त्वज्ञानतदनुरूपानुष्ठानाभ्यां रहितत्वेपि भगवल्लाभस्य—

'पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः ।
तेनैव ते प्रयास्यंति तद्विष्णोः परमं पदम् ॥' इति ।

---

ज्ञानानुष्ठानराहित्ये तत्सम्बन्धः फलप्रदः ।
यथा तथा तयोः सत्वेऽपचारः प्राप्तिबाधकः ॥ २११ ॥

ज्ञानानुष्ठान विना भी फल के लिये जैसा उनके
साथ संबंध ही बस है वह होनेपर भी हानि के
लिये उन के विषय में अपचार ही बस है ॥ २११ ॥

'दोनों पांखों से जैसा पक्षियां आकाश में उडते हैं
वैसा ज्ञान और कर्मों से भगवान् हरि प्राप्त होते हैं ।'

ऐसा, 'बीजनेवाले पांखों से उडते हो परमपद तुम को सुलभ है' ऐसा भी, उक्तप्रकार भगवल्लाभहेतु तत्त्वज्ञान और तदनुरूप अनुष्ठान न होनेपर भी, भगवल्लाभ के लिये ।

'पशु हो या मनुष्य हो या पक्षी हो वैष्णवों के आश्रयण करनेवाले, उस वैष्णव के संबंध से ही वे विष्णु के प्रसिद्ध परमपद को पाते हैं ।' ऐसा

अत्र जन्मवृत्तादिनियमो नास्ति ॥ २१२ ॥

---

'यं यं स्पृशति पाणिभ्यां यं यं पश्यति चक्षुषा ।
स्थावराण्यपि मुच्यंते किं पुनर्बांधवा जनाः ॥'

इति चोक्तप्रकारेण भागवतसंबंध एव यथा निरपेक्षसाधनं भवति, तथा तादृशज्ञानानुष्ठानाभ्यामुभाभ्यां परिपूर्णत्वेपि भगवद्विषयाप्राप्तेर्भगवदभिमतभागवतविषये क्रियमाणोऽपचार एव निरपेक्षसाधनं भवतीत्यर्थः ।

अत्र जन्मवृत्तादिनियमोऽस्ति किमित्यकांक्षायामाह- अत्रेत्यादिना ।

अत्रेति- 'फलस्य भागवतसबंध एवालं, अप्राप्तेस्तेष्वपचार एवालं' इत्युक्तोभयत्रेत्यर्थः । जन्मवृत्तादिनियमोनास्ति

---

जन्मवृत्तादिनैयत्यमत्र नैवोपलभ्यते ॥ २१२ ॥

'वैष्णव जिस जिस को हाथों से स्पर्श करता है और जिस जिस को नेत्रों से देखता है, स्थावर होनेपर भी मुक्त होते हैं, बांधवों को कहना ही क्या हैं ?

एसा भी उक्त प्रकार भागवतसंबंध ही जैसा निरपेक्षसाधन होता है, वे ज्ञानानुष्ठान दोनों पूर्णतया होनेपर भी भगवद्विषय की च्युति के लिये भगवदभिमत. उन भागवतविषय में क्रियमाण अपचार ही निरपेक्षसाधन होता है समझना ।

इस में जन्मवृत्तादि नियम है क्या ? इस शंका में कहते हैं—इस में इत्यादि ।

इस में जन्मवृत्तादि नियम नहीं है ॥ २१२ ॥

इस में—'फल के लिये भागवतसंबंध ही अपेक्षित हैं, हानि के लिये उन के विषय में अपचार ही पूर्ण होता है' ऐसा कहेहुए इन दोनों में । जन्मवृत्तादि नियम नहीं है—जन्मवृत्तादियों से उत्कृष्ट भागवतों के साथ संबंध ही फल का

अयमर्थः कैशिकवृत्तांते,उपरि-
चरवसुवृत्तांते च द्रष्टव्यः ॥ २१३ ॥

---

जन्मवृत्तादिभिरुत्कृष्टैर्भागवतैर्विद्यमानसंबध एव फलस्य हेतुः तैरपकृष्टैस्तैः सबंधः फलस्य हेतुर्नभवतीति नियमः, जन्मवृत्तादिभिरुत्कृष्टविषये क्रियमाणोऽपचार एवाप्राप्तेर्हेतुः, तैरपकृष्टविषये क्रियमाणोऽपचारस्तथा न भवतीति नियमश्च नास्तीत्यर्थः ।

अयमर्थः कुत्र द्रष्टुं शक्यते ? इत्यत आह— अयमर्थ इत्यादि ।

चरककुलोद्भवे सोमशर्मानाम्न्येकस्मिन्ब्राह्मणे यष्टुमुपक्रम्य यथाक्रममननुष्ठाय तत्समाप्तेः पूर्वमेव मृत्वा ब्रह्मराक्षसरूपेण

---

दर्शनीयोयमर्थो हि कैशिकस्य तथा वसोः ।
उपरिचरराजस्य वार्तायां भावनेदिभिः ॥ २१३ ॥

साधन है, जन्मादियों से अपकृष्ट भागवतों के साथ संबंध फल का साधन नहीं है ऐसा नियम, और जन्मवृत्तादियों से उत्कृष्ट भागवतों के विषय में क्रियमाण अपचार ही हानि का कारण है, उन से अपकृष्टभागवतों के विषय में क्रियमाण अपचार हानि का कारण नहीं है, ऐसा नियम भी नहीं है ।

इस अर्थ को देख सक्ते हैं क्या ? इस शंका में कहते हैं—इस अर्थ को इत्यादि ।

इस अर्थ को कैशिकवृत्तांत में उपरि-
चरवसुवृत्तांत में भी देख सक्ते हैं ॥ २१३ ॥

चरककुलोत्पन्न सोमशर्मा नामक ब्राह्मण याग करनेको प्रारंभ कर यथाक्रम अनुष्ठान् नहीं करनेसे उस याग की समाप्ति के पहिले ही मरनेसे ब्रह्मराक्षस के

जनित्वा संचरति, 'मद्भक्तं श्वपचं वापि' इत्युक्तप्रकारेण जन्मसिद्धनैच्ययुक्ते भगवद्भक्त्येकनिरूपके कस्मिंश्चिद्भागवते उत्थानैकादश्यां रात्रौ सिद्धाश्रमभूतकुरंगपुर्यां पूर्णं गीत्वा स्वरूपसिद्धिं प्राप्तुं वीणापाणौ गच्छति सति, स तं भक्षितुमागत्य न्यरुणत्, सोऽपि पुनरागमनोपयुक्ततयाऽनेकशपथान् कृत्वा तदनुमतिमादाय गत्वा यथामनोरथं सेवित्वा हृष्टः सन् तद्ब्रह्मराक्षसस्थले पुनरागत्य यथेच्छं मच्छरीरं भुंक्ष्वेत्यवदत, सोऽपि राक्षसः सत्यवादित्वादिवैभवं दृष्ट्वा 'त्वयास्मिन्दिने गीतस्य गानस्य फलं देहि अहं त्वां प्राणेन सह मुंचामि' इत्यवदत्, तस्मिन् तदनंगीकुर्वति 'अर्धरात्रफलमेकयामफलं' इत्यादि वदत्यपि 'अहं तथा न कुर्यां त्वं पूर्वोक्तप्रकारेण भुंक्ष्वेत्येकप्रतिज्ञयाऽतिष्ठत् । अतः-

---

जन्म पाकर संचार करनेपर--'हमारे भक्त श्वपच होनेपर भी' इस उक्ति अनुसार जन्मसिद्ध नैच्यविशिष्ट भगवद्भक्ति से निरूपित एक पंचमवर्ण भागवत उत्थान एकादशी के रात्री में सिद्धाश्रमभूत श्रीकुरङ्गनगर में श्रीकुरङ्गपूर्णभगवान को गान कर कैंकर्य करनेके लिये वीणापाणि हो जानेके समय उन को खाने के लिये ब्रह्मराक्षस सामने आ खडा हुआ। तब वह भागवत भगवान को गान कर लौटुंगा ऐसा कह अनेक शपथ करनेपर उस की अनुमति पा यथामनोरथ गानकर हृष्ट हो लौटकर त्वरा से उस ब्रह्मराक्षस के स्थान में आ पहुंच अब यथेष्ट हमारे शरीर को तुम खाओ' ऐसा कहनेपर, वह इन के सत्यवादित्वादि वैभव को देख आप आज गाये हुए गान का फल को दो मैं तुम को प्राण से छोड दूंगा ऐसा कहनेपर वह भागवत संमति न करनेपर 'अर्धरात्रि का फल दो एकयाम का फल दो' इस प्रकार कहनेपर भी मैं न दूंगा तुहारी प्रतिज्ञानुसार मेरा शरीर को भक्षण करो ऐसा स्थिर होनेसे---

'त्वं वै गीतप्रभावेन निस्तारयितुमर्हसि ।
एवमुक्त्वाथ चंडालं राक्षसः शरणं गतः ॥'
इत्युक्तप्रकारेण त्वं तव गीतप्रभावेन मामस्मात्पापात्तीरं प्रापय इति शरणं गतः, स च भागवतः—

'यन्मया पश्चिमं गीतं स्वरं कैशिकमुत्तमम् ।
इत्यादिप्रकारेण स्वेन पश्चाद्गीतस्य कैशिकरागस्य फलं दत्वा कर्मदोषप्रयुक्तराक्षसवेषं दूरीकृत्य पूर्ववद्ब्राह्मणो भूत्वा तदुपरि भागवतश्च भूत्वा यथोज्जीवनं प्राप्नुयात्तथाऽकरोदिति कैशिकवृत्तांते जन्मादिभिरुत्कृष्टैर्भागवतैः संबंध एवोज्जीवनहेतुस्तैरपकृष्टैः संबंध उज्जीवनहेतुर्न भवतीति नियमो नास्तीति द्रष्टव्यम् ।

ऋषिभिरपि धर्मसंदेहं प्रष्टुं योग्यतया विद्याधिकः स्ववर्णा-

---

'वह राक्षस आप गीत का प्रभाव से मुझ को पार लगाओ, इस प्रकार कह चंडाल के शरण में आया।'

इस वचनानुसार आप अपना गीत के प्रभाव से मुझ को इस पाप से छुडाओ ऐसा कह शरणागति करनेपर वह भागवत—

'हमने जो उत्तम कैशिक स्वर को चौथे याम में गाया था'

इत्यादि से आपने अंत में गायाहुआ कैशिकस्वर का फल को देके कर्मदोष से आयाहुआ राक्षसजन्म को छोड पूर्ववत् ब्राह्मणजन्म पा तत्पश्चात भागवतोत्तम हो उज्जीवन हो जैसा किये हैं---इस कैशिकवृत्तांत में जन्मादियों से उत्कृष्ट भागवतसंबंध ही उज्जीवन हेतु, उन से अपकृष्ट भागवतसंबंध हानिहेतु ऐसा नियम नहीं है यह सिद्ध हुआ ।

ऋषि और देवता अपने पास धर्मसंदेह पूछें ऐसा विद्याधिक, स्ववर्णानुरूप

नुरूपवृत्तमात्रं विना सात्वततंत्रे निष्णातश्च भगवदाराधनतत्परत्वात्तादृशवृत्ताधिकः स्वतपोबलेन सवाहनपरिवारः सन्नंतरिक्षचर उपरिचरवसुर्महाराजो यागार्थं ऋषिषु देवेषु च मिथो विवदत्सु—

'मार्गागतो नृपश्रेष्ठः तं देशं प्राप्तवान् वसुः ।
अंतरिक्षचरः श्रीमान् समग्रबलवाहनः ॥
तं दृष्ट्वा सहसाऽऽयांतं वसुं ते त्वंतरिक्षगम् ।
ऊचुर्द्विजातयो देवा एष च्छेत्स्यति संशयम् ॥'

इति आकाशे गच्छंतं दृष्ट्वा 'अयमस्मत्संशयं च्छेतुं शक्त' इति निश्चित्य तत्समीपं गत्वा 'उचितं किं' इत्यपृच्छन्, तस्मिन् 'स्वस्वमतं वदत' इति वदति,

'धान्यैर्यष्टव्यमित्येषः पक्षोस्माकं नराधिप! ।
देवतानां हि पशुभिः पक्षो राजन् वदस्व नः ॥'

---

वृत्तमात्र विना सात्वत (पांचरात्र) तंत्र निष्ठावाले भगवदाराधनतत्पर हो रहनेसे श्रेष्ठ स्वतपोबल से वाहन परिवार समेत आकाश में संचार करनेवाला उपरिचरवसु नामक राजा यागार्थ पशु निमित्त ऋषि और देवता आपस में विवाद करनेपर—

'आकाश के रास्ते में जातेहुए राजश्रेष्ठ समग्रबलवाहनसहित उस स्थल में आ पहुचा ।'

'यदृच्छा से आया हुआ उस उपरिचवसु को देख यही हमारे संशय को दूर करेंगे ऐसा ऋषि और देवता कहने लगे ।'

ऐसा कह इन के पास जा इस में कर्तव्य क्या ? ऐसा पूछनेपर वह आप अपने अपने मत को वर्णन करो ऐसा कहनेपर—

हे राजन् धान्यों से याग करना ऐसा हमारा पक्ष है, पशुओं से याग करना ऐसा देवताओं के पक्ष है। इस में आप का मत क्या है ? कहो ।'

इति 'धान्यैर्यष्टव्यमित्यस्माकं पक्षः पशुभिर्यष्टव्यमिति देवतानां पक्षः अस्माकं किं कर्तव्यं' इति ऋषिभिः पृष्टः,

'देवानां तु मतं श्रुत्वा वसुना पक्षसंश्रयान् ।
छागेनाजेन यष्टव्यमेवमुक्तं वचस्तथा ॥'

इत्युक्तप्रकारेण स देवेषु पक्षपातेन 'छागेन यष्टव्यं' इत्यवदत् ।

'कुपितास्ते तदा सर्वे मुनयः सूर्यवर्चसः ।
ऊचुर्वसुं विमानस्थं देवपक्षार्थवादिनम् ।
सुरपक्षो गृहीतस्ते यस्मात्तस्माद्दिवः पत ।
अद्य प्रभृति ते राजन्नाकाशे विहता गतिः ।
अस्मच्छापाभिघातेन महीं भित्वा प्रवेक्ष्यसि ।
विरुद्धं वेदसूत्राणामुक्तं यदि भवेन्नृप ।
वयं विरुद्धवचना यदि तत्र पतामहे ॥'

इति ऋषयः सर्वे कुपिता देवपक्षार्थवादिनं विमानस्थं दृष्ट्वा 'त्वदुक्तं वेदसूत्राणां विरुद्धं यदि देवपक्षपाती वदन् त्वं दिवोऽधः

---

ऐसा पूछनेपर—

देवतालोगों का पक्ष को आश्रयण कर अजा से याग करना उचित है ऐसा कहा ।'

'तब सूर्य के सदृश तेजस्वी ऋषिलोग क्रुद्ध हो विमान में बैठा हुआ देव-पक्ष को कहनेवाला वसु को देख जिस कारण से देवता के पक्ष को स्वीकार किया है उस कारण से आकाश से नीचे गिरो ।

यदि तुमारा वचन वेदशास्त्रों के विरुद्ध हो तो आजसे हे राजन् आकाश की गति न होगी हमारे शाप से भूमि को फाड कर प्रवेशकरोगे । यदि हमारे वचन विरुद्ध होतो हम ही वहां गिरेंगे ।'

पत, अद्य प्रभृति त्वदाकाशगमननाशेन पाताले प्रविशेः, अस्माभिर्विरुद्धवचनमुक्तं चेत्तथा पातले पतामः' इति शेपुः ।

'ततस्तस्मिन् मुहूर्ते तु राजोपरिचरस्तथा ।
अधो वै संबभूवाऽशु भूमेर्विवरगो नृपः ॥'

इत्युक्तप्रकारेण तदानीमेव पाताले ऽपतत्, इत्युपरिचरवसुवृत्तांते— ऋषिभिर्धर्मसंदेहं प्रष्टुं योग्यो विद्यादिभिस्तेभ्य उत्कृष्टस्तेष्वपराधेनाधःपतित इत्यस्य दर्शनात्, जन्मवृत्तादिभिरुत्कृष्टविषयेऽपकृष्टैः क्रियमाणोऽपचार एव हानिहेतुः, तैरुत्कृष्टैरपकृष्टविषये क्रियमाणोऽपचारो हानिहेतुर्न भवतीति नियमो नास्तीत्यर्थो द्रष्टव्य इत्यर्थः । जन्माधिक्यस्य ऋषीणां सत्त्वेप्यस्य ज्ञानाधिक्यस्य सत्त्वात् तेभ्योऽस्याधिक्ये न विरोधः ।

---

ऐसा शाप देनेपर—

'तब उपरिचरवसु उसी मुहूर्त में भूमि
के विवर पाताल में प्रवेश किया ॥'

इस वचनानुसार उसी बखत पाताल में गिरनेवाले उपरिचरवसु वृत्तांत में—ऋषिलोग भी धर्मसंदेह अपने से पूछें जैसे विद्यादियों से उन से उत्कृष्ट उनके विषय में अपचार से अधःपतित होनेसे, जन्मवृत्तादियों से उत्कृष्टों के विषय में अपकृष्ट क्रियमाण अपचार ही हानिकारक है, जन्मादियों से उत्कृष्ट अपकृष्ट विषय में क्रियमाण अपचार हानिकारक नहीं है ऐसा नियम नहीं है यह सिद्ध हुआ। जन्मप्रयुक्त श्रेष्ठता ऋषियों में होनेपर भी ज्ञानप्रयुक्त श्रेष्ठता उपरिचरवसु में होनेसे उन ऋषियों की अपेक्षा यह श्रेष्ठ है ऐसा कहनेमें विरोध नहीं है। जन्म-

**ब्राह्मण्यस्य महार्घता—वेदाध्ययनादिमुखेन भगव-
ल्लाभादिहेतुत्वात्, तदेव हानिहेतुश्चेत्त्याज्यं हि ॥**

---

जन्म ज्ञानाधिक्यं च कोटिद्वयं भवतिं चेत् ज्ञानादयः प्रबलाः खलु। कैशिकवृत्तांतस्य श्रीवराहपुराणे श्रीभूमिं प्रति श्रीवराह-भगवतोक्तत्वात्, उपरिचरवसुवृत्तांतस्य पंचमवेदे महाभारते मोक्षधर्मे धर्मपुत्रं प्रति श्रीभीष्मेणोक्तत्वात्, इमावर्थावाप्तप्र-माणासिद्धौ खलु। एवं जन्मादिप्रयुक्तोत्कर्षे रसो नास्तीति कथमुच्यते? शास्त्राणि सर्वाणि ब्राह्मण्यमत्यादरेण वदंति खलु, इत्यत आह— ब्राह्मण्यस्येत्यादिना।

महार्घता— आदरणीयता। वेदाध्ययनादिमुखेन भगव-ल्लाभदिहेतुत्वं नाम– 'सर्वे वेदा यत्पदमामनंति' 'वेदैश्च सर्वैर-

---

**ब्राह्मणयस्य महार्घत्वं वेदस्याध्ययनादिना।
भगवल्लाभहेतुत्वात्त्याज्यं तद्धानिदं यदि ॥२१४॥**

और ज्ञानादियों में ज्ञानादियों की श्रेष्ठता सर्वसम्मत है।

कैशिकवृत्तांत श्रीवराहपुराण में श्रीभूमिदेवी को श्रीवराहभगवान् कहे हैं। उपरिचरवसुवृत्तांत पंचमवेदभूत महाभारत में मोक्षधर्म में धर्मपुत्र को श्रीभीष्म जी कहे हैं—इस लिये ये दोनों आप्तप्रमाण सिद्ध हैं।

इस प्रकार जन्मादियों से होनेवाले उत्कृष्टता में सार नहीं ऐसा कहसक्ते हैं क्या? संपूर्ण शास्त्र ब्राह्मणता को अत्यंत आदरपूर्वक कहते हैं? ऐसापूछने पर कहते हैं—ब्राह्मणता इत्यादि।

ब्राह्मणता अत्यादर की जाती है वेदाध्ययनद्वारा भगवल्लाभ-
हेतु समझकर, वही हानि का हेतु होतो त्याज्य होती है ॥२१४॥

अत्यादर की जाना माने—सब के आदर के विषय होना। वेदाध्ययनादिद्वारा भगवल्लाभहेतु माने—'सब वेद जिस पद को कहते हैं' ऐसा 'संपूर्ण वेदों से मैं

ह्मेव वेद्यः' इति चोक्तप्रकारेणाराधनस्वरूपमाराध्यस्वरूपं च पूर्वोत्तरभागाभ्यां प्रतिपादयतो भगवदेकपरवेदस्य 'स्वाध्यायोऽध्येतव्यः इत्युक्तप्रकारेण विधिपरतंत्रोऽध्ययनं कृत्वा मीमांसादिभिस्तदर्थनिर्णयं कृत्वा भगवदुपासनादिष्ववगाह्य भगवद्विषयं प्राप्तुमुपयुक्तत्वम् । तदेव हानिहेतुश्चेदिति—तादृशब्राह्मण्यमेवाहंकारहेतुः सन्—

'मद्भक्तान् श्रोत्रियो निंदन् सद्यश्चंडालतां व्रजेत् ।'

इत्युक्तप्रकारेण भगवदत्यंतनिग्रहहेतुभागवतापचारं कृत्वा भगवद्विषयाद् दूरीभवितुं निदानं चेदित्यर्थः । हीति प्रसिद्धिद्योतनार्थमुक्तं, यद्भगवल्लाभोपयुक्तं तदुपादेयं यत्तु तदलाभोपयुक्तं तत्त्याज्यं भवति, एवं चेदमपि हानिहेतुश्चेदेवं स्यादित्यत्र न विरोध इति निश्चयेन ।

---

ही कहाजाता हूं' ऐसा भी उक्त प्रकार आराधनस्वरूप और आराध्यस्वरूप को पूर्व और उत्तर भागों से प्रतिपादन करते हुए भगवदेकपर वेद को 'वेद को अध्ययन करना चाहिये' इस विधि का परतंत्र हो अध्ययन कर मीमांसादियों से उस का अर्थ निर्णय कर भगवदुपासानादियों में लग भगवद्विषय को प्राप्त होनेके उपयुक्त होना । यही हानि का हेतु होतो माने—वह ब्राह्मणता ही अहङ्कारहेतु हो—

'हमारे भक्तों को चतुर्वेदी ब्राह्मण निंदा कर-
नेपर उसीवखत चंडालता को प्राप्त होता है ।'

इस वचनानुसार भगवदत्यंतनिग्रह हेतुभूत भागवतापचार कर भगवद्विषय से अलग होजानेके हेतु हो तो । त्याज्य होता है—

जो भगवल्लाभ का हेतु वह उपादेय है, जो अलाभका हेतु वह त्याज्य है, ऐसा सिद्धांत होनेपर यह भी हानि का हेतु होनेपर त्याज्य होनेमें संशय नहीं है इस निश्चय से प्रसिद्ध के तरह कहा है ।

जन्मवृत्तयोरुत्कर्षोऽपकर्षश्च
प्राप्तेर्हानेश्च न प्रयोजकः ॥ २१५ ॥

---

एवमुत्कृष्टजन्मादिर्हानिहेतुश्चेत् किमपकृष्टजन्मादिकं प्राप्तिहेतुर्भवतीत्यत आह— जन्मवृत्तयोरित्यादि ।

जन्मवृत्तयोरुत्कर्षः— प्राप्तेर्हानेश्च प्रयोजको न भवति, तयोरपकर्षश्च तदुभयोः प्रयोजको न भवति । अथवा—'अत्र जन्मवृत्तादिनियमो नास्ति' इति, 'हानिहेतुश्चेत्त्याज्यं हि' इति चोक्तं, एवं कथमुच्यते ? वेदाध्ययनादिमुखेन भगवल्लाभहेतुत्वात् जन्मवृत्तयोरुत्कर्षः प्राप्तिहेतुः, तयोरपकर्षोऽध्ययनाद्यनर्हत्वाद्धानेर्हेतुरिति च कुतो नांगीक्रियत इत्यत आह— जन्मवृत्तयोरित्यादि । जन्मवृत्तयोरुत्कर्षः प्राप्तेः प्रयोजको न भवति,

---

प्राप्तेर्हानेर्न हेतू स्तो जन्मवृत्तवराधमौ ॥२१५॥

इस प्रकार उत्कृष्ट जन्मादि हानिका हेतु हो तो अपकृष्ट जन्मादि फल का हेतु होयंगे क्या ? इस शंका में कहते हैं—जन्मवृत्तों के इत्यादि ।

जन्मवृत्तों के उत्कर्ष और अपकर्ष ये दोनों
फल और हानि इन दोनों के कारण नहीं हैं ॥ २१५ ॥

जन्मवृत्तों के उत्कर्ष फल और हानि के हेतु नहीं है, जन्मवृत्तों के अपकर्ष भी फल और हानि के हेतु नहीं है । यद्वा—'इस में जन्मवृतादि नियम नहीं है' 'हानि का कारण हो तो त्याज्य है' ऐसा कहे हो, इस प्रकार कह सके हैं क्या ? वेदाध्ययनादिद्वारा भगवल्लाभहेतु होनेसे जन्मवृत्तों के उत्कर्ष फल का हेतु, उन के अपकर्ष अध्ययनादियों के योग्यता न होनेसे हानि का हेतु है ऐसा समझना ठीक नहीं क्या ? इस शंका में कहते हैं—जन्मवृत्तों का इत्यादि ।

जन्मवृत्तों के उत्कर्ष फल का कारण नहीं, उन के अपकर्ष हानि का कारण नहीं । फल और हानि माने—भगवल्लाभ और अलाभ । कारण माने—उत्पादन करनेवाले । उत्कृष्टजन्मवृत्तवाले कई च्युत होते हैं और कई प्राप्त होते हैं, अपकृष्ट

प्रयोजको भगवत्संबंधोऽसंबंधश्च ॥ २१६ ॥

---

तयोरपकर्षश्च हानेः प्र[illegible]को न भवतीत्यर्थः । प्राप्तिहानी नाम— भगवल्लाभत[illegible] । प्रयोजकत्वं फलयितृत्वं । उत्कृष्टजन्मवृत्तवस्तु [illegible]नालभमानाः, केचन लभमानाश्च दृश्यंते। अपकृष्टजन्मवस्तु च तथोभयविधा दृश्यंते। तस्मादय-मुभयोरपि प्रयोजको न भवतीत्ययमर्थः प्रत्यक्षसिद्धः खलु।

तर्हि प्राप्तिहान्योः प्रयोजकः क इत्यत आह प्रयोजक इत्यादि ।

भगवल्लाभरूपप्राप्तेः प्रयोजकः 'वयं भगवदनन्यार्हशेषभूताः इति स्थितिरूपो भगवत्संबंधः । तदलाभरूपहानेः प्रयोजकः तदनन्यार्हशेषत्वज्ञानाभावरूपस्तत्संबंधाभाव इत्यर्थः ।

उत्कृष्टापकृष्टजन्मनोरुभयोरपि भगवत्संबंधे जाते भागव-तत्वसाम्यं खलु वर्तते, तेन सह जन्मोत्कर्षवान् तस्माद्विशिष्टः

---

तयोर्हेतुस्तु संबंधोऽसंबंधश्च हरेर्मतः ॥२१६॥

जन्मवृत्तवाले कई च्युत होते हैं और कई प्राप्त होते हैं। इन दोनों को देखनेसे ये दोनों दोनों को कारण नहीं यह अर्थ प्रत्यक्ष सिद्ध है।

ऐसा हो तो प्राप्ति और अप्राप्ति इन दोनों के कारण कौन है ? इस शंका में कहते हैं—कारण इत्यादि ।

कारण—भगवत्संबंध और भगवत् असंबंध हैं ॥ २१६ ॥

भगवल्लाभरूप प्राप्तिका कारण हम—भगवदनन्यार्ह शेषभूत ऐसा समझ रहना रूप भगवत्संबंध । भगवत् [illegible]रूप अप्राप्तिका कारण—भगवदनन्यार्ह-शेषत्वज्ञानाभावरूप भगवत्[illegible] जानना ।

उत्कृष्ट और अपकृष्ट जन्मवाले [illegible] को भगवत्संबंध होनेसे [illegible]त्व समान होता है । उस भागवतत्व के साथ जन्मोत्कर्षवाला अपकृष्टजन्मवाले से

भगवत्संबंधे जाते द्वयमपि
तुल्यं किमिति चेत् ॥ २१७ ॥
न तुल्यम् ॥ २१८ ॥
उत्कृष्टत्वेन भ्रमविषयं जन्म भ्रंशसंभावनया
'शरीरे च' इत्युक्तप्रकारेण भयजनकम् ॥ २१९ ॥

---

खलु इति विचिंत्य क्रियमाणं प्रश्नमनुवदति — भगवत्संबंधे जाते इत्यादिना ।

द्वयमिति— उत्कृष्टापकृष्टजन्मनी उच्येते ।

प्रष्टुरुत्कृष्टत्वेनाभिमतमपकृष्टत्वेनापकृष्टत्वेनाभिमतमुत्कृष्टत्वेन चाभिप्रेत्य तस्योत्तरमाह— न तुल्यमिति ।

तदुपपादयत्युत्कृष्टत्वेनेत्यादिना ।

---

जातेपि हरिसंबंधे द्वयं तुल्यं भवेत् किमु ॥ २१७ ॥
इति चेन्न द्वयोस्तुल्यं शास्त्रकारैः प्रवक्ष्यते ॥ २१८ ॥
उत्कृष्टत्वेन मिथ्याधीविषयो जन्मसंभवात् ।
भ्रंशस्य हि शरीरे चेत्युक्तितो भयकारणम् ॥ २१९ ॥

श्रेष्ठ होता है ऐसा समझ क्रियमाण प्रश्न को अनुवाद करते हैं—भगवत्संबंध हो तो इत्यादि ।

भगवत्संबंध हो तो दोनों बराबर होयंगे क्या ॥ २१७ ॥

दोनों—उत्कृष्टापकृष्ट जन्म दोनों ।

प्रश्न करनेवाले उत्कृष्टतया समझा हुआ को अपकृष्टतया, अपकृष्टतया समझा हुआ को उत्कृष्टतया मानकर उत्तर देते हैं—बराबर नहीं इत्यादि ।

बराबर नहीं होगा ॥ २१८ ॥

उस को उपपादन करते हैं—उत्कृष्टतया इत्यारभ्य ।

आभिजात्यादिभिरहंकृत्वा नष्टो भवितुमुपयुक्तत्वात्—अ-पकृष्टभूतमिदमुत्कृष्टत्वेन स्मृत्वा प्रश्नः कृतः अतस्मिन् तद्बुद्धये-त्यर्थज्ञापनायोत्कृष्टत्वेन भ्रमविषयं जन्मेत्युक्तम् । भ्रंशसंभावना नाम — उपायांतरेष्वन्वयेनानन्योपायत्वरूपाधिकारात् चुत्यागमनयोग्यत्वं । 'शरीरे च' इत्युक्तप्रकारेण भयजनकमिति —'कालेष्वपि च' इत्यारभ्योपायांतरानुष्ठानयोग्यत्वात् भयहेतूनामुक्त्यवसरे तेभ्यः सर्वेभ्यः प्राधान्येन 'शरीरे च वर्तते मे महद्भयम्' इत्युक्तप्रकारेण स्वरूपयाथात्म्यविदामुपायांतरगंधासहानामधिकारिणामेतस्मिन् सति किं वा कुर्यादिति भयं वर्धयतीत्यर्थः ।

पुनस्तस्य कंचन दोषमाह– तस्येत्यादिना ।

---

उत्कृष्टतया भ्रांत जन्म भ्रंशसंभावना से 'शरीरे च' इस वचनानुसार भयजनक होता है ॥ २१९ ॥

आभिजात्यादियों से अहंकार कर नष्ट होनेके उपयुक्त होनेसे अपकृष्टरूप इस को उत्कृष्टतया समझ प्रश्न किया गया । यह रज्जु में सर्पभ्रांति के जैसे भ्रांतिकार्य होनेसे 'उत्कृष्टतया भ्रांतजन्म' कहते हैं । भ्रंशसंभावना माने—उपायांतरों में प्रवृत्त हो अनन्योपायत्व रूप अधिकार से च्युत होनेका योग्य होना । 'शरीरे च' इस वचनानुसार भयजनक होता है माने—'संपूर्ण कालों में' ऐसा आरंभ कर उपायांतरानुष्ठान के योग्य होनेसे भयहेतुओं को कहनेके समय उन सब में प्रधान 'शरीर में महद्भय उपस्थित है' इत्युक्तप्रकार स्वरूपयाथात्म्य को जाननेवाले उपायांतरगंध को भी नहीं सहनेवाले अधिकारियों को 'यह शरीर रहते हुए क्या क्या अनर्थ को उत्पादन करेगा' ऐसा भय को उत्पादन करना है ।

और भी उत्कृष्ट जन्म को एक दोष बताते हैं—उस को इत्यादि ।

**तस्य स्वरूपप्राप्तं नैच्यं भावनीयम् ॥२२०॥**

**अपकृष्टत्वेन भ्रमविषयीभूतस्योत्कृष्ट-जन्मन उभयदोषोऽपि नास्ति ॥ २२१ ॥**

---

तस्येति— पूर्वोक्तजन्म परामृश्यते । स्वरूपप्राप्तं नैच्यं भावनीयमिति भागवतानुवर्तनादिप्रसंगे शेषत्वरूपस्वरूपस्यानुरूपं नैच्यं परैः क्रियमाणं दृष्ट्वानुकार्याभ्यसनीयामित्यर्थः ।

एतत्प्रतिकोटिनो जन्मनो दोषाभावमाह— अपकृष्टत्वेनेत्यादिना ।

आभिजात्यादिप्रयुक्ताहंकारयोग्यं विना शेषत्वानुकूलतया स्थितत्वादुत्कृष्टत्वेन स्थितस्यापकृष्टत्वेन चिंतनं चातस्मिंस्तद्बु-

---

**तस्य स्वरूपायातं तन्नैच्यं भावनया भवेत् ॥२२०॥**
**अपकृष्टत्वेन मिथ्याधीगोचरीभूतदेहिनः ।**
**उत्कृष्टजन्मनो नैवोभयदोषो हि विद्यते ॥२२१॥**

उस को स्वरूपप्राप्त नैच्य को भावना करना है ॥ २२०॥

उस को—उत्कृष्टजन्म को। स्वरूपप्राप्तनैच्य को भावना करना है माने—भागवतानुवर्तनादियों में शेषत्वस्वरूप का अनुरूप नैच्य को अन्यलोग करते हुए देख उस को आप भी अनुकार कर अभ्यास करना है ।

इस का प्रतिकोटिरूप अपकृष्ट जन्म दोषरहित है ऐसा कहते हैं—अपकृष्टतया इत्यादि ।

अपकृष्टतया भ्रांत उत्कृष्टजन्म को दोनों दोष नहीं हैं ॥ २२१॥

आभिजात्यादियों से होनेवाले अहंकार के योग्य न होनेसे शेषत्व के अनुकूल होनेसे उत्कृष्टभूत इस को अपकृष्टतया समझना भ्रांतिकार्य होनेसे 'अपकृष्टतया

नैच्यं जन्मसिद्धम् ॥ २२२ ॥
तस्मादुत्कृष्टजन्मैव श्रेष्ठम् ॥ २२३ ॥

---

द्वयेति ज्ञापयितुं 'अपकृष्टत्वेन भ्रमविषयीभूतस्योत्कृष्टजन्मनः' इत्युक्तम् । उभयदोषोऽपि नास्तीति– भ्रंशसंभावनाप्रयुक्तभयजनकत्व–स्वरूपप्राप्तनैच्यभावनारूप– दोषद्वयं च नास्तीत्यर्थः ।

भ्रंशसंभावना खलु नास्ति नैच्यभावना कुतो नास्तीत्यत आह— नैच्यमित्यादि ।

भागवतानुवर्तनादीनामुपयुक्तस्य नैच्यस्य स्वतःसिद्धत्वात् भावनापेक्षां विना निम्नस्थानं भवतीत्यर्थः ।

अमुमर्थं निगमयति– तस्मादित्यादिना ।

---

जन्मसिद्धं च नैच्यं तदुत्कृष्टस्य हि जन्मिनः ॥ २२२ ॥
श्रेष्ठमुत्कृष्टजन्मैवेत्येवं तस्माद्बुधा जगुः ॥ २२३ ॥

भ्रांत 'उत्कृष्ट जन्म' ऐसा कहते हैं। दोनों दोष नहीं हैं माने—भ्रंशसंभावना से होनेवाले भयजनकत्व रूप दोष, स्वरूपप्राप्त नैच्य को भावना करनारूप दोष भी नहीं हैं।

भ्रंशसंभावना नहीं है तो नैच्यभावना नहीं है क्या? इस शंका में कहते हैं—नैच्य जन्मसिद्ध है इत्यादि।

नैच्य जन्मसिद्ध है ॥ २२२ ॥

भागवतानुवर्तनादियों के योग्य नैच्य जन्मसिद्ध होनेसे भावना की अपेक्षा नहीं है, स्वभावसिद्ध है जानना।

इस अर्थ को समाप्त करते हैं—इस कारण से इत्यादि।

इस कारण से उत्कृष्ट जन्म ही श्रेष्ठ है ॥ २२३ ॥

## 'श्वपचोऽपि महीपाल' ॥ २२४ ॥

तस्मादिति—एवं तस्य सदोषत्वात्, अस्य निर्दोषत्वाच्चेत्यर्थः। उत्कृष्टजन्मैव श्रेष्ठमिति — शेषत्वोचितत्वेनोत्कृष्टमेतज्जन्मैव तदनुचितजन्मापेक्षया श्रेष्ठमित्यर्थः।

अस्यार्थस्य प्रमाणं दर्शयति—'श्वपचोपि' इत्यादिना।

'श्वपचोऽपि महीपाल विष्णुभक्तो द्विजाधिकः।
विष्णुभक्तिविहीनस्तु यतिश्च श्वपचाधमः॥'

इति सर्वप्रकारेण निकृष्टजन्मापि भगवद्भक्तो द्विजाधिकः, उत्कृष्टजन्मवत्त्वमात्रं विनोत्तमाश्रमित्वविशिष्टोऽपि भगवद्भक्तिविहीनः श्वपचादप्यधम इति वर्णाश्रमयोराग्रहं निवर्तयित्वा

---

## श्वपचोपि महीपालेत्यादि मानं प्रकीर्तितम् ॥ २२४ ॥

इस कारण से—इस प्रकार उत्कृष्टजन्म में दोषद्वय होनेसे, और अपकृष्टजन्म में दोषद्वय न होनेसे। उत्कृष्टजन्म ही श्रेष्ठ है—शेषत्वानुरूप होनेसे उत्कृष्टभूत यह जन्म ही शेषत्वाननुगुण जन्म की अपेक्षा श्रेष्ठ है ऐसा समझना।

इस अर्थ का प्रमाण दिखाते हैं—श्वपच होनेपर भी इत्यादि।

'हे राजन्! श्वपच होनेपर भी' ॥ २२४ ॥

'हे राजन्! श्वपच होनेपर भी विष्णुभक्त हो तो ब्राह्मण से अधिक होता है। यति होयतो भी विष्णुभक्ति रहित होनेपर श्वपच से नीच होता है।'

ऐसा कितना भी निकृष्टजन्मवान् होनेपर भी भगवान् के भक्त हो तो ब्राह्मण से अधिक होता है। उत्कृष्ट जन्मवान् और उत्कृष्ट आश्रमवान् हो तो भी भगवान् की भक्ति न हो तो श्वपच से भी नीच होता है ऐसा वर्णाश्रमों के श्रेष्ठता को न

## निकृष्टजन्मप्रयुक्तो दोषः शाम्यते विलक्षणसंबंधेन ॥

भगवत्संबंधस्यैवोत्कर्षहेतुत्वोक्ते भ्रंशसंभावनादिभिस्तत्संबंधविरोधिनो जन्मनो तदनुरूपजन्मैव श्रेष्ठमिति भावः । अन्यथा पूर्वोक्तस्यार्थस्यायं प्रमाणं न भवेत् ।

एवं निकृष्टोत्कृष्टावेताविति निश्चितौ प्राक्;तत्र निकृष्टजन्मप्रयुक्तो दोषः केन शाम्यत इत्यत आह—निकृष्टेत्यादि ।

अहंकारहेतुतया निकृष्टजन्महेतुना जातो नैच्यस्य भावनीयत्वादिदोषो यथा पुनर्न भवेत् तथा नाशः, जन्मसिद्धनैच्यैरुपायांतरान्वययोग्यतागंधरहितैर्विलक्षणाधिकारिभिर्विद्यमानशेषत्वसंबंधेनेत्यर्थः ।

---

दुष्टजन्मप्रयुक्तो हि दोषो नश्यति सर्वथा ।
विलक्षणैश्च योगेन तत्संबन्धप्रभावतः ॥२२५॥

देख भगवत्संबंध ही उत्कर्षहेतुतया कहनेसे भ्रंशसंभावनादियों से भगवत्संबंधविरोधि जन्मापेक्षया भगवत्संबंधानुरूप जन्म ही श्रेष्ठ है ऐसा जानना । ऐसा न हो तो पूर्वोक्त अर्थ का यह प्रमाण नहीं हो सक्ता है ।

तथाच—निकृष्ट और उत्कृष्टजन्म अमुक हैं ऐसा निश्चय कियागया ।

उस में निकृष्टजन्म से होनेवाला दोष किस से निवृत्त होगा ? इस प्रश्न में कहते हैं—निकृष्ट इत्यादि ।

निकृष्ट जन्म से होनेवाला दोष विलक्षणसंबंध से निवृत्त होता है ॥ २२५ ॥

अहंकारहेतु से निकृष्टजन्म द्वारा होनेवाले नैच्यभावना और भ्रंशसंभावना रूप दोष जन्मसिद्ध नैच्यवाले उपायांतरसंबंधगंधरहित विलक्षणाधिकारियों के साथ शेषत्वरूपसंबंध से जड से निवृत्त होता है ।

संबंधस्य योग्यतायां जननीयायां
जन्मन्यूनतानिवृत्तिरावश्यकी ॥ २२६ ॥
जन्मनो न्यूनता तत्परिहारश्च 'अवद्यरहित'
[पलुतिला]इति गाथायामुक्तः ॥ २२७ ॥

---

तत्संबंधयोग्यता कथं संभवेदित्यत आह– संबंधस्येत्यादि
तादृशविलक्षणैः संबंधस्यार्हतायामस्य जननीयायां स्वज-
न्मगतन्यूनताया निवृत्तिरपेक्षितेत्यर्थः ।
जन्मनः का वा न्यूनता तत्परिहारः कः ? इत्याकांक्षाया-
माह— जन्मन इत्यादि ।

---

संबन्धयोग्यतायां तैरवश्यं जन्मन्यूनता ।
हापनीया प्रयत्नेन श्रेयस्कामैः सुभावुकैः ॥ २२६ ॥
पलुदिलेति गाथायां जन्मनो न्यूनता तथा ।
तत्परिहारकश्चैव सम्यगुक्तो हि सूरिभिः ॥ २२७ ॥

उन के संबंध की योग्यता कैसे होगी ? इस शंका में कहते हैं—संबंध की इत्यादि ।

संबंध की योग्यता होनेपर जन्मगत दोष निवृत्त होना चाहिये ॥ २२६ ॥

उन विलक्षणों के साथ संबंध की योग्यता इस को होनेके समय अपना जन्म का दोष निवृत्त होना चाहिये ।

जन्म का दोष क्या ? उस का परिहार क्या ? इस शंका में कहते हैं—जन्म का दोष इत्यादि ।

जन्म का दोष और उस का परिहार को 'अवद्य-
रहित वृत्त' (पलुदिला वोलुगल्) इस गाथा में कहते हैं ॥ २२७ ॥

अज्ञाननिवृत्तिमत्त्वानंदप्राप्तेष्वग्रेसरैस्तदीयशेषत्वसीमाभूमिभिर्भक्तांघ्रिरेणुभिः अवद्यरहित इत्यादिना 'ब्रह्माणमारभ्य स्वपर्यंतमागते वंशप्रवाह एकत्रापि दोषं विना वर्तमाना अनेके चतुर्वेदिनः ! अतो निकृष्टं नास्तीति वक्तुं योग्ये निहीनकुल उत्पन्ना अपि मया सह विद्यमानमसाधारणसंबंधं ज्ञात्वा तादृशज्ञानानुरूपस्वाचारविशिष्टाश्चेत यूयं तेषां पादयोर्निपत्याराधयत, तैर्युष्मासु ज्ञानापेक्षायां कृतायां यूयमादृत्य वदत, तेषु भगवज्ज्ञानं प्रसादयत्सु श्रुत्वा कृतार्था भवत, मदुपरि पूज्याभावान्मत्सदृशतया वा तानाराध्य सन्मार्गे गच्छत' इति परम रहस्यं—

'भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते ।
तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम् ॥'

इति परमाप्तो भवानवदत्, तदनंतरमत्र कश्चन संशयो व-

---

अज्ञाननिवृत्तिपूर्वक ज्ञानानंद को प्राप्त हो तत्वज्ञानियों में अग्रेसर तदीयशेषता की सीमाभूमि भूत श्रीभक्तांघ्रिरेणुस्वामी जी 'अवद्यरहित वृत्तवाले' इत्यादि से ब्रह्मासे लेकर अपने पर्यंत आनेवाले वंश वाह में किसी भी दोषरहित अनेक चतुर्वेदियो ! इस से नीच नहीं ऐसे कहनेयोग्य निहीन कुल में जन्म लेनेपर भी हमारे साथ असाधारणसंबंध को जान तद्ज्ञानानुरुप स्वाच रवाले हो तो तुम लोग उन के चरणों में गिर आराधना करो । वे लोग तुमारे पास ज्ञान की अपेक्षा करे तो तुम आदरपूर्वक कहो, वे भगवद्ज्ञान को तुम को उपदेश किये तो तुम कृतार्थ होओ , हम से अधिक पूज्य न होनेसे हमारे सदृश तौ भी उन को आराधना कर सन्मार्ग में गमन करो, ऐसा इस परमरहस्य को—

'यह आठ प्रकार की भक्ति जिसकिसी म्लेछ में भी हो तो उन को
दो और उन से लो, उन को हमारे सदृश मान पूजा करो ॥'

ऐसा परमाप्त आप ही कहे हो तो इस में कोई संशय है क्या ? । इस प्रकार

## वेधकस्वर्णवत्तैः संबंधः ॥ २२८ ॥

---

र्शितं किं ? एतमुपदेशमात्रं विना श्रीरंगे आगत्य लोकसारंग-
महामुनेर्मस्तके योगिवाहं निधायानुवर्त्य व्यावृत्य प्रदर्शितवान्
न किं ? अस्यां गाथायामभिजनाद्यभिमानो जन्मन्यूनता, ता-
दृशजन्मन्यूनतारहितविलक्षणतदीयविषये क्रियमाणोऽनुवर्तन-
विशेषस्तस्य परिहार इति सुव्यक्तमुक्तम् इत्यर्थः ।

एवंभूतजन्मन्यूनतानिवृत्त्या विलक्षणैः संबंधे जातेऽयमपि वि-
लक्षणो जायते किमित्यत आह— वेधक इत्यादि ।

वेधकस्वर्णं नाम-- अनेकसिद्धौषधैर्बहुवारं प्रद्राव्य गुलिका-
रूपं कृत्वा रसवादिभिः स्वहस्ते स्थाप्यमानं स्पर्शवेधि स्वर्णम् ।

---

वेधकस्वर्णतुल्यस्तैः संबन्धः परिकीर्तितः॥२२८॥

उपदेशमात्र न हो श्रीरंगजी में आ विराज लोकसारंगमहामुनि के शिर में योगि-
वाहन् को वैठा इस अर्थ को अनुष्ठानपर्यंत कर दिखाये नहीं हो क्या ? अभिजनादि
अभिमान जन्म का दोष है, वह दुरभिमान जिन को नहीं है उन विलक्षण भाग-
वतों के अनुवर्तन करनेसे वह दोष निवृत्त होता है ऐसा सुस्पष्ट कहे हैं ।

इस प्रकार के जन्मदोष निवृत्त हो विलक्षणों के साथ संबंध होनेपर यह भी
विलक्षण हो जायगा क्या ऐसी शंका में कहते हैं—वेधकस्वर्ण इत्यादि ।

वेधकस्वर्णवत् इन के साथ संबंध जानना ॥ २२८ ॥

वेधकस्वर्ण माने—अनेक सिद्धौषधों के साथ वहुवार गलाकर गुलिकारूप
से वना रसवादि लोगों के हाथमें रहनेवाले स्पर्शवेधि नामक स्वर्ण । वह स्वर्ण

एषु साम्यबुद्धिराधिक्यबुद्धिश्च कर्तव्या ॥ २२९ ॥
सा चाचार्यतुल्याः संसारिभ्यः
स्वस्मादीश्वरादधिका इति प्रतिपत्तिः ॥

---

तत्स्पर्शमात्रेणायः स्वर्णं यथा करोति तथा जन्मसिद्धनैच्यादिविशिष्टैरेतैर्विलक्षणैः संबंधः निकृष्टजन्मनाऽऽगतं दोषं दूरीकृत्यामुं च विलक्षणं करोति ।

एवं स्वसंबंधेनास्य दोषं दूरीकृत्य स्वसाम्यापत्तिप्रदान् विलक्षणान् कथं प्रतिपद्येतेत्यत आह-- एष्वित्यादि ।

एतद्विवृणोति-- सा चेत्यादिना ।

अचार्यतुल्या इति प्रतिपत्तिर्नाम— 'गुरुरेव परं ब्रह्म'

---

समताधिकताबुद्धिरेषु कार्या विचक्षणैः ।
संसारिस्वेश्वरेभ्यश्च प्रतिपत्तिर्वरा स्मृता ॥ २२९ ॥

स्पर्शमात्रसे लोहा को यथा स्वर्ण बनाता है तथा जन्मसिद्ध नैच्यादिवाले विलक्षण भागवतों के साथ संबंध निकृष्ट जन्म से होनेवाले दोष को दूर कर इस को भी विलक्षण बना देता है ।

इस प्रकार स्वसंबध से इस के दोष को दूर कर अपनी सदृशता को देनेवाले विलक्षणभागवतों को कैसा समझना चाहिये ? ऐसी शंका में कहते हैं— इन के विषय में साम्यबुद्धि इत्यादि ।

इन के विषय में साम्यबुद्धि और आधिक्यबुद्धि रखना चाहिये ॥२२९॥
इस को विवरण करते हैं—वह इत्यादि ।

वह—आचार्य सदृश समझना । संसारी
आप और ईश्वर इनसे अधिक समझना ॥ २२९ ॥

आचार्यसदृश समझना माने—'गुरु ही परंब्रह्म हैं' इत्यादि प्रकार अपने

इत्यादिप्रकारेण सर्वप्रकारोद्देश्येनाचार्येणैते समा इति प्रतिपत्तिः । संसारिभ्योऽधिका इति प्रतिपत्तिर्नाम— जात्यादिकमादाय संसारिभिः समा इति बुद्धिमकृत्वा ज्ञानादिप्रयुक्तव्यावृत्त्या तदधिका इति प्रतिपत्तिकरणम् । स्वस्मादधिका इति प्रतिपत्तिर्नाम— संसारिभ्यो व्यावृत्तेः स्वस्यापि सत्त्वात्तामादाय स्वतुल्या इति बुद्धिमकृत्वा स्वस्य शेषित्वाकारेण स्वस्मादधिका इति प्रतिपत्तिकरणम् । ईश्वरादधिका इति प्रतिपत्तिर्नाम – शेषित्वेनास्माकं स एतेऽपि सदृशा इति बुद्धिमकृत्वा कर्मानुगुणं लीलायां च विनियोक्तुः, स्वसमाश्रयणदशायां पुरुषकारापेक्षिणः अभिमतदिव्यस्थलेषु सन्निहितत्वेन स्थितावपि अर्चावतारसमाधिना मुखमुद्धाट्यैकामपि वार्तामनुक्त्वा स्थितात्तस्माद्वैलक्षण्येन— स्वरूपानुगुणमेव विनियोक्तारः, स्वाश्रयणे पुरुषकारनिरपेक्षाः, मुखमुद्धाट्य त्याज्यो-

---

को सर्वप्रकार उद्देश्य आचार्य के साथ इन को समतया समझना । संसारियों से अधिक समझना माने--जात्यादियों से संसारियों के सदृश न समझ ज्ञानादि द्वारा आयी हुई विलक्षणता से उन से अधिक समझना । अपने से अधिक समझना माने--संसारियों से विलक्षणता अपने में भी होनेसे तद्द्वारा अपने समान न समझ अपने को शेषी अत एव अधिक समझना । ईश्वर से अधिक समझना माने--शेषी होनेसे हमें ईश्वर और ये विलक्षण भागवत दोनों बराबर हैं ऐसा न समझ कर्मानुगुण लीला में विनियोग करनेवाले स्वचरणकमलसमाश्रयणदशा में पुरुषकार की अपेक्षा करनेवाले, दिव्यदेशों में संनिधि करनेपर भी अर्चावतार संकल्प से वाचा एक वार्ता न कहनेवाले सर्वेश्वर के सदृश न हो स्वरूपानुगुण विनियोग करनेवाले, स्वाश्रयण में पुरुषकार की अपेक्षा न कर वाचा त्याज्योपादेयों को उपदेश कर रक्षा

आचार्यसाम्यस्य मूलमाचार्यवचनम् ॥ २३० ॥
एवं प्रतिपत्त्यकरणं चापचारः ॥ २३१ ॥

---

पादेयान्युपदिश्य रक्षंति, अतस्तस्मादधिका इति प्रतिपत्तिकरणम् । आचार्येण कस्यापि समत्वबुद्धेरयुक्तत्वे सत्याचार्यसाम्यबुद्धेर्मूलं किमित्याकांक्षायामाह—आचार्येत्यादि ।

आचार्यसाम्यस्य प्रतिपत्तेर्मूलं— श्रीवैष्णवेषु दृष्टेषु मामिव पश्येत' इत्युपदेशसमय आचार्योक्तं वचनमित्यर्थः ।

एवं प्रतिपत्त्यकरणे को वानर्थ इत्यत आह — एवमित्यादि ।

जन्मादिकमादाय निकर्षबुद्धिकरणं यथा वापचारो भवति, तथा गौरवप्रतिपत्त्यकरणं चापचारे पर्यवस्यतीत्यर्थः ।

---

तेष्वाचार्यसमा बुद्धिः सा बुद्धिरिति कीर्तिता ॥ २३० ॥
अर्थोयमितिहासेषु पुराणेषु विशेषतः ॥ २३१ ॥

करनेवाले होनेसे ईश्वर से अधिक समझना ।

आचार्य के साथ किसी को भी समान समझना अयुक्त होनेपर भी आचार्य के सदृश समझने का कारण क्या ? इस शंका में कहते हैं—आचार्य इत्यादि से ।

आचार्यसाम्य का कारण आचार्य वचन है ॥ २३० ॥

आचार्यसदृश समझनेका कारण—'श्रीवैष्णवों को देखनेपर हम को देखनेके सदृश देखना' ऐसा उपदेशसमय में आचार्य की कहीहुई वार्ता ।

ऐसा नहीं समझनेपर क्या अनर्थ होगा ? इस शंका में कहते हैं—ऐसा इति

ऐसा नहीं समझना भी अपचार है ॥ २३१ ॥

जन्मादियों को अवलंबनकर निकृष्टसमझनेमें जैसा अपचार होता है तैसा गौरव बुद्धि से नहीं समझना भी अपचार में गिना जायगा ।

**अयमर्थं इतिहासपुराणेषु, पयिलुंशुडरोलि नेडुमालुकाडिमै, कण्णोरवेंगुलदि, नण्णातवालवुणर् तेहरुतिरुत्तेन्, मेंवोरुळ् इत्यस्या उपरितनगाथासु च विशदतया दृश्यते ॥ २३२ ॥**

---

एवमयं भागवतवैभव आप्तवचनेषु विशदतया क दृश्यते? इत्यत आह–अयमर्थं इतिहासपुराणेष्वित्यादि ।

अयमर्थ इति— पूर्वं विस्तरेणोक्तो भागवतवैभवः परामृश्यते । महाभारते—

'मद्भक्तं शूद्रसामान्यादवमन्यंति ये नराः ।
नरकेष्वेव तिष्ठंति वर्षकोटीर्नराधमाः ॥

---

आचार्यतुल्यताबीजमाचार्यस्य वचः स्मृतम् ।
अपचारो भवेद्देवमध्यवसायवर्जने ॥२३२॥
अर्थोऽयमितिहासेषु पुराणेषु विशेषतः ।

इस प्रकार इन भागवत वैभव को आप्तवचनों में स्पष्ट देख सकते हैं क्या ? इस शंका में कहते हैं– इस अर्थ को इतिहासपुराणों में इत्यादि ।

इस अर्थ को इतिहासपुराणों में, पयिलुं शुडरोलि, नेडुमालुकाडिमै, कण्णोर, वेंगुरुदि, नण्णाद वालवुणर्, तेहरु तिरुत्तेनिल्, मेंवोरुळ् इस गाथा के ऊपर गाथाओं में भी सुस्पष्ट देख सकते हैं ॥ २३२ ॥

इस अर्थ को—पहिले विस्तारपूर्वक उक्त भागवतवैभव को ।

'जो मनुष्य हमारे भक्त को शूद्रसम समझ कर अपमान करते हैं, वे नराधम करोडों वरसों तक नरक में वास करेंगे, बुद्धिमान को चाहिये कि चंडाल हो

चण्डालमपि मद्भक्तं नावमन्येत बुद्धिमान् ।
अवमानात्पतत्येव रौरवे नरके हि सः ॥'

इत्यादिना,

'न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः ।
सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने ॥'

इत्यादिना,

'मद्भक्तजनवात्सल्यं पूजायां चानुमोदनम् ।
स्वयमभ्यर्चनं चैव मदर्थे दंभवर्जनम् ॥
मत्कथाश्रवणे प्रीतिः स्वरनेत्रांगविक्रिया ।
ममानुस्मरणं नित्यं यश्च मां नोपजीवति ॥
भक्तिरष्टविधा ह्येषा यस्मिन् म्लेछेपि वर्तते ।
स विप्रेंद्रो मुनिः श्रीमान् स यतिः स च पंडितः ॥
न मे प्रियश्चतुर्वेदी पूजयन् भक्तिवर्जितः ।

---

तो भी हमारे भक्त को अपमान न करें, अपमान करनेसे वह रौरवनरक में गिरता ।'

इत्यादि से,

'शूद्र भगवद्भक्त होनेपर शूद्र नहीं कहलावेगा विप्र भागवत कहलावेगा, जो लोग जनार्दन के भक्त नहीं हैं वेही सब वर्णों में शूद्र कहलाते हैं ।'

इत्यादि से,

'हमारे भक्तों में वात्सल्य, उन की पूजा में अनुमोदन, स्वयं उन को पूजा करना, हमारे लिये दंभ त्याग, हमारी कथा सुननेमें प्रीति, स्वर नेत्र अंगों के विकार, नित्य हमारा स्मरण और हम को जीविका के लिये नहीं बनावें—यह आठ प्रकार की भक्ति जिस किसी म्लेच्छ में भी हो वही ब्राह्मण श्रेष्ठ, मुनि, श्रीमान, यति, और पंडित है, चतुर्वेदी भक्तिरहित हो

स मे पूज्यः सदा चासौ मद्भक्तः श्वपचोऽपि यः ॥
तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम् ॥'

इत्यादिना बहुस्थलेषु च भागवतवैभवः प्रतिपादितः ।

इतिहासोत्तमे–

'शूद्रं वा भगवद्भक्तं निषादं श्वपचं तथा ।
वीक्षते जातिसामान्यात्स याति नरकं नरः ॥'

इत्यादिना भागवतप्रभावः प्रकीर्तितः । अन्यत्र चेतिहासे बहुस्थलेषु भागवतमाहात्म्यप्रतिपादनं तत्र तत्र द्रष्टव्यम् ।

श्रीवराहपुराणे—

'मद्भक्तं श्वपचं वापि निंदां कुर्वन्ति ये नराः ।
पद्मकोटिशतेनापि न क्षमामि कदाचन ॥'

इत्यादिना भागवतवैभवः प्रोक्तः ।

---

पूजा करनेसे भी हम पूज्य नहीं समझते हैं, श्वपच हो तो भी
हमारे भक्त सदा हम को पूज्य हैं, उन को ज्ञानोपदेश करो,
उन से ज्ञानोपदेश लो, उन को हमारे सदृश पूजन करो ॥'

इत्यादि से बहुस्थलों में भागवतवैभव प्रतिपादन कियागया है ।

इतिहासोत्तम में—

'शूद्र, निषाद वा श्वपच हो तो भी हमारा भक्त को
जातिसामान्य से जो देखता है वह नरक में जायगा ॥'

इत्यादि से भागवतवैभव कहागया है ।

और इतिहास के बहुस्थलों में—भागवतमाहात्म्य प्रतिपादन स्थलों में देखलेना ।

श्रीवराहपुराण में—

'हे भूमिदेवी ! श्वपच हो तो भी हमारा भक्त को जो मनुष्य
निंदा करते हैं क्रोडों पद्मशत वर्षोंतक भी मैं क्षमा न करूंगा ॥'

इत्यादि से भागवतवैभव कहागया है ।

श्रीभागवते–

'श्वपचोऽपि महीपाल विष्णुभक्तो द्विजाधिकः।
विष्णुभक्तिविहीनस्तु यतिश्च श्वपचाधमः॥'
विप्राद्द्विषड्गुणयुतादरविंदनाभ
पादारविंदविमुखाच्छ्वपचं वरिष्ठम्।
मन्ये तदर्पितमनोवचनेहितार्थ–
प्राणः पुनाति सकलं न तु भूरिमानः॥'

इत्यादिना भागवतवैभवो बहुषु स्थलेष्वभिहितः।

लैंगे–

'वैष्णवानां विशेषोऽस्ति विष्णोरायतनं महत्।
जङ्गमश्रीविमानानि हृदयानि मनीषिणाम्॥
यः पश्यति शुभाचारं वैष्णवं वीतकल्मषम्।
यस्मिन् कस्मिन् कुले जातं प्रणमेद् दंडवद्भुवि॥'

---

श्रीभागवत् में––

'हे राजन्! श्वपच हो तो भी विष्णुभक्त ब्राह्मण से अधिक है। विष्णुभक्ति रहित यति भी श्वपच से अधम होता है॥'

षड्गुणसंपन्न ब्राह्मण कमलनाभ नारायण के विमुख हो तो उस से श्वपच को श्रेष्ठ जानो। परमात्मा में समर्पित मनवचनवांछितार्थ और प्राण जिन से वह संपूर्ण पृथिवी को पवित्र करता हैं, अभिमान से भरा हुआ कभी नहीं पवित्र करसक्ता है'

इत्यादि से भागवतवैभव बहुस्थलों में कहा गया है।

लिंगपुराण में भी––

'वैष्णवों में विशेष यह है कि वे लोग विष्णु के महत् मंदिर हैं, भक्तलोगों के हृदय विष्णु के चलंत विमान हैं जो पुरुष कल्मषरहित शुभाचारी जिस किसी कुल में जन्म लेनेवाले वैष्णव को देखता है वह उसी वखत भूमि में दंडा के सदृश प्रणाम कर कृतार्थ होना चाहिये।

इत्यादिना भागवतवैभवः प्रतिपादितः ।

एवं भागवतमाहात्म्यप्रतिपादनस्य बहुषु पुराणेषु सत्त्वात् तत्र तत्र स्थलेषु द्रष्टव्यः । इतिहासादिषूपात्तवचनेषु भागवतेषु जन्मनिरूपणेनावमतिकरणे जायमानोऽनर्थविशेषः— यदा भागवता जातास्तदैव तेऽपकृष्टजातीया न भवंति उत्कृष्टजातीयतुल्या इत्यर्थः । उत्कृष्टजातीयेभ्योऽपि श्रेष्ठास्तेषां ज्ञानप्रदातृतया गुरवः परमशेषीश्वरवत् पूज्याश्च भवंतीत्यर्थः । तद्विषयेऽपचारमीश्वरः कालतत्त्वपर्यंतं न क्षमत इति करणत्रयव्यापारानर्थान्प्राणादींश्चाविशेषेण भगवद्विषये समर्प्य निरभिमानतया वर्तमानाः स्पर्शपावना इत्यर्थः । तेषां हृदयमीश्वरस्य जंगमविमानमित्यर्थः । तं दृष्ट्वाश्चेद् दण्डवत्प्रणामं कुर्यादित्यर्थश्चोक्तः खलु ।

---

इत्यादि से भागवतवैभव प्रतिपादन किया गया है ।

इस प्रकार भागवतवैभव प्रतिपादन बहुत पुराणों में होनेसे उन उन स्थलों में देखना ।

इतिहासादियों में से लिये हुये वचनों में भागवतों को जन्मनिरूपण कर अपमान किये तो होनेवाले अनर्थविशेष, भागवतत्व होनेपर वे अपकृष्टजातीय नहीं है उत्कृष्टजातीय सदृश हैं, उत्कृष्टजातीयों में भी श्रेष्ठ हैं, उन को ज्ञानोपदेश करनेवाले होनेसे गुरु हैं, परमशेषी ईश्वर के तरह पूज्य भी होते हैं इस अर्थ को, उन के विषय में अपचार को कालतत्वपर्यंत ईश्वर नहीं सह सक्ते करणत्रय व्यापार, अर्थ, और प्राण इन सब को भगवद्विषय में समर्पण कर निरभिमान हो रहनेवाले स्पर्श से पवित्र करते हैं उन के हृदय ईश्वर को जंगम विमान हैं, उन को देखे तो दंडवत्प्रणाम करना इत्यादि अर्थों को भी कहे हैं । इस प्रकार इतिहास

एवमितिहासपुराणेषु परांकुशैः 'क्षीरसमुद्रे स्थितस्य सर्वाधिकस्य परिचर्योपयुक्तसंपद्विशिष्टाः— अतिनिबिडजन्मनां प्रत्यवकाशं अस्माकं नियन्तारः स्वामिनः' इत्यारभ्य भगवद्गुणचेष्टितादिषु प्रवणा भागवता एव स्वस्य शेषिण इत्यर्थस्य प्रतिपादनस्थले— 'ये केचन वा ते खलु' 'कुम्भीपाकनरकाः स्तुवन्ति चेत् ते खलु' 'यत्किंचित् समीचीनेनापि रहिताश्चंडालचंडाला अपि' इति जन्मादिभिः सर्वथा नीचा अपि शेषत्वविरोधिजन्माद्यभिमानरहिताः खल्वस्माकमत्यंतमुद्देश्या इत्युक्ते 'अभिवर्धमानप्रभावद्दशके, 'क्रूरमहापापविशिष्टोऽहं त्वद्दासानां चरणयोः प्राप्तिं विना विस्मयनीयत्रैलोक्यं प्राप्तं चेदपि त्यागमार्गं इति खलु किंह,' इत्यारभ्य भागवताः स्वस्य परमप्राप्या इति प्रतिपादनस्थले जन्मवृत्तादिविभागं विना 'स्वयमेव शेषत्वे सुस्थिरं स्थिताः' 'तस्य दासाः' 'मणिपर्वतव-

---

पुराणों में शठकोपसूरि — 'क्षीराब्धि में शयन किये हुए परमपुरुष को अभ्यास करनेके भाग्यवाले जन्म जन्म में हमारे मालिक हैं' ऐसा प्रारंभ कर भगवद्गुण चेष्टितादियों में प्रवण भागवत लोग ही हम को मालिक ऐसा अर्थ को प्रतिपादन करनेके समय 'कोई हो वे ही' 'कुंभीनरक में रहनेवाले भी परमात्मा को कीर्तन किये तो वही' कितना भी सुकृतरहित चंडाल चंडाल हो तो भी' ऐसा जन्मादियों से कितना भी नीच हो तो भी शेषत्वविरोधि जन्माद्यभिमानरहित भागवतलोग हम को अत्यंत उद्देश्य हैं ऐसा प्रतिपादित 'अभिवर्धमानप्रभावत्तेजः' दशक में, क्रूर महापापी उन के दासों के चरण में संगमन विना आश्चर्यकर तीन लोकों की प्राप्ति से भी छोड सक्ते हैं क्या ? ऐसा प्रारंभ कर भागवत ही अपने को परमप्राप्य हैं इस अर्थ के प्रतिपादनके समय जन्मवृत्तादि विभाग को छोड 'दास्य में अनन्य' 'उन के दास लोग,' मणिपर्वतसदृश शयन करनेवाले स्वामी के

च्छयानस्याश्रिताः' 'निर्दोषा दासाः' 'विश्लेषाशक्ता दासाः' इति भगवत्सौंदर्यादिषु जितस्वरूपाकार एव तेषां निरूपक इत्युक्ते—महतो व्यामोहवतो दशके ।

परकालैः— 'शीतलसारक्षेत्रनिर्वाहकस्य मत्स्वामिनश्चरणावाश्रयंतो मन्मस्तके स्थिताः पश्यत' इत्यारभ्यार्चावतारप्रवणाः श्रीवैष्णवा मच्छिरसा वाह्याः सदा ध्येयाः सूरिभ्योऽपि कैंकर्यसमृद्धिविशिष्टाः, तान् क्षणकालमपि विश्लेष्टुमक्षमः तेषां मम हृदयं मधुस्रोतः सदा भोग्यं भवति तद्दर्शनमात्रेण खलु मन्मनो दृष्टयो हृष्टा भवंति, तद्विषये भवति ममानुरागः, तेषु मनसा स्मृतेषु मृत्योरापदश्च न भेतव्यमिति, मम हृदयस्य तद्विषयेऽवगाहनप्रकारमपश्यत किमित्येवमुक्तस्थले जन्मादिप्रसंगं विनोक्ते कण्शोरवेंकुरुदि दशके, 'कडल्मल्लै स्थल-

---

दासलोग, 'अवद्यरहित दासलोग' 'विच्छेदरहित दासलोग' ऐसा भगवत्सौंदर्यादियों में हारनेवाले आकार ही उन भागवतों का निरूपक है ऐसा कहाहुआ 'व्यामोहवतः' दशक में ।

परकालसूरि 'शीतल सारक्षेत्र के नाथ के चरणसेवक ही हमारे शिर में वास करते हैं' ऐसा प्रारंभ कर अर्चावतार में प्रवण श्रीवैष्णव ही हम को शिरोधार्य हैं सदा ध्यानके योग्य हैं, नित्यसूरियों से भी कैंकर्यसमृद्धिवाले हैं, उन को एक क्षणकाल भी नहीं छोडसक्ता हूं, उन के विषय में हमारे हृदय मधु च्यूतहुआ भोग्य होता है उन को देखते मात्र ही हमारे मन और दृष्टि कैसे संतुष्ट हो प्रफुल्ल होते हैं देखो हमारे प्रेम उन के विषय में बढ रहा है, उन को मन से स्मरण करने पर मृत्यु और पाप को न डर निर्भय होता है, हमारे हृदय उन के विषय में मग्न होता है देखो, ऐसा कहनेके स्थलों में जन्मादिप्रसंग को छोड कहाहुआ कण् शोर वेंगुरुदि ( नेत्रभ्रमण ) में, तिरुक्कडल्मल्लै स्थलशयन को जो कोई स्मरण करते हैं वे ही हमारे मालिक हैं ऐसा जिस किसी जन्म और वृत्तवाले हो तिरु-

शयनस्य ये चिंतनोपयुक्तं मनोविशिष्टास्ते मम नियामकाः' इति येन केन चेज्जन्मवृत्तादिना युक्ता वा स्युः श्रीकडलमल्लै स्थलशयनमनुसंदधतः स्थितप्रकारेषु प्रमाणमप्रदर्श्य मत्तः कार्यं स्वीकर्तुं समर्थाः इत्यारभ्य ज्ञानस्वरूपं 'चिंतयतो मम स्वामिनः' 'तेऽस्माकं कुलदैवतम्' इत्यभिमतस्थले प्रवणा एवास्माकं शेषिण इत्युक्ते—नण्णादवालवुगरिति दशके ।

श्रीकुलशेखरेण 'यथार्थदासानां समुदायो द्रष्टुं सुलभश्चेत्तदेव नेत्रफलम्' 'भक्तानां श्रीपादरेणुस्नानाहितुं प्राप्तश्चेद्गंगातीर्थेऽवगाहने उत्कटेच्छा किमर्थं' इत्यादिभिः स्वस्य भागवतप्रेमप्रकर्षप्रतिपादनसमये जन्माद्युत्कर्षापकर्षप्रसंगं विना भगवद्भक्तिपारवश्यमेव तेषां निरूपकमित्युक्ते तेट्टरुंतिरत्तेनिति गाथायाम् ।

श्रीभक्तांघ्रिरेणुभिर्द्वयनिष्ठविषये ईश्वरस्य विद्यमानायाः प्रीतेः

---

कडलमल्लै स्थलशयनभगवान को अनुसंधान करनेवाले स्थितप्रकार ही प्रमाण दिखाये विना ही हमने कैंकर्य स्वीकार करनेके समर्थ हैं। ऐसा प्रारंभ कर 'ज्ञान प्रभावत् विग्रह को स्मरण करनेवाले हमारे नायक हैं' 'वे ही हमारे कुलदेवता हैं' ऐसा दिव्यदेशों में प्रवण भागवत ही हमारे शेषी हैं ऐसा कहाहुआ 'नण्णाद वालवुगर' (अनाश्रितराक्षस) दशक में,

श्रीकुलशेखरस्वामी—'सत्यभूत दासों के समूह को देखनेके प्राप्त हो तो वही नेत्रों की सफलता है' 'भक्तों के चरणधूलि में स्नान प्राप्त हो तो गंगा में अवगाहनकर स्नान करनेकी इच्छा क्या होगा?' इत्यादि से भागवतों के विषय में अपना प्रेमाधिक्य को प्रतिपादन करनेके समय जन्मादियों के उत्कर्ष और अपकर्ष के प्रसंग छोड भगवद्भक्ति के परवश होना ही उन के निरूपक है एसा कहा हुआ 'तेट्टरुं तिरत्तेन्' (मधुतिरस्कारक) में,

'श्रीभक्तांघ्रिरेणुसूरि द्वयनिष्ठों के विषय में ईश्वर का विद्यमान प्रीति को कहा

उत ज्ञानाधिक्यं पश्याम, किं कुर्म इति व्याकुले सति

'धर्मराजस्तु तत्रैनं संचस्कारयिषुस्तथा ।
दग्धुकामोऽभवद्विद्वानथाकाशे वचोऽब्रवीत् ।
भो भो राजन्न दग्धव्यमेतद्विदुरसंज्ञकम् ।
कलेवरमिहैतत्ते नैष धर्मः सनातनः ।
लोकवैलक्षणो नाम भविष्यत्यस्य पार्थिव ।
यतिधर्ममवाप्तोऽसौ न शोच भरतर्षभ ॥

इति, अयं ब्रह्ममेधसंस्करार्ह इत्युक्ताशरीरिवाक्येन संप्रतिपन्नेन तस्य ज्ञानाधिक्येन च संदेहनिवृत्त्या वैदिकाग्रेसराणां कर्तव्येन ब्रह्ममेधेन संचस्कार हि ।

अनंतरं जन्माद्युत्कृष्टै ऋषिभिः कृतं तदपकृष्टाद्धर्मश्रवणप्रकारमाह— ऋषय इत्यादिना ।

---

देखना और ज्ञानाधिक्य को देखना इस विषय में हमें कर्तव्य क्या है ऐसा विचार व्याकुल होनेके समय—

'विद्वान् धर्मराज विदुर को संस्कार करनेकी इच्छा से दहन करनेको विचार करतेभये, तब आकाश में वाणी हुई—भो भो राजन् ! विदुरनामक इस शरीर को सामान्यरीति से नहीं दहन करो । यह सनातन धर्म नहीं है । हे राजन् इस का शरीर लोकविलक्षण है यह विदुर यतिधर्म को प्राप्त हुआ है, इस में शोक मत करो ॥'

इस प्रकार यह विदुर ब्रह्ममेधसंस्कार के योग्य हैं ऐसा कही हुई वाणी को सुननेसे और इन का ज्ञानाधिक्य को जाननेसे भी संशय छोड वैदिकाग्रसरो को कर्तव्य ब्रह्ममेधसंस्कार से संस्कार किये हैं ।

अनंतर जन्माद्युत्कृष्ट ऋषिलोग जन्मादिकों से निकृष्ट की संनिधि में धर्मश्रवण किये हैं ऐसा कहते हैं—ऋषिलोग इत्यादि ।

ऋषयो गत्वा धर्मव्याधगृहद्वारे श्रांता
धर्मसंदेहान् प्राशमयंत ॥ २३७ ॥

---

चतुर्वेदधराः सर्वोत्कृष्टाः खलु ऋषयः। एवंभूता वेदश्रवणयोग्यतारहिते कुले जातस्य जातिस्मृतिना सह जातत्वात्पूर्वजन्मसिद्धज्ञाने भ्रंशाभावान्मातापितृशुश्रूषाविशेषेण च सकलधर्मसूक्ष्मज्ञस्य धर्मव्याधस्य गृहद्वारे गत्वा मातापितृशुश्रूषैकपरस्यास्यावसरप्रतीक्षया परिश्रांता ज्ञातव्येषु धर्मेषु स्वेषां संदिग्धान् सर्वान् तस्माच्छ्रुत्वा तत्र संदेहान् प्राशमयंतेत्यर्थः।

'कश्चिद् द्विजातिप्रवरो वेदाध्यायी तपोधनः।
तपस्वी धर्मशीलश्च कौशिको नाम भारत! ॥
सांगोपनिषदान् वेदानधीते द्विजसत्तमः।
स वृक्षमूले कस्मिंश्चिद्वेदानुच्चारयन् स्थितः ॥

---

धर्मव्याधगृहद्वारे गत्वा श्रान्तास्तपोधनाः।
प्राशमयन्त धर्माणां सन्देहान् केन न श्रुतत् ॥ २३७ ॥

ऋषिलोग धर्मव्याध के द्वारा में व्याकुल
हो धर्मसंदेहों को निवृत्त कर लिये हैं ॥ २३७ ॥

चतुर्वेद को जाननेवाले सर्वोत्कृष्ट ऋषिलोग वेद सुनने को योग्यता जिस को नहीं है एसे कुल में जन्महुआ जातिस्मृती से पूर्वजन्म सिद्ध ज्ञानमें भ्रम रहित मातापितृशुश्रूषा में निरत धर्मव्याध के समय को प्रतीक्षा करते हुए ज्ञातव्य धर्मों में अपने सदेहों को पूंछके निवृत्त करलिये हैं।

'कोई ब्राह्मण श्रेष्ठ वेदाध्ययन करनेवाले तपस्या में निपुण धर्मशील कौशिक नामा सांगवेदों को अध्ययन करते रहे, वह एक वृक्ष मूल में वेदों को उच्चारण

महाराजस्य स्वामी ब्रह्ममेधसंस्कारमकरोत् ॥२३५॥

---

भगवदानुकूल्ये जाते प्राकृताः— अयमस्माकमुपयुक्तो न भवतीति त्यजंति, भगवानत्यादरेण परिगृह्णातीति चार्थ उक्तः।

एवमुक्तिमात्रेण विना भागवतवैभवस्य वृत्त्यापि भगवता प्रकाशितप्रकारमाह— महाराजस्येत्यादिना।

'मर्यादानां च लोकस्य कर्ता कारयिता च सः।'

इत्युक्तप्रकारेण लोकमर्यादास्थापनार्थमवतीर्य पितृवचनपरिपालनादिभिः सामान्यधर्मस्थापनशीलः खलु स्वामी एवंभूते जानकीविश्लेषं दृष्ट्वाऽसहमानतया स्वनाशपर्यंतं कृतवतो महाराजस्य जन्मवृत्तादिभिरुत्कृष्टानां तत्पुत्रैः क्रियमाणब्रह्ममेधसंस्कारं प्रेमाधिक्येन हेतुनानुजेऽपि पार्श्वे तिष्ठति स्वयमेव सादरमकरोद्धि।

---

ब्रह्ममेधेन संस्कारमकरोद्राघवः स्वयम्॥
मर्यादापालको यो वै महाराजजटायुषः॥२३५॥

कहेजानेसे भगवान् के तरफ होते ही प्राकृतलोग 'यह हमारे उपयुक्त नहीं' ऐसा कह छोडदेंगे, भगवान् आदरपूर्वक प्रेम से स्वीकार करेंगे यह अर्थ कहागया।

इस प्रकार उक्तिमात्र से न हो भागवतवैभव को वृत्ति से भी श्रीरामजी प्रकाश किये हैं इस अर्थ को कहते हैं—श्रीजटायु को इत्यादि।

श्रीजटायु को श्रीरामजी ब्रह्ममेधसंस्कार किये हैं ॥ २३५ ॥

'लोक का मर्यादाओं को करने और करानेवाले वही है।' इस उक्ति के अनुसार लोकमर्यादा को स्थापन करनेके लिये अवतार लेकर पितृवचन परिपालनादियों से सामान्यधर्म स्थापन स्वभाववाले श्रीरामजी सीताजी के विश्लेष देख न सह अपने को नाश करलेनेवाले श्रीजटायु को, जन्मवृत्तादियों से उत्कृष्टों को उन के पुत्र और शिष्यगण कर्तृक ब्रह्ममेधसंस्कार को जटायु के प्रेमाधिक्य ही कारण समझ श्रीलक्ष्मणजी पास में खडे होनेपर भी आप ही आदरपूर्वक किये हैं।

धर्मपुत्रोऽशरीरिवाक्यं ज्ञानाधिक्यं चादाय श्रीविदुरं ब्रह्ममेधेन संचस्कार ॥२३६॥

---

अनेन जन्माद्युत्कृष्टैस्तैर्निकृष्टानां विषये पुत्रकृत्यमनुष्ठेयमित्युक्तम् । अमुमर्थं धर्मपुत्रानुष्ठानेनापि विशदयति— धर्मपुत्र इत्यादिना ॥

स्वामिना परार्थं सामान्यधर्मस्यानुष्ठितत्वेऽपि विशेषधर्मे एव हृदयस्याभिनिवेशात्तेन कर्तुं शक्यते, धर्मपुत्रानुष्ठानमेवदुष्करं, वर्णधर्ममेवोद्देश्यत्वेन स्मृत्वा सर्वावस्थास्वपि तस्य च्युतिर्यथा न भवेत्तथा सावधानं प्रवर्तयन् वर्तमानः खल्वयं, एतादृशे तस्मिन् विदुरस्य संस्कारदशायां तस्य वर्णं. पश्याम

---

ज्ञानाधिक्यं च वाक्यं च धर्मपुत्रोऽशरीरिणः ।
आदाय संस्करोतिस्म विदुरं ब्रह्ममेधसा ॥ २३६ ॥

इस से जन्मादि से उत्कृष्ट उन करके रहित विलक्षण भागवतविषय में पुत्रकृत्य करसक्ते हैं—यह अर्थ दिखाया गया ।

इस अर्थ को धर्मपुत्र के अनुष्ठान से भी जनाते हैं—धर्मपुत्र इत्यादि ।

धर्मपुत्र युधिष्ठिर अशरीरिवाक्य और ज्ञानाधिक्य को
भी लेकर श्रीविदुरजी को ब्रह्ममेध से संस्कार किये हैं ॥ २३६ ॥

श्रीरामजी परार्थ सामान्यधर्म को किये हैं तौ भी विशेषधर्म में तात्पर्य रखनेसे वह करसक्ते हैं, यह युधिष्ठिर किये हैं यही दुष्कर है । स्ववर्णधर्म को ही उद्देश्य समझ सर्वावस्थाओं में भी उस सामान्यधर्म को किंचित भी हानि न होनेके लिये सावधानसे रहनेवाले श्री विदुरजी को संस्कार करनेके समय उन के वर्ण को

क्षत्रियकुलोद्भवो विश्वामित्रस्तस्मिन् जन्मनि स्वकृततपोविशेषहेतुना वशिष्ठवाक्येन क्षत्रियत्वानुवृत्तिं विना ब्रह्मर्षिर्जातः खलु ।

तस्मादत्यंतापकृष्टकुलोद्भवा अपि तस्मिन् शरीरेऽनवधिकशक्तिकभगवत्संबंधरूपसंस्कारविशेषेणात्यंतोत्कृष्टकुलजानुवर्त्तनीया उत्कृष्टतमा भवंतीत्यत्र न कोपि विरोधः । अल्पशक्तिवशिष्ठवाक्यकृतप्रकारे दृष्टे सर्वशक्तिकसंबंधः किन्न कुर्यात् ।

इतिहासादिप्रामाण्यमुखेन भागवतवैभवं प्रादर्शयत् पूर्वं, शिष्टानामाचारमुखेन च भागवतवैभवं प्रदर्शयत्युपरि— 'धर्मज्ञसमयः प्रमाणं वेदाश्च' इति आप्तप्रमाणवेदात्पूर्वमुपादानोपयुक्तं खलु शिष्टाचारस्य प्रामाण्यम् । तत्र प्रथममपकृष्टजातीयास्तादृशशरीरेण सजातीयव्यावृत्ता उत्कृष्टतमा भवंतीति पूर्वोक्तार्थं स्थिरीकर्तुं रावणानुजं प्रति स्वामिनोक्तां वार्तामाह—

---

क्षत्रियकुलोद्भूत विश्वामित्र उसी जन्म में अपने कृत तपस्या के विशेष से वसिष्ठवाक्यद्वारा क्षत्रियत्व समूल नाश होकर ब्रह्मर्षि हुआ है । इस कारण अत्यंत अपकृष्ट कुलोद्भव होनेपर भी उसी शरीर से अवधिशून्य शक्तिवाले भगवत्संबंध रूप संस्कारविशेष द्वारा अत्यंत उत्कृष्ट कुल में उत्पन्न होनेवाले भी अनुवर्तन करें जैसा उत्कृष्टतम होते हैं इस में संदेह नहीं है । अल्पशक्तिक वसिष्ठ वाक्य का प्रभाव देखनेपर सर्वशक्ति परमात्मा का संबंध क्या नहीं करेगा अर्थात् सब कुछ भी करेगा ।

इतिहासादि प्रमाणद्वारा भागवतवैभव को दिखाये हैं पहिले, अब शिष्टों के आचारद्वारा भी भागवतवैभव को दिखाते हैं । 'धर्म के ज्ञातालोगों के आचार प्रमाण है और वेद भी प्रामाण हैं' ऐसा आप्तप्रमाण भूत वेद के आगे प्रमाण कहनेयोग्य शिष्टाचार की स्थिति है । उस में प्रथम अपकृष्टजातीय उस शरीर से ही सजातीयों से विलक्षण हो उत्कृष्टतम होते हैं ऐसा पूर्वोक्त अर्थ को स्थिर करनेके लिये रावण का भ्राता विभीषण को उद्देश्य कर श्रीरामजी की कही हुई वार्ता को

**विभीषणं रावणः कुलपांसनमित्यवदत् ,**
**स्वामीक्ष्वाकुवंश्यत्वेन स्मृत्वा वार्तामवोचत् ॥२३४॥**

---

विभीषणमित्यादिना ।

'प्रदीयतां दाशरथाय मैथिली' इति स्वहितमुक्तवंतं धर्मात्मानं विभीषणं पापिष्ठो रावणः कुपितः 'त्वां तु धिक् कुलपांसनम्' इति, अस्य कुलस्यावद्यरूपतयोत्पन्नं त्वां धिगित्युपेक्षितवान् । इक्ष्वाकुकुलनाथः स्वाम्यादरपूर्वकमंगीकारानंतरं–

'आख्याहि मम तत्त्वेन राक्षसानां बलाबलम् ।'

इति राक्षसानां बलाबलं मम वदेत्युक्तत्वादमुं राक्षसजातीयमबुध्वाऽनुजवज्ज्ञात्वाभिमन्य वार्तामवोचादित्यर्थः । अस्मिन् वाक्ये रावणेन परित्यागस्य स्वामिना परिग्रहस्य चोक्तत्वात्–

---

**जगाद रावणः सम्यक् कुलदोषं विभीषणम्**
**इक्ष्वाकुवंशरूपेण स्मृत्वा हि राघवोऽवदत् ॥२३४॥**

कहते हैं–विभीषण को इत्यादि ।

विभीषण को रावण 'कुल का कलंक कहा' स्वामी
श्रीरामजी इक्ष्वाकुवंशवाला समझ बात किये हैं ॥ २३४ ॥

'सीताजी को रामजी के हाथ में सौंप दो' ऐसा अपने को हित कहनेवाले धर्मात्मा श्रीविभीषण सूरि को पापिष्ठ रावण क्रुद्ध हो 'हमारे कुल का कलंक रूप तुम को धिक्कार है' ऐसा इस कुल का कलंकतया जन्म लेने वाला तुम को मैं नहीं चाहता हूं ऐसा कठोरवचन कह निकाल दिया । इक्ष्वाकुकुल के नाथ श्रीरामजी इस को आदरपूर्वक अंगीकार करनेके बाद 'राक्षसों के बल और अबल को मुझे यथार्थ रीति से कहो' ऐसा राक्षसों के बलाबल की स्थिति को हम को कहो कहनेसे इस विभीषण को राक्षसजातीय नहीं समझ भ्राताओं के सदृश समझ बात कहे हैं । इस वाक्य में रावण का परित्याग स्वामी रामजी का परिग्रह ये दोनों

प्रतिपादकस्य मेंबोरुलिति गाथाया उपरि सर्वथा निकृष्टजन्म-
सूत्पन्ना अपि मेंबोरुलिति गाथायामुक्ते ज्ञाने निष्ठावंतश्चेत्तुल-
सीवदीश्वरस्य शिरसा वाह्या इति, जन्मप्रयुक्तापकर्षमात्रं
विना सर्वथापकृष्टवृत्तविशिष्टा अपि एतज्ज्ञाननिष्ठाश्चेत्ताद्दशदु-
ष्कृतफलं नानुभवन्तीति, स्वेषां जन्मवृत्तादिप्रयुक्तन्यूनता
नास्तीत्येतावदेव न स्वैः संबंधविशिष्टाः संसारिणोऽपि स्वप्रसाद-
स्वीकारेण परिशुद्धा भवंतीत्येताद्दशोत्कर्षविशिष्टा इति च,
जन्मवृत्तादिभिर्निकृष्टा अप्येतज्ज्ञानविशिष्टा एतज्ज्ञानविधुराणां
जन्मवृत्तादिभिरुत्कृष्टानां सर्वेश्वरवत्पूज्याः संतो ज्ञानदानप्र-
तिग्रहयोरर्हा इति जन्मवृत्ताद्युपरि ज्ञानाधिकाश्च जन्मवृत्ता-
दिवैलक्षण्येन विनैतज्ज्ञानविशिष्टान् भगवत्प्रभावप्रयुक्तवैल-
क्षण्यमबुध्वा कर्मनिबंधनजन्माद्यपकर्षमेव ज्ञात्वा न्यूनत्वेन
चिंतयंति चेत्तास्मिन् क्षणे ते कर्मचंडाला भवंतीति च, एवं

---

हुआ 'मेंबोरुल्' (उपरिवर्तमानार्थ) इस गाथा के ऊपर कितना ही नीच जन्मों में उत्पन्न होनेपर भी 'मेंबोरुल्' में कहाहुआ ज्ञान में निष्ठावाले हो तो श्रीतुलसी के सदृश ईश्वर का शिरसा धार्य हैं ऐसा जन्म से आयी हुई नीचता मात्र न हो कितना भी नीचवृत्तवाले भी इस ज्ञाननिष्ठावाले हो तो उस दुष्कृतफल को नहीं पावेंगे अपने को जन्मवृत्तादियों से आनेवाले दोष नहीं है इतनामात्र नहीं अपने साथ संबंधवाले संसारीलोग भी अपने प्रसाद स्वीकार से परिशुद्ध हो जैसे उत्कर्ष-वाले हाते हैं, जन्मवृत्तादियों से अतिनीच होनेपर भी एवंभूत ज्ञानवाले इस ज्ञान विहीन हो जन्मवृत्तादियों से उत्कृष्ट होनेवालों को सर्वेश्वर के तरह पूज्य हो ज्ञान दान प्रतिग्रहों को योग्य होते हैं, जन्मवृत्तों के ऊपर ज्ञानाधिक भी होनेवाले जन्मवृत्तादि वैलक्षण्यरहित इस ज्ञानवालों को भगवत्प्रभाव से श्रेष्ट नहीं समझ कर्ममूलक जन्मादि नीचता को ही समझ नीचमानेंगे तो उसी क्षण में वे कर्मचं-

क्षत्रियो विश्वामित्रो ब्रह्मर्षिरभूत् ॥ २३३ ॥

---

प्रतिपादिता अर्थाः संभवंतीति ब्रह्मादीनां दुर्लभं फलं तिर्यग्जातौ जातेन प्राप्त इत्यतः किं वक्तव्यमित्युक्तगाथाषट्के, 'विशदतया द्रष्टुं शक्यते इति— संशयविपर्ययनिवृत्तिर्यथा तथा द्रष्टव्यमित्यर्थः ।

एवमितिहासादिषु भागवतवैभवस्योक्तत्वेपि—

'न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः ।'
'स विप्रेंद्रो मुनिः श्रीमान् स यतिः स च पंडितः ॥'

इत्युक्तविप्रत्वादयोऽर्थवादाः, अपकृष्टजन्मनि तस्मिन् शरीरे कथमुत्कृष्टा भवंतीत्यत आह--क्षत्रिय इत्यादि ।

---

अभ्येधमानके तद्वन्महद्व्यामोहके तथा ।
नेत्रभ्रमणके तद्वद्नादर्य्यसुरे तथा ।
आगन्तुकवपुस्त्यागेऽन्वेषणाशक्यके तथा ।
दशके दृश्यते सम्यक् सूरिवर्यैः प्रसादितः ॥२३२॥
क्षत्रियः कौशिको जातो ब्रह्मर्षिरिति घुष्यते ॥२३३॥

डाल हो जायंगे, इस प्रकार प्रतिपादित अर्थ संभव हैं यह—ब्रह्मादियों के दुर्लभ फल को तिर्यक्जाति में जन्म लेनेवाला पानेपर संदेह है क्या ? ऐसा कहा हुआ छठः गाथाओं में सुस्पष्ट देखसक्के हैं माने—संशयविपरीतज्ञान विना देखसक्ते हैं ।

इस प्रकार इतिहासादियों में भागवतवैभव कहागया तो भी 'भगवद्भक्त शूद्र जातीय हो तो भी शूद्र नहीं समझा जाय विप्र और भागवत समझा जायगा' 'वही विप्रश्रेष्ठ मुनि, श्रीमान , वही यति, वही पंडित हैं' ऐसा कहेहुए विप्रत्वादि अर्थ वाद माने अतिशयोक्ति है वास्तव में अपकृष्ट जन्म वाला उसी शरीर में उत्कृष्ट कैसे हो सक्ता है ? ऐसी शंका में— हो सकने में उदाहरण कहते हैं— क्षत्रिय इत्यादि ।

क्षत्रिय विश्वामित्र ब्रह्मर्षि हुआ है ॥ २३३ ॥

उपरिष्टाच्च वृक्षस्य बलाका सव्यलीयत ।
तया पुरीषमुत्सृष्टं ब्राह्मणस्य तदोरसि ॥

इत्यारभ्य कौशिक इति नामवान् अधीतसांगसशिरस्कसकलवेदः कश्चिद् ब्राह्मणोत्तमः कस्यचित् वृक्षस्य मूले वेदानुच्चारयन् स्थितः, तदा तदुपरि स्थिता काचन बलाका पुरीषमत्यजत्, तत्स्ववक्षस्यपतत्तस्मिन् क्रुद्धे पश्यति तस्यां नष्टायां पतंत्यां तद् दृष्ट्वा तप्तचित्तोऽत्यंतं शोचित्वा रागद्वेषबलात्कृतः सन्नकृत्यमकरवमिति बहुवारं वदन् आसन्ने कस्मिंश्चिद्ग्रामे भिक्षार्थं गत्वा प्रथममेकस्मिन् गृहे भिक्षां देहीत्ययाचत, तदा तद्गृहिण्या तिष्ठागच्छामीत्युक्त्वा करशुद्ध्यादिकं कृत्वा भिक्षामादायागंतुमुद्योगयंत्यां भर्तातिक्षुधार्त आगतः सा पतिव्रतात्वाद्भिक्षाप्रदानोद्योगं विहाय पादाचमनासनादिभिस्तच्छुश्रूषारूपकार्यांतरपरत्वेन ब्राह्मणं विस्मृत्य बहुकालं स्थित्वा पश्चात्तं

करते हुए बैठाथा । वृक्ष के ऊपर बलाका पक्षी उस के ऊपर विष्ठा किया, वह ब्राह्मण के छाती में गिरा ।’

वह ब्राह्मण उस से क्रुद्ध हो उस पक्षी को देखते मात्र पक्षी जलकर नीचे गिरा उस को देख पश्चात्ताप के साथ शोकित हो ‘ रागद्वेष के बल से मैं ने अकृत्य किया हूं’ ऐसा बहुवार कहता हुआ समीपस्थ एक गांव में भिक्षा के लिये जा पहिले एक घर में जाकर ‘ भिक्षां देहि’ ऐसी यांचना करनेपर उस घर की गृहिणी ‘ रहो आती हूं’ कह हाथ धो भिक्षा लानेके समय उस का भर्ता अत्यंत क्षुधा से पीडित हो घर में प्रवेश किया, वह पतिव्रता होनेसे भिक्षा लाना छोड पाद्य आचमनीय आसन प्रदान इत्यादियों से भर्ता की शुश्रूषा में आसक्त होनेसे भिक्षार्थ खडा हुआ ब्राह्मण को भूल बहुत समय बिताई तत्पश्चात् द्वारस्थ ब्राह्मण को देख

ब्राह्मणं दृष्ट्वा कम्पमाना भिक्षामादायागता 'मां तिष्ठेत्युक्त्वैता-वत्कालं कुतो नागतवती'इति तस्मिन् कुप्यति सैनं सांत्वयि-त्वाऽयं क्षंतव्य इति प्रार्थ्याहं भर्ता देव इति वर्तमाना तस्य श्रांत्यागतत्वात्तच्छुश्रूषामकरवामित्यवोचत् । 'तव भर्ता खलु सत्कार्यः ब्राह्मणविषये गौरवप्रतिपत्तिर्नास्ति हि' इति सव्यंग्य-मुक्त्वा गृहधर्मे वर्तमानायास्तवब्राह्मणावमतिरनुचिताखल्वित्य-वदत् । 'साहं कदापि ब्राह्मणस्यावमतिं न कुर्यां ब्राह्मणानां वैभवं सम्यग्जानामीति विस्तरेणोक्त्वायमपराधो क्षंतव्यो भर्तैव देव इति स्थिता तच्छुश्रूषायां परवशाभवं मम पतिशुश्रूषाया वैभवं पश्य, तव रोषेण सा बलाका दग्धा तदपि मम विदि-तमित्युक्त्वा

'क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तम ! ।
यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः ॥'

---

कंपित हो भिक्षा लानेपर वह ब्राह्मण 'हम को खडाकर इतना समय तू भीतर में रह गई इस का कारण क्या ? ऐसा क्रुद्ध होनेपर वह स्त्री उस को आश्वासन दिला कर, 'इस अपराध को क्षमा कीजिये' ऐसी प्रार्थना कर 'मैं भर्ता को देवता समझनेवाली हूं वह परिश्रांत हो आनेसे उन की शुश्रूषा में लग गई थी' ऐसा कहनेपर 'तुम को भर्ता ही सत्कार करनेके योग्य है, ब्राह्मणों के विषय में गौरव बुद्धि नहीं है' ऐसा व्यंग्यवचन कह 'गृहस्थ धर्म में रहनेवाली तुम को ब्राह्मणों को अपमान करना उचित नहीं' ऐसा कहा । 'मैं कभी ब्राह्मणों का अपमान नहीं करती, ब्राह्मणों के समस्तवैभवों को जानती हूं' ऐसा विस्तार पूर्वक कह 'इस अपराध को क्षमा कीजिये भर्ता को ही देवता माननेसे उन की शुशूषा में परवश होगई हूं इतना ही, हमारी पतिशुश्रूषा के प्रभाव को देखो ! तुमारी क्रोधदृष्टि से वह वक दग्ध होगया है सो भी मैं जानती हूं' ऐसा कह—

'हे ब्राह्मणश्रेष्ठ ! मनुष्यों के क्रोध ही शरीर के भीतर रहनेवाला शत्रु है, जो मनुष्य क्रोध और मोह को छोडता है उसे देवता लोग ब्राह्मण जानते हैं' ऐसा

इत्यारभ्य कोपादयो ब्राह्मणस्यानुचिताः सत्यार्जवाद्य आवश्यका इति विस्तरेण स्वयं प्रतिपाद्य,

'भवानपि च धर्मज्ञः स्वाध्यायनिरतः शुचिः ।
नतु तत्त्वेन भगवन् धर्मान् वेत्सीति मे मतिः ॥
मातापितृभ्यां शुश्रूषुः सत्यवादी जितेंद्रियः ।
मिथिलायां वसन् व्याधः स ते धर्मान्प्रवक्ष्यति ॥
तत्र गच्छस्व भद्रं ते यथा कामं द्विजोत्तम ।
व्याधः परमधर्मात्मा स ते छेत्स्यति संशयान् ॥'

इति त्वमपि धर्मज्ञः वेदाध्ययननिरतः शुद्धस्तथापि धर्मान् याथातथ्येन न जानासीति मम बुद्धिः, मातापितृशुश्रूषुः सत्यवादी जितेंद्रियः सन् मिथिलायां वर्तमानो व्याधस्तव धर्मान् ब्रूयात्तत्र गच्छ तव शुभो यथा स्यात्तथा परमधर्मात्मा स व्याधो यथेष्टं तव संशयान् सर्वान् दूरीकुर्यादित्यवदत् । स प्रीतः सन्निमामत्यंतं स्तुत्वा ततो मिथिलां गत्वा—

'पंचकानि पवित्राणि शिष्टाचारेषु नित्यदा ।
एतन्महामते व्याध प्रब्रवीहि यथातथम् ॥

---

प्रारंभकर 'ब्राह्मणों को कोप करना उचित नहीं सत्य आर्जव आदि गुण होना चाहिये' ऐसा विस्तारपूर्वक प्रतिपादन कर—

'आप भी धर्म जानते हैं वेदाध्ययन में आसक्त हो शुचि हो किन्तु धर्मों को यथार्थ रीति से नहीं जानते ऐसा मैं समझती हूं, मातापितृ शुश्रूषातत्पर सत्यवादी जितेंद्रिय व्याध मिथिला में वास करता है वह तुम्हे धर्मोपदेश करेगा, वहां तुम जाओ तुमारा मंगल हो परमधर्मात्मा वह व्याध तुमारे संशयों को दूर करेगा' ऐसा कहनेपर वह ब्राह्मण संतुष्ट हो उस पतिव्रता की प्रशंसा कर वहां से मिथिला में जा पूंछताभया—'हे महामते ! व्याध ! शिष्टाचारों में प्रतिनित्य पांच पवित्र कहे जाते हैं उस का तत्व मुझ को सुनाइये ।'

इति शिष्टाचारेषु सदा वर्तमानानि पवित्राणि पंचकानि, हे महामते! एतद् वक्तव्यमित्यपृच्छत् ।

'यज्ञो दानं तपो वेदाः सत्यं च द्विजसत्तम ।
पंचैतानि पवित्राणि शिष्टाचारेषु नित्यदा ॥'

इति यज्ञः दानं तपः वेदाः सत्यं चैतानि पवित्राणि पंच शिष्टाचारेषु सर्वदा वर्तंत इत्यादिभिः सोऽमुमर्थमुपदिदेश एवमुत्तरोत्तरं स्वसंशयान् सर्वान् पृच्छति उपदेशमुखेन सकलसंशयानपि धर्मव्याधो दूरीचकारेत्ययमर्थो धर्मपुत्रस्य मार्कंडेयेनानुगृहीत इत्यारण्यपर्वणि द्विशततमाध्यायप्रभृति त्रयोदशभिरध्यायैर्विस्तरेणोक्तः। किंचैवं बहवोऽस्य द्वारि श्रांता धर्मसंदेहं निवर्तितवंत इति बहुषु स्थलेपूक्तम् । अनेन जन्माद्युत्कृष्टानां तदपकृष्टानां ज्ञानाधिकानां द्वारि श्रमं प्राप्य ज्ञातव्यार्थश्रवणे न्यूनता नास्तीत्युक्तम् ।

---

इस के उत्तर में—

'हे ब्राह्मणश्रेष्ठ ! यज्ञ, दान, तपस्या, वेद और सत्य ये पांच शिष्टाचारों में नित्य ही पवित्र कहलाते हैं ।'

ऐसा वह उपदेश करनेपर अन्यान्य अपनी संशयों को पूंछनेपर उपदेशद्वारा सकल धर्म संशयों को भी धर्मव्याधने दूर किया इस वृत्तांत को मार्कंडेयने युधिष्ठिर को सुनाया, यह आरण्य पर्व के २०० वां अध्याय से लेकर १३ अध्यायों में विस्तारपूर्वक कहा गया है । और भी इसी प्रकार अनेक ऋषियों ने व्याध के द्वार में व्याकुल हो धर्मसंदेहों को दूर करालिया । इस से जन्मादि से उत्कृष्टलोगों को जन्मादि से अपकृष्ट भी ज्ञानाधिक होतो उन के द्वार में क्लेश पाकर भी ज्ञातव्य अर्थों को सुननेमें विरोध नहीं यह सूचित हुआ ।

श्रीकृष्णो भीष्मद्रोणादीन्
विहाय विदुरगृहे भुक्तवान् ॥२३८॥

---

अनंतरं 'यद्यदाचरति श्रेष्ठः' इति कृष्णस्याचारप्रकारमाह—कृष्ण इत्यादिना ।

धर्मसंस्थापनार्थमवतीर्य—

'लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि'

इति ज्ञानिनामपि लोकसंग्रहं दृष्ट्वा वर्णाश्रमधर्माः सम्यगनुष्ठेया इत्युपदिश्य,

,यदि ह्यहं न वर्तेयं जातु कर्मण्यतंद्रितः ।
मम वर्त्मानुवर्तंते मनुष्याः पार्थ सर्वशः ॥,

इत्येकवारं कर्मणि तंद्रां विहाय न प्रवर्ते चेत् मनुष्याः सर्वे मन्मार्गमनुगच्छेयुरिति परार्थं स्वयं लक्षित्वानुतिष्ठत्स्वभावः

---

भीष्मद्रोणादिकान् हित्वा श्रीविदुरस्य वेश्मनि ॥२३८॥

अनंतर जिस जिस को श्रेष्ठ पुरुष करते हैं ऐसा कहने वाले श्रीकृष्ण के आचार को कहते हैं—कृष्ण इत्यादि ।

श्रीकृष्ण भीष्मद्रोणादियों का घर छोड
विदुर के श्रीगृह में भोजन किये हैं ॥ २३८ ॥

धर्मसंस्थापन के लिये अवतार ले 'लोकसंग्रह के लिये भी धर्मानुष्ठान करना चाहिए' ऐसा ज्ञानी होनेपर भी लोकसंग्रह को देख वर्णाश्रमधर्मों को यथावत् अनुष्ठान करना चाहिये ऐसा उपदेश कर—

' कर्मानुष्ठान में सावधान न होऊं तो और लोग हमारे ही अनुष्ठान को

खलु कृष्णः एवंभूतः दौत्येन गमनसमये

'भीष्मद्रोणावतिक्रम्य मां चैव मधुसूदन ।
किमर्थं पुंडरीकाक्ष भुक्तं वृषलभोजनम् ॥'

इत्युक्तप्रकारेणोत्कृष्टवर्णवृत्तानामत्रागामिष्यतीति प्रतीक्षया स्थितानां भीष्मद्रोणादीनां गृहमुपेक्ष्य वर्णाद्युत्कर्षरहितः स्यात् एवात्रागामिष्यतीति विचारेण च रहितस्य श्रीविदुरस्य गृहे -सादरं गत्वा-

'संभ्रमैस्तुष्य गोविंद एतन्नः परमं धनम् ।'

इति भक्तिपरवशेन तेन कृतान् संभ्रमान् सर्वान् दृष्ट्वा प्रीतः सन्

'विदुरान्नानि बुभुजे शुचीनि गुणवंति च ।'.

इत्युक्तप्रकारेणाहंकारानुपहतत्वात् परमपावनं भक्त्युपहृतत्वात्परमभोग्यं तत् तादृशपावनत्वभोग्यत्वहेतुनात्यादरेण भुक्तवान् खलु ।

---

करेंगे' ऐसी परार्थ जागरूक हो अनुष्ठान करनेके स्वभाववाले श्रीकृष्ण दूत्यार्थ जानेके समय—

'हे मधुसूदन भीष्म, द्रोण और मुझ को भी अतिक्रम कर शूद्र के घर में क्यों भोजन किये हो ? ।' ऐसा उत्कृष्टवर्ण और आचारवाले 'हमारे घर पधारेंगे' ऐसा विचारते हुए भीष्मादियों के गृहों को छोड वर्णादिउत्कर्ष रहित अतएव 'यहां पधारेंगे' ऐसा विचार विना स्थित श्रीविदुरजी के घर में आदरपूर्वक जा 'हे गोविन्द ! हमारे प्रेम से आप संतुष्ट होओ, प्रेम ही हमारा परम धन है। ' ऐसा भक्तिपरवश विदुरकर्तृक प्रेमव्यापारों को देख संतुष्ट हो 'शुचि और गुणवंत विदुर के अन्न को भोजन किये हैं' इस वचनानुसार अहंकार से नष्ट न होनेसे परमपावन और भक्ति से समर्पित होनेसे परमभोग्य अन्न को पावनत्व भोग्यत्व द्वारा अत्यादरपूर्वक भोजन किये हैं।

## स्वामी शबरीहस्तेन भुक्तवान् ॥२३९॥

---

एतत्पूर्वावतारे चैवमनुष्ठितप्रकारमाह—स्वामीत्यादिना ।

रघुकुलतिलक आचारप्रधानः स्वामी–

'शबर्या पूजितः सम्यग्रामो दशरथात्मजः ।'

इत्युक्तप्रकारेण शबरस्त्रियां गुरुशुश्रूषया परिपक्वज्ञानाधिकायां स्वजिह्वाया भोग्यभूतानि फलमूलादीनि सर्वाण्येतदर्थमिति संचीय आगमनं प्रतीक्ष्य स्थितायां श्रीशबर्यां स्वादरानुगुणं स्वहस्तेन भोजयंत्यामतिसंतुष्टो भुक्तवानित्यर्थः । अनेनाभिजनादिभिः प्रयुक्ताभिमानरहितानां ज्ञानप्रेमाधिकानामभिमानस्पर्शवदात्मगुणैकदर्शिनां विशेषज्ञानामतिपावनभोग्यमिति दर्शितम् ।

---

## श्रीकृष्णो भुक्तवान् स्वामी शबरीकरभुक्तवान् ॥२३९॥

इस के पहिले अवतार में भी इस प्रकार के अनुष्ठान को दिखाते हैं—श्रीरामजी इत्यादि ।

श्रीरामजी शबरी के हाथ से भोजन किये हैं ॥ २३९ ॥

रघुकुलतिलक आचारप्रधान श्रीरामजी 'शबरी से दशरथनन्दन श्रीरामजी अछीतरह से पूंजित हुए हैं' ऐसा भिल्लनी होनेपर भी गुरुशुश्रूषा से पक्व हो ज्ञानाधिका अपनी जिह्वा को भोग्यभूत फलमूलादि सब रामजी के लिये संकल्पकर संचय कर आगमन की प्रतीक्षा करती हुई शबरी अपने आदरानुसार अपने हाथ से भोजन करानेपर अति संतुष्ट हो भोजन किये हैं । इस से आभिजात्य से होनेवाला अभिमान से शून्य ज्ञान और प्रेमाधिक्यवालों के अभिमत वस्तु आत्मगुणों को देखनेवाले विशेषज्ञ लोगों को अत्यंत पावन और भोग्य होता है, यह अर्थ दिखाया गया ।

मारनेरीनंबिविषयतया भाष्यकारं
प्रति महापूर्णोक्ता वार्ता स्मर्तव्या ॥२४०॥

---

एवं श्रीरामायणमहाभारतसिद्धशिष्टाचारैर्भागवतवैभवं प्रकाशयामास । अथैतदर्थविषयं पूर्वाचार्यवचनं स्मारयति—मारनेरीत्यादिना ।

अभिमानहेतुजन्मवृत्तादिरहितः श्रीयामुनाचार्यचरणसंश्रयोऽध्यात्मकज्ञानपरिपूर्णः मारनेरिनंबिः स्वस्यांतिमदशायां यामुनाचार्याभिमतं देहं प्रकृतिबंधवो स्पृशंति चेत् किं कर्त्तव्यमित्यतिशंकां कृत्वा सब्रह्मचारिणो महापूर्णान् दृष्ट्वा 'पुरोडाशं शुने माप्रतिपादय' इत्युक्त्वा परमपदं प्राप । महापूर्णश्च तथै-

---

भाष्यकारं महापूर्णैः श्रीमारनेरिनम्बिनम् ।
विषयीकृत्य योक्ता सा वार्ता ध्येयात्र भावुकैः ॥२४०॥

इस प्रकार श्रीरामायण और महाभारतों में प्रसिद्ध शिष्टाचारों से भागवतवैभव को प्रकाश किये हैं। और भी इस अर्थ के विषय में पूर्वाचार्य वचन को स्मरण कराते हैं—मारनेरिनंबि इत्यादि ।

मारनेरिनंबि के विषय में महापूर्णस्वामी ने श्रीरामानुजस्वामी से कही हुई वार्ता को स्मरण करना ॥ २४० ॥

अभिमानहेतु जन्मवृत्तादि रहित, यामुनाचार्य के चरणसमाश्रित और आध्यात्मज्ञान परिपूर्ण मारनेरिनंबि अपनी अंतिम दशा में 'यामुनाचार्य के अभिमत इस देह को प्राकृतबंधु स्पर्श करेंगे तो क्या किया जाय ?' ऐसी अतिशंका कर सब्रह्मचारी महापूर्णस्वामी को देख 'पुरोडाश कुत्ता को नहीं दो' ऐसा कह परमपद को पधार गये । महापूर्णस्वामीजी उन के वचनानुसार औरों के हाथ में न दे

'प्रादुर्भावै'रित्यादि ॥ २४१ ॥

---

वान्यहस्ते न दत्वा स्वयमेव संस्कृत्यागत्य स्थितः । एतन्मा-
प्यकारः श्रुत्वा महापूर्णचरणसमीपमागत्य 'स्वामिन्! मर्यादा-
नुगुणं कार्यं न कर्तव्यं ? भवता कर्तव्यं किम् ?' इत्यवदत् ।
'प्रेय्येण संध्योपास्या किं?' इत्यवदत् । 'अहंस्वाम्यपेक्षयोत्कृष्टः
किं ? अयं जटायोरपकृष्टः किं ? पयिलुं शुडरोलि, 'नेडमाल्-
कडिमै' समुद्रघोषसदृशः किं? शठकोपैरुक्तोर्थः किंचिन्न्यून-
तया वा नाचरणीयः किं ? इत्युक्तवार्ता ।

अथ भागवतजन्मादिश्लाघ्यताकथनपूर्वकम भागवतोत्कर्ष-
निंयतां प्रतिपादयति— प्रादुर्भावैरित्यादिना ।

'प्रादुर्भावैः सुरनरसमो देवदेवस्तदीया
जात्या वृत्तैरपि च गुणतस्तादृशो नात्र गर्हा ।

---

प्रादुर्भावैस्तदीहेति सुखो मानेऽत्र कीर्तितः ॥ २४१ ॥

आप ही ब्रह्ममेध संस्कार कर आये हैं, इस बात को रामानुजस्वामी सुन महा-
पूर्णस्वामी के चरण में जा 'स्वामिन् ? मर्यादा की रक्षा करतेहुए कार्य करना
उचित नहीं क्या ? आप ही को आवश्यक था क्या ?' ऐसा प्रश्न करनेपर मजूरी
देकर संध्या करना उचित है क्या ? मैं श्रीरामजी से उत्कृष्ट हूं क्या ? यह जटायु
से नीच हैं क्या ? 'अभ्यस्यमान प्रभावत्तेज' और 'व्यामोहवतस्वामिनोदास्य'
सहस्रगीति के ये दो दशक समुद्रघोप है क्या ? शठकोपसूरि के कहेहुए अर्थ को
किंचिन्न्यूनतया भी आचरण नहीं करना क्या ?' एसा कही वार्ता को स्मरण
करना ।

अब भागवतजन्मादियों की श्लाघ्यता कथनपूर्वक अभागवतोत्कर्ष की,
निंधता को प्रकाश करते हैं—प्रादुरित्यादि । 'प्रादुर्भावों से इत्यादि ॥ २४१ ॥

भागवतत्वरहितः केवलवेदार्थज्ञानादिमान्
कुंकुमभारवहगर्दभवदिति वदति हि ॥ २४२ ॥

---

किंतु श्रीमद्भुवनभवनत्राणतोऽन्येषु विद्या
वृत्तप्रायो भवति विधवाकल्पकल्पप्रकर्षः ॥'

अनेन नित्यसूरिनिर्वाहकः प्रादुर्भावैः सुरनरसमोऽवतरति, तदीयाश्च जात्या वृत्तैर्गुणैश्च तथेतरसमास्तिष्ठंति, अत्र गर्हा नास्ति श्लाघैव भवति । उभयोरप्येवं स्थितिरेतल्लोकरक्षणार्था । अथाभागवतेषु विद्यमानो विद्यावृत्तबाहुल्यरूपोत्कर्षो विधवालंकारवन्निंद्यो भवतीत्युच्यते ।

भागवता न भवंतीति तेषां विद्यमाना वेदविद्यादयो व्यर्थाः कथं स्युरित्यतस्तथा प्रमाणं वदति हीत्याह—भागवतत्वरहित इत्यादिना ।

---

भगवद्भक्तिहीनो यो वेदार्थज्ञानवान् परम् ।
कुंकुमभारधारीव गर्दभः सहि कीर्तितः ॥ २४२ ॥

'देवदेव अवतारों से देवता और मनुष्य के समान होते हैं तो जैसा निंद्य नहीं तैसा भागवतलोग जाति आचार और गुणों से नीचजाति के सदृश होनेपर भी निंद्य नहीं होते किंतु सर्वजगत् सृष्टि स्थितिसंहारकर्ता में भक्तिरहित लोगों में ज्ञान और आचार विधवा के भूषण के सदृश गिने जाते हैं' इस से भगवान् और भागवतों के नीचजन्म लेनेका कारण लोकरक्षण के लिये है; ऐसा समझना।

भागवत न होनेपर उन के वेदविद्यादि व्यर्थ हैं क्या ? ऐसा पूंछनेपर इस का प्रमाण दिखाते हैं—

'भागवत न हो वेदार्थज्ञानवाला केसर
ढोनेवाले गधे के सदृश है' ऐसा कहा है ॥ २४२ ॥

राजा श्रीकुलशेखरस्वामी
तिर्यक्स्थावरजन्मानि आशास्त ॥२४३॥

'चतुर्वेदधरो विप्रो वासुदेवं न विंदति।
वेदभारभराक्रांतः स वै ब्राह्मणगर्दभः ॥'

इति वेदतात्पर्यभूतभगवज्ज्ञानाद्यभावाद्भागवतत्वरहितो वेदाध्ययनेन तत्र स्थूलार्थज्ञानादिभिर्युक्तो भोगिभिरादरणीयं परिमलद्रव्यं कुंकुमं वहन्संचरन्नपि तद्वैलक्षण्यानभिज्ञो गर्दभ-इव पूर्वोत्तरभागाभ्यामाराधनस्वरूपमाराध्यस्वरूपं च प्रतिपादयतो भगवदेकपरस्य वेदरूपविलक्षणवस्तुनो भारं सम्यग्वहन्नपि तद्रसानभिज्ञो ब्राह्मणगर्दभ इति वेदोपबृंहणप्रमाणं वदतीत्यर्थः।

भगवत्संबंधरहिता जन्मादयः सद्गर्हिता इति प्रादर्शयत्, तत्संबंधसहिततिर्यगादिजन्म च सत्प्रार्थ्यमित्यर्थं दर्शयति—राजेत्यादिना।

तिर्यक्स्थावरजन्मानि राजा श्रीकुलशेखरः।
स्वामिस्वरूपनिष्कर्षादाशां चक्रे महामतिः ॥२४३॥

'चारों वेदों का अध्ययन कर जो ब्राह्मण वासुदेव को नहीं जानता है वह वेदरूप बोझा को ढोनेवाला ब्राह्मणगधा कहलाता है।'

ऐसा वेदों के स्थूलार्थ जान सूक्ष्मार्थ को नहीं जाननेवाला पशुतुल्य कहागया, यह भारत का वचन है।

भगवत्संबंधरहित जन्मवृत्तआदि सत्पुरुषों से निंद्य है इस अर्थ को पहिले दिखाये हैं, अब भगवत्संबंधवाले तिर्यक् आदि के जन्म सत्पुरुषों से प्रार्थनीय हैं इस अर्थ को दिखाते हैं— राजा इत्यादि।

राजा श्रीकुलशेखरसूरि तिर्यक्
स्थावरजन्मों को अपेक्षा किये हैं ॥२४३॥

ब्राह्मणोत्तमः श्रीविष्णुचित्तस्तनया
च गोपजन्म आस्थानमकुरुताम् ॥ २४४ ॥

---

'वाचिकैः पक्षिमृगतां' इत्यादिभिः पापयोनित्वेनोक्तानि 'वेंकटे तटाके वर्द्धमानपक्षी जायेयं' 'मत्स्यजन्मनः कारणभूत-भाग्यवान् स्यां' 'चंपकजन्मरूपश्रीमान् भवेयं' 'कदम्बजन्मन उपयुक्ततपोविशिष्टो भवेयं' इति श्रीवेंकटाचलसंबंधविशिष्ट-तिर्यक्स्थावरजन्मान्यलभ्यलाभतयाऽऽशास्त इत्यर्थः ।

एवं आशाकरणमात्रं विना नीचजन्म आस्थानं कृतवत आह— ब्राह्मणोत्तम इत्यादिना ।

एतदुपरि नास्तीति वक्तुं योग्ये वर्णेऽवतीर्य विद्यामाहा-

---

विष्णुचित्तो द्विजोत्तंसो गोदा तस्यात्मजा तथा ।
गोपजन्मस्थितिं सम्यक् चक्रतुर्ज्ञानलाभतः ॥ २४४ ॥

क्षत्रियकुलोत्पन्न श्रीकुलशेखरस्वामी 'वाचा कृत पापों से पक्षी और मृगजन्म लेता है' इस वचन से अत्यंत पापयोनितया गिनेजानेवाले तिर्यक् स्थावरजन्मों को 'वेंकटगिरि के स्वामिपुष्करिणी में वास करनेवाले बक का जन्म मुझ को मिलै' 'मत्स्यजन्म लेने का भाग्यवान् मैं होऊं' 'वृक्षजन्म लेनेका भाग्यवान् होऊं' ऐसी प्रार्थना किये हैं ।

इस प्रकार अभिलाषा मात्र विना नीच जन्म को आरोपण करलेनेवालों को कहते हैं—ब्राह्मणोत्तम इत्यादि ।

ब्राह्मणोत्तम श्रीभट्टनाथसूरि और उन की पुत्री
श्रीगोदादेवी गोपजन्म को आरोपण करलिये हैं ॥ २४४ ॥

सर्वोत्कृष्ट ब्राह्मणवर्ण में जन्म ले विद्यामाहात्म्य से ब्राह्मणों में श्रेष्ठ

मालिन्ये निवृत्ते सर्वेषामपि
नारीणामुत्तमाया अवस्थाऽऽगच्छेत् ॥२४५॥

---

त्यादिभिस्तज्जातीयसकलोत्तमः श्रीविष्णुचित्तो वेदफलं स्वीकर्तुं शक्तः, स इव बाल्यावस्थायां वेदसारार्थवित्तमा तस्य तनया गोदा च कृष्णावतारानुभवेऽभिनिवेशातिशयेन 'शक्त्यभावादहं दुःखिता पूर्णे' 'मम पुत्रो गोविंदो' 'द्वादशमासपर्यंतमुदरे धृततस्सामीचीन्येन' इत्यादिभिः, 'गोव्रजे वर्तमानाः श्रीमद्बालिकाः' 'वयं चास्य व्रतस्य' 'गोपकूले उत्पत्त्युपयुक्तपुण्ययुक्ता वयं' इत्यादिभिश्च स्वयं तद्रूपेण यथोच्येत तथा स्वावतारवर्णस्य तृतीयवर्णरूपत्वादपकृष्टं ज्ञानलेशरहितं गोपजन्म सम्यगारोपयतामित्यर्थः ।

एवमाशाकरणमास्थानकरणं च विना मालिन्ये निवृत्ते स्वरूपं कथं वर्त्तेत इत्यत आह—मालिन्ये निवृत्त इत्यादिना ।

---

सर्वेषामपि नारीणामुत्तमाया अवस्थितिः ।
आगच्छेद्धि निवृत्ते तु मालिन्ये नात्र संशयः ॥२४५॥

और वेद के फल कोपाये हुए श्रीभट्टनाथसूरि, उन के सदृश बाल्यावस्था में वेदसारार्थ को जाननेवाली उन की पुत्री गोदादेवी भी श्रीकृष्णावतारानुभव की प्रीति से 'बल हीन होनेसे मैं दुःखी होगई हूं' 'हमारा लडका गोविन्द' 'हम हमारे व्रत के लिये' 'गोपकुल में आप के जन्म लेनेके योग्य भाग्यवती हम' इत्यादि से भी अपने को गोप गोपी कह अपने वर्ग से अति नीच तीसरा बर्ण ज्ञान रहित गोपजन्म को यथार्थरीति से आरोपण करलिये हैं ।

इस प्रकार अभिलाषा करना और आरोपण करलेना मात्र विना कर्मकृत शरीर छूटनेसे आत्मस्वरूप कैसा रहेगा इस शंका में कहते हैं—शरीर छूटनेसे इत्यादि ।

शरीर छूटनेसे सब आत्माएं नारियों
में उत्तम लक्ष्मीजी के सदृश होते हैं ॥ २४५ ॥

षड्भिः प्रकारैः परिशुद्धात्म-
स्वरूपस्य तत्साम्यमस्ति ॥२४६॥

---

अथवा एवं विशिष्टवेषप्रयुक्ततारतम्यावस्थां विना मालिन्ये निवृत्ते सकलात्मनामागच्छदवस्था कीदृशीत्यत आह — मालिन्य इत्यादि। आत्मस्वरूपं यथा याथार्थ्येन न प्रकाशेत तथानादिकालमनुभूत आगंतुकेऽविद्या दिदोषे भगवत्प्रसादविशेषेण पुनरनुवृत्तिं विना सवासनं निवृत्ते सकलात्मनां—

'सर्वलक्षणसंपन्ना नारीणामुत्तमा वधूः।'

इत्युक्तप्रकारेण स्त्रीत्वलक्षणैः सर्वैरप्यन्यूनायाः स्वेतरसकल स्त्रीणामुत्तमाया महालक्ष्म्याः स्थितिः स्वयमेवागच्छेदित्यर्थः।

तत् क दृष्टमित्यपेक्षायामेतदुपपादयति—षड्भिः प्रकारैरित्यादिना।

---

प्रकारैः षड्भिरुत्कृष्टस्वरूपस्यात्मनः किल।
तस्या देव्या महालक्ष्म्या साम्यता कथिता बुधैः ॥२४६॥

यद्वा कर्मकृत शरीरविशिष्ट निमित्त होनेवाले तारतम्य विना शरीर छूटनेपर संपूर्ण आत्मा कैसे रहती हैं इस शंका में कहते हैं—शरीर छूटनेपर इत्यादि। आत्मस्वरूप को यथार्थ रीति से प्रकाशने नहीं देनेवाले अनादिकाल से आया हुआ अविद्यादि दोष भगवदनुग्रह द्वारा पुनरावृत्ति रहित वासना सहित निवृत्त हो तो सब आत्मा सर्वलक्षण संपन्न स्त्रियों में उत्तम इस वचनानुसार स्त्रीत्वलक्षणविशिष्ट महालक्ष्मी के सदृश होती हैं।

वह कैसा ? इस आकांक्षा में कहते हैं— छः प्रकार से इत्यादि।

छः प्रकार से परिशुद्ध आत्मस्वरूप को लक्ष्मीजी की समता है।२४६॥

दृष्ट उत्कर्षोऽहंकारेणादृष्ट
उत्कर्षोऽहंकाररहित्येन ॥२४७॥

---

अनन्यार्हशेषत्वमनन्यशरणत्वमनन्यभोग्यत्वं संश्लेषे धारणं विश्लेषे धारणाभावस्तदेकनिर्वाह्यत्वमिति षड्भिः प्रकारैर्निःशेषनिवृत्ताविद्यादिदोषतया परिशुद्धस्यात्मस्वरूपस्य प्रकारषट्कपरिपूर्णया लक्ष्म्या साम्यं नैसर्गिकं भवतीत्यर्थः। एतत्साम्यमभिप्रेत्य हि परिमलयुक्तमहापुष्पवासिन्या तुल्य इति सूरिभिरुक्तम्। एवमेतद्वाक्यद्वयमपि प्रासंगिकम्।
अथैते उत्कृष्टजन्मान्युपेक्ष्य निकृष्टानि जन्मानि कथमाद्रियंत इत्यंत आह—दृष्ट इत्यादि।
आभिजात्यादय ऐश्वर्यमिति दृष्टपुरषार्थे कस्यचिज्जायमा

---

उत्कर्षो विद्यते दृष्टेऽहंकारेणैव सर्वथा।
अदृष्टोत्कर्षहेतुः स्यादहंकारविहीनता ॥ २४७ ॥

अनन्यार्हशेषत्व, अनन्यशरणत्व, अनन्यभोग्यत्व, संश्लेष में धारणा, विश्लेष में धारणाभाव, तदेकनिर्वाह्यत्वरूप छः प्रकार से अविद्यादिदोष रहित परिशुद्ध आत्मस्वरूप का छः प्रकारवाली महालक्ष्मीजी के सादृश्य स्वतःसिद्ध है। इस छः प्रकार को अभिप्राय करके ही 'सुगंधमहापुष्पपुत्री के सदृश है' ऐसा शठकोपसूरि कहे हैं। तथाच ये दोनों बात प्रसंगात् कहेगये हैं।

अब वे लोग उत्कृष्टजन्मों की उपेक्षा कर निकृष्टजन्मों को क्यों आदर किये हैं? इस शंका में कहते हैं—दृष्ट में इत्यादि।

दृष्ट में उत्कृष्टता अहंकार से, अदृष्ट
में उत्कृष्टता अहंकाररहित्य से ॥२४७॥

अभिजात्यादि और ऐश्वर्यरूप दृष्ट पुरुषार्थ में किसी को उत्कृष्टता होतो वह

ब्रह्मा हीनो गोपिका प्राप्तवतीत्येवं कर्तुं योग्यः ॥२४८॥

---

उत्कर्षो विश्वामित्रादिवत्स्वस्थितेरुपर्युत्कर्षान्वेषणे प्रेरयताऽहं-कारेण भवति । शेषत्वादयः कैंकर्यसंपादित्यदृष्टपुरुषार्थे कस्य चिज्जायमान उत्कर्ष एतदभिवृध्याशया पदेपदे नैच्यानुसंधा नोपयुक्ताहंकारराहित्येनेत्यर्थः ।

ताद्दशाहंकारतद्राहित्ययोः प्राप्तिहानिहेतुत्वमाह--ब्रह्मेत्यादिना

दृष्टोत्कर्षातिशयानुरूपमहंकाराधिको ब्रह्मा 'द्विपरार्धावसाने मां प्राप्तुमर्हसि पद्मज' 'परिमलयुक्ते कमले स्थित्वा न पश्यति कृष्णस्य पादकमलमजः' इति चोक्तप्रकारेण हीनोभवत् । अ-हंकारहेतोः कस्याप्यभावात् तद्रहिता वामदक्षिणहस्तानभिज्ञा गोपिका चिंतयंती 'मुक्तिं गताऽन्या गोपकन्यका' इत्युक्तप्रकारे-

---

विधाता लाभहीनो हि प्राप्तवत्यश्च गोपिकाः ।
इत्येवं भवितुं योग्योऽहंकारतदभावतः ॥ २४८ ॥

बिश्वामित्रादियों के तरह अपनी स्थिति से अधिक उत्कृष्टता को अपेक्षा करने-वाले अहंकार से होती है, शेषत्वादि और कैंकर्य संपद रूप अदृष्ट पुरुषार्थ में किसी को उत्कृष्टता होतो शेषत्वादि की अभिवृद्धि में आशा से अपनी स्थिति से भी नीचे जाने की अभिलाषा अहंकाराभाव से होती है ।

ये अहंकार और उस का अभाव दोनों प्राप्ति और अप्राप्ति के हेतु हैं ऐसा कहते हैं– ब्रह्मा होकर इत्यादि ।

ब्रह्मा हो च्युत होना गोपी हो प्राप्त होना ॥ २४८ ॥

दृष्ट में अधिक उत्कृष्टता के अर्ह अहंकाराधिक ब्रह्मा होकर 'हे पद्मज द्विप-रार्द्ध के अंत में मुझ को प्राप्त होवोगे' 'सुगंधि कमल पुष्प के भीतर रहने पर भी ब्रह्मा नारायण के चरणकमल को नहीं देख सक्ता' इन वचनों के अनुसार च्युत होता है । अहंकार हेतु किंचित् भी न होनेसे अहंकाररहित वाम दक्षिण हाथ न जाननेवाली चिंतयंती गोपी 'अन्य गोपकन्य का मुक्ति पाई है' ऐसा

ण तच्चरणौ प्राप्तवतीत्येतद्रूपकापादकोऽहंकारतद्राहित्यस्वभाव इत्यर्थः । एवमहंकारतद्राहित्ययोस्तच्चरणप्राप्तिहेतुत्वात् श्रीकुलशेखरस्वामिप्रभृतयोऽहंकारहेतुजन्मान्यनादृत्य तद्रहितजन्मान्यादृतवन्त इति भावः ।

इति सिद्धोपायनिष्ठवैभवप्रकरणं संपूर्णम् ।

अथ प्रपन्नदिनचर्याप्रकरणम् ।

'स्वस्य स्वेनैव नाशनं' इत्यारभ्यैतावत्पर्यंतमहंकारादिदोष उपपादितः, अनंतरं प्राप्यप्रापकावुभावपि स एवेति वर्तमानानां प्रपन्नाधिकारिणां दिनचर्याविशेष उच्यते—एवं सर्वप्रकारेणेत्यादिनासदाचार्यप्रसादेन यथावर्धेरन् तथाकुर्वन् वर्तेतेत्यंतेन ।

---

उन के चरणों में प्राप्त हुई, इन दोनों के कारण अहंकार और तद् अभाव है । इस लिये श्रीकुलशेखरस्वामी प्रभृति ज्ञानीलोग अहंकारहेतुभूत जन्मों को अनादर कर अहंकाररहित जन्मो को आदर किये हैं ।

सिद्धोपायनिष्ठों के वैभव प्रकरण समाप्त हुआ

अथ प्रपन्नदिनचर्या प्रकरण

'अपने को आप नाश करना मानि' ऐसा आरंभ कर यहां तक अहंकारादियों को दोष कहागया, अनंतर प्राप्य और प्रापक दोनों वही है ऐसा रहनेवाला प्रपन्न अधिकारी का दिनचर्याविशेष कहाजाता है— एवं सर्वप्रकार से इत्यादि ।

एवं सर्वप्रकारेणापि नाशहेतोरहंकारस्य तत्कार्यस्य विषयप्रावण्यस्य च स्वस्यैवोत्पत्तिस्थानभूतत्वात् स्वं पश्यति चेच्छत्रुमिव, तस्य वर्धकान् संसारिणः पश्यति चेत् सर्पमिव, तस्य

---

एवमिति पूर्वोक्तः प्रकारः परामृश्यते। सर्वप्रकारेण स्वनाशहेतुत्वं नाम-स्वरूपेण नाशयित्वा भागवतविरोधवर्धनेन नाशयित्वा च भगवल्लाभविरोधी भवतीति सर्वप्रकारेणापि असन्नेव इति प्रकारेणासत्कल्पं स्याद्यथा तथा स्वरूपनाशकत्वं अहंकारश्च देहात्माभिमानरूपो देहातिरिक्तात्मविषये स्वातंत्र्याभिमानरूपश्चेति द्विविधः। अत्र द्विविधोप्युच्यते। तत्कार्यस्य विषयप्रा-

---

इत्थं सर्वप्रकारेण नाशहेतोरहंकृतेः।
तज्जाया विषयप्रीतेः स्वस्यैवोत्पत्तिभूमितः।
स्वं शत्रुवद्विजानाति तस्य वर्धनकारकान्।
संसारिणः सर्पमिव तन्निवर्तनकारकान्।
श्रीवैष्णवान् विजानाति बंधूनिव तथेश्वरम्।

एवं सर्वप्रकार से नाशहेतु अहंकार, उस का कार्य विषयप्रावण्य इन दोनों का उत्पत्तिस्थान आप होने से अपने को देखे तो शत्रु को देखनेके तरह, अहंकार और विषयप्रावण्य को बढानेवाले संसारियों को देखे तो सर्प को देखनेके तरह, अहंकारादियों के नाशक श्रीवैष्णवों को देखे तो बंधुओं को देखनेके तरह, ईश्वर

---

एवम्-पूर्वोक्तप्रकार। सर्वप्रकार नाश हेतु माने- स्वरूप से नाश कर भागवतविरोध को उत्पादन कर नाश करनेवाले। भगवल्लाभविरोधि हो सर्वप्रकार से 'असत् होता है' इस वचनानुसार जैसा असत्कल्प हो तैसा स्वरूप को नाश करता है। अहंकार देहात्माभिमानरूप और देहातिरिक्त आत्मविषय में स्वातंत्र्य

निवर्तकान् श्रीवैष्णवान् पश्यति चेद्बंधूनिव, ई-
श्वरं पश्यतिचेत् पितरमिव, आचार्यं पश्यति
चेत् क्षुधित ओदनमिव, शिष्यं पश्यति चेद-
भिमतविषयमिव स्मृत्वाऽहंकारार्थकामाश्रयोऽ-

---

वण्यस्य च —देहात्माभिमानस्य स्वातंत्र्याभिमानस्यचैव विषया
णां स्वभोग्यत्वेनादरेण मूलत्वाद्विषयप्रावण्यमहंकारकार्यमित्यु-
च्यते । विषयशब्देन— पूर्वमनुकूलत्वेन प्रतिकूलत्वेन चोक्तं
विहितनिषिद्धरूपविषयद्वयमुच्यते । स्वस्यैवोत्पत्तिस्थानभूतत्वा-
दिति—एतद्द्वयस्य जन्मभूमिः भगवत्स्वरूपतिरोधानादिकरगु-
णत्रयात्मकप्रकृतिपरिणामात्मकस्वकर्मविशेषारब्धशरीरविशिष्ट-
स्य स्वस्यैव जन्मभूमिभूतत्वादित्यर्थः । कर्मानुगुणं रजस्तमोभ्यां

---

पितृवद्वेशिकं तद्वत्क्षुत्क्षांतो हि यथोदनम् ।
शिष्यश्चाभिमतं स्मृत्वाहंकारश्चार्थकामको ।
अनुकूलेऽगतिं तद्वत्प्रतिकूले प्रवीणताम् ।

को देखे तो पिता को देखनेके तरह, आचार्य को देखे तो भूखा अन्न को देखनेके
तरह, शिष्य को देखे तो अभिमत विषय को देखनेके तरह समझ, अहंकार, अर्थ,

---

अभिमानरूप दो प्रकार का होना है । यहां पर ये दोनों प्रकार का अहंकार
कहा गया । उन का कार्य विषयप्रावण्य— देहात्माभिमान और स्वातंत्र्याभिमान
से ही विषयों को भोग्यमानकर आदर करना है. इस लिये विषयप्रावण्य को
अहंकार कार्य कहा है । विषयशब्द से पूर्वोक्त अनुकूल और प्रतिकूलरूप विहित
और निषिद्धविषय कहे जाते हैं । इन दोनों की जन्मभूमि आप होनेसे— भगव-
त्स्वरूप को छिपानेका समर्थ गुणत्रयात्मक प्रकृतिपरिणामरूप स्वकर्मविशेष से
आयाहुआ शरीर के साथ रहनेवाले आप होने से कर्मानुगुण रजोगुण और

नुकूलविषयेऽनादरं प्रतिकूलविषये प्रावण्यमुपे-
क्षणीयविषयेऽपेक्षां चोत्पादयंतीति भीतः, आ-
त्मगुणा अस्माभिरितरैश्च नोत्पादयितुं शक्याः
सदाचार्यप्रसादहेतुना जातेन भगवत्प्रसादेन

---

कलुषयच्छरीरविशिष्टतया मतिभ्रंशेन स्वव्यतिरिक्तं देहं स्वा-
त्मत्वेन स्वानुपयुक्तं स्वात्मानं स्वतंत्रत्वेन चाभिमन्यते,स्व-
स्यानर्थकरे विषय अत्यादरकृदपि स्वयमेव खलु ।

स्वं पश्यति चेदित्यादि । एवमनादिकालं वर्तमानमिदानीं
तद्योग्यशरीरविशिष्टं स्वात्मानं पश्यति चेदहं त्वां न त्यजा-
मीति सायुधं क्रोधावेशेन संचरंतं शत्रुमिव हृदयशोषणेन

---

उपेक्ष्यविषयेऽपेक्षां जनयंतीति भीतितः ।
स्वगुणो जननीयो हि नास्माभिरितरैस्तथा ।
सदाचार्यप्रसादेन जाता या भगवत्कृपा ।

और काम ये तीनों अनुकूल के विषय में अनादर, प्रतिकूल के विषय में प्रेम उपे-
क्षा करनेवालों के विषय में अपेक्षा को भी जनाता है समझ अत एव उस विषय
से भीत हो, आत्मगुणों को हम और दूसरे उत्पादन नहीं करसके सदाचार्य

---

तमोगुणसे व्याकुलकरनेवाला शरीर से मति भ्रष्ट हो आत्मा न होनेवाले देह को
आत्मा करके स्वतंत्र न होनेवाले अपने को स्वतंत्र करके अभिमान करनेवाला
और अपनेको अनर्थकरविषयों में अत्यादर करनेवाला भी, आप ही ( चेतन )
होता है ।

अपने को देखे तो इत्यादि— अनादिकाल पापाचरण करते हुए भविष्यत्का-
ल में भी पापाचरण के योग्य शरीर विशिष्ट अपने को देखे तो 'मारे बिना न
छोड़गा' ऐसा आयुध सहित दांत पीसता हुआ शत्रु को देखने के सदृश अपने

ज्ञायंते इत्यध्यवस्य देहयात्रायामुपेक्षा, आत्मयात्रायामपेक्षा, प्राकृतवस्तुषु भोग्यताबुद्धिनिवृत्तिः,देहधारणं परमात्मसमाराधनसमाप्तिप्रसादप्रतिपत्तिरिति बुद्धिविशेषः,स्वस्य कस्मिं-

---

श्चन्नाशकत्वेन स्मृत्वा ।

स्वेषामुक्तिवृत्तिभ्यां दुर्वासनामुद्बोध्याहंकारादिकमुपर्युपरि वर्धयतस्तदुभयवश्यान् संसारिणो नेत्रस्याग्रे पश्यति चेत् समीपगमन उपरि निपत्य दंशंतमतिक्रूरं सर्पमिव भीत्या कंपमानः पश्चाद्गत्वाऽस्माकंबाधका इति स्मृत्वाच

---

तथा ज्ञायंत इत्थं हि निश्चित्य देहयापने ।
उपेक्षा ह्यात्मयात्रायामपेक्षा प्राकृते तथा ।
भोग्यताबुद्धिराहित्यं तथा देह धृतौ हरेः ।
समाराधन पूर्तिश्च शेषबुद्धिरियं च धीः ।

अनुग्रह द्वारा होनेवाला भगवदनुग्रह से होयंगे ऐसा विश्वास कर, देहयात्रा में उपेक्षा आत्मयात्रा में अपेक्षा प्राकृत वस्तुओं में भोग्यताबुद्धि निवृत्ति, देहधारण परमात्मसमाराधन की समाप्ति प्रसाद प्रतिपत्ति ऐसा समझना, अपने को कोई

को नाशक समझना ।

अपनी उक्तियों से दुर्वासना को बढाकर अहंकारादियों को बढानेवाले अहंकारी संसारियों को देखे तो समीप में जाने पर ऊपर गिर काटनेवाला अति क्रूर सर्प को देखने के तरह डरसे कम्पित हो पीछे हट कर अपना बाधक समझना ।

श्चित्क्लेशे सति कर्मफलमिति वा कृपाफल-
मिति वा जायमाना प्रीतिः,स्वानुष्ठाने साधन-
बुद्धिनिवृत्तिः,विलक्षणानां ज्ञानानुष्ठानयोर्वांछा,
अभिमतस्थलेष्वादुरातिशयः, मंगलाशासनं,इत-

---

स्वेषामुपदेशानुष्ठानाभ्यां द्वाभ्यामप्यहंकारादिदोषं ज्ञापयि-
त्वा तत्प्रसंगे यथा भीतः स्यात्तथा कृत्वा सवासनं तन्निवर्त-
कान् मध्यमपदनिष्ठान् श्रीवैष्णवान् पश्यति चेत्–स्वस्यानर्था-
भ्युदयावुभावपि स्वेषामिति स्थित्वानर्थं दूरीकृत्याभ्युदयमा-
पाद्य रक्षत आत्मबंधूनिवात्यादरं कृत्वास्माकं सत्सहायभूता
इति स्मृत्वाच ।

---

स्वस्य क्लेशे हि कस्मिंश्चित् जाते कर्मफलं तथा ।
कृपाफलं च वा जातमिति ज्ञात्वाऽनुरागकः ।
स्वकृते साधनबुद्धित्यागो ज्ञानवतां सताम् ।
ज्ञानानुष्ठानयोर्वाञ्छा दिव्यदेशे महादरः ।

क्लेश होतो कर्मफल या कृपाफल समझ प्रीत होना, अपने अनुष्ठान में साधनत्व-
बुद्धि निवृत्ति, विलक्षणों के ज्ञानानुष्ठानों में वांच्छा, दिव्यदेशों में अधिक आदर,

---

अपने उपदेश और अनुष्ठान से अहंकारादियों के दोष को दिखा उन के
प्रसंग में कंपित कर वासना सहित उन को दूरकरनेवाले मध्यम पद निष्ठ श्रीवै-
ष्णवों को देखे तो अपना अनर्थ और अभ्युदय ये दोनों अपना समझ कर असद्-
गुणों को दूर कर सद्गुणों को उत्पादन कर रक्षा करनेवाले आत्मबंधुओं को
देखने के तरह अत्यादर कर हम को अच्छे सहायक ऐसा समझना ।

रविषयेष्वरुचिः, आर्तिः, अनुवर्तननियतिः, आहार-नियतिः, अनुकूलसहवासः, प्रतिकूलसहवासनिवृत्तिश्च सदाचार्यप्रसादेन यथा वर्द्धेरन् तथा कुर्वन् वर्तेत ॥२५८॥

श्रीलोकाचार्यचरणावेव शरणम् ।
द्वितीयप्रकरणं समाप्तम् ॥

---

प्रथमतः करणकलेबराणि दत्वा तान्यादाय व्यभिचारमकृत्वा सन्मार्गे गंतुमुपयुक्तानि शास्त्राणि प्रदर्श्यकृत्याकरणादिषु

---

मङ्गलाशासनं चैवेतरवस्तुन्यनादरः ।
अनुवर्तननैयत्यमाहार नियतिस्तथा ।
अनुकूलेन वासश्चासत्सहवास वर्जनम् ।
एतत्सर्वं सदाचार्यप्रसादेन यथा खलु ।
भवेत्तथैव कुर्वन् सन् वर्त्तेत भुवि भावुकः ॥ २५८ ॥

मंगलाशासन, इतरविषयों में अरुचि, आर्ति, अनुवर्तननियति, आहारनियति, अनुकूलसहवास, प्रतिकूलसहवासनिवृत्ति ये सब गुण सदाचार्यानुग्रह से जैसा बढे वैसा वर्तन करना ॥ २५८ ॥

पहिले करण कलेबरों को दे उनसे दुर्मार्ग में नहीं जा सन्मार्ग में प्रवृत्त होने के लिये शास्त्रों को दिखा अकृत्य करने में शिक्षा कर सर्वावस्था में अपने

शिक्षित्वा सर्वावस्थास्वपि स्वहितं पश्यन्तमीश्वरमर्चावतारस्थलेषु नेत्राभ्यां पश्यति चेत्— उत्पादकं विद्याप्रदं यथापथे न प्रवर्तेत तथा नियम्य प्रवर्तयंतं हितैषिणं पितरमिव स्नेहसाध्वसविनयविशिष्टः सन् मम हितपर इति स्मृत्वा च ।

अनादिकालमसन्नेवेति प्रकारेण स्थितं स्वात्मानं भगवत्संबंधज्ञानेन सत्तावंतं कृत्वोपरि स्वोपदेशेन ज्ञानवैराग्यभक्तीर्वर्धयित्वा हस्तफलवद्भगवद्विषयं प्रदर्शयंतं महोपकारकं 'तव गुणा एवात्मनो धारकाः' इति त्वच्छरीरे प्रकाशमानगुणान् विना नापेक्षावान् 'इत्युक्तप्रकारेण गुणविग्रहाभ्यां स्वस्य धारकं भोग्यमाचार्यं नेत्रविषयतया पश्यति चेत्— नेत्रभ्रमणकरमहाक्षुधावान्धारकं भोग्यमोदनमिवात्यंताभिनिवेशेनानुभूयास्माकं भोग्यविषय इति स्मृत्वा च ।

---

हित ही को देखनेवाले ईश्वर को अर्चा स्थलों में देखे तो उत्पादक विद्याप्रद कुमार्ग में प्रवृत्त न होने के लिये नियमन कर चलानेवाले हितेच्छु पिता को देखने के तरह स्नेह भय और विनय विशिष्ट हो अपने को हित पर समझना ।

अनादिकाल से 'असत् ही' इस वचनानुसार स्थित अपने को भगवत्संबंध को जना कर सत्तावान् बना ऊपर ऊपर अपने उपदेश से ज्ञान वैराग्य भक्तियों को उत्पादन कर हस्तामलकवत् भगवद्विषय को दिखानेवाले महोपकारक आप के गुण ही 'हमारे प्राण का प्राण' ऐसा 'आप के दिव्य विग्रह के गुणों को छोड मैं अन्य को नहीं चाहता हूं' ऐसा भी कहे प्रकार गुण और विग्रह से अपने को धारकभूत आचार्य को देखे तो नेत्र को घुमानेवाले क्षुधा से पीडित हो धारक और भोग्य अन्न को देखने के तरह अति प्रेमसे अनुभव कर हमारा धारक और भोग्य विषय यह है ऐसा समझना ।

साध्यांतरनिवृत्त्यादिसमस्तस्वभावसंपन्नतया सम्यग्ज्ञानवंतं सच्छिष्यं पश्यति चेत्स्वस्यानंदावहमभिमतविषयमिव भगवद्गुणानुभवदशायामस्मदुक्तान् भगवद्गुणानादृत्य शृणोत्यनुभाषते विद्धो भवत्येतदाकारैरस्मानानंदयतीति ज्ञात्वा च।

अहंकारार्थकामास्त्रय इत्यादि— एतत्त्रयाणां मध्येऽहंकारोऽनुकूलविषयेऽनादरमुत्पादयति । अयमर्थः— स्वसन्निधौ शेषत्वं यथा न जीवति तादृशं स्वल्पहंकारबलं, अहंकारी 'न नमेयं' इत्येव वर्तते न त्वेकस्मिन्नपि विषये शिरसा नम्रीभवितुमिच्छति, तस्मादहंकारोभिवृद्धस्स्वरूपवर्धकेष्वनुकूलेषु श्रीवैष्णवेष्वस्माकं शेषिण इति पादकंपेनोत्थाय प्रणामादिपूर्वकमनुवर्तनकरणं प्रतिबध्नाति, स्वयं तेभ्योधिक इति वा सम इति वा बुद्धिं कारयित्वाऽनादरं कारयतीत्यर्थः ।

उपायांतर निवृत्ति आदि सर्व गुण सम्पन्न सम्यक ज्ञान और प्रेमवान् शिष्य को देखे तो अपने को आनन्द देनेवाले अभिमत वस्तु को देखने के तरह भगवद्गुणानुसंधानदशा में हम से कहे गये भगवद्गुणों को आदर पूर्वक सुनना अनुवाद करना विद्ध होना इत्यादि आकारों से अपने को आनन्ददायी समझना ।

अहंकार, अर्थ और काम ये तीनों में अहंकार अनुकूलों के विषय में अनादर उत्पादन करता है माने— शेषत्व को दबाता है । अहंकारी 'मैं झुकूंगा नहीं' ऐसा किसी विषय में शिर न झुका स्वतंत्र बनता है। इसलिये अहंकार स्वरूप वर्द्धक अनुकूल श्रीवैष्णवों को देख अपना स्वामी समझ कम्पित हो उठ प्रणामादि पूर्वक अनुवर्तन न कर अपने को उन से अधिक या सदृश समझ अनादर कराता है ऐसा समझना ।

अर्थः प्रतिकूलविषये प्रावण्यमुत्पादयति — यं कंचनं वाऽनुवर्त्य किंचिद्वा द्रव्यं संपादनीयमिति खल्वर्थरागप्रकारः तस्य स्वरूपनाशकत्वेन प्रतिकूलेषु संसारिषु दृष्टेषु जुगुप्सया पलायने कर्तव्ये एकवराटिकाशया तद्वासस्थानेषु बहुवारं गच्छति तानाहूय स्वगृहे भोजयति तद्गुणकीर्तनं करोत्येवं रीत्या तद्विषये प्रावण्यमुत्पादयतीत्यर्थः ।

'काम्यत इति कामः' इत्युक्तप्रकारेण कामशब्देन विषय-संभोगसुखमुच्यते। छीः छीः गच्छेत्यादिप्रकारेण दारिद्र्यवार्धक्या-दिहेतुना स्वमुखदर्शनमकृत्वा निष्कास्य कपाटं पिधाय उपेक्षावादं कुर्वतीनां स्त्रीणां विषयेषु 'उपेक्षावादं कृत्वा निरासयंतीषु गच्छति' इत्युक्तप्रकारेण तासामुपेक्षावादप्रभृतिक-मेवोद्देश्यत्वेन स्वीकृत्य यथा गच्छेत्तथाविधे, विलक्षणाः श्रुत्वा परिहसेयुस्तथाविधे, हेयेऽपेक्षां वर्द्धयतीत्यर्थः ।

एवमहंकारादित्रयमपि स्वरूपवर्धकेष्वनादरं स्वरूपनाशके-

---

अर्थ प्रतिकूल विषय में आदर कराता है माने— किसी के अनुवर्तन कर द्रव्य पाना चाहिये ऐसा द्रव्य में आशा को बढाता है इसलिये वह स्वरूपनाशक संसारियों को देख कर भागनः प्राप्त होने पर भी अर्थ की आशा से उन के साथ संबंध कर उन के वास स्थान में बहुवार जा उन को बुला भोजन करा गुणकीर्तन करानेवाला विषय है ऐसा समझना ।

काम उपेक्षक विषय में अपेक्षा करावैगा माने— विषयसंभोग सुख की आशा से, दारिद्र्य वार्द्धक्य आदि कारण से अपना मुख न देख बाहर निकाल कपाट बंदकर उपेक्षा करनेवाले स्त्रियों के विषय में उनकी उपेक्षाओं के उद्देश्य-मान रहने के योग्य शिष्टों के हास्यास्पद कराता है समझना।

एवं अहंकारादि तीनों स्वरूप वर्द्धकों को अनादर स्वरूप नाशकों को आदर

ष्वादरं स्वरूपनाशकेषूपेक्षकेष्वपेक्षां च कारयतीत्येतत्क्रौर्याण्यनुसंधाय किं कुर्यादिति भीरया। 'अर्थकामाभिमानास्त्रयोपि' इति पाठश्चेत् --- 'गर्वोऽभिमानोऽहंकारः' इत्युक्तप्रकारेणाभिमानशब्देनाहंकारस्योच्यमानत्वात् 'अनुकूलविषये' इत्यादिकं यथाक्रममकृत्वा यथायोगं पूर्वोक्तप्रकारेण योजनीयम् ।

आत्मगुणा इत्यादि--- शमदमाद्यात्मगुणा अनादिकालमहंकारादीनां जन्मभूमिभूतानामनात्मगुणैः कुसूलपूर्णं कृत्वा कर्मपरतंत्राणामस्माकं यत्नेनात्मगुणोदयविरोध्यहंकारादीनां वर्धकानामनात्मगुणपरिपूर्णानां कर्मवश्यानां परेषां यत्नेन च नोत्पादयितुं शक्याः, आत्मगुणानां सर्वेषां पात्रभूतस्य प्रथमतः स्वस्य निर्हेतुककृपयाऽस्मानंगीकृत्यास्माकमात्मगुणाः कदा वा स्युरिति बहुकालं द्रवीभवतः भगवंतमर्थयतः सदाचार्यस्य प्रसादेन हेतुना जायमानेनास्मदात्मगुणविरोधिपापक्षयहेतुनाऽमलतया पश्यतो भगवतः परिपूर्णप्रसादेन जायंते इत्यध्यवस्य ।

---

उपेक्षकों की अपेक्षा कराते हैं समझ उनकी क्रूरता को अनुसंधान करना ।

आत्मगुण इत्यादि । शमदमाद्यात्मगुण अनादिकाल अहंकारादियों के उत्पत्तिस्थान, हेय गुण पूर्ण कर्म परतंत्र मेरे यत्न से, आत्मगुण उत्पत्ति के विरोधि अहंकारादि वर्द्धक हेय गुण परिपूर्ण कर्मवश्य संसारियों के यत्न से भी नहीं उत्पन्न होते हैं । आत्मगुणों के स्थान पहिले अपने ऊपर निर्हेतुक कृपा से अपने को अंगीकार कर इस को आत्मगुण कब होयंगे ऐसा बहुवार ईश्वर को प्रार्थना कर व्याकुल होनेवाले सदाचार्यानुग्रह से, अपने आत्मगुणों के विरोधि पापक्षय होने के लिये निर्मल कटाक्ष करनेवाले भगवान के परिपूर्णानुग्रह से भी आत्मगुण होते हैं ऐसा विश्वास करना ।

देहयात्रायामुपेक्षा नाम— देहसंरक्षणार्थव्यापार आदरराहित्यम् ।

आत्मयात्रायामपेक्षा नाम—शेषत्वैकस्वरूपस्यात्मनो धारकादिभूतगुणानुभवकैङ्कर्यप्रवृत्तौ प्राप्तांशेन तृप्तिं विनोपर्युपर्याशाकरणम् ।

**प्राकृतवस्तुषु भोग्यताबुद्धिनिवृत्तिर्नाम—अशनाच्छादनाद्युपयुक्तप्राकृतपदार्थेष्वत्याकरनिदान भोग्यताबुद्धिनिवृत्तिः ।**

देहधारणमित्यादि— तादृशप्राकृतवस्तुषु देहधारणापेक्षितमात्रभोजनं परमात्मनः सर्वेश्वरस्य समाराधनस्य समाप्तिरूपप्रसादप्रतिपत्तिरिति बुद्धिविशेषश्चेत्यर्थः ।

**स्वस्येत्यादि— मुमुक्षोः प्रपन्नस्य च प्रारब्धशरीरस्थितिपर्यंतं तापत्रयं भवत्येव खलु, तस्मादनेन शरीरेण स्थितस्य स्वस्य तापत्रयेषु यः कश्चन क्लेशो भवति चेद् अवश्यानुभवविनाश्यः स्वप्रारब्धकर्मणः फलं खलु , एवंभूतानां कर्मणां निवृत्तिपर्यंतं**

---

देह यात्रा में उपेक्षा माने— देहरक्षणार्थ व्यापार में अनादर करना ।

आत्मयात्रा में अपेक्षा माने—शेषत्व स्वरूपवान् आत्मा के धारकादिरूप गुणानुभव कैंकर्य प्रवृत्ति में प्राप्त से तृप्त न हो ऊपर ऊपर की अपेक्षा करना ।

प्राकृत वस्तु ओं में भोग्यता बुद्धि निवृत्ति माने—अन्नवस्त्रों के उपयुक्त प्राकृत पदार्थों के आदर के कारण भोग्यता बुद्धि निवृत्त होना ।

देह धारण इत्यादि—उन प्राकृत वस्तु ओं में देह धारण मात्र भोजन करना परमात्मा सर्वेश्वर के समाराधन की समाप्ति रूप प्रसाद प्रतिपत्ति ऐसी बुद्धि होना । 

अपने को इत्यादि—मुमुक्षु और प्रपन्न होने पर भी प्रारब्ध शरीर रहने तक तापत्रय नहीं छोड़ेगा इसलिये तत् शरीरविशिष्ट अपने को तापत्रय में कोई एक क्लेश होने पर यह अनुभव विनाश्य प्रारब्ध कर्म का फल है, एवंभूत कर्मों के

खल्वनेन शरीरेण सहास्मान् ईश्वरः स्थापयति प्रतिप्रतिबंधकेष्वेकं वा निवृत्तं खलु 'इत्यनुसंधानेन, दुर्वासनयैतच्छरीरत्या गानिच्छया प्राकृतपदार्थान् अभ्युपजीव्य संसारे स्थितान् अस्मान् दुःखदर्शनं कारयित्वा तत्राशां निवर्त्य प्रापयितुमिच्छत ईश्वरस्य कृपायाः फलं किलेत्यनुसंधानेन वा जायमानप्रीतिरित्यर्थः। पूर्वोत्तराघप्रारब्ध खंडान् सर्वान् निवर्तयतस्तस्य वर्तमानशरीरेऽनुभाव्यकर्मणो निवर्तनं न दुष्करं हि, कर्मफलभूतां दुःखपरंपरामनुभवन्नप्ययमेतद्देहत्यागं नानुमन्यते तमिमं सुखिनं कृत्वा स्थापयामि चेदेतच्छरीरेण बहुकालं वर्तितुमिच्छां कृत्वानंतरमप्येकं शरीरमिच्छेत् तस्मादेतच्छरीरस्य विद्यमानकर्मानुभवेनैव नाशयेदिति हि स्थापयति, तस्मादन्येषां कर्मणां निवर्तनं संसारादमुं शीघ्रं स्वचरणौ प्रापयितुं विद्यमानया कृपया यथा भवति तथैतदनिवर्तनं च कृपयैव खलु। अनादिकालात्प-

---

क्षय पर्यंत ही इस शरीर के साथ हम को ईश्वर रखता है प्रति प्रतिबंधकों में एक तो भी नष्ट हुआ ऐसा अनुसंधान से, अथवा दुर्वासना द्वारा इस शरीर के त्याग की इच्छा न कर प्राकृत पदार्थों से शरीर को पोषण कर संसार के भीतर सुख पूर्वक रहनेवाले हम को दुःख दिखा कर आशा को छुडा लेजाने का विचार करने वाले सर्वेश्वर की कृपा का फल है इस अनुसंधान से उत्पन्न प्रीति समझना। पूर्वाघ, उत्तराघ और प्रारब्धखण्ड इन तीनों को छुडानेवाले वर्तमान शरीर में अल्प अनुभाव्य कर्म को छुडाना दुष्कर नहीं है तथापि कर्म फल दुःख परम्परा को भोगने पर भी इस देह को छोडने की इच्छा न करनेवाले इस को सुखी रखने से इस शरीर के साथ बहु काल रहने की इच्छा करना और दूसरे शरीर की अपेक्षा करना इत्यादि करेगा, इस शरीर के कर्म फल को अनुभव करै ऐसा समझ रखते हैं। ऐसा होने पर बाकी कर्मों को छुडाने का कारण संसार से इस को शीघ्र निकाल चरणों में मिलाने की कृपा से, ऐसा ही वर्तमान शरीर के कर्मों

रिगृहीतप्रतिशरीरं दुःखं भगवन्निग्रहफलं इदमनुग्रहफलम् । 'यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहं' इत्युक्तं हि । तस्मादिदं कृपाफलमित्युच्यते ।

स्वानुष्ठाने साधनत्वबुद्धिनिवृत्तिर्नाम—प्रपन्नस्य स्वस्याधिकारानुगुणमनुष्ठीयमाने विलक्षणकार्यभूते सदाचारे फलस्य साधनत्वप्रतिपत्त्यभावः ।

विलक्षणानां ज्ञानानुष्ठानयोर्वाञ्छा नाम— लौकिकैः सह व्यापारं विहाय नारयणमाश्रित्य स्थितत्वान्निर्मलज्ञानभक्तिकानां विलक्षणानां पूर्वेषां विलक्षणं तज्ज्ञानमनुष्ठानं च स्वस्य स्यातामित्याशा ।

अभिमतस्थलेष्वादरातिशयो नाम— 'स्वाभिमतग्रामः' इत्युक्तप्रकारेण सर्वेश्वरस्य प्रीतिपूर्वकवासस्थानभूतेषु दिव्यदेशेषु 'कण्डियूर् श्रीरंगं मैयं कांची तिरुप्पेर् मल्लै इत्यवगा-

---

को न छुडाना भी कृपा का फल है । अनादिकाल परिगृहीत प्रति शरीर में भोगा हुआ दुःख भगवत् निग्रह का फल है यह अनुग्रह का फल है। 'जिस पर अनुग्रह करता हूं उस का धन हर लेता हूं' ऐसा आपही कहे हैं इसी से तो इस को कृपा फल कहते हैं ।

अपने अनुष्ठान में साधनत्व बुद्धि निवृत्ति माने—प्रपन्नभूत अपने अधिकारानुगुण अनुष्ठीयमान सत्कर्मों को साधनतया नहीं समझना ।

विलक्षणों के ज्ञानानुष्ठानों में वांच्छा माने—लोगों के स्वभाव छोड नारायण का आश्रयण करने से निर्मल ज्ञान भक्तिमंत विलक्षण पूर्वों के विलक्षण ज्ञान और अनुष्ठान हम को होना चाहिये ऐसी आशा करना ।

दिव्य देशों में आदर धिक्य माने—सर्वेश्वर प्रेम से रहने के दिव्य देशों के

हितवंतः' इत्युक्तप्रकारेण मनसस्तत्रावगाहनोपयुक्ततयोत्तरोत्तरं वर्द्धमान आदरः ।

मंगलाशासनं नाम— तत्तद्दिव्यदेशेष्वादरपूर्वकं वर्तमानस्य सौकुमार्यं वैलक्षण्यं च ज्ञात्वा तदनुरूपस्नेहभावं प्रतिकूलवर्गातिशयं च स्मृत्वा किंवा स्यादित्युदरज्वलनेन दिवारात्रं बहुशरदो गानम् ।

इतरविषयेष्वरुचिर्नाम—भगवद्व्यतिरिक्तहेयविषयेषु दोषदर्शनादिभिरादरनिवृत्तिः ।

आर्तिर्नाम— इतरविषयप्रावण्यहेतुनैतच्छरीरेणाज्ञानवर्द्धकपृथिव्यां स्थितौ पाददाहेन प्राप्यवैलक्षण्यदर्शनप्रयुक्तप्राप्तिविलम्बासहत्वेन च जायमानः क्लेशः ।

अनुवर्तनानियतिर्नाम— भगवद्भागवतविषयेषु स्वशेषत्वानुगुणं नीचोक्तिनीचवृत्तिभ्यां क्रियमाणस्यानुवर्तनस्य प्राकृतविषयेषु विस्मृत्याप्यकरणम् ।

---

प्रस्ताव में मन मग्न होने से ऊपर ऊपर बढनेवाले आदर।

मंगलाशासन माने— उन उन दिव्य देशों में आदर पूर्वक बास करनेवाले स्वामी के सौंदर्य सौकुमार्य के उचित रक्षक नहीं हैं प्रतिकूल अधिक हैं ऐसा समझ क्या होगा ऐसा उदर दाह से रात दिन मंगल को चाहना ।

इतर विषयों में अरुचि माने— भगवद्व्यतिरिक्त हेय विषयों में दोष देखने से आदराभाव ।

आर्ति माने— इतर विषय प्रावण्य हेतु इस शरीर के साथ अज्ञान प्रद पृथ्वी में पाददाह से प्राप्य वैलक्षण्य दर्शन से प्राप्ति विलम्ब को न सहने से भी होनेवाला क्लेश ।

अनुवर्तन नियति माने —भगवद्भागवत विषयों में अपने शेषत्वानुगुण नीचोक्ति नीचवृत्तियों से क्रियमाण अनुवर्तन को संसारि विषयों में भूल कर भी न करना ।

आहारनियतिर्नाम-- जात्याश्रयनिमित्तदुष्टानि सर्वेश्वरस्य तदीयानां च प्रसादभूतानि वस्तूनि धारकत्वेन स्वीकुर्यां तदितराणि न स्वीकुर्यामिति स्थितिः । अनुकूलसहवासो नाम-- स्वसंसर्गेण ज्ञानादीनि वर्द्धयद्भिरनुकूलैः सह क्षणकालं च विश्लेषं विना मिलित्वा वर्तनम् ।

प्रतिकूलसहवासनिवृत्तिर्नाम-- स्वसंसर्गेण ज्ञानानुष्ठाने नाशयद्भिः प्रतिकूलैः सह क्षणकालं च वर्तनाभावः । अत्रोक्ता अनुकूलाः प्रतिकूलाश्चैते इत्युपरि स्वयमेव वदति हि ।

सदाचार्यप्रसादेन यथा वर्द्धेरन् तथा कुर्वन् वर्तेतेति-- पूर्वोक्ता एते सर्वेऽपि ज्ञानानुष्ठानपरिपूर्णस्य सदाचार्यस्य सर्वमंगलावहेन प्रसादेनोपर्युपरि यथा वर्द्धेरन् तथा कुर्वन् वर्तेतेत्यर्थः । आचार्यप्रसादेन वर्द्धनं नाम- तत्प्रसादनकरणम् । तत्प्र-

---

आहार नियति माने-- जात्याश्रयनिमित्तरूप दोष रहित भगवद्भागवतों के प्रसादभूत वस्तुओं को ही आहारतया स्वीकार करना अन्य वस्तुओं को नहीं स्वीकार करना ।

अनुकूल सहवास माने-- अपने संबंध से ज्ञानानुष्ठानों को बढानेवाले अनुकूलों के साथ क्षण काल विश्लेष विना वास करना ।

प्रतिकूल सहवास निवृत्ति माने-- अपने संबंध से ज्ञानानुष्ठानों के नाशक प्रतिकूलों के साथ क्षण काल भी वास नहीं करना । यहां कहे हुए अनुकूल और प्रतिकूल अमुक हैं ऐसा आगे आप ही कहेंगे ।

सदाचार्यप्रसाद से जैसा बढे तैसा करते हुए रहना माने-- पूर्वोक्त सब ज्ञानानुष्ठान परिपूर्ण सदाचार्य के अनुग्रहजनक कृत्यों को करना । रहना ऐसा कि-

सादनान्युपपादनस्थले उच्यमानानि । वर्ततेति विधिरूपोक्ति-रस्यावश्यानुष्ठेयत्वद्योतनार्था ।

इति द्वितीयप्रकरणं समाप्तम् ।

---

धि रूप से कहने का तात्पर्य यह है कि इन सब बातों को अवश्य अनुष्ठान करना चाहिये ।

इति द्वितीयप्रकरण समाप्त हूआ



अथ तृतीयप्रकरणम् ।

**मंगलाशासनं स्वरूपविरुद्धं न भवति किमिति-चेत्? ज्ञानदशायां रक्ष्यरक्षकभावः स्वस्थाने तिष्ठति प्रेमदशायां वैपरीत्येन तिष्ठति ॥२५९॥**

---

अस्यां दिनचर्यायामुक्तेषु विवरणीयानि विवरितुं विचार्य प्रथमं मंगलाशासनं विवृणोति—मंगलाशासनमित्यादिना ।

हेयप्रत्यनीककल्याणैकतानः स्वेतरसकलरक्षकः खलु

---

मंगलाशासनं किन्नो स्वरूपं विरुणद्धि चेत् ।
रक्ष्यरक्षकभावोयं ज्ञानकाले प्रतिष्ठति ॥
प्रेम्णो दशाविपाके तु वैपरीत्येन तिष्ठति ॥२५९॥

अथ तृतीयप्रकरण ।

इस दिनचर्या में कहेहुए में विवरण करने योग्य को विवरण करनेकी इच्छा से पहिले मंगलाशासन को विवरण करते हैं—मंगलाशासन इत्यादि ।

मंगलाशासन स्वरूपविरुद्ध नहीं क्या ? इस
शंका में—ज्ञानदशा में रक्ष्यरक्षकभाव अपने
अधीन है । प्रेमदशा में विपरीत रहता है ॥ ॥

हेयप्रत्यनीक कल्याणैकतान स्वेतर सकलरक्षक सर्वेश्वर है, ऐसे सर्वेश्वर से

सर्वेश्वरः, एवं स्थितेन स्वस्य विद्यमानामंगलानि दूरीकृत्याविद्यमानमंगलानि कारयितव्यानि, तथा रक्ष्यभूतेनानेन स्वरक्षकस्य तस्य मंगलाशासनकरणं तदेकरक्ष्यत्वरूपस्वरूपस्य विरुद्धं न भवति किमिति शंकामनुवदति—मंगलाशासनमित्यादिना।

तां परिहरति— ज्ञानदशायामित्यादिना।

ज्ञानदशा नाम—सर्वेश्वरस्यैव रक्षकत्वेन स्वस्य रक्ष्यभूतत्वेन च प्रणवोक्तप्रकारेण विशदतयानुसंधानम्। तस्यां दशायां 'दुःखं निवर्तय वा मा वा' इत्युक्तप्रकारेण स्वस्यानिष्टनिवृत्त्यादीनां स एव शक्त इति स्थितत्वाद्रक्ष्यरक्षकभावः स्वानुरूपाश्रये तिष्ठति। प्रेमदशा नाम—सर्वेश्वरस्य सौकुमार्यादिकमनुसंधायास्य विषयस्य किं वा भविष्यतीत्यस्थाने शंकां कृत्वा तत्स्वरूपानुसंधानाक्षमत्वेन मनसः संतापदशा। तादृशदशायामीश्वरं रक्षितुं मार्गमाणेन क्लिश्यमानत्वादीश्वरे रक्ष्यभावश्चेतने रक्षकभावश्च स्वानुरूपाश्रयं विहाय वैपरीत्येन तिष्ठतीत्यर्थः।

---

अपने अमंगलों को छुडा मंगलों को उत्पादन करलेना रक्ष्यभूत चेतन का कर्तव्य होनेपर भी रक्षकभूत स्वामी का मंगलाशासन करना तदेकरक्ष्यत्व रूप स्वस्वरूप के विरुद्ध नहीं है क्या ? इस शंका को अनुवाद करते हैं—'मंगलाशासन स्वरूपविरुद्ध नहीं है क्या' ऐसा। उस का परिहार करते हैं 'ज्ञानदशा में' इत्यादि। ज्ञानदशा माने—सर्वेश्वर को रक्षकतया अपने को रक्ष्यतया प्रणव में कहे प्रकार जान अनुसंधान करनेकी दशा। उस दशा में 'दुःख को दूर करो या मत करो दूसरा उपाय नहीं' इत्यादि से अपना अनिष्ट निवृत्ति आदियों को वही उपाय ऐसा रहनेसे रक्ष्यरक्षकभाव स्वानुगुण रहता है। प्रेमदशा माने—सर्वेश्वर के सौंदर्य सौकुमार्यों का अनुसंधान कर इस विषय का क्या होगा ? ऐसा अस्थान में भयशंका कर उन की सर्वशक्ति आदि स्वरूप के अनुसंधान करनेको असमर्थ हो मन गलनेकी दशा। उस दशा में ईश्वर को रक्षा करनेके लिये व्याकुल होनेसे ईश्वर के विषय में रक्ष्यभाव और अपने विषय में रक्षकभाव विपरीत हो रहेगा।

तत्स्वरूपमनुसंदधाति चेत् तं रक्षक-
त्वेन स्वीकृत्य स्वात्मानं रक्षति, तत्सौकु-
मार्यमनुसंदधाति चेत् स्वं रक्षकत्वेन
स्वीकृत्य तं रक्षति ॥२६० ॥

---

उक्तार्थं विशदयति तत्स्वरूपमित्यादिना ।

प्रथमाक्षरोक्तप्रकारेण सर्वज्ञस्य सर्वशक्तेः सर्वरक्षकस्य तस्य स्वरूपमनुसंदधाति चेत् तं स्वस्यानिष्टनिवर्तकत्वेन स्वीकृत्याज्ञमशक्तमप्राप्तं स्वं रक्षति । वार्त्तया म्लानार्हं तस्य सौकुमार्यमनुसंदधाति चेत् तस्य सर्वशक्तित्वादिकं विस्मृत्य निपुणरक्षणीयत्वेन मत्वा स्वं रक्षकत्वेन स्वीकृत्य मंगलाशासनं कृत्वा तं रक्षतीत्यर्थः। अत्र सौंदर्यस्यानुक्तत्वेपि तस्यापि

---

तत्स्वरूपानुसंधाने तेन रक्षति स्वं ह्ययम् ।
तत्सुकुमारताध्याने तच्च रक्षति स्वात्माना ॥ २६० ॥

उक्तार्थ को स्पष्ट करते हैं—उस के स्वरूप को इत्यादि ।

उस के स्वरूप का अनुसंधान करनेपर उस को रक्षकतया
समझ अपने को रक्षा करलेगा, सौकुमार्य का अनुसंधान
करनेपर अपने को रक्षक समझ उस को रक्षा करेगा ॥ २६० ॥

प्रथमाक्षर में उक्त प्रकार सर्वज्ञ सर्वशक्ति सर्वरक्षक स्वामी के स्वरूप का अनुसंधान करनेपर वही हमारा अनिष्ट निवर्तक है समझ अज्ञ अशक्त अप्राप्त अपने को रक्षा करलेगा । कहनेसे मुरझाजानेवाले सौकुमार्य का अनुसंधान करने-पर उन के सर्वशक्तित्वादि गुणों को भूल रक्ष्य समझ अपने को रक्षक समझ मंग-लाशासन से उस को रक्षा करेगा । इस स्थल में सौंदर्य को न कहने र भी वह

अयमर्थश्चक्रवर्ती श्रीजनकराजतनया
विश्वामित्रो दंडकारण्यवासिन ऋषयो
मारुतिर्महाराजः श्रीनंदगोपः श्रीविदुरः
श्रीधनुर्दास इत्येतत्प्रभृतिषु द्रष्टव्यः ॥ २६१ ॥

---

मंगलाशासनहेतुत्वादुपरि वक्ष्यमाणत्वाच्च सौकुमार्यं तस्याप्युपलक्षणम् ।

एवं सौकुमार्यादिकं दृष्ट्वा कलुषितो रक्षकस्य शक्तिवैभवं विस्मृत्य स्वयं रक्षतीत्ययमर्थः कुत्र दृश्यत इत्यपेक्षायामयं शिष्टाचार इति तं दर्शयति – अयमर्थ इत्यादिना ।

चक्रवर्ती, स्वामी जानकीमुद्वाह्य गच्छति मध्ये परशुराम

---

दर्शनीयोयमर्थो हि राज्ञि दशरथे तथा ।
जानक्यां कौशिके तद्वद्दंडकारण्यवासिषु ।
ऋषिषु मारुतौ तद्वन्महाराजेथ गोपतौ ।
श्रीनन्दे विदुरे चैव धुरंगादिह्लिदासके ॥२६१॥

मंगलाशासन का हेतु होनेसे और आगे कहे जानेसे भी सौकुमार्यपद से सौंदर्य को भी लेना ।

इस प्रकार सौकुमार्यादियों को देख व्याकुल हो रक्षक उन के शक्तिवैभव को भूल आप ही उस की रक्षा करते हैं इस अर्थ को कहां देख सक्ते हैं इस शंका में—यह अर्थ शिष्टाचार सिद्ध है ऐसा दिखाते हैं—यह अर्थ इत्यादि ।

यह अर्थ चक्रवर्ती, सीताजी, जनकराज, विश्वामित्र,
दण्डकारण्यवासी ऋषि, हनुमान, सुग्रीव, श्रीनन्दगोप
श्रीविदुर, धनुर्धरदास, आदियों में देख सक्ते हैं ॥ २६१ ॥

चक्रवर्ती, श्रीरामजी सीताजी से विवाह कर लौटते समय में परशुराम

आगतस्तदा ताटकाताटकेयनिरसनादिभिरस्य शक्तिवैभवं व्यक्ततया जानन्नप्यस्य बाल्यं सौकुमार्यं च दृष्ट्वा किं वा स्यादिति भीतः सन् स्वयमग्रतो गत्वा–

'क्षत्ररोषात्प्रशांतस्त्वं ब्राह्मणश्च महायशाः ।
बालानां मम पुत्राणामभयं दातुमर्हसि ॥'

इति शरणागतिं कृत्वा पुनश्च तं स्वामिन उपरि क्रोधेन गच्छंतं दृष्ट्वा निष्प्राणः स्थितः—

'गतो राम इति श्रुत्वा हृष्टः प्रमुदितो नृपः ।
पुनर्जातं तदा मेने सुतानात्मानमेव च ॥'

इति स पराजितो गतः इति श्रुत्वा स्वं च पुत्रांश्च पुनर्जातमित्यमन्यत हि ।

श्रीजनकराजतनया, प्रथमजलप्रसरणस्थानभूतास्य वैभवं सर्वमपि जानंत्यपि अभिषेकार्थमलंकृतगात्रे चक्रवर्तिगृहं प्रति गच्छत्येतद्विषये जितास्य किं भविष्यतीति प्रेम्णा कलुषिता–

---

आ प्रकट होनेपर ताटका मारीच आदिओं के निरसन करनेसे इन की शक्तिवैभव को स्पष्ट जानते हुए भी इन के बाल्य और सौकुमार्य को देख क्या होनेवाला है ? ऐसा भीत हो आप सामने जा 'क्षत्रियरोष से शांत हुए महायशस्वी ब्राह्मण तुम हमारे बालपुत्रों को अभय देने योग्य हो' ऐसा शरणागति किये बाद भी वह श्रीरामजी के ऊपर जातेहुए देख मूर्छित हो 'परशुरामजी चले गये ऐसा सुन प्रसन्न हो चक्रवर्ती दशरथजी अपने और पुत्रों को पुनर्जन्म लिये हैं ऐसा समझते भये ।'

जनकराजपुत्री सीताजी, साक्षात् श्रीरामजी का संपूर्ण वैभव जानती हुई भी यौवराज्याभिषेक के लिये अलंकृत हो चक्रवर्ती के घर को जानेके समय इन के सौंदर्य से पराजित हो वह कैसे सुरक्षित रहेंगे ऐसा प्रेम से व्याकुल हो 'काल

'पतिसंमानिता सीता भर्तारमसितेक्षणा ।
आद्वारमनुवव्राज मंगलान्यभिदध्नुषी ॥'

इति द्वारपर्यंतं मङ्गलाशासनं कुर्वती सत्यनुव्रज्य—

'पूर्वां दिशं वज्रधरो दक्षिणां पातु ते यमः ।
वरुणः पश्चिमामाशां धनेशस्तूत्तरां दिशम् ॥'

इति दिक्पालकानस्य रक्षकत्वेनापेक्षितवती ।

जनकराजस्तनयेति च पृथगप्युच्यते । तदा श्रीजनकराजो महेश्वरधनुर्भंगेन स्वामिनः शक्तिवैभवं दृष्ट्वापि —

'इयं सीता मम सुता सहधर्मचरी तव ।
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ॥'

इत्याभिजात्यादिभिर्वैलक्षण्यविशिष्टामिमामंगीकुरुष्वेति प्रदानसमयेऽस्य वैभवं सौकुमार्यं च दृष्ट्वा कलुषितोऽस्य मिथुनस्य किमप्यवद्यं न स्यादिति भद्रं ते इति मंगलाशासनमकरोत् ।

विश्वामित्रः, स्वस्याध्वरत्राणार्थं स्वामिनमादाय गमनसमये

---

नेत्रवाली सीताजी पति से सम्मानित हो मंगलाशासन करती हुई द्वार पर्यन्त अनुवर्तन करती भयी ।' 'पूर्वदिशा में इन्द्र दक्षिण में यम पश्चिम में वरुण, उत्तर में कुबेर आप की रक्षा करें ।' ऐसा दिक्पालों को श्रीरामजी की रक्षा के लिये प्रार्थना करती भयी ।

जनकराज, महेश्वर के धनुर्भङ्ग से श्रीरामजी के शक्तिवैभव को जानते हुए भी 'यह सीता हमारी पुत्री आप की सहधर्मचारिणी है इस को चाहो अपने हाथ से इस का हाथ ग्रहण करो' ऐसा सीता जी को पाणिग्रहण करानेके समय श्रीरामजी के सौंदर्य और सौकुमार्य को देख व्याकुल हो उन दंपती को कोई बुराई न हो ऐसा विचार 'आप का मंगल हो' ऐसा मंगलाशासन करते भये ।

विश्वामित्र, अपने यागरक्षणार्थ श्रीरामजी को अपने संग लेजानेके समय बीच

मध्ये ताटकाया महतारवारेणागमनं दृष्ट्वा –

'अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् ।'

इत्युक्तप्रकारेण स्वामिनः शक्तिवैभवं ज्ञात्वापि सौकुमार्यं दृष्ट्वा कलुषितः–

'विश्वामित्रस्तु ब्रह्मर्षिर्हुंकारेणाभिभर्त्स्य ताम् ।
स्वस्ति राघवयोरस्तु जयं चैवाभ्यभाषत ॥'

इत्युक्तप्रकारेण स्वयमग्रतः स्थित्वा तां हुंकृत्य स्वामिनोऽनुजस्य चैकमवद्यं यथा न स्यात्तथा मंगलाशासनमकरोत् ।

श्रीदंडकारण्यवासिन ऋषयः,

'ते तं सोममिवोद्यंतं दृष्ट्वा वै धर्मचारिणः ।
मंगलानि प्रयुंजानाः प्रत्यगृह्णन् दृढव्रताः ।

इति स्वापन्निवृत्तिमभिमतसिद्धिं च कुर्यादयमेवेति साधनानुष्ठानं कुर्वाणा अस्मिन् सन्निहिते सति तद्विस्मृत्यास्य सौंदर्ये निमग्ना मंगलाशासनमकुर्वन् ।

मारुतिः, प्रथम दर्शने—

---

में ताटकाको बडी शूरता से आक्रमण करती हुई देख मैं श्रीरामजी के सत्यपराक्रम को जानता हूं' ऐसा श्रीरामजी के वैभव को जानते हुए भी उन के सौकुमार्य को देख व्याकुल हो 'ब्रह्मर्षि विश्वामित्र हूंकार से ताटकाराक्षसी को हटा श्रीराम लक्ष्मण का मंगल हो जय हो ऐसा कहते भये' ।

श्री दण्डकारण्यवासी ऋषि, 'धर्मानुष्ठाता वे ऋषिलोग, उदय होनेवाले चन्द्र सदृश उन श्रीरामजी को देख मंगलाशासन करते हुए स्वागत किये' ऐसा अपनी आपत् निवृत्ति अभिमत सिद्धि इन दोनों के करनेवाले श्रीरामजी हैं ऐसा समझ साधनानुष्ठान करनेवाले ऋषिलोग श्रीरामजी समीप आनेपर उन बातों को भूल उन के सौंदर्य से आकृष्ट हो मंगलाशासन किये हैं ।

'आयताश्च सुवृत्ताश्च बाहवः परिघोपमाः ।
सर्वभूषणभूषार्हाः किमर्थं न विभूषिताः ॥'

इत्यालानसदृशयोर्भुजयोः पराक्रमं दृष्ट्वास्माकमयं रक्षको भवेदिति बुद्धिं कृत्वापि तयोः सौंदर्यं दृष्ट्वा विद्धो दृष्टिदोषो भवति चेत् किं कर्तव्यमित्यतिशंकां कृत्वा आभरणैरनयोराच्छादनमकृत्वैवं प्रकाशने किं कारणमित्युदरपीडनं कृत्वा, पश्चात्स्वामिनः शक्तिवैभवं बहुमुखं पश्यन्नपि सौकुमार्यानुसन्धानेनास्य किं भविष्यतीत्यतिभीतः सर्वदशायां च सह स्थित्वा रक्षितवान् हि ।

महाराजो वालिवधादिभिः स्वामिनः शक्तिगौरवं दृष्ट्वापि सौकुमार्यमेव दृष्ट्वा कलुषितो विभीषणे च चतुर्भिः सहागते –

'एष सर्वायुधोपेतश्चतुर्भिः सह राक्षसैः ।
राक्षसोभ्येति पश्यध्वमस्मान् हंतुं न संशयः ॥'

---

हनुमान् — प्रथमदर्शन के समय 'लंबे गोल और परिघ सदृश ये भूजायें सर्वभूषण से अलंकार करने योग्य सो क्यों नहीं भूषित हैं' ऐसा हस्तिबंधन स्तंभ के सदृश बाहुओं के पराक्रम को देख हमारी रक्षा करनेमें समर्थ हैं ऐसा विश्वास होनेपर भी उन के सौंदर्य में विद्ध हो औरों की नजर लगनेपर क्या होगा ? ऐसी अतिशंका कर दिव्याभरणों से इस को नहीं ढक ऐसा प्रकट करनेका कारण क्या ? इस उदर दाह से पीडित हो, बाद भी श्रीरामजी की शक्ति को बहुप्रकार देखनेपर भी सौकुमार्य का अनुसंधान करनेसे इन को क्या होगा ? ऐसा भयभीत हो सर्वदशा में संग रह रक्षा करता भया ।

सुग्रीवजी—वालिवध आदिओं से श्रीरामजी की शक्ति को देखनेपर भी सौकुमार्य ही को देख व्याकुल हो श्रीविभीषणसूरि चार राक्षसों के साथ जब प्रकट हुए तब 'यह राक्षस चार राक्षसों के साथ सर्वायुधसमेत निस्संशय

इति नः सर्वेषां प्राणभूतस्य स्वामिनो हिंसनेनास्मान् सर्वान् हंतुमागच्छत्ययमिति निश्चित्यामुं वानराणां दर्शयित्वा 'राघवं शरणंगतः' 'निवेदयत मां क्षिप्रं' इत्युक्तिं श्रुत्वापि—

'वध्यतामेष तीव्रेण दंडेन सचिवैः सह ।
रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः ॥'

इति रावणसंबंधमेव पश्यन्नस्य चित्रवधः कर्तव्य इत्युक्त्वा

'रावणेन प्रणिहितं तमवेहि निशाचरम् ।
तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥'

इति रावणेन प्रेषित आगत इत्येव जानीहि तस्य दंडनमेव प्राप्तमिति जानामीत्येवं प्रकारेणानेकानुक्त्वायं सर्वथा नांगीकार्य इत्येकरीत्या स्थितः सन् 'पिशाचान् दानवान् यक्षान्' इत्यादिना स्वबलं प्रदर्श्य कपोतोपाख्यानं कंडूपाख्यानं चोक्त्वा भयं दूरीकृत्य 'आनयैनं हरिश्रेष्ठ' इति प्रकारेण यथा वक्तव्यं स्यात्तथा स्वामिनं रक्ष्यतया विचिंत्य रक्षितवान् ।

---

हमलोगों को मारनेके लिये आता है देखो' ऐसा, 'राघव के शरण में आया हूं' 'मुझे जल्दी श्रीरामजी को निवेदन करो' इन वचनों के सुनने पर भी 'यह दुष्ट रावण का भ्राता विभीषण साथियों के साथ तीव्र दण्ड से माराजाय' ऐसा रावण का संबंध ही को देख इसका चित्रवध होना चाहिए और रावण से भेजा गया गुप्तचर समझो! हे क्षमानिधे, उस का निग्रह करना ही उचित समझता हूं इस तरह बहुत कह इस को कभी अंगीकार नहीं करना ऐसा स्थिर हो 'पिशाच और दानवों को उंगली के अग्रभाग से नाश कर सक्ता हूं' इत्यादि से अपने बल को दिखा कपोतोपाख्यान और कण्डूपाख्यान को कह भय के दूर कर जैसे 'हे वानरराज ! विभिषण को लाओ ऐसा कहे तैसा श्रीरामजी को रक्ष्य समझ रक्षा करते रहे ।

महाराज इति श्रीजटायुमहाराज इत्यपि वदंति । जटायुमहाराजो जानक्यर्थं रावणेन युद्धं कृत्वाल्पप्राणतया स्थितं स्वं स्वामिन्यागत्य पश्यति जनस्थाने स्थित्वा चतुर्दशसहस्राण्यपि रक्षांस्येकवीरं कृत्वा संहरतो भुजबलं जानन्नपि—

'यामोषधिमिवायुष्मन्नन्वेषसि महावने ।
सा देवी मम च प्राणा रावणेनोभयं हृताः ॥'

इति दुर्लभौषधमन्वेषमाणाः प्रतिवनं यथान्वेषंते तथा यामस्मिन् महावने मार्गमाणः संचरसि, तव नित्यप्राणसदृशा सा मम प्राणाश्चोभयं च रावणेन दुर्जनेनापहृतमिति कथनसमये विरहक्लेशप्रयुक्तशैथिल्यं सौकुमार्यं राक्षसैः सहोत्पन्नं महावैरं च स्मृत्वा किं वा भविष्यतीति भीत आयुष्मन्नित्यायुः प्रार्थितवान् खलु ।

श्रीनंदगोपः पूतनानिरसनेन कृष्णस्य दिव्यशक्तिं दृष्ट्वापि शैशवप्रयुक्तसौकुमार्यमेव पश्यन् कलुषित उदरदाह्नेन-

'रक्षतु त्वामशेषाणां भूतानां प्रभवो हरिः ।
यस्य नाभिसमुद्भूतपंकजादभवज्जगत् ॥'

---

श्रीजटायु —सीताजी के लिये रावण के साथ युद्ध कर प्राणावशिष्ट दशा में अपने को श्रीरामजी देखनेपर जनस्थान के चौदह सहस्र राक्षसों को अकेले ही संहार करने के भुजबल को जानते हुए भी

'हे आयुष्मन् जिस को औषधि के तरह महावन में ढूंढते हो वह देवी और हमारा प्राण दोनों को रावण अपहार किया है' ऐसा कहने के समय विरह क्लेश से आयी हुई शिथिलता, सौकुमार्य और राक्षसों के साथ विरोध को भी विचार क्या होनेवाला है ऐसा भीत हो आयुष्मन् इस पद से आयु की प्रार्थना किया है ।

श्रीनन्दगोप—पूतना संहार से श्रीकृष्ण की दिव्य शक्ति को जानते हुए भी

इति सकलजगत्कारणभूतः सकलविरोधिनिरसनशीलः सर्वेश्वरस्त्वां रक्षत्विति रक्षामकरोत् ।

श्रीविदुरः कृष्णस्य सर्वज्ञत्वं सर्वशक्तित्वादिकं च ज्ञात्वापि दुर्योधनगोष्ठ्यां स्थितिसमये कपटासनकरणप्रकारं दृष्ट्वा भीतः प्रेमांधतया 'संस्पृशन्नासनं शौरेर्विदुरः स महामतिः' इति स्वगृहे स्वेन कृतमासनं चातिशंकां कृत्वा स्वहस्तेनापि सम्यक् स्पृष्ट्वाऽपश्यत् खलु ।

धनुर्धरदासः– तस्मिन् ज्ञानशक्त्यादिकं ज्ञात्वा सर्वेश्वर एवास्माकं रक्षकः इति स्थितोऽपि प्रेमपरवशत्वात् भगवतो यात्रासमये किंचिच्चलनं जायते चेत्प्राणं त्यजामीति छुरिकां दधानः सेवत इति प्रसिद्धं खलु ।

प्रभृतिष्वित्यनेन —

---

शिशुत्व प्रयुक्त सौकुमार्य ही को देख व्याकुल हो उदर दाह से 'जिस के नाभिकमल से संपूर्ण जगत् हुआ संपूर्ण प्राणियों के सृष्टि कर्ता वह हरि तुमारी रक्षा करें' ऐसी रक्षा करता भया ।

श्रीविदुर—श्रीकृष्ण के सर्वज्ञत्व सर्वशक्तित्वादिओं को जानते हुए भी दुर्योधन की गोष्ठी में जाने के समय असत्य आसन स्थापन को देख भयभीत हो प्रेमांधता से महामति विदुर श्रीकृष्ण के आसन को टटोलता भया ऐसा अपने घरमें आप से समर्पित आसन को भी अतिशंका से अपने हाथ से दबा कर देखा है ।

धनुर्धरदास—परमात्मा की ज्ञानशक्ति आदिओं को जानते हुए श्रीरङ्गनाथ हमारे रक्षक ऐसा समझने पर भी प्रेम परवश होने से श्रीरङ्गनाथ के बाहर पधारने के समय विमान किंचित् हलने पर मेरे प्राणों को छोड दूंगा ऐसी प्रतिज्ञा कर नंगी तलवार को ले आगे जाते भये ।

'स्त्रियो वृद्धास्तरुण्यश्च सायं प्रातः समाहिताः ।
सर्वान् देवान्नमस्यंति रामस्यार्थे यशस्विनः ॥'

इति अयोध्यावासिजनाः ।

'यन्मंगलं सुपर्णस्य विनताऽकल्पयत्पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मंगलम् ॥'

इति कौशल्या ।

'जातोऽसि देवदेवेश शंखचक्रगदाधर ।
दिव्यरूपमिदं देव प्रसादेनोपसंहर ॥'

इति श्रीवसुदेवः ।

'उपसंहर सर्वात्मन् रूपमेतच्चतुर्भुजम् ।
जानातु माऽवतारं ते कंसोऽयं दितिजन्मजः ॥'

इति देवकीप्रभृतयः स्मर्यंते ।

एतद्विषयवैलक्षण्यं सर्वानपि मंगलाशासने प्रेरयतीत्यत्र पुनरप्येकमुदाहरणं दर्शयति—बालस्वामिनीत्यादिना ।

---

आदि कहने से 'स्त्री, वृद्ध, तरुणी ये सब सायं प्रातः जागरूक हो यशस्वी श्रीरामजी के लिये संपूर्ण देवताओं को नमस्कार करती भयीं' ऐसे अयोध्यावासी मनुष्य । 'अमृत लानेवाले गरुडजी को विनता ने जिस मंगल को की है वही मंगल तुम्हें हो' ऐसा कौशल्या । 'शंखचक्रगदाधर हो अवतार लिये हो कृपया इस दिव्यरूप को छिपा लो' ऐसा श्रीवसुदेव जी । 'हे सर्वात्मान् इस चारभूजा के रूप को छिपा लो आप के अवतार को दैत्य कंस न जाने' ऐसा देवकी देवी आदिओं को समझना ।

परमात्मा का वैलक्षण्य सब को मंगलाशासन में लगावेगा इस विषय में और एक उदाहरण दिखाते हैं । लक्ष्मणजी को इत्यादि ।

बालस्वामिनि श्रीगुहोऽतिशंकामकरोत् । उभयो-
रतिशंकां कृत्वा गुहयोरकराः स्वामिनमरक्षन् ॥ २६२॥

---

श्रृंगिबेरपुरे गत्वा श्रीगुहस्य स्वीकारदिनेऽनुरूपतया बालस्वामिना रचितायां पर्णशय्यायां स्वामिनि जानक्यां च शयमानयोर्बाल्यात्प्रभृति सुस्निग्धत्वात् किं भविष्यतीति भीत्या पृष्ठबद्धाक्षयतूणिं बद्धतलांगुलित्रं ज्यासारोप्य मध्ये धृतधनुषं संचरत्प्राकारामिव संचरंतं बालस्वामिनं दृष्ट्वा श्रीगुहः एकोऽनुजो मातरं प्रेर्य राज्यं गृहीत्वा बद्धप्रतिसरेण वनं प्रेषितवान्, तद्वदयं चानुजः खलु, एकांतस्थले किंकर्तुं विचार्यै-

---

एवमन्यत्र द्रष्टव्यो दिङ्निदर्शनमत्र वै ।
प्रकरोन्महतीं शंकां बालस्वामिनि श्रीगुहः ।
उभयत्रातिशंकां च कृत्वा गुहप्रजादयः ।
प्ररक्षन् स्वामिनं श्रीमद्राघवं भक्तवत्सलम् ॥ २६२ ॥

लक्ष्मणजी को श्रीगुहदेव जी अतिशंका किये
हैं, इन दोनों को श्रीगुहदेवजी के भृत्यवर्ग
अतिशंका कर श्रीरामजी की रक्षा किये हैं ॥ २६२ ॥

श्रृंगिबेर पुर में श्रीरामजी पधार श्रीगुहदेवजी को अंगीकार करने के अनंतर उचित स्थान देख श्रीलक्ष्मणजी से बिछाई हुई पर्णशय्या में स्वामी और स्वामिनी सोनेपर बाल्यप्रभृति से स्नेह करनेवाले लक्ष्मण क्या होगा ऐसा भीत हो पीठ में तूणीर को बांध अंगुलित्राण को बांध धनुष चढा बाणप्रयोग कर आप चलंत प्राकार के तरह पहरा देते हुए देख श्रीगुहदेव एक भ्राता मातृ द्वारा राज्य को छीन व्रतबंधन के साथ अरण्य में ढकेल दिया यह भी उसी के सदृश भ्राता ही है एकांत स्थल में क्या करने को सन्नद्ध होरहा है यह ज्ञात नहीं ऐसी अतिशंका

वं वर्त्तते न जानीम इत्यतिशंकां कृत्वा तथाचेदयं विचारयति चेदमुं सम्यक् पश्याम इति धनुर्बाणं च गृहीत्वा तत्पादवि-न्यासस्थले पदं निक्षिप्यायत्तोऽतिष्ठत् । श्रीगुहस्यानुचरवृत्तिं कृत्वा संचरंतः परिकराश्च—स ज्ञातिरयं कुटिलवृत्तिको ग्रामणी एवं च सत्युभावप्यमुं विषयं किं करिष्यत इत्युभयोरप्यतिशंकां कृत्वा तथा कुरुतश्चेदुभावपि नाशयित्वा वयममुं रक्षाम इति प्रत्येकं धनुष्पाणयः संतो भगवंतं रक्षितवंत इत्यर्थः। श्रीभरतं प्रत्येतद्विशेषकथनसमये श्रीगुहः—

'नियम्य पृष्ठे तु तलांगुलित्रवान्
शरैः सुपूर्णामिषुधिं परंतपः ।
महद्धनुः सज्यमुपोह्य लक्ष्मणो
निशामतिष्ठत्परितोऽस्य केवलम् ॥
ततस्त्वहं चोत्तमचापबाणधृक्
स्थितोऽभवं तत्र स यत्र लक्ष्मणः ।
अतंद्रिभिर्ज्ञातिभिरात्तकार्मुकै-
र्महेंद्रकल्पं परिपालयंस्तदा ॥'

इति तद्रात्रिवृत्तांतमवदत् ।

---

कर किसी बुराई का चिंतवन करने पर इस को संहार करूंगा ऐसा विचार धनुष और लाठी को ले इन के कदम में कदम रखता हुआ पहरा देता भया। श्रीगुहदेव जी के भृत्यगण लक्ष्मण तो ज्ञाति है यह तो कुटिल जंगली है ये दोनों इस वखत इस विषय में क्या करने को देखते हैं ऐसा दोनों पर अतिशंका कर कुछ बुराई करैं गे तो इन दोनों को मार कर सीता और राम की रक्षा करें गे ऐसा प्रत्येक व्यक्ति हाथ में धनुष ले श्रीरामजी की रक्षा किये हैं। श्रीभरत सूरि से गुहदेवजी के वार्तालाप करते समय—

एकस्मिन् दिने मुखं पश्यतां
सौंदर्येण क्रियमाणप्रकारः सः ॥ २६३ ॥

---

श्रीगुहस्य परिकरस्य च तद्दिने दर्शनमात्रं विना स्वामिना सह पूर्वं वासनापि नास्ति, एवं सत्यपि तेषामयमाकारः कथं जात इत्यत आह एकस्मिन् दिन इत्यादि ।

बहुकालवासनां विना एकस्मिन् दिने मुखदर्शनं कृतवताः मपि तद्विग्रहवैलक्षण्येन क्रियमाणो व्याकुलप्रकारो भवत्यय-मित्यर्थः । सदा पश्यंतिकृत इव सकृद्दर्शनकृतोऽपि प्रेमांधा अस्थाने भयशंकयाऽनुकूलान् प्रत्यप्यतिशंकां कृत्वा प्रीत्या

---

एकस्मिन् दिवसे राममुखं दृष्टवतां सताम् ।
सौंदर्ये हि प्रकारः सः क्रियमाणो निगद्यते ॥ २६३ ॥

अंगुलित्राण को बांध परंतप लक्ष्मण बाणों से भरा तर्कस को पीठ पर बांध धनुष को चढ़ा रातभर पहरा देते रहे मैं भी उत्तम बाण युक्त धनुष को ले जहां लक्ष्मण थे तहां रहता रहा, हमारे भृत्यगण भी महेन्द्र समान श्रीरामचन्द्र को पालन करते हुए धनुर्हस्त जागरूक रहते रहे, ऐसा उस रात्रि के वृत्तांत को सुनाया है ।

श्रीगुहदेवजी और उन के भृत्यगण को उस दिन के दर्शन विना पहिले दर्शन नहीं हुआ था तो यह प्रेम कैसा हुआ इस शंका में कहते हैं—एक दिन इत्यादि ।

एक दिन मुख के सामने आनेवालों
को भी सौंदर्य विद्ध कर देता है ॥ २६३ ॥

बहुत दिन वासना न कर एकही दिन दर्शन करनेवालों को भी उन का विग्रह वैलक्षण्य विद्ध कर देता है और सदा देखनेवालों के तरह एक बार देखनेवलों को भी प्रेमांध बना अस्थान में भयशंका से अनुकूलपर भी अतिशंका कर प्रेम से

एतेऽस्मत्कोटाविति वक्तुं
योग्या दिव्यसूरीणां स्थितिः ॥ २६४ ॥

---

यथा रक्षेयुस्तथा वर्तते खलु भगवद्विग्रहसौंदर्यम् ।

अथ चास्यार्थस्योदाहरणतया पूर्वोक्तेभ्यो व्यावृत्तानां दिव्य-सूरीणां मंगलाशासननिष्ठामाह— एत इत्यादिना ।

एत इति चक्रवर्तिप्रभृतयः पूर्वोक्ताधिकारिणः सर्वे परामृश्यंते । तर्हि जानक्यपि कथं तत्सदृशतयोच्यते इति चेत्— दिव्यसूरिष्वग्रेसरात् परांकुशाद्विष्णुचित्तस्याधिक्यमुक्तं, तथा भोगपरवशायास्तस्या मंगलाशासनादेरेतद्दिव्यसूरीणामाधि-क्योक्तेर्न विरोधः । तर्हि अस्मत्कोटाविति कथमुच्यते इति चेदेतदर्थनिष्ठायां तेषामाधिक्यप्रदर्शनार्थमुक्तत्वान्न विरोधः ।

---

एतेस्मत्कोटिनिक्षिप्ता इत्थं कथनयोग्यताम्—
दधाति दिव्यसूरीणां परिस्थितिरशंसयम् ॥२६४ ॥

रक्षा करनेवाला बना देता है ।

और भी इस अर्थ को उदाहरण रूप से पूर्वोक्त से भिन्न सूरियों की मंगला-शासन निष्ठा को कहते हैं— ये इत्यादि ।

ये सब हमारी कोटि में गिने जायंगे सूरियों की दशा देखने पर ॥ २६४ ॥

ये सब माने चक्रवर्ती प्रभृति पूर्वोक्त सब अधिकारी । तब लक्ष्मीजी को भी उनके साथ गिन सक्ते हैं क्या? इस शंका में कहते हैं—सूरियों में श्रेष्ठ शठकोप सूरि की अपेक्षा भट्टनाथसूरि को जैसे श्रेष्ठ कहते हैं तैसे भोगपरवश लक्ष्मीजी की अपेक्षा मंगलाशासन की दृढता में सूरियों को श्रेष्ठ कहना विरोध नहीं । तथापि हमारी कोटि में ऐसा कह सक्ते हैं क्या? ऐसी शंकापर मंगलाशासन निष्ठा में सूरियों के आधिक्य को दिखाने के लिये कहने से विरोध नहीं । इसलिये प्रेम से

दिव्यसूरयः सर्व इव न भवति महान् सूरिः ॥२६५॥

---

तस्मादेतद्विषयवैलक्षण्यकलुषितचित्ता अस्य किंवा भविष्यतीत्युदरज्वलनेनारक्षान्निति पूर्वोक्ताः सर्व इत्यर्थः । अस्मत्कोटाविति वक्तुं योग्येति–अस्मिन् विषयेऽन्वये सत्यपि प्रेमाभावेन मंगलाशासने आदररहितास्मत्सदृशमात्रा इति वक्तुं योग्येत्यर्थः । दिव्यसूरीणां स्थितिरिति– अज्ञाननिवृत्तिपूर्वकानंदरूपप्रपन्नज्ञानं प्राप्तत्वान्निरतिशयप्रेमवतां दिव्यसूरीणां मंगलाशासननिष्ठेत्यर्थः ।

एते दिव्यसूरयो मंगलाशासने मिथः सदृशाः किमित्यत आह– दिव्यसूरय इत्यादि ।

मंगलाशासनेऽन्येषां सूरीणां विष्णुचित्तस्य च महती व्यावृत्तिरस्तीत्यर्थः ।

तदपेक्षयाऽस्यात्राधिक्यं कीदृशमित्यत आह — तेषां तत्कादाचित्कमित्यादि ।

---

ते सर्व इव नैवास्ति विष्णुचित्तो महामुनिः ॥ २६५ ॥

मंगलाशासन करनेवाले पूर्वोक्त चक्रवर्ती आदि हमारी कोटि में गिने जायंगे माने भगवद्विषय में संबंध रखते हुए भी प्रेम के अभाव से मंगलाशासन में दार्ढ्याभाववाले हामारी तरह कहने योग्य हैं। सूरियों की दशा माने अज्ञान निवृत्तिमत्यानंद प्राप्त होने से अधिक प्रेम युक्त सूरियों की मंगलाशासन निष्ठा।

ये सूरिलोग मंगलाशासन के विषय में परस्पर तुल्य हैं क्या इस शंका में कहते हैं सूरिगण इत्यादि।

सूरिगण के बराबर भट्टनाथसूरि नहीं हैं ॥ २६५ ॥

मंगलाशासन में अन्य सूरियों की अपेक्षा भट्टनाथ सूरि का बहुत अन्तर है।

**तेषां तत्कादाचित्कमस्य नित्यम् ॥ २६६ ॥**
**तेषां निमज्जनमेवास्योत्थानं भवति ॥ २६७ ॥**

---

अज्ञाननिवृत्तिपूर्वकानंदरूपापन्नज्ञानप्राप्तेस्तुल्यत्वेपि वज्र-लेपं पुरुषानपि स्त्रीवस्त्रं धारयद्भगवद्विषयवैलक्षण्यमनुसंदधाति चेदुत्तरोत्तरानुभवकामानामन्यसूरीणां परसमृद्ध्येकप्रयोजन-मंगलाशासनं सदाऽभावात् कस्यांचिद्दशायां मृग्यमित्यर्थः । तद्वैलक्षण्यदर्शनानंतरं तदनुभवपरत्वं विना अस्थाने भयशंकां कृत्वा बहुशरदो गायतः प्रेमस्वाभावस्यास्यैतन्मंगलाशासनं सर्वकालवर्ति भवतीत्यर्थः ।

तत्र हेतुः क इत्यत आह– तेषामित्यादि

---

कादाचित्कं च तेषां तन्नित्यं चास्य महामुनेः ॥ २६६ ॥
तेषान्निमज्जनस्थानमस्योच्चस्थानमस्ति हि ॥ २६७ ॥

उन की अपेक्षा इन में आधिक्य क्या इस शंका में कहते हैं उन को इत्यादि ।

उन को यह कादाचित्क है इनको यह नित्य है ॥ २६६ ॥

अज्ञाननिवृत्तिमय्यानंद प्राप्ति बराबर होने पर भी वज्र को भी गलानेवाले पुरुष को स्त्री बनानेवाले भगवद्विग्रह सौंदर्य का अनुसंधान करनेपर उत्तरोत्तर अनुभव कामनावाले अन्य सूरियों को पर समृद्धि ही प्रयोजन है जिस को ऐसा यह मंगलाशासन सदा एक प्रकार न हो किसी एक दशा में ढूंढने योग्य है । उस के सौंदर्य को देखने के बाद तदनुभव को छोड अस्थाने भयशंका को श्रीबंहु शरद गान करने के प्रेम स्वभाव वाले भट्टनाथसूरि को यह मंगलाशासन सर्वकाल वर्ती है ।

उसका हेतु क्या इस शंका में कहते हैं उनका इत्यादि ।

उनका अथाह ही इनको थाह है ॥ २६७ ॥

तेषामुभयशेषत्वं विनाश्य स्वरूपं निमज्जयत्त-
दस्योभयवृद्धिहेतुः सत्स्वरूपमुत्तारयति ॥ २६८ ॥

---

अनुभवपराणां तेषां दृष्टिचित्तापहारं कृत्वा निमज्जनस्थानं तत्सौंदर्यमेवास्य किं वा भविष्यतीति भीत्योत्तरोत्तरं रक्षां कृत्वा मंगलाशासनपरस्यास्य धृतिं प्राप्य स्थित्वा मंगलाशासनं कर्तुमुपयुक्तस्थलं भवतीत्यर्थः ।

तत् क दृष्टमित्यत आह– तेषामुभयशेषत्वमित्यादिना ।

भगवदनुभवैकपराणां तदलाभेनोत्कूलार्तिमतामन्येषां सूरीणां 'कृष्णपुरस्वामिनो दासोऽन्यस्यार्हः किं' 'प्राप्तं त्वद्दासानां दासत्वं' इत्यनुसंधीयमानं प्रथममध्यमपदसिद्धं भगवच्छेषत्वं तत्काष्ठाभूतं भागवतशेषत्वं चेत्युभयशेषत्वं च अस्माकमेवानं-

---

तेषामुभयशेषत्वं नश्य स्वं यन्निमज्जयत् ।
तदस्योभयशेषत्वहेतुः स्वं चोद्धाति हि ॥ २६८॥

अनुभवपर उन सूरियों के दृष्टि और चित्त को अपहार कर मग्न करनेवाले उन का सौंदर्य ही उस को क्या होगा ऐसा भीत हो ऊपर ऊपर मंगलाशासन पर इस भट्टनार्थसूरि को स्थिर रहने योग्य बनाता है । वह कैसा इस शंका में कहते हैं उन के इत्यादि ।

उन के उभय शेषत्व को नाश कर स्वरूप को डुबा-
नेवाला यह सौंदर्य भट्टनाथसूरि के उभय शेषत्व
को बढा कर स्वरूप को स्थिर करता है ॥ २६८ ॥

भगवदनुभवैकपर अनुभवालाभ में अतिक्लेश पानेवाले अन्य सूरियों को 'कृष्णपुरनायक का दास मैं अन्य के उपयुक्त नहीं ।' 'प्राप्त हुआ तुह्मारे दासों का कैंकर्य' ऐसे प्रथम मध्यम पद सिद्ध भगवत शेषत्व और उस का सीमाभूत भागवत शेषत्वरूप उभय शेषत्व को 'हम हीं को अच्छा होगा' इस वचनानुसार

दश्चेद्’इति वक्तुं योग्यान् कृत्वा स्वप्रवृत्तिरयुक्तेत्युक्तौ ‘युष्माभिः सहास्माकं संबंधो नास्ति’इति यथा विधुन्वंति तथा कृत्वा ‘क्रूरपक्षगरुड’इत्यादिना क्रोधवचसः कृत्वा विनाश्य परातिशयकरत्वैकवेषरूपं स्वरूपं मंगलाशासनानभिज्ञं कृत्वा स्वविषये मग्नं कुर्वद्भगवत्सौंदर्यं, तादृशसौंदर्यदर्शनेऽनुभवे मनसोऽगमनेन तस्य किं भविष्यतीत्युदरज्वलनेन रक्षतोऽस्य ‘त्वद्रक्तचरणकांतेः श्रीरक्षा’ ‘लक्ष्म्याबहुशरदः’ ‘तेजोविशिष्टस्य चक्रस्य बहुशरदः’ ‘तत्पांचजन्यस्य च बहुशरदः’इति तद्विषयस्य तदीयविषयस्य च मंगलाशासनं कारयित्वोभयशेषत्ववृद्धि हेतुः सत्स्वरूपं स्वविषये यथा मग्नं न भवेत् तथा वर्तयतीत्यर्थः । एवं तेषां तथा स्वरूपं निमज्जयत्तस्य सौंदर्यमस्यैवं करणात् तेषां निमज्जनस्थानस्यैवास्योत्थानतया स्थितत्वात्तेषामिव कादाचित्कत्वं विना मंगलाशासनमस्य नित्यं भवतीत्युक्तम् ।

---

स्वप्रयोजन में लगा विलंब रोष से ‘जाओ पूर्ण’ ‘फिर गोष्ठी में मत आओ’ ऐसा वना स्वप्रवृत्ति अनुचित होने पर भी ‘तुम से हमारा कोई सबंध नहीं’ ऐसा त्याग कराकर ‘क्रूर पांखवाला पक्षी’ इत्यादि से निन्दा कर नाश करनेवाला परातिशयकरत्व ही स्वरूप है जिस का ऐसे स्वरूप को मंगलाशासन को न जाने जैसा अपने में मग्न करनेवाला भगवत्सौंदर्य उस सौंदर्यानुभव में मन न लगा उस को क्या होगा ऐसा उदरदाह से रक्षा करनेवाले इस भट्टनाथसूरि को ‘आप के रक्तचरण की कान्ती सुरक्षित रहे’ ‘लक्ष्मीजी सुरक्षित रहें’ ‘पांचजन्य सुरक्षित रहें’ ऐसा तद्विषय और तदीय विषय को मंगलाशासन करानेवाले होनेसे उभय शेषत्व बृद्धि का हेतु हो स्वरूप को अपने में नहीं डुबावेगा । तथा च अन्य सूरियों के स्वरूप को डुवानेवाला उन का सौंदर्य भट्टनाथसूरि को किनारे रखने से अन्य सूरिगण कदाचित् मंगलाशासन करते हैं यह नित्य मंगलाशासन करते हैं ।

भयनिवर्तकानां भयोत्पत्तिः, प्रतिकूलानां
चानुकूलकरणं, अतीतकालापदानानामु-
त्तरकाले उदरज्वलनं, प्राप्तिफलमिदमेवे-
त्युक्तिः, अनिमिषान्प्रत्यपि 'मास्वपत मा-
स्वपत, इत्युक्तिरेवंप्रकारेणेदमेव
यात्रा भवति ॥ २६९ ॥

---

अन्येषां सूरीणां मंगलाशासनस्य कादाचित्कत्वेपि, अस्य नित्यं भवतीत्यत्र निदानमेतदिति तद्दर्शयामास पूर्वं, इदं तस्य नित्यतया वर्तत इत्यमुमर्थं व्यक्तमाह—भयनिवर्तकेत्यादिना।

स्वसौकुमार्यं दृष्ट्वा कलुषितस्यास्य विषयस्य किंभविष्यतीति बिभ्यतोऽस्य भयं परिहर्तुं मल्लवर्गमनायासेन नाशयद्भुजबले

---

भीनिवर्तकचक्रादि भयोत्पत्तिविपक्षणम् ।
सपक्षीकरणं चातः कालापत्तेस्तदुत्तरे ।
काले हृज्ज्वलनं प्राप्तमिदमेवेति वाक्यतः ।
मास्वपि हीति देवांश्च भूयोभूयः प्रकीर्तनात् ॥ २६९ ॥

इन का नित्य होनें का कारण क्या इस शंका में कहते हैं भय निवर्तकों को इत्यादि ।

भय निवर्तकों को भय करना प्रतिकूलों को भी अनु-
कूल बना लेना अतीत कालीन चेष्टितों को उत्तर काल
में क्लेश पाना प्राप्ति का फल यही कहना देवताओं
को जागरूक कहना इत्यादि से यही यात्रा होना ॥ २६९ ॥

अपने परमात्मा के सौकुमार्य को देख व्याकुल हो इस में क्या होगा ऐसा उदरदाहवाले इन के भय को दूर करने के लिये मल्लों को अनायास से संहार कर-

प्रदर्शिते, एतद्भुजबलमेव स्मृत्वाऽगणयित्वाऽसुरराक्षसयुद्धे प्रविशति चेत् किं भविष्यतीति तस्य भयेन मंगलाशासमकरणं, 'विद्यमानामंगलानां निवृत्त्यर्थमविद्यमानमंगलोत्पत्त्यर्थं च यस्या कटाक्ष एवालं सा 'विश्लेष्टुं न शक्तास्मि क्षणमपि' इत्यस्मद्विश्लेषमसहमाना तिष्ठति, अस्माकममंगलानि कथं स्युः ? किमर्थं बिभेषि इति लक्ष्मीसंबंधं प्रदर्शयति, अस्य मिथुनस्यावद्यं भवति चेत् किं कर्तव्यमिति भीत्या 'लक्ष्म्या अपि बहुशरदः' इति मंगलाशासनकरणं, एतद्भयं निवर्तयितुं 'अस्य मिथुनस्य किंचिद्प्यवद्यं यथा न स्यात्तथा प्राकारवत्तिष्ठताविमौ पश्य' इत्युभयपार्श्वेऽपि धृतौ सुदर्शनपांचजन्यौ प्रदर्शयति, तयोरवद्यं भवति चेत्किं कर्तव्यमिति भयेन तयोर्मङ्गलाशासनकरणं; अनन्यप्रयोजनतयानुकूलान् भगवच्चरणार्थिनो मंगलाशासनसहायतया मेलयित्वा तावता पर्याप्त्यभावात्प्रयोजनांतरपरतया

---

नेवाले भुजा के बल को दिखानेपर इस भुजबल को आश्रय ले गर्वित हो असुर राक्षस युद्ध में प्रवेश करें गे तो क्या होगा ऐसा उस भुजबल के लिये मंगलाशासन करना। अमंगल दूर हो मंगलहोने के लिये जिस का कटाक्ष ही कारण है ऐसी लक्ष्मी क्षणकाल भी विश्लेष न कर हमारे पास रहने पर हमारा अमंगल होगा क्या क्यों क्लेश पाते हो ऐसा कह लक्ष्मी के संबंध को दिखाने पर इस मिथुन को कोई बुराई हो तो क्या होगा ऐसा डर लक्ष्मीजी सुरक्षित रहें ऐसा मंगलाशासन करना। इस भय को दूर करने के लिये इस मिथुन के कोई बुराई न होने के लिये प्राकार के तरह रहनेवाले शंखचक्र को दिखाने पर उन को कोई आपद होगी तो क्या करना ऐसा डर सुदर्शन सुरक्षित हो पांचजन्य सुरक्षित हो ऐसा मंगलाशासन करना। अनन्य प्रयोजन अनुकूल भगवत्शरणागतों को मंगलाशासन की सहायकतया मिलालेने मात्र से तृप्त न हो प्रयोजनांतरपर प्रतिकूल-

प्रतिकूलान् केवलांश्चैश्वर्यार्थिनश्चाहूय मंगलाशासनयोग्यतया तेषामनुकूलकरणं; 'लंका निर्जना यथाऽस्यात्तथा युद्धं कृतवतो मंगलाशासनं कुरुत' इत्यादिनाऽतीतकालापदानानां पश्चात्काले समकाल इवोदरज्वलनेन मंगलाशासनकरणं; 'परितः स्थित्वा स्तुवंति बहुशरदः' इति भगवत्प्राप्तेः फलमेतन्मंगलाशासनमेवेत्युक्तिः; 'स्नेहादस्थानरक्षाव्यसनिभिरभयं शार्ङ्गचक्रासिमुख्यैः' इत्युक्तप्रकारेणास्थाने रक्षाव्यसनित्वात् अनिमिषतया स्थितान् दिव्यायुधादिदिव्यसूरीन् दृष्ट्वा गुणविद्धा विषपायिन इव स्वस्वानभिज्ञत्वमनुभवेऽवगाहनं कैंकर्यपरत्वं वा माकुरुत जाग्रतो रक्षतेति बहुकालं च कथनात् मंगलाशासनमेव वृत्तिरित्यर्थः ।

एवं मंगलाशासनस्याधिकारिमार्गणेन प्रतिकूलानामनुकूलत्वापादने हेतुरुपदेशः (तिरुप्पल्लांडु) श्रीबहुशरदः इत्येकस्मिन्नेव

---

भूत केवल और ऐश्वर्यार्थियों को भी शोधन कर मंगलाशासन करने योग्य अनुकूल वना लेना। 'लंका को जनशून्य करनेवाले श्रीरामजी का मंगल कहेंगे' इत्यादि से अतीत काल चेष्टितों को अनन्तरकाल में समकाल के तरह उदर-दाह से मंगलाशासन करना। 'घेर कर मंगलाशासन करें गे' ऐसा भगवत्प्राप्ति का फल मंगलाशासन ही कहना 'स्नेह से अस्थान में रक्षाकरने में आसक्त धनुष, चक्र, खड्ग आदिओं से भय रहित' इस वचनानुसार अस्थान रक्षा व्यसनी पलक न मारनेवाले दिव्यायुध सूरियों को देख गुणविद्ध हो विष भक्षण करनेवाले के तरह तुह्मारे स्वरूप को भूलना अनुभव में लग कैंकर्यपर होना छोड़ सावधान से रक्षा करो ऐसा बहुवार कहना। इस प्रकार यह मंगलाशासन ही इन की वृत्ति समझना ।

इस प्रकार मंगलाशासन के लिये सहायान्वेषण कर प्रतिकूलों को अनुकूल करने के लिये क्रियमाण उपदेश श्रीबहुशरदप्रबंध एकही में है। अनन्तर

इतरवच्छृण्वतामुपदिशतां चासहायतानिवृत्त्यर्थं न भवति 'दासाश्च न संति' इति तस्यासहायतानिवृत्त्यर्थं भाष्यकारोऽयं चोपदिशतः ॥ २७० ॥

---

खलु वर्तते, उपर्यैतदुपदेशस्थलेष्वन्येषामुपदेशाद्व्यावृत्तिः केति शंकायामाह— इतरवदित्यादिना ।

परोपदेशसमयेऽन्ये सूरय इवाचार्य्या इव चोपदेश्यार्थस्य संसारिणामनाद्यज्ञानेन सत्सहायभूतभगवद्विषयाप्राप्त्यागतामसहायतां वक्तृणां स्वेषां भगवद्गुणानुसंधानदशायां बोधयंतः

---

एवं सर्वप्रकारेण मंगलाशासनं परम् ।
यात्रास्य सूरिवर्यस्य विष्णुचित्तस्य विद्यते ।
श्रोतृणां वक्तृणां चैवासहायत्वनिवृत्तये ।
इतराचार्यवन्नास्ति दासः केचाधिकारिणः ।
इति तस्यासहायत्वनिवृत्त्यै भाष्यकारकः ।
उपादिशत्तथा चायं विष्णुचित्तो महामुनिः ॥ २७० ॥

के इन के उपदिष्ट प्रबंध में अन्य उपदिष्ट प्रबंधों से विशेष क्या इस शंका में कहते हैं अन्य इत्यादि ।

अन्य सूरियों के तरह सुननेवाले और कहनेवाले
के असहायता को दूर करना छोड 'रक्षक नहीं है'
इस बचनानुसार स्वामी की असहायता को दूर करने
के लिये भाष्यकार और भट्टनाथसूरि का उपदेश है ॥ २७० ॥

परोपदेश के विषय में अन्यसूरि और आचार्यों के तरह उपदिश्यमान अर्थ को सुननेवाले संसारिओं का अनादि अज्ञान से सहायभूत भगवद्विषय को छोड

परस्परं कर्तुं कीर्तनसहायाभावादागतामसहायतां च निवर्त्त-यितुमुपदेशं न कुरुतः, अपितु सौकुमार्यानुसंधानेनोदरदाहेन दिव्यसूरिणाऽन्वेषणेकृते सर्वेषामन्यपरत्वदर्शनात् उभयविभूतावप्यधिकारी नास्ति स्ववैलक्षण्यं ज्ञात्वा स्नेहेन रक्षितुं कोऽपि नास्तीति वक्तुं योग्यतया स्थितां निरतिशयसौकुमार्ययुक्तस्य सर्वेश्वरस्यासहायतां निवर्तयितुं मंगलाशासनस्यैतेऽधिकारिणः स्युरित्येतत्प्रयोजनार्थं हि प्रामाणिकेष्वाचार्येषु भाष्यकारोऽज्ञाननिवृत्तिपूर्वकमानंदरूपापन्नज्ञानं प्राप्तेष्वयं चोपदिशत इत्यर्थः। तस्मादयं सूरिर्यत्र प्रतिकूलानामप्यनुकूलार्थमुपदिशति तत्र सर्वत्र मंगलाशासनार्थमिति न विरोध इति भावः। अस्मन्नाथ इत्यनुक्त्वा भाष्यकार इत्युक्तिः श्रीभाष्य मुखेन वेदांततात्पर्यनिर्णयं कृतवानिति वैभवभानार्था।

---

संचार करने से आई हुई असहायता और वक्ता अपनों के भगवद्गुणानुसंधान दशा में परस्पर बोधन करने के लिये सहाय रहित होने से आई हुई असहायता इन दोनों को दूर करना ही प्रयोजन है। ऐसा न हो सौकुमार्य के अनुसंधान से क्लिष्ट हुए भट्टनाथसूरि सर्वत्र ढूंढने पर सब लोगों को अन्यपर देख उभय विभूति में भी रक्षा करने के लिये मनुष्य नहीं है अपना वैलक्षण्य जान रक्षा करने के लिये एक भृत्य को भी स्वीकार नहीं किया ऐसा कहने योग्य अधिक सौकुमार्ययुक्त सर्वेश्वर की असहायता दूर होने के लिये मंगलाशासन करने को ये सब लोग उद्युक्त हो ऐसा। यही प्रयोजन समझ प्रामाणिक पूर्वाचार्यों में श्रीभाष्यकार अज्ञाननिवृत्तिमत्यानन्द प्राप्त हुए में यह भट्टनाथसूरि ये दोनों उपदेश करते हैं। इस लिये यह सूरि प्रतिकूलों को अनुकूल होने के लिये उपदेश करने के समस्त स्थल भी मंगलाशासन के लिये हैं ऐसा कहने में विरोध नहीं। रामानुज नहीं कह भाष्यकार कहने का तात्पर्य—श्रीभाष्य द्वारा वेदान्त तात्पर्य का निर्णय कर कहने वाले ऐसा भान होने के लिये।

**अन्येषां सत्तासमृद्धी दर्शनानुभवकैंकर्यैः अस्य मंगलाशासनेन ॥ २७१ ॥**

---

अज्ञाननिवृत्तिपूर्वकं ज्ञानानंदं प्राप्तानां सत्तासमृद्धी भगवद्दर्शनानुभवकैंकर्यैः खलु भासेते, स आकारोऽस्यापि समानो न भवति किं ? तदानीं मंगलाशासनमेव यात्रेति कथं संगच्छते इति शंकायामाह— अन्येषामित्यादि ।

अत्र सत्ता नाम— स्वसद्भावः । इयं भगवद्दर्शनानुभवकैंकर्यकामानामन्येषां सूरीणां तद्दर्शनाभावे धारणासामर्थ्येन दर्शनायागच्छेत्याह्वानकरणात् तद्दर्शनेन भवति । तदात्मनाशात्पूर्वं तद्वीथ्यामेकस्मिन् दिने कृपासमुद्रं गरुडं संचारयत्यस्मत्सत्तास्थित्यर्थं जालकरंध्रेण वा यथैकवारं पश्यामस्तथाऽस्म-

---

अन्येषां सत्ववृद्धिः स्याद्दर्शनानुभवादिना ।
अस्य तु योगिवर्यस्य मंगलाशासनेन हि ॥ २७१ ॥

अन्यसूरियों की सत्ता और समृद्धि भगवत्दर्शनानुभव कैंकर्यों से ही है तो इन को भी वही आकार होना चाहिये तव मंगसाशासन ही यात्रा है ऐसा कहना उचित है क्या इस शंका में कहते हैं अन्यसूरियों की इत्यादि ।

अन्यसूरियों की सत्ता और समृद्धि दर्शनानुभव
कैंकर्यों से है इन को मंगलाशासन से है ॥ २७१ ॥

भगवत्दर्शनानुभव कैंकर्येच्छुक अन्यसूरियों को स्वामी के देखने पर धारण अशक्य हो 'देखने को आओ' ऐसा पुकारने से उन के दर्शन से सत्ता होती है 'उन के प्राण निकलने के पहले उन की वीथी में एकदिन कृपापूर्ण गरुडजी को चलाओ' ऐसा हमारी सत्ता रहनेके लिये खिडकी के रंध्र से तो भी एकवार देखने के लिये हमारी वीथी में एकदिन पधारना उचित है ऐसा कहने से दर्शन

ध्यामेकस्मिन् दिने गमनमलभिति वदेत्युक्तत्वाद्दर्शनं सत्ता-हेतुरिति सिद्धं खलु । समृद्धिर्नाम—सद्भावमात्रं विनोपर्युपरि जायमाना ऋद्धिः । सा तेषां सुंदरधामप्रीतिः, किरीटज्योतिप्रभृतिष्विव जायमानानुभवेन विच्छेदशून्यकालप्रकारेण क्रियमाणकैंकर्येण च भवति । अथवा दर्शनानुभवाभ्यामुभाभ्यां सत्ता, कैंकर्येण समृद्धिः।

यद्वा तादृशसत्ता प्रावण्यकार्यानुभवाभावे नश्यतीत्यनेन स्वयमेवोक्तत्वात् श्वोविनियोगं कुर्यामित्युक्तौ रोदितुमपि सत्ता नास्तीति कैंकर्यं सत्ताहेतुरित्यनुसंधाने उक्तत्वात् दृष्ट्वा तृप्तो भवितुमिति दर्शनं समृद्धिहेतुरित्युक्तत्वात् सत्तायाः समृद्धेश्च त्रयमपि कारणं स्यात् । अज्ञाननिवृत्तिपूर्वकं ज्ञाना-नंदस्य प्राप्तिदिनमारभ्य भगवत्सौकुमार्यादिकं दृष्ट्वाऽस्य किं भविष्यतीति उदरदाहेन मंगलाशासनाभिनिविष्टस्यास्य मंग-लाशासनविच्छेदे सद्भावासंभवात् तथाविच्छिन्नतया क्रियमा-

ही सत्ताहेतु है ऐसा सिद्ध हुआ है। समृद्धि माने—ऊपर ऊपर आनन्द वृद्धि। यह उन को "सुन्दर धाम में प्रीति" "किरीटज्योति प्रभृति दशकों में हुए अनुभव से और 'विच्छेद रहित काल' दर्शक में क्रियमाण कैंकर्य से भी समृद्धि होती है।

ऐसा न हो वह सत्ता प्रावण्य कार्य अनुभव न होने पर नष्ट होगी ऐसा यही पहिले कहे हैं। कल्ह विनियोग कर लेऊं गा ऐसा कहने पर रोने को भी सत्ता नहीं रहेगी इसलिये कैंकर्य सत्ताहेतुतया अनुसंधान नामक ग्रंथ में कहने से; 'देखकर सन्तुष्ट होने को' ऐसा दर्शन ही समृद्धिहेतुतया भान होनेसे भी सत्ता और समृद्धि के ये तीनों कारण होते हैं । जबसे अज्ञाननिवृत्तिमूलानन्द को प्राप्त हुए तबसे भगवत्सौकुमार्यादियों को देख इन को क्या होगा ऐसी उदर-पीडा से मंगलाशासन में प्रवृत्त होनेवाले इन की मंगलाशासन का विच्छेद होने-पर नष्ट होती है तैसा अविच्छिन्न चलने से समृद्धि होती है इसलिये सत्ता और

अभिमतस्थलान्यनुसंहितानि चेदस्य
यात्रैवास्माकं सर्वेषां यात्रा स्यात् ॥२७२ ॥

---

णस्य तस्यैव समृद्धिहेतुत्वात् सत्तासमृद्धी उभे अपि मंगलाशासनेन भवतः । तस्मादस्य मंगलाशासनस्य नित्यत्वे न विरोध इति भावः ।

एवमेतन्मंगलाशासने विष्णुचित्तस्य विद्यमानामनवरतनिष्ठां प्रादर्शयत्, अथास्य यात्रैवास्माकं सर्वेषां यात्रा स्यादिति अभिमतस्थलेष्वादरातिशयो मंगलाशासनं चेति पूर्वं दिनचर्यायामुक्तस्य मंगलाशासनस्यावश्यकर्तव्यतामाह—अभिमत स्थलानीत्यादिना ।

अत्यंतसुकुमारस्य सर्वेश्वरस्याश्रितसुलभत्वार्थं स्वमादाय 'स्वाभिमतग्राम' इत्युक्तप्रकारेणात्यादरेण वर्तमानस्थानभूताः

---

अभिमतस्थले ध्याते ह्यस्य यात्रैव सर्वथा ।
अस्माकं सर्वजंतूनां यात्रा भवति शाश्वती ॥२७२॥

समृद्धि दोनों मंगलाशासन से ही होती हैं ।

तथा च मंगलाशासन में भट्टनाथसूरि की नित्य निष्ठा को दिखाये हैं, अनंतर उन की यात्रा ही हम सब को होनी चाहिये ऐसा 'दिव्यदेशों में अधिक आदर और मंगलाशासन' इति पूर्वदिनचर्या में कहा हुआ मंगलाशासन की अवश्यकर्तव्यता को कहते हैं दिव्यदेशों को इत्यादि ।

दिव्यदेशों को अनुसंधान करने पर भोजन और
निद्रा को छोड इन की यात्रा ही हम सब को चाहिये ॥ २७२ ॥

अत्यंत सुकुमार सर्वेश्वर आश्रितों को सुलभ होनेके लिये अपने को सजा-

तस्मान्मंगलाशासनं स्वपारूनुरूपम् ॥२७३॥

---

श्रीरंगवेंकटप्रभृतिदिव्यदेशा अनुसंहिताश्चेदपायबहुलदेशत्वा-दत्र स्थितेः किंचिदवद्यं भवति चेत् किं स्यादित्युदरदाहेनाहा-रनिद्रादिकं विना निरतिशयप्रेमयुक्तस्यैतत्सूरेर्निरंतरमंगलाशा-सनयात्रैव शेषभूतानामस्माकं सर्वेषां यात्रा स्यादित्यर्थः ।

उक्तार्थं निगमयति–तस्मादित्यादिना ।

एवं शेषभूतानां सर्वेषामवश्यकर्तव्यत्वान्मंगलाशासनं स्व-रूपस्यानुरूपमित्यर्थः । शेषवस्तु चेच्छेषिणोऽतिशयवर्द्धनं स्व-रूपसिद्धिरिति, तस्माच्छेष्यतिशयाशासनं शेषभूतस्यास्य स्वरू पानुगुणं खलु ।

एवं दिनचर्यायामुक्तस्य मंगलाशासनस्य स्वरूपविरुद्धत्व-

---

तस्माद्भगवतः सम्यङ् मंगलाशासनं कृतम् ।
स्वस्वरूपानुरूपं हि जायते नात्र शंसयः ॥ २७३ ॥

कर अत्यादरपूर्वक विराजने के श्रीरङ्ग वेंकटगिरि प्रभृति दिव्यदेशों को अनुसंधान किये तो अपायबहुल इस देश में विराजने की स्थिति को कोई बुराई होय तो क्या किया जाय ऐसा उदरदाह से आहार निद्राओं में संबंध छोड अधिक प्रेम युक्त भट्टनाथसूरि की मंगलाशासन यात्रा ही शेषभूत हम सब को यात्रा होनी चाहिये ।

उक्तार्थ को समाप्त करते हैं इस लिये इत्यादि ।

इसलिये मंगलाशासन स्वरूप के अनुरूप है ॥ २७३ ॥

इस प्रकार शेषभूत सब को अवश्य कर्तव्य होने से मंगलाशासन स्वरूप के अनुरूप है । शेष वस्तु का स्वरूप शेषी का अतिशय करने से ही प्रकाशता है इसलिये शेषी का मंगलाशासन करना स्वरूपानुरूप ही है ।

**अनुकूला ज्ञानभक्तिवैराग्याणि प्रवेश्य निष्कासिता इवाकारे ज्ञातुं योग्याः परमार्ताः ॥२७४॥**

---

शंकापरिहारानंतरमनुकूलसहवास इत्युक्तत्वादनुकूलानां लक्षणमाह—अनुकूला इत्यादिना ।

अनुकूला इति ज्ञानादिवर्द्धकत्वात् सहवासयोग्यत्वेन पूर्वोक्ता अनुकूलाः । ज्ञानभक्तिवैराग्याणि नाम—तत्त्वयाथात्म्यज्ञानं तदेकविषयाभक्तिस्तदुभयकार्यभगवद्व्यतिरिक्तविषयविरक्तिः । एतानि वैष्णवालंकाराः खलु । एतैरेव हि वैष्णवानामाधिक्यमुच्यते । अत एव नाथमुनिदिव्यवैभवं वदन्यामुनाचार्यः —'अचिंत्याद्भुताक्लिष्टज्ञानवैराग्यराशये, अगाधभगवद्भक्तिसिंधवे' इत्यवोचत् । प्रवेश्य निष्कासिता इवेति—एकपदा-

---

ज्ञानभक्तिविरक्तीनां क्षिप्त्वा निष्कासनं यथा ।
तथाकारेण ज्ञेया हि परमार्तानुकूलकाः ॥ २७४ ॥

इसप्रकार दिनचर्या में उक्त मंगलाशासन का स्वरूपविरुद्धत्व शंका को 'अनुकूल सहवास' इस स्थल में कहा हुआ अनुकूलों के लक्षण को कहते हैं—अनुकूल इत्यादि ।

अनुकूल माने—ज्ञान भक्ति वैराग्य
आकार से जानने योग्य परमार्त ॥ २७४ ॥

तत्वयाथात्म्यज्ञान भगवदेकविषयभक्ति और इन दोनों से होनेवाली भगवदन्यविषयविरक्ति ये तीनों वैष्णव के अलंकार हैं । इन से ही वैष्णवों को श्रेष्ठ मानते हैं । इस से ही नाथमुनि के दिव्यवैभव को कहते हुए यामुनाचार्य 'अचिंत्य अद्भुत अक्लिष्ट ज्ञानवैराग्यों के राशि अथाह भगवद्भक्ति के समुद्र' ऐसा कहे हैं । आकार से जाननेयोग्य माने—इन के आकार को देखते ही ज्ञान भक्ति और

र्थाश्रये पात्रे पदार्थांतरं प्रवेश्य पूर्वं स्थितस्य निष्कासने कृते तत्र वर्तमानतया भासते । तथैतज्ज्ञानादित्रयस्यैकाश्रयत्वेप्ये-तेष्वेकैकमेव दृष्टं चेत् प्रवेश्यान्यस्य निष्कासनवदिदमेवास्मि-न्नाश्रये वर्तत इति भासमानत्वम् । आकारे ज्ञातुं योग्यत्वं नाम–एतेषामाकारदर्शन एवैतैरेतेषां विद्यमानसंबंधस्य ग्रहण-योग्यत्वम् । त्याज्योपादेयविवेकपूर्वकपरिपाकेन ज्ञानमाकारे ज्ञातुं योग्यम् । 'आह्लादशीतनेत्रांबुः' इत्यादिप्रकारेण स्थित त्वाद्भक्तिश्चाकारे ज्ञातुं योग्या। इतरविषयानुपेक्ष्य वर्तमानत्वा-द्वैराग्यमाकारे ज्ञातुं योग्यम् । अथवा ज्ञानभक्तिवैराग्याणां त्रयाणामपि नवनवोन्मेषशालित्वादपूर्वज्ञानादिकं प्रवेश्य पूर्वे-षां निष्कासनवत्स्वाकारे तानि ज्ञातुं योग्यानि यथा तथा पर-मार्त्ता इत्यर्थः । परमार्त्ता इति— संसारे स्थितत्वाद्भगवद्विष-याप्राप्तेश्चाथैतदुपरिनास्तीति वक्तुं योग्याऽऽर्तिविशिष्टा इत्यर्थः।

एतेषां सहवासेन किं सिद्ध्यतीत्यत आह— एकस्मिन् केदार इत्यादि ।

---

वैराग्य इन में वास करते हैं ऐसा जानसक्ते हैं। त्याज्योपादेय विवेकपूर्वक चलने से ज्ञान जाना जाता है। 'आह्लाद से शीत नेत्र के जल' 'पावं स्तब्ध होता है, नेत्र का जल ठहरता नहीं' इत्यादि से भक्ति आकार से जानी जाती है इतर विषयों की उपेक्षा करने से वैराग्य आकार से जाना जाता है परमार्त माने–संसार में असह्यता भगवद्विषय की अप्राप्ति इन दोनों से अत्यधिक आर्तिवाले ।

इन के साथ सहवास से क्या फल मिलैगा इस शंका में कहते हैं—

एक खेत जल से पूर्ण हो तो पास का खेत जैसे गीला
दीखता है तैसा ज्ञान भक्ति और वैराग्यवाले न होने

एकस्मिन् केदारे जलपूर्णे स्थिते समीपके-
दारो यथा आर्द्रो भवति तथैतद्रहिताना-
मप्येतेषां संबंधेन म्लानिनिवृत्तिर्जायेत॥ २७५॥

---

एकस्मिन् केदारे जलपूर्णे स्थिते सति जलाभावेन म्लानः आसन्नकेदारस्तदासत्त्यागतस्रवणेन निवृत्तम्लानिर्जायते तथा ज्ञानभक्तिवैराग्याभावाद्येषां स्वरूपं म्लानं वर्तते तेषामेतैः परिपूर्णानामेतेषां सहवासरूपसंबंधेनैतेषु किंचिदन्वयेन साक्षादेतद्न्वयाभावप्रयुक्तम्लानिर्निवर्तेतेत्यर्थः।

एतत्सहवासेनैवं म्लानिनिवृत्तिमात्रं किमित्यत एतदेव न किं त्वेते स्वभावविशेषाः प्राप्तेः पूर्वं पूर्णतया वर्द्धत इत्याह— नदीजल इत्यादि।

---

एकस्मिन् पूर्णकेदारे स्थिते तत्पार्श्वगो यथा।
आर्द्रो भवति केदारस्तथा तद्रहिता अपि।
एतत्पूर्णसंबंधान्मलमुक्ता भवंति हि ॥२७५॥

पर भी इन के संबंध से दुःख निवृत्ति होती है॥ २७५॥

एक खेत में जल पूर्ण होने से जल रहित शुष्क पास का खेत उस के संबंध से जैसे आर्द्र हो प्रफुल्ल होता है तैसा ज्ञान भक्ति वैराग्याभाव से शुष्कस्वरूपवाले इन से परिपूर्णों के सहवासरूप संबंध से किंचित् ज्ञान भक्तिवैराग्यवाले हो आर्द्र होते हैं।

इन के सहवास से आर्द्र होनेमात्र बिना ये स्वभावविशेष प्राप्ति के पहिले पूर्णतया उत्पन्न होयंगे ऐसा कहते हैं—

नदीजल आसन्ने यथा तदनुरूपलिंगानि
जायंते तथा प्राप्तावासन्नायामेते स्वभाव-
विशेषाः स्वत एव वर्द्धेरन् ॥२७६ ॥
एतान्यादाय चरमशरीरमिति
स्वेनैव निश्चेतुं शक्यम् ॥२७७ ॥

---

जलशून्यायां नद्यां जलागमनप्रारंभे तत्सूचकानि वालुका-र्द्रताप्रभृतिलिंगानि यथा तथा भगवत्प्राप्तावासन्नायां तत्सूच-का एते ज्ञानादिस्वभावविशेषाः स्वत एव वर्द्धेरन्नित्यर्थः ।

एतेष्वेवं वर्द्धमानेषु प्राप्तिरासन्नेति ज्ञायते किमित्यत आह-एतान्यादायेत्यादि ।

---

यथासन्ने जले नद्यां शर्करार्द्रादि दृश्यते ।
प्राप्तौ सन्निकटे तद्वद्वर्द्धेरन् स्वत एव ते ॥ २७६ ॥
एतल्लक्षणजातानि गृहीत्वा चरमं वपुः ।
इति स्वेनैव निश्चेतुं शक्यते नात्र संशयः ॥ २७७ ॥

नदी में प्रवाह आनेवाला हो तो उस का चिन्ह
जैसे दीखता है तैसे प्राप्ति होने पर ये
स्वभावविशेष स्वयमेव उत्पन्न होवेंगे ॥ २७६ ॥

शुष्क नदी में प्रवाह आने के समय उस का सूचक चिह्न रेती गीला होना प्रभृति जैसे होता है तैसे भगवत्प्राप्ति समीप होने पर उस का सूचक ये ज्ञानादि स्वभाव स्वयमेव होते हैं ।

ये होने पर थोडे ही काल में प्राप्ति होगी ऐसा जान सक्ते हैं क्या इस शंका में कहते हैं—

**प्रतिकूला भवंति देहात्माभिमानिनः स्वतंत्रा अन्य-शेषभूता उपायांतरनिष्ठाः स्वप्रयोजनपराः ॥ २७८॥**

---

एवमुपर्युपरि नवनवोन्मेषतया वर्द्धमानानि ज्ञानभक्तिवैरा-ग्याण्यादायास्माकमितःपरमेकशरीरमपि नास्तीदं चरमशरी-रमिति स्वमनसैव निश्चेतुं शक्यते इत्यर्थः।

एवं सहवासविषयतया दिनचर्यायामुक्तानामनुकूलानां लक्षणं तत्सहवासफलं चोक्त्वा तदनंतरं सहवासनिवृत्तिवि-षयतयोक्ताः प्रतिकूला एते इत्याह— प्रतिकूला भवंति इत्यादिना।

प्रतिकूलाभवंतीति— ज्ञानादिनाशकत्वेन सहवासयोग्या न भवंतीति पूर्वोक्ताः प्रतिकूला इत्यर्थः। देहात्माभिमानिन

---

प्रतिकूला भवंत्येते वपुरात्माभिमानिनः।
स्वतंत्रा अन्यशेषाश्च साधनांतरतत्पराः।

इन को देख चरम शरीर करके आप निश्चय कर सक्ता है॥ २७७॥

इस प्रकार ऊपर ऊपर नवनवोन्मेषरूप से उत्पन्न होनेवाले ज्ञान, भक्ति, वैराग्यों को देख इतः परं हम को एक शरीर परिग्रह न होगा यही चरम शरीर है ऐसा अपने मन में निश्चय कर सक्ता है।

तथा च सहवास विषयतया दिनचर्या में कहा हुआ अनुकूलों के लक्षण और उन के सहवास फल को भी कह तदनंतर सहवास निवृत्ति विषयतया कहे हुए प्रतिकूलों को कहते हैं—प्रतिकूल इत्यादि।

प्रतिकूल माने—देहात्माभिमानी, स्वतंत्र अन्य-
शेषभूत, उपायांतरनिष्ठ और स्वप्रयोजनपर है॥ २७८॥

देहात्माभिमानी माने—दीखनेवाले देह से अन्य एक आत्मा है ऐसा न जान देह में अहं बुद्धि कर देह ही को आत्मा तथा जाननेवाले।

इत्यादि– देहात्माभिमानिनः दृश्यमानदेहातिरिक्त आत्मास्तीति ज्ञानाभावाद् देहेहंबुद्धिं कृत्वाऽयमेवात्मेत्यभिमानवंतः । स्वतंत्रा नाम–देहातिरिक्तात्मवस्तु जानतोऽपि तत्स्वशेषमिति स्मृत्वा कुत्रापि विषये शेषत्वानभ्युपगंतारः । अन्यशेषभूता नाम— शेषत्वांगीकारेप्यप्राप्तविषयेषु विनियोक्तारः । उपायांतरनिष्ठाः— प्राप्तशेषिविषयशेषत्वविशिष्टा अपि तत्प्राप्त्युपायस्तच्चरणारविंद-शरणागतिरिति स्थितिमंतरा कर्माद्युपायमवलंब्य वर्तमानाः । स्वप्रयोजनपराः–प्राप्तशेषिचरणकमलावुपायत्वेनाध्यवस्य स्थिता अपि स्वकृताश्रयणमेवोपायत्वेन निश्चित्योपेयं कैंकर्यं स्वभोग्यत्वेन च निश्चित्य वर्तमानाः । एवं वर्तमानाः प्रणवे तृतीयाक्षरेणात्मवस्तुनो देहातिरिक्ततां, प्रथमाक्षरे चतुर्थ्या भगवच्छेषत्वं, मध्यमाक्षरेण तदनन्यार्हत्वं मध्यमपदेना-नन्यशरणत्वं, चरमपदेनानन्यभोग्यत्वं च दृष्टवतामधिका-

---

स्वतंत्र माने—देहातिरिक्त आत्मवस्तु को जान कर भी उस आत्मा को स्वतंत्र जान किसी का शेष नहीं माननेवाले।

अन्यशेषभूत माने—शेषत्व को मान कर भी उसे अप्राप्त विषय में विनियोग करनेवाले।

उपायांतरनिष्ठ माने—प्राप्तशेषी सर्वेश्वर के शेषभूत होनेपर भी उस की प्राप्ति का उपाय उस के चरणारविंद की शरणागति न समझ कर्मादि उपायों का आश्रयण करनेवाले।

स्व प्रयोजनपर माने—प्राप्तशेषी के चरणारविंद को उपायतया स्वीकार करनेपर भी शरणागति को उपाय मान उपेयभूत कैंकर्य को अपना भोग्य माननेवाले इस प्रकार रहनेवाले प्रणव में तृतीयाक्षर से आत्मा की देहभिन्नता, प्रथमाक्षर में चतुर्थी से भगवत्शेषत्व, मध्यमाक्षर से अनन्यार्हत्व, मध्यम पद से अनन्य शरणत्व, चरमपद से अनन्यभोग्यत्व—इन सब को अनुष्ठानपर्यन्त जान कर

एतेषामुद्देश्या उपायोपेयाश्च भिन्नभिन्नाः ॥ २७९ ॥

रिणां प्रतिकूलाः खलु ।

एतत्प्रातिकूल्यमुपपादयितुमेतेषां विप्रतिपत्तिनिबंधनामुद्दे-श्यादिभेदानाह– एतेषामित्यादिना ।

उद्देश्या— आदरणीयाः । ते चात्र स्वाभिमतप्रदाः । उ-पायाः— स्वाभिमतपुरुषार्थसाधनानि । उपेयानि— स्वाभि-मतपुरुषार्थाः । भिन्नभिन्ना इति— तत्तद्विप्रतिपत्त्यनुगुणं पृथक्पृथगित्यर्थः ।

अमुमर्थं क्रमेणोपपादयति– देहात्माभिमानिनामित्यादिना ।

देहमेवात्मत्वेनाभिमत्य स्थितानामुद्देश्या धारकपोषकभोग्यप-दार्थान् दत्वा देहस्य सम्यग्वर्द्धका मनुष्याः । अभिमतसिद्धे-

स्वप्रयोजननिष्ठाश्च पंचैते भुवि मानवाः ॥ २७८ ॥
उद्देश्योपायसाध्यानि सन्त्येतेषां पृथक्पृथक् ॥ २७९ ॥

रहनेवाले अधिकारी को प्रतिकूल ही हैं ।

इस प्रातिकूल्य को उपपादन करने के लिये इन के विरुद्ध अभिप्राय के कारण उद्‌देश्यादि भेदों को कहते हैं इन को इत्यादि ।

इन का उद्‌देश्य, उपाय और उपेय भिन्न भिन्न हैं ॥ २७९ ॥

उद्‌देश्य – आदरणीय । वे स्वाभिमत को देनेवाले हैं । उपाय– अपने अभिमत पुरुषार्थ का साधन । उपेय— स्वाभिमत पुरुषार्थ । ये भिन्न भिन्न हैं माने– अपनी अपनी रुचि के अनुगुण भिन्न भिन्न हैं ।

उस को क्रम से विवरण करते हैं, देहात्माभिमानियों को इत्यादि ।

देहात्माभिमानियों का उद्‌देश्य देहवर्धक मनुष्य । उपाय– अर्थ । उपेय– ऐहिक भोग । स्वतंत्रों का उद्‌देश्य—स्वर्गादिभोग को देनेवाले । उपाय–

देहात्माभिमानिनामुद्देश्या देहवर्द्धका
मनुष्याः । उपायोऽर्थः । उपेयमैहिकभोगः ।
स्वतंत्राणामुद्देश्याः स्वर्गादिभोगप्रदाः ।
उपायः कर्मानुष्ठानम् । उपेयं स्वर्गादिभोगः ।

---

रुपायः सुवर्णादिधनम् । अभिमतमुपेयमिहलोके विद्यमान-स्रगन्नपानादिविषयानुभवः ।

देहातिरिक्त आत्मास्ति स च ज्ञातृत्वकर्तृत्वभोक्तृत्वयुक्त इत्येतावन्मात्रं शास्त्रमुखेन ज्ञात्वा स्वात्मनः स्वतंत्रान्मत्वा वर्तमानानामुद्देश्या अनुष्ठितस्य साधनस्यानुगुणं स्वर्गाद्यामुष्मिक-भोगप्रदा अग्नींद्रादिदेवताः । उपायो 'ज्योतिष्टोमेन स्वर्गकामो

---

उपेयमैहिको भोगोद्देश्या देहस्य वर्धकाः ।
उपायोऽर्थश्च विज्ञेयो वपुरात्माभिमानिनः ॥
स्वतन्त्राणामुपायस्तु कर्मानुष्ठानमुच्यते ।

कर्मानुष्ठान । उपेय– स्वर्गादिभोग । अन्यशेषभूतों का उद्देश्य— ब्रह्मरुद्रादि । उपाय– उन के आश्रयण । उपेय– उन का सायुज्य । उपायांतरनिष्ठों का उद्देश्य— देवतांतर्यामी सर्वेश्वर । उपाय– कर्म, ज्ञान, भक्ति । उपेय— भगवदनुभव । स्वप्रयोजनपरों का उद्देश्य — अर्चावतार । उपाय — स्वगतस्वीकार । उपेय — स्वार्थ-कैंकर्य ॥ २८० ॥

देह ही को आत्मा समझनेवालों का उद्देश्य धारक पोषक भोग्य पदार्थों से देह को सम्यक् बढानेवाले । अभिमत सिद्धि का उपाय सुवर्णादि धन । अभिमत उपेय — इह लोक का स्रो अन्न पानादि विषयानुभव ।

देहातिरिक्त आत्मा है वह ज्ञातृत्व, कर्तृत्व, भोक्तृत्व विशिष्ट है ऐसा शास्त्र द्वारा जान अपने को स्वतंत्र माननेवालों का उद्देश्य—अनुष्ठितसाधनानुरूप स्वर्गादि-भोगों को देनेवाले इन्द्रादि देवता हैं । उपाय—'स्वर्गकामनावाले ज्योतिष्टोम याग

अन्यशेषभूतानामुद्देश्याः ब्रह्मरुद्रादयः । उपाय-स्तत्समाश्रयणम् । उपेयं तत्सायुज्यम् ।

---

यजेत' इत्यादिभिरुक्तफलाभिसंधिसहितयागादिकर्मानुष्ठानम् । उपेयमैहिकभोगाद्विलक्षणस्वर्गाद्यनुभवः ।

जगद्दैवाधीनमिति शास्त्रेषु श्रुतत्वात् शेषत्वमंगीकृत्यापि परदेवतापर्यंततत्त्वज्ञानाभावादापातप्रतीतेषु प्रसिद्धेष्वेकमवलंब्य वर्तमानानामन्यशेषभूतानामुद्देश्या जगत्सर्गादिकर्तृतया परत्वबुद्ध्यर्हा ब्रह्मरुद्रादयः । उपायो दुराराधनानां तेषां विषये क्रियमाणं दुष्करं समाश्रयणम् । उपेयं तैः समानभोग्यत्वरूपं सायुज्यम् ।

'सायुज्यमुभयोरत्र भोक्तव्यस्याविशिष्टता ।
सार्ष्टिता तत्र भोगस्य तारतम्यविहीनता ॥' इत्युक्तम् ।

---

स्वर्भोगादिरुपेयं चोद्देश्याः स्वर्गादिभोगदाः ॥
अन्यस्य शेषभूतानामुद्देश्या रुद्रकादयः ।
तत्प्रपत्तिरुपायस्तत्सायुज्यं साध्यमुच्यते ॥

करें।' इत्यादि से कहे जानेवाले फलकामना सहित यागादि कर्मानुष्ठान । उपेय—ऐहिक भोग से विलक्षण स्वर्गादि अनुभव ।

जगत् दैव के अधीन है ऐसा शास्त्रों में सुनने से शेषत्व को मान कर भी उस को परदेवता पर्यंत न जानेदे आपातप्रतीति सिद्ध देवताओं में एक को आश्रयण कर रहनेवाले अन्यशेषभूतों का उद्देश्य जगत् सृष्टि संहार करने से अपने को पर समझनेवाले ब्रह्मरुद्रादि । उपाय—दुःख से आराधना करने योग्य उन के विषय में क्रियमाण आश्रयण । उपेय—उन के समान भोगरूप सायुज्य ।

'सायुज्य माने—दोनों का भोक्तव्य की समानता । सार्ष्टिता—भोग्य की समानता' ऐसा कहा है ।

आत्मस्वरूपं भगवदनन्यार्हशेषमिति वेदांतमुखेन निश्चि-त्यापि अभिमतलाभस्य तस्यैवोपायत्वेन स्वीकरणानभिज्ञत-योपायांतरनिष्ठानामुद्देश्योऽग्नींद्रादिदेवतानामंतर्यामीश्वरः। इदं कर्मयोगस्य स्वरसं, ज्ञानयोगभक्तियोगयोरसाधारणविग्रहविष-यत्वसत्वेपि कर्मानुष्ठानस्थलत्वेन जातत्वात् कर्माराध्य एव स्वासाधारणविग्रहविशिष्टवेषमस्माकं प्रकाशितवानित्यध्यवसा-यस्य सत्वात् देवतांतर्याम्युद्देश्य इत्युच्यत इत्यंगीकर्तव्यम् । उपायांतराणि प्रत्येकं मोक्षसाधनतया शास्त्रसिद्धाः कर्मज्ञान-भक्तियोगाः । एतेषां प्रत्येकमुपायत्वे एकस्यान्यौ द्वावंगे भवतः ।

'ज्ञानभक्त्यन्वितं कर्म जनकादिषु दृश्यते ।
कर्मभक्त्यन्वितं ज्ञानं प्रायेण भरतादिषु ।
कर्मज्ञानान्विता भक्तिः प्रह्लादप्रमुखाश्रया ॥'

इत्युक्तं हि ।

अथवा कर्मज्ञानभक्तय इत्यत्र वेदान्तमर्यादया कर्मज्ञाना-नुगृहीतभक्तिरेवोपायः, तदंगतया कर्मज्ञाने उपायाः इत्युपचा-

---

आत्मस्वरूप भगवदनन्यार्ह शेषभूत है ऐसा वेदांत द्वारा जान अभिमत लाभ के लिये ईश्वर को ही उपायतया स्वीकार न कर उपायांतरों को करनेवालों का उद्देश्य-- अग्नि इन्द्रादिदेवताओं का अंतर्यामि सर्वेश्वर । उपाय---अलग अलग मोक्ष साधनतया शास्त्र सिद्ध कर्म ज्ञान भक्ति योग इन में प्रत्येक उपाय होनेपर बाकी दोनों उस का अंग होते हैं ।

'ज्ञान भक्ति सहित कर्मयोग जनकादियों में । कर्म भक्ति सहित ज्ञानयोग जड भरतादियों में । कर्मज्ञान सहित भक्तियोग प्रह्लादादियों में दीखता है ।'

यद्वा कर्म ज्ञान भक्ति---वेदांत रीति से कर्मज्ञान सहित भक्ति ही उपाय है बाकी दोनों अंग होने से गौणतया उपाय कहे जाते हैं ।

उपायांतरानिष्ठानामुद्देश्यो देवतांतर्यामीश्वरः ।
उपायः कर्मज्ञानभक्तयः । उपेयं भगवदनुभवः ।
स्वप्रयोजनपराणामुद्देश्योऽर्चावतार ईश्वरः । उपायः
स्वकृतमाश्रयणम् । उपेयं स्वार्थकैंकर्यम् ॥ २८० ॥

---

रेण वा योजनीयम् । उपेयं 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इत्यादिश्रुतिभिः ।

'निरस्तातिशयाह्लादसुखभावैकलक्षणा ।
भेषजं भगवत्प्राप्तिरेकांतात्यंतिकी मता ॥'

इत्यादिश्रुत्युपबृंहणैश्चोक्तो निरतिशयानंदरूपो भगवदनुभवः । अस्मिन् श्लोके भगवत्प्राप्तिरित्यर्थं भगवदनुभव इति ह्यस्मदाचार्यैः स्वप्रबंधेषूक्तः ।

कर्माद्युपायेषु दुष्करत्वबुद्ध्या तांस्त्यक्त्वा सुकरत्वबुद्ध्या

---

अन्योपायस्य चोद्देश्यो देवांतर्यामिमाधवः ।
हरेरनुभवः साध्यं कर्मज्ञानादि साधनम् ।
उपेयं स्वार्थकैंकर्यमुपायो वरणं स्वतः ।
स्वप्रयोजननिष्ठानामर्चोद्देश्यो हरिः स्मृतः ॥ २८० ॥

उपेय – 'सर्वज्ञ ब्रह्म के साथ वह मुक्त पुरुष सब गुणों का अनुभव करता है' इति श्रुति, 'इस के ऊपर और कोई आह्लाद नहीं ऐसी एकांत भगवत्प्राप्ति संसार का औषध है' इति श्रुत्युपबृंहण से भी कहेजानेवाले अत्यानन्द भगवदनुभव ।

कर्मादि उपायों में दुष्करत्व बुद्धि से उन को छोड सुलभ समझ प्रपत्ति में

पूर्वोक्तास्त्रयो निग्रहस्य विषयाः,
अन्यौ द्वावनुगृहस्य विषयौ ॥ २८१ ॥

---

प्रपत्तिं कुर्वतां स्वप्रयोजनपराणामुद्देश्यो हृदयेनेत्यादिप्रकारेण आश्रिताः स्वहृदयेन यादृशं द्रव्यं स्वस्य विग्रहत्वेनाद्रियंते तदेव स्वस्य विग्रहत्वेनादृत्य तत्राप्राकृतविग्रहे क्रियमाणमादरं कुर्वन्नत्यंतसुलभतया स्थितोऽर्चावतारः सर्वेश्वरः । उपायोऽनिष्टनिवृत्तेरिष्टप्राप्तेश्च तमुपायत्वेनाध्यवस्य स्वकृतमाश्रयणम् । उपेयं स्वप्रीत्यर्थं क्रियमाणकैंकर्यम् ।

एवमुद्देश्यादिभेदेन तेषां विद्यमानमन्योन्यविशेषं प्रदर्शितवान्, एतेषु भगवद्विषयेण सह संबंधं विना स्थितानां त्रयाणां भगवद्विषयमवलंब्य स्थितयोर्द्वयोश्च विशेषं दर्शयति — पूर्वोक्तास्त्रय इत्यादिना ।

---

पञ्चानां च त्रयः पूर्वे विषया निग्रहस्य हि ।
चरमौ द्वावनुग्राह्यविषयौ परमात्मनः ॥ २८१ ॥

निष्ठावाले स्वप्रयोजनपरों का उद्देश्य— आश्रित लोग जिस द्रव्य से ईश्वर की अर्चा बनाते हैं उस ही अर्चाविग्रह में अत्यादर पूर्वक सन्निधि करते हुए अत्यंत सुलभ अर्चावतार हैं । उपाय—अनिष्टनिवृत्ति और इष्ट प्राप्ति के लिये उस ही को उपायतया आश्रयणरूप स्वगत स्वीकार । उपेय — स्वमुखोल्लासार्थ क्रियमाण कैंकर्य ।

तथा च उद्देश्यादिभेद से उन में विद्यमान भेद को कहा अब इन में भगवत्संबंध रहित तीन और भगवत्संबंध सहित दो इन का भेद कहते हैं । पहिले कहे हुए तीनों इत्यादि ।

पहिले कहे हुए तीनों निग्रह के विषय
हैं अवशिष्ट दोनों अनुग्रह के विषय हैं ॥ २८१ ॥

**त्रयाणामपि कर्मानुभवविनाश्यं, चतुर्थाधिकारिणः प्रायश्चित्तविनाश्यं, पञ्चमाधिकारिणः पुरुषकारविनाश्यम् ॥ २८२ ॥**

---

देहात्माभिमानिनः स्वातंत्र्यमन्यशेषत्वमित्येतदुपरि कस्यचिदपि ज्ञानाभावात् भगवदन्वयरहितास्त्रयः क्षिपामीति भगवन्निग्रहस्य विषयाः । प्रकृतेः परं भगवदनन्यार्हशेषं स्वरूपं ज्ञात्वा भगवदनुभवकैंकर्ययोः पुरुषार्थत्वेन स्वीकृतत्वादनन्यप्रयोजनौ कर्मज्ञानाद्युपायांतरेषु प्रपदने च निष्ठावुभावपि ददामि मोक्षयिष्यामीति भगवदनुग्रहस्य विषयावित्यर्थः ।

एतेषां कर्मविनाशहेतुभेदप्रयुक्तविशेषान् प्रदर्शयति — त्रयाणामपीत्यादिना ।

---

कर्मानुभवनाश्यं तत् त्रयाणामपि कीर्तितम् ।
प्रायश्चित्तविनाश्यं स्यात् तुर्यस्य चाधिकारिणः ॥ २८२ ॥

देहात्माभिमानी स्वतंत्र अन्यशेष ये तीनों भगवत्संबंध रहित होने से क्षिपामि इत्युक्त भगवन्निग्रह के विषय हैं । प्रकृति से भिन्न भगवदनन्यार्ह शेषभूत आत्मस्वरूप को जान भगवदनुभव कैंकर्य को पुरुषार्थ समझने से अनन्यप्रयोजन हो कर्मज्ञानादि उपायांतर और प्रपत्ति में निष्ठावाले ये दोनों ददामि मोक्षयिष्यामि इत्युक्त भगवदनुग्रह के विषय हैं ।

इन के कर्मनाश के हेतु भिन्न होने से होनेवाले तारतम्य को दिखाते हैं तीनों का इत्यादि ।

तीनों का कर्म अनुभव से नष्ट होता है चौथे
अधिकारी का कर्म प्रायश्चित से नष्ट होता है
पांचवें का कर्म पुरुषकार से नष्ट होता है ॥ २८२ ॥

निग्रहस्य विषयाणां त्रयाणामप्यनादिकालार्जितं सद्-सत्कर्म—

'अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम् ।
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥'

इत्युक्तप्रकारेणावश्यं तत्फलानुभवं विना विनाशाभावात् अनुभवविनाश्यमिति वदति, अनुग्रहस्य विषयतयोक्तयोरुभयोर्मध्ये उपायांतरनिष्ठस्य चतुर्थाधिकारिणः कर्म ज्ञानभक्तिरूपोपायांतरेष्वेकमनुष्ठितं चेत्तत्प्रायश्चित्तस्थानीयं कृत्वेश्वरेण सर्वकर्मणां निवर्तनात् कर्म प्रायश्चित्तविनाश्यमिति वदति । प्रपदननिष्ठस्य पञ्चमाधिकारिणः आश्रयणवेलायामनादिकालकृतापराधभीतेन तान् सर्वानीश्वरं क्षमापयितुं लक्ष्मीं पुरुषकारत्वेन पुरस्कृत्याश्रयणस्य कृतत्वात्तन्निमित्तमस्यापराधान् सर्वान् क्षमित्वांगीकृत्यास्याखिलकर्मणामपि दूरीकरणात् पुरुषकारविनाश्यमिति वदति ।

एवं पुरुषकारसापेक्ष इत्युक्तावुपायस्य निरपेक्षताहानिप्रसंग

---

निग्रहविषयभूत तीनों का अनादि कालार्जित सत् और असत्कर्म 'किया हुआ सत् और असत् कर्म अवश्य ही भोगा जाता है करोडों कल्पों से भी भोगे बिना नष्ट नहीं होता है' इस वचनानुसार भोगने से नष्ट होता है ऐसा कहे हैं । अनुग्रहविषयभूत उपायांतरनिष्ठ चतुर्थ अधिकारी का कर्म ज्ञान भक्तियों में किसी एक का अनुष्ठानरूप प्रायश्चित्त से नष्ट होने से प्रायश्चित्त से नष्ट होता है कहे हैं । प्रपत्तिनिष्ठ पंचम अधिकारी का आश्रयण के समय में अनादिकाल कृत अपराध से भीत हो उन को क्षमा कराने के लिये लक्ष्मी को पुरुषकार कर आश्रयण करनेसे उन के लिये चेतन के सब अपराध को क्षमा कर सब कर्मों को नाश करने से पुरुषकार से नष्ट होता है कहे हैं ।

एवं पुरुषकार की अपेक्षा करने से उपाय की निरपेक्षता का भंग न होगा

उपायः स्वीकारे पुरुषसापेक्षः पुरुष-
कारसापेक्षश्च भवेत्, कार्यकाल उभ-
यनिरपेक्षश्च भवेत् ॥ २८३ ॥

---

इति शंकायामाह– उपाय इत्यादिना।

सहायांतरसंसर्गासहासिद्धोपायः शरणवरणस्वीकारकाले स्वीकर्तारं पुरुषं स्वीकारयितृपुरुषकारं चापेक्षते। स्वीकृतेन स्वेनास्यानिष्टनिवृत्तीष्टप्राप्तिकरणकार्यकाले पुरुषपुरुषकाररूपो-भयापेक्षां विना स्वयमेव करोतीत्यर्थः। कार्यकाले सहकारिसा-पेक्षत्वे सति ह्युपायनैरपेक्ष्यस्य हानिः स्यादिति भावः।

---

स्वीकारसमये स्याच्च सापेक्षः पुरुषेण वै ।
घटकेन च सापेक्ष उपायः परपावनः ।
कार्यकाले च द्वाभ्यां स्यादुपायो निरपेक्षकः ॥ २८३

क्या इस शंका में कहते हैं उपाय इत्यादि ।

उपाय स्वीकार काल में चेतन और पुरुष-
कार की अपेक्षा करता है कार्य करने के
समय उभय निरपेक्ष होता है ॥ २८३ ॥

सहायांतर संबंध को न सहनेवाला सिद्धोपाय शरणागति को स्वीकार करने के समय स्वीकर्ता चेतन स्वीकार करानेवाला पुरुषकार इन दोनों की अपेक्षा करता है। स्वीकार किये जानेपर ईश्वर अनिष्ट निवृत्तिपूर्वक इष्ट प्राप्ति करने के समय चेतन और पुरुषकार इन दोनों की अपेक्षा न कर स्वयमेव कर्ता है। कार्य काल में सहकारी की अपेक्षा होनेपर ही उपाय की निरपेक्षता का भंग होगा।

स्वप्रयोजनपराः सर्वे प्रतिकूला
इति कथमुच्यंत इति चेत् ॥ २८४ ॥

---

स्वप्रयोजनपरा प्रतिकूला इति विशेषेणोक्तं हि । एतादृशस्वप्रयोजनपरताया अनुकूलाग्रेसरेषु दिव्यसूरिष्वपि दर्शनात्तन्निबंधनप्रातिकूल्यस्य तेषु परिहारः कर्तव्य इति विचार्य तद्विषयशंकामनुवदति–स्वप्रयोजनपरा इत्यादिना

'अस्माकमेवानंदश्चेत्, अहं दृष्ट्वा प्रीतो नर्तितुं पृथिव्यां संचरेत्' 'दृष्ट्वा हं त्वां प्रीतो भवितुं' इत्यादिवचनैर्मंडलग्रहणप्रभृतिप्रवृत्तिभिश्च दिव्यसूरीणामप्येतादृशप्रयोजनं भासते खलु, एवं च सति स्वप्रयोजनपराः सर्वे प्रतिकूला इत्युक्तौ दिव्यसूरीणामपि तथात्वापत्तिरिति शंकाभिप्रायः । तां परिहरति–

---

स्वार्थनिष्ठा विपक्षास्त उच्यंते कथमत्र चेत् ॥ २८४ ॥

स्वप्रयोजनपरों को प्रतिकूल कहे हैं यह स्व प्रयोजनपरता अनुकूलाग्रेसर सूरियों में दीखने से उन में प्रातिकूल्य बुद्धि को परिहार करने के लिये विचार तद्विषयशंका का अनुवाद करते हैं स्वप्रयोजनपर इत्यादि ।

स्वप्रयोजनपर सब को प्रतिकूल समझ सक्ते हैं क्या ॥ २८४ ॥

'हम को अच्छा होगा इस लिये' 'हम देख संतुष्ट हो जैसे नाचें तैसा पृथिवी पर संचार करो' आप को देख संतुष्ट होनेके लिये' इन वचनों से और मडल ग्रहण प्रभृतियों से सूरियों में भी यह स्वप्रयोजनपरता दीखती है, एवं सति स्वप्रयोजनपर सब को प्रतिकूल कहनेपर सूरियों को भी ऐसा न समझना पडैगा क्या ? ऐसी शंका का अभिप्राय है ।

अत्र स्वप्रयोजनमित्याश्रय-
दोषजन्यमुच्यते ॥२८५ ॥
अतो न दोषः ॥ २८६ ॥

---

अत्रेत्यादिना ।

प्रतिकूलकथनसमयेत्र स्वप्रयोजनमित्युच्यतेऽनुभवकैंकर्ययोराश्रयभूतस्य चेतनस्याविद्यादिदोषप्रयुक्तस्वप्रयोजनमित्यर्थः । इदमाश्रयदोषजन्यमित्युक्तत्वात् दिव्यसूरीणां विषयदोषजन्यमिति भावः । अमुमर्थं विषयदोषप्रयुक्तमित्यादिवाक्ये व्यक्तं वदति ।

अमुमर्थं निगमयति—अत इत्यादिना ।

---

स्वाश्रयदोषजन्यं वै स्वप्रयोजनमुच्यते ॥ २८५ ॥
अत्रातो न भवेद्दोषस्तथा कथनकारणात् ॥ २८६ ॥

उस को परिहार करते हैं यहां इत्यादि ।

यहां स्वप्रयोजन कहते हैं आश्रयदोष से होनेवाले दोष को ॥ २८५ ॥

प्रतिकूलतया कहने के इस स्थल में स्वप्रयोजन माने—अनुभवकैंकर्य का आश्रयभूत चेतन का अविद्यादिदोष से होनेवाला स्वप्रयोजन न इस को 'आश्रय-दोष से होनेवाला' ऐसा अलग करने से सूरियों का स्वप्रयोजन विषयदोष से होनेवाला ऐसा अभिप्राय है । इस अर्थ को 'विषयदोष से होनेवाले' इस वाक्य से स्पष्ट कहेंगे ।

इस अर्थ को समाप्त करते हैं इसलिये इत्यादि ।

इस लिये दोष नहीं ॥ २८६ ।

विषयदोषप्रयुक्तानि सर्वाणि दुस्त्यजं खलु ॥२८७॥

---

प्रातिकूल्यहेतुत्वेनोक्तं स्वप्रयोजनमाश्रयदोषजन्यं, दिव्यसूरिषु स्वप्रयोजनं विषयदोषजन्यं, अतस्तादृशप्रातिकूल्यमेतेष्वपि स्यादिति दोषो नास्तीत्यर्थः। अथवा स्वप्रयोजनपराः सामान्येन प्रतिकूला इत्युच्यंते चेदनुकूलेषु दिव्यसूरिष्वेतादृशस्वप्रयोजनपरतादर्शनेन तेषामपि प्रातिकूल्यप्रसंगात् स्वप्रयोजनपरा प्रतिकूला इत्युक्तिर्दोषः खल्विति विचार्य क्रियमाणां शंकामनुवदति— स्वप्रयोजनपराः सर्वे इत्यादिना तां परिहरति अत्रेत्यादिना। अर्थः पूर्ववत्।

निगमयति--अत इत्यादिना। अत इत्यस्यार्थः पूर्ववत्। न दोष इति स्वप्रयोजनपराः प्रतिकूला इत्युक्तौ न दोष इत्यर्थ इति योजना।

एवमाश्रयदोषेण विना विषयदोषजन्यमपि स्वरूपविरुद्धं चेत्त्याज्यं खल्वित्यत आह—विषयदोषेत्यादि।

---

दुस्त्यजानि च सर्वाणि विषयागःकृतानि वै।
मूकैश्च बधिराणां च वार्तान्यत्कथामिच्छति ॥ २८७ ॥

प्रातिकूल्यहेतुतया कहा हुआ स्वप्रयोजन आश्रयदोषजन्य, सूरियों का स्वप्रयोजन विषयदोषजन्य होने से वह प्रातिकूल्य इन में होगा ऐसी शंका का अवकाश नहीं है।

इस प्रकार आश्रयदोषजन्य न हो विषयदोषजन्य होने से भी स्वरूपविरुद्ध त्याज्य नहीं है क्या? इस शंका में कहते हैं विषयदोष से इत्यादि।

विषयदोष से होनेवाले सब दुस्त्यज हैं ॥ २८७ ॥

## मूकैर्बधिराणां वार्ता 'कथमन्यदिच्छति' ॥ २८८ ॥

अनुभवविषयस्य तस्य वज्रलेपसदृशेन पुरुषानपि नारीवस्त्रं धारयितृत्वविग्रहवैलक्षण्यरूपदोषेणागता स्वप्रयोजनपरता तद्धेतुप्रावण्यं तत्सिद्ध्यर्थव्यापाराः सर्वे स्वरूपविरुद्धा इति त्याज्या इति विचारे कृतेपि त्यक्तुमशक्याः खल्वित्यर्थः । विषयदोषप्रयुक्तमिति पाठश्चेत्स्वप्रयोजनमात्रमुच्यते ।

विषयदोषस्य दुस्त्यजत्वे प्रमाणं दर्शयति–मूकैरित्यादिना.।

तेनैव प्राप्तिरित्यध्यवसाये कृते तदागमनपर्यंतं क्रमप्राप्तिं दृष्ट्वा स्थातव्यं त्वयैवं त्वरा न कार्या इति वदतीर्मातृः प्रति एतद्विषये प्रावण्याभावेन मत्स्थितेर्याथार्थ्याभिर्युष्माभिर्मद्दशा ज्ञातुं न शक्या सस इति दिवानिशं यथा कथ्यते तथा श्रियः-

---

### इति पाशुरवृत्ते द्वे प्रमाणत्वेन वै विदुः ॥ २८८ ॥

अनुभवविषयभूत उन का वज्रद्रावक पुरुषों को भी स्त्री बनानेवाले विग्रह सौंदर्यरूप दोष से होनेवाली स्वप्रयोजनपरता उस का हेतु प्रावण्य, इस की सिद्धि के लिये क्रियमाण इन सम्पूर्ण व्यापार को स्वरूप विरुद्ध मान छोडने का विचार करनेपर भी दुस्त्यज हैं ।

विषयदोष से होनेवाले दुस्त्यज हैं इस में प्रमाण दिखाते हैं मूकों के साथ इत्यादि ।

'मूकों के साथ बधिरों की वार्ता'
'और को कैसा चाहेगा' ॥ २८८ ॥

'परमात्मा से फल ऐसा निश्चय करनेपर उन के आगमन पर्यन्त क्रम प्राप्ति को देख सहना चाहिये तुम को ऐसी त्वरा न होनी चाहिये' ऐसा माताओं के वचन को सुन इस विषय में प्रावण्य रहित हमारी इस स्थिति का मूलभूत तुम हमारी दशा को नहीं जान सक्ते हो, 'वह वह' ऐसा बकने योग्य श्रियः पति विषय

पतिविषयेऽतीव प्रावण्ययुक्ताया एवं तं विना स्थातुमशक्तायास्तदावासस्थलं गत्वा प्राप्तिरुचिता,एवं सति तत्र गंतुमसमर्थाया मम तदप्राप्त्यर्थं युष्मदुक्ता वार्ताः सर्वाः श्रोतुं परिकररहितैर्बधिरैर्वक्तुं परिकररहितानां मूकानां वार्तेव वर्तत इति गोदयोक्तत्वात् । 'तवामृतस्यंदिनि पादपंकजे' इत्यारभ्य प्राप्तशेषिणस्तव समकरंदविकसच्चरणकमलयोर्भोग्यतायां निमग्नं मनोन्यत्क्षुद्रविषयं कथमाद्रियते, मधुजीवनो भ्रमरो मधुपूर्णे तामरसपुष्पे स्थिते तद्रसज्ञः स्वयं दुष्प्रापं प्राप्तमपि रसनाक्लेदनस्याप्यपर्याप्तमिक्षुरकपुष्पं न प्राप्नोतीत्येतावदेव न तत्र कटाक्षमपि न करोतीति यामुनैरुक्तत्वाच्च वैलक्षण्यं दृष्ट्वा भगवद्विषये प्रवणा निवर्तयितुमशक्या इति भानात् विषयदोषप्रयुक्तं दुस्त्यजमित्यर्थः सिद्धः ।

---

प्रावण्य पूर्णतया पाई हुई और उन की अप्राप्ति से जीने को अशक्त मैं उन के स्थान में जा प्राप्त होना उचित होनेपर भी शिथिलित पादवाली मुझ से उन के साथ न मिलने के लिये उच्यमान तुमलोगों की वार्ता सुनने को कर्ण रहित बधिरों के साथ कहने को मुखरहित मूकों की वार्ता के सदृश है ऐसा गोदादेवी कही हैं । 'आप के अमृत च्यूनेवाले' ऐसा आरंभ कर प्राप्तशेषी आप का मधुस्यन्दी चरणारविन्दों की भोग्यता में मग्न हुआ मन अन्य क्षुद्र विषय को कैसा चाहे गा ? मधु से जीनेवाला भ्रमर मधुपरिपूर्ण कमलपुष्प होनेपर उस के रस को जान समीप में जाने को अशक्य जानेपर भी जिह्वा को गीला नहीं कर सके ऐसा कंटकित पुष्प के पास जाता नहीं इतना ही नहीं उस को देख भी नहीं सक्ता ऐसा यामुनाचार्य स्वामी कहे हैं । विग्रह सौंदर्य देख भगवद्विषय में प्रवण होनेवालों को लौटाना अशक्य है ऐसा भान होने से विषयदोष से होनेवाले दुस्त्यज हैं यह सिद्ध होता है ।

एवमेतेषां सर्वेषां सदाचार्यप्रसादेन वर्द्धनसमये वस्तव्यमाचार्यसन्निधिर्भगवत्सन्निधिश्च, वक्तव्यमाचार्यवैभवः स्वनिकर्षश्च, जप्तव्यं गुरुपरंपरा

---

एवं दिनचर्योपात्तमंगलाशासनानुकूलसहवासप्रतिकूलसहवासनिवृत्तीर्विवृतवान् , सदाचार्यप्रसादेन यथा वर्द्धेरन् तथा कुर्वन् वर्ततेत्येतद्विवृणोति— एवमित्यादिना ।

एवमेतेषां सर्वेषां सदाचार्यप्रसादेन वर्द्धनसमय इति— पूर्वोक्तप्रकारेणैतेषां स्वभावविशेषाणां सदाचार्यस्य प्रसादेन पल्लविततया वर्द्धनसमय इत्यर्थः । वस्तव्यमाचार्यसन्निधिर्भगवत्सन्निधिश्चेति— अस्य वासस्थलं हितैषिण उपदेशादिभि-

---

एवमेषां च सर्वेषां सदाचार्यप्रसादतः ।
वृद्धिकाले हि वस्तव्यमाचार्यहरिसन्निधौ ।
मनीषिभिर्हि वक्तव्यौ स्वदोषाचार्यवैभवौ ।
जपनीयं सदातद्वद् द्वयं गुरुपरम्परा ।

तथा च दिनचर्योक्त मंगलाशासन, अनुकूल सहवास और प्रतिकूल सहवास निवृत्तियों का विवरण किये हैं अब 'सदाचार्यानुग्रह से जैसे बढे तैसे वर्तन करना' इस वाक्य को विवरण करते हैं एवं इत्यादि ।

एवं ये सब सदाचार्यानुग्रह से बढने के समय, आचार्य सन्निधि और भगवत्सन्निधि में वास करना आचार्य वैभव और अपनी निकृष्टता को कहना, गुरु-

पूर्वोक्त प्रकार सब गुण सदाचार्यानुग्रह से बढने के समय इस चेतन का वासस्थल—हितचिंतक उपदेशादियों से सद्गुणों का जनक अपने आचार्य की

**द्वयं च, परिग्राह्यं पूर्वाचार्यवचनमनुष्ठानं च, परित्याज्योऽवैष्णवसहवासोऽभिमानश्च, कर्तव्यमाचार्यकैंकर्यं भगवत्कैंकर्यं च ॥ २८९ ॥**

---

एतेषामुत्पादकस्य स्वाचार्यस्य सन्निधिः । तस्मिन् समर्पयति स्वीकुर्वतस्तस्यादरविषयस्य स्वविषये विशेषकटाक्षादिकं कुर्वतोऽर्चावताररूपस्य भगवतः सन्निधिश्चेत्यर्थः । अयं न समुच्चयो नापि समविकल्पः । आचार्यसन्निधिः प्रधानं तदलाभेऽर्चावतारसन्निधिरित्यर्थः । तस्मादाचार्यसंनिधिरेव पूर्वमुक्तः –

'गुरुणा सह संवासस्तदभावे मयापि वा ।'

---

पूर्वाचार्योक्त्यनुष्ठाने परिग्राह्ये परित्यजन् ।
अवैष्णवैस्सहस्थानमभिमानं तथैव च ।
कार्यमाचार्यकैंकर्यं कैंकर्यं च परात्मनः ।
वक्तव्यं वक्तव्यं च जप्तव्यं ग्राह्यमेव च ।
त्याज्यं कर्तव्यमित्याहुरनुष्ठानं च षड्विधम् ॥ २८९ ॥

परंपरा और द्वयमंत्र का जप करना, पूर्वाचार्यों के वचन और अनुष्ठान का परिग्रह करना, अवैष्णवों का सहवास और अभिमान को त्याग करना आचार्य कैंकर्य और भगवत्कैंकर्य को करना ॥ २८९ ॥

---

संनिधि, पद दिखानेपर अंगीकार कर उन के प्रीति का विषय अपने विषय में विशेष कटाक्ष करनेवाला अर्चावताररूप भगवत्संनिधि है ।

इन में आचार्य सन्निधि ही प्रधान है उस के अलाभ में अर्चावतार सन्निधि समझना । इस लिये ही आचार्य सन्निधि को पहिले कहे हैं । हमारे भक्तों के संग

इति हि भगवदुक्तिश्च। अथ वक्तव्यमित्यारभ्योपरि समुच्चयः। वक्तव्यमाचार्यवैभवः स्वनिकर्षश्च—अस्य सर्वकालमपि वाचा वक्तव्यं दुर्गतिमेवावलंब्य स्वमंगीकृतवत आचार्यस्य दयाक्षांत्यादिवैभवः। सर्वथादयादिगुणपूर्णा अपि यथा जुगुप्सन्ति तथाऽनात्मगुणपूर्तिरूपस्वनिकर्षश्चेत्यर्थः। श्रीमधुरकविः—'सामीचीन्येन' इत्यारभ्यैतदुभयमपि विशदमवोचत्। जन्तव्यं गुरुपरम्परा द्वयं च— अस्य कालक्षेपस्य भोगस्य चोपयुक्ततया रहस्यत्वेनानुसंधेयं—

'रामानुजांघ्रिशरणोस्मि कुलप्रदीप—
स्त्वासीत्स यामनुमुनेस्स च नाथवंश्यः।
वंश्यः परांकुशमुनेः स च सोपि देव्या
दासस्तवेति वरदास्मि तवेक्षणीयः॥'

इत्यादिप्रकारेण सर्वेश्वरस्य शीतलकटाक्षस्य निदानं 'स चाचार्यवंशो ज्ञेयः, आचार्याणामसावसावित्याभगवत्तः' इत्युक्तप्रकारेण

---

वास करना वह न मिलैं तो हमारे साथ वास करना ऐसा भगवान ही कहे हैं।

आचार्य वैभव इत्यादि —इस चेतन का सर्व काल भी वाक् से वक्तव्य—दुर्गति को भेंट समझ अंगीकार करनेवाले आचार्य का दयाक्षांत्यादिवैभव, दयादि गुण परिपूर्ण भी उपेक्षा करने योग्य दुर्गुण पूर्ण अपनी नीचता ये दोनों हैं। श्री मधुरकवि सूरि ग्रंथिपूर्ण सूक्ष्म रज्जु नामक प्रबंध में इन दोनों को स्पष्ट कहे हैं।

गुरुपरम्परा इत्यादि—इस चेतन का कालक्षेप और भोग के लिये रहस्यतया अनुसंधान करने योग्य 'रामानुज के चरण ही उपाय हैं' इस वचनानुसार सर्वेश्वर शीतल कटाक्ष करने के उपयुक्त 'सदाचार्य वंश जानने योग्य है' 'आचार्यों में अमुक अमुक कर भगवान् पर्यंत' इस वचनानुसार स्वाचार्य परमाचार्य भगव-

स्वाचार्यादिपरमाचार्यभगवत्पर्यंता गुरुपरंपरा । तादृशगुरुपरंपराप्राप्तं स्वाचार्येण स्वस्य शरणत्वेनोपदिष्टं द्वयं चेत्यर्थः । अनेन गुरुपरंपरापूर्वकं द्वयमस्य रहस्यत्वेनानुसंधेयमिति सिद्धम् । भाष्यकारस्य कालक्षेपकथनसमये 'द्वयमर्थानुसंधानेन सह सदैवं वक्ता इति हि भगवतोक्तम् । परिग्राह्यं पूर्वाचार्याणां वचनमनुष्ठानं च–स्वस्य ज्ञानानुष्ठानस्थैर्यार्थं दृष्टस्थलेष्वनेन परिग्राह्यं नाथमुनिप्रभृतीनां पूर्वाचार्याणां ज्ञातव्यार्थप्रकाशकदिव्यवचनानि । तद्वचनानुरूपाणि निर्दोषानुष्ठानानि चेत्यर्थः ।

'सुव्याहृतानि महतां सुकृतानि ततस्ततः ।'

संचिन्वन् धीर आसीत शिलाहारी शिलं यथा ॥' इत्युक्तम् । परित्याज्यमवैष्णवसहवासोऽभिमानश्च–ज्ञानानुष्ठाननाशकमिति भयेनास्य सवासनं त्याज्यं वैष्णवलक्षणरहितैः सहवासः, तैरयमस्मदीय इति कैश्चिदन्वयैः स्वविषये क्रियमाणोऽभि-

---

त्पर्यंत गुरुपरंपरा; उस गुरुपरंपरा से प्राप्त स्वाचार्य से अपने को उपायतया उपदिष्ट द्वयमंत्र भी है । इस से गुरुपरम्परा पूर्वक द्वय ही इस चेतन को रहस्यतया अनुसंधान करने योग्य है । भाष्यकार से कालक्षेप प्रकार को कहने के समय 'द्वयमंत्र को अर्थानुसंधान के साथ सदा कहता हुआ' ऐसा श्रीरङ्गनाथ जी कहे हैं ।

पूर्वाचार्यों के इत्यादि—ज्ञानानुष्ठान स्थिर होनेके लिये नाथमुनि प्रभृति पूर्वाचार्यों के ज्ञातव्यार्थों को प्रकाश करनेवाले वचन और उन वचनानुरूप अनुष्ठानों को भी परिग्रह करना । 'शिलाहारी शिल (खेत काटलेने पर खेत में गिरे हुए धान्य को चुनने) को जैसा तैसा महत्पुरुषों के वचन और अनुष्ठानों को बुद्धिमान् संग्रह करैं' ऐसा कहा है ।

अवैष्णव सहवास इत्यादि—ज्ञानानुष्ठानों के नाशक ऐसी भीति से वैष्णव के लक्षण रहित लोगों के साथ सहवास और उन के संबंध को त्याग करना

पूर्वोक्तभगवत्कैंकर्यं ज्ञायते शास्त्रमुखेन, आचार्य-
कैंकर्यं ज्ञायते शास्त्रमुखेनाचार्यवचनेनच ॥ २९० ॥

---

मानश्चेत्यर्थः । कर्तव्यमाचार्यकैंकर्यं भगवत्कैंकर्यं च–अस्य स्वरूपानुकूलतया सदा कर्तव्यं महोपकारकस्वाचार्यविषये प्रेमपूर्वकं क्रियमाणं कैंकर्यं , तन्नियोगपरतंत्रेण क्रियमाणं भगवत्कैंकर्यं चेत्यर्थः । एवं दिनचर्यायामुक्ताः स्वभावविशेषाः सर्वे सदाचार्यप्रसादेन यथा वर्द्धेरन् तथा कुर्वन् वर्तनं नाम—एवं वस्तव्यवक्तव्यजप्तव्यपरिग्राह्यपरित्याज्यकर्तव्यानां ज्ञानेन तेषु निष्ठेत्युक्तम् ।

एवं कर्तव्यं कैंकर्यद्वयमपि केन ज्ञायत इत्याकांक्षायामाह–पूर्वोक्तेत्यादि ।

पूर्वोक्तेति—वक्तव्यादिगणनायामुक्तेत्यर्थः । भगवत्कैंकर्यं

---

पूर्वोक्तभगवद्दास्यं ज्ञायते शास्त्रचक्षुषा ।
शास्त्राचार्यमुखेनैवाचार्यदास्यं च ज्ञायते ॥ २९० ॥

चाहिये ।

आचार्य कैंकर्य इत्यादि—इस चेतन का स्वरूपानुरूप कैंकर्य—महोपकारक अपने आचार्य के विषय में प्रेमपूर्वक क्रियमाण कैंकर्य, आचार्य की आज्ञा से क्रियमाण भगवत्कैंकर्य ही है । दिनचर्या में उक्त सब गुण माने—वस्तव्य वक्तव्य जप्तव्य परिग्राह्य परित्याज्य कर्तव्य इन को जान इन में निष्ठित होना ।

इस प्रकार कर्तव्य कैंकर्य दोनों को कैसा जानना इस शंका में कहते हैं पहिले इत्यादि ।

पहिले कहा हुआ भगवत्कैंकर्य को
शास्त्र द्वारा जानना, आचार्य कैंकर्य को
शास्त्र और आचार्य वचन द्वारा जानना ॥ २९० ॥

भगवत्कैंकर्य को भगवान् मुंह खोल कुछ वार्ता न करने से श्रुति स्मृति आदि

कैंकर्यं च द्विविधम् ॥ २९१ ॥
तच्चेष्टकरणमनिष्टनिवृत्तिश्च ॥ २९२ ॥

---

ज्ञायते शास्त्रमुखेनेति—भगवानिदानीमस्य मुखेन किंचिन्न वदति अतस्तत्प्रतिपादकश्रुतिस्मृत्यादिशास्त्रमुखेन ज्ञायत इत्यर्थः। आचार्यकैंकर्यं ज्ञायते शास्त्रमुखेनाचार्यवचनेन चेति—आचार्यविषये शुश्रूषाप्रकारप्रतिपादकशास्त्रमुखेन स्वस्येष्टानिष्टे एतदिति तदुक्तवचनेनेत्यर्थः।

अथ कैंकर्यवेषं ज्ञापयितुं कैंकर्यं द्विविधमित्याह—कैंकर्यं चेत्यादिना।

तत्किमित्यत आह—तच्चेति।

एतद्द्वयमपि किमवलंब्य वर्तत इत्यत आह—इष्टानिष्टे इत्यादि।

---

कैंकर्यं द्विविधं प्रोक्तं सदा शास्त्रार्थकोविदैः ॥ २९१ ॥
तच्चेष्टकरणं तद्वदनिष्टविनिवर्तनम् ॥ २९२ ॥

शास्त्र द्वारा जानना। आचार्य की शुश्रूषादि कैंकर्य को प्रतिपादन करनेवाले शास्त्र द्वारा और उन के वचन द्वारा भी जानना।

अव कैंकर्य स्वरूप को जनाने के लिये कहते हैं—कैंकर्य इत्यादि।

कैंकर्य दो प्रकार का है ॥ २९१ ॥

वह प्रकार कौन है इस शंका में कहते हैं—इष्ट को इत्यादि।

इष्ट को करना अनिष्ट को छोडना ॥ २९२ ॥

ये दोनों किस को अवलंवन कर रहते हैं इस शंका में कहते हैं—इष्टानिष्ट इत्यादि।

## इष्टानिष्टे वर्णाश्रमावात्मस्वरूपं चावलंब्य वर्तेते ॥

पूर्वोक्तकैंकर्यप्रतिसंबंधिनोरुभयोरिष्टानिष्टे अस्याधिकारिणो वर्णाश्रमावात्मस्वरूपं चावलंब्य वर्तेते इत्यर्थः । इष्टानिष्टयोर्वर्णाश्रमाववलंब्यस्थितिर्नाम— स्ववर्णस्याश्रमोचितधर्माणां परार्थबुध्यानुष्ठानमिष्टं, स्वार्थबुध्यानुष्ठानमनिष्टमित्यर्थः । परार्थबुध्यानुष्ठानं नाम— लोकसंग्रहतया शिष्यपुत्राणामुज्जीवनार्थं चानृशंस्येनानुष्ठानम् । अमुमर्थं– 'अत्रास्मदाचार्याणामनुष्ठानं शिष्यपुत्राणामुज्जीवनार्थमानृशंस्येन, एवमनुष्ठानाभावे भगवद्विभूतिभूतानां चेतनानां नाशहेतुत्वादीश्वरस्यानभिमतः स्यात् तस्माद्यावता लोकसंग्रहः स्यात् यावता शिष्यपुत्राणामुज्जीवनं च स्यात् 'तावदनुष्ठेयमित्युक्तम् । प्रवृत्तिधर्मः स्वयमभिसंधिभे-

---

वर्णाश्रमौ समालंब्य प्रत्याव्यात्मस्वरूपकम् ।
इष्टानिष्टे प्रवर्तेते नात्र कार्या विचारणा ॥२९८॥

इष्ट और अनिष्ट वर्णाश्रम और आत्म
स्वरूप को भी अवलंबन कर रहते हैं ॥ २९८ ॥

पूर्वोक्त कैंकर्य के प्रतिसंबंधी ईश्वर और आचार्य का इष्टानिष्ट इस अधिकारी के वर्णाश्रम और आत्मस्वरूप को अवलंबन कर होते हैं । स्ववर्णाश्रमोचित धर्मों को परार्थ बुद्धि से अनुष्ठान करना इष्ट है स्वार्थबुद्धि से अनुष्ठान करना अनिष्ट है । परार्थबुद्ध्या अनुष्ठान माने—लोक संग्रहतया शिष्यपुत्रोज्जीवनार्थ दया से अनुष्ठान करना । इस अर्थ को 'हमारे आचार्यकर्तृक अनुष्ठान शिष्यपुत्रोंके उज्जीवनार्थ दया से हैं । ऐसा न करनेपर भगवद्विभूतिरूप चेतनों का नाशहेतु होनेसे ईश्वर को अनभिमत होगा इसलिये जितना करने से लोकसंग्रह और शिष्यपुत्रों का उज्जीवन होगा उतना करना चाहिये प्रवृत्तिधर्म ही अभिसंधि (अनुसंधान) भेद

देन यथा निवृत्तिधर्मो भवति तथायं निवृत्तिधर्मश्च प्राप्यं भवति अस्याकरणे प्रत्यवायो भगवतोऽनभिमतत्वं स्वस्य पुरुषार्थहानिश्च स्यादिति तनिश्लोकेऽयं स्वयमेवावोचत् । स्वार्थबुध्यानुष्ठानं नाम— स्ववर्णस्वाश्रमोचितत्वेन विहितत्वादस्माकमेतदनुष्ठानाभावे कृत्याकरणरूपपापं स्यादिति बुध्यानुष्ठनम् । इष्टानिष्टयोरात्मस्वरूपमवलम्ब्य स्थितिर्नाम— इच्छा स्वरूपमित्युक्तप्रकारेण विनियोगदशायां शेषिण इच्छानुगुणं स्वरूपस्य विनियोगकरणमिष्टं, वैपरीत्येन विनियोगकरणसमये स्वशेषत्वं दृष्ट्वा पश्चाद्गमनस्य पारतंत्र्यमवलंब्य प्रतिदृष्टिप्रदानस्याकरणमनिष्टम् ।

अथवा— इष्टानिष्टे इत्यादिग्रंथस्य स्ववर्णाश्रमोचितकरणमिष्टं, तद्विरुद्धकरणमनिष्टमिति । आत्मस्वरूपस्योचितकरणमिष्टं, तद्विरुद्धकरणमनिष्टमिति योजना ।

यद्वा औपाधिकानित्यवर्णाश्रमयोरादरोऽनिष्टं, निरुपाधिकनित्यात्मस्वरूप आदर इष्टमिति योजना । एवमादरमवलब्या-

---

से जैसे निवृत्तिधर्म होता है वैसा यह निवृत्तिधर्म भी प्राप्य होता है इन को नहीं करने से प्रत्यवाय, परमात्मा की अप्रीति और अपने पुरुषार्थ की हानि भी होगी।' ऐसा तनिश्लोक नामक रहस्य ग्रंथ में कहे हैं । स्वार्थबुद्धया अनुष्ठान माने—स्ववर्णाश्रमोचिततया विहित होने से हम इस को नहीं करने से कृत्याकरणरूप पाप होगा ऐसा समझ अनुष्ठान करना । इष्टानिष्ट आत्मस्वरूप को अवलंबन कर रहते हैं माने—विनियोगदशा में शेषी के इच्छानुगुण अपने स्वरूप को बचाना इष्ट है इस के विपरीत करना माने अपने शेषत्व को रक्षा करने के लिये पीछे हटना, अपने पारतंत्र्य को देख अभिमुख न होना आदि अनिष्ट है ।

नुक्त्वा, अनिष्टं वर्णाश्रममवलंब्य वर्तते, इष्टमात्मस्वरूपमव-लंब्य वर्तते इति विभज्य वर्णाश्रमाचारोऽनिष्टकोटावित्युक्तौ—

'श्रुतिस्मृती ममैवाज्ञा यस्तामुल्लंघ्य वर्तते ।
आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ॥'

इति

'अविप्लवाय धर्माणां पालनाय कुलस्य च ।
संग्रहाय च लोकस्य मर्यादास्थापनाय च ॥
प्रियाय मम विष्णोश्च देवदेवस्य शार्ङ्गिणः ।
मनीषी वैदिकाचारं मनसापि न लंघयेत् ॥
यथा हि वल्लभो राज्ञो नदीं राज्ञा प्रवर्तिताम् ।
लोकोपयोगिनीं रम्यां बहुसस्यविवर्द्धिनीम् ।
लंघयन् शूलमारोहेदनपेक्षोऽपि तां प्रति ।
एवं विलंघयन् मर्त्यो मर्यादां वेदनिर्मिताम् ।
प्रियोऽपि न प्रियोऽसौ मे मदाज्ञाव्यतिवर्त्तनात् ।
उपायत्वग्रहं तत्र वर्जयेन्मनसा सुधीः ॥'

इति च सर्वेश्वरेण लक्ष्म्या चोक्तैर्वचनैः पूर्वाचार्याणां वद-

'श्रुति स्मृति हमारी आज्ञा हैं इन को जो उल्लंघन करता है वह आज्ञाभंग-कारी हमारा द्रोही है मेरा भक्त होनेपर भी वैष्णव नहीं कहलाता है।' 'धर्मों का नाश न होने के लिये कुल के पालन के लिये लोकसंग्रह के लिये मर्यादास्थापन के लिये मेरे और विष्णुकी प्रीति के लिये बुद्धिमान् वैदिकचार को मन से भी उल्लंघन नहीं करें। राजा का अतिप्रिय मंत्री राजा से प्रवाहित लोकोपयोगिनी बहु-सस्य विवर्द्धिनी रमणीय नदी को तोडने से जैसे शूली में चढाया जाता है वैसा वेदनिर्मित मर्यादा को तोडनेवाला मनुष्य हमारी आज्ञोल्लंघन करने से भक्त होने पर भी प्रिय नहीं होता है बुद्धिमान् को उन में उपायत्व बुद्धि छोड देना चाहिये'

पुण्याद्भीतः पापं न कुर्यात् खलु ॥२९९॥

नानुष्ठानाभ्यां च विरोधः । अतः पूर्वोक्तप्रकारेणास्य वाक्यस्य तात्पर्यम् ।

योजनात्रयस्य चोपरितनवाक्येन संगतिः । कथमिति चेत्— प्रथमयोजनायामेवं वर्णाश्रमानुष्ठाने प्रतिपत्तिविशेषयोरात्मस्वरूपस्य विनियोगदशायामानुकूल्यप्रातिकूल्ययोश्चेष्टानिष्टयोर्विषयविभागः किमर्थं क्रियते वर्णाश्रमानुरूपाणां स्वरूपानुरूपाणां च करणमिष्टं, तद्विरुद्धाकृत्यादिकरणमनिष्टमित्युक्तौ कानुपपत्तिरित्यत आह— पुण्यादित्यादि । द्वितीययोजनायां वर्णाश्रमविरुद्धानां स्वरूपविरुद्धानां च करणमनिष्टमित्यस्योक्ता निवृत्तिः कर्त्तव्या किमित्याह—पुण्यादित्यादि । तृतीययोजनायामेवं वर्णाश्रमयोरादरनिवर्तनेऽकृत्यकरणप्रसंग इत्यत आह— पुण्यादित्यादि ।

भगवदनुग्रहहेतुतया शास्त्रसिद्धत्वेपि मोक्षविरोधीति पुण्यं

---

पुण्याद्भीतः कदापीह पापं कुर्यान्न पूरुषः ॥२९९॥

ऐसा लक्ष्मी और नारायण के वचन और पूर्वाचार्यों के वचनानुष्ठानों के साथ भी विरोध नहीं होने के लिये वर्णाश्रमधर्मानुष्ठान करना चाहिये ।

एवं वर्णाश्रमानुष्ठानों को जनाने में आत्मस्वरूपके विनियोग दशा में आनुकूल्य और प्रातिकूल्यों में इष्टानिष्टों का विभाग करना आवश्यक है क्या वर्णाश्रमानुरूप और स्वरूपानुरूप कृत्यों को करना इष्ट है तद्विरुद्ध अकृत्यादि करना अनिष्ट है ऐसा कहने में दोष क्या इस शंका में कहते हैं पुण्य को इत्यादि ।

पुण्य से डरनेवाला पाप नहीं करेगा ॥ २९९ ॥

**अयं पुण्यं पापमिति तिष्ठति, स पापं पुण्यमिति तिष्ठति तस्येदं दुर्लभं, अयं तन्न कुर्यात् ॥ ३०० ॥**

---

कर्तुमपि भीतो भगवन्निग्रहहेतुत्वेन शास्त्रसिद्धं नरकावहमिति सामान्यैरपि त्यज्यमानं पापं कदाचिदपि न कुर्यादित्यर्थः ।

अस्य पुण्याद्भयप्रकारं वत्सलस्येश्वरस्यास्मिन् पापे पुण्यचिंतनप्रकारमीश्वरस्य चावकाशो यथा न स्यात्तथा पापप्रवृत्त्यावन्वयराहित्यप्रकारं च दर्शयति--- अयं पुण्यमित्यादिना ।

'तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति' इत्युक्तत्वात् पुण्यपापमुभयमपि मोक्षविरोधीति वर्तमानोधिकारी लौकिकैः सुखहेतुरित्याद्रियमाणं पुण्यं भगवत्प्राप्तिप्रति-

---

पुण्यं पापमित्येव ह्ययं तिष्ठति पातकम् ।
सतु पुण्यं विजानाति तस्येदं दुर्लभं सदा ॥ ३०० ॥

भगवदनुग्रहहेतुतया शास्त्र सिद्ध होने पर भी मोक्षविरोधी समझ पुण्य करने को भी डरनेवाला यह प्रपन्न अधिकारी भगवन्निग्रहहेतुतया शास्त्रसिद्ध समझ सामान्यलोगों भी नहीं करने के पाप को कदापि नहीं करेगा ।

यह पुण्य को डरने का प्रकार वात्सल्यगुणयुक्त ईश्वर अपेक्षा करनेपर भी पाप को नहीं करने के प्रकार को भी दिखाते हैं यह पुण्य को इत्यादि ।

यह पुण्य को पाप समझता है, वह
पाप को पुण्य समझता है, उसको पाप
नहीं मिलता है, यह पाप नहीं करेगा ॥ ३०० ॥

'उपासक पुण्य पाप को छोड निर्लिप्त हो परमात्मा के सादृश्य को पाता है' ऐसा कहने से पुण्य पाप दोनों को मोक्ष का विरोधी समझनेवाला यह अधिकारी, लोग सुखहेतु समझे हुवे पुण्य को भगवत्प्राप्ति प्रतिबंधक होने से अनिष्टावह दुःख

वन्धकतयाऽनिष्टावहत्वात् दुःखहेतु पापमिति विचार्य भीतो भवति । आश्रितकृतदोषं गुणत्वेनांगीकुर्वाणोऽतिमात्रवत्सल ईश्वरोऽनेनाधिकारिणा यत्किंचित् पापं कृतमपि तद्दोष इत्यविचार्य गुण इति विचार्य प्रीतो भवति । तस्मित् तथा वर्त्तमानेऽपि अस्याधिकारिणः पापप्रवृत्तावन्वयाभावेन नियततया स्थितत्वात् पापं पुण्यत्वेन स्वीकुर्वाणस्य वत्सलस्य तदाशाविषयो भवति नतु लभ्यत इत्यर्थः । एवं पूर्वं कर्त्तव्यतयोक्तं कैंकर्यं ज्ञायत एतेनेति कैंकर्यं च द्विविधमिति तच्चैतदिति तदुभयं चैतदवलंब्य वर्तत इति चोक्त्वा तत्र प्रासंगिक शङ्कापरिहारः कृतः ।

ईदृशकैंकर्यमस्य येन केनापि प्रकारेण वा कर्तव्यमित्यस्यावश्यकरणीयत्वमाह– कैंकर्यं चेत्यादिना ।

---

हेतु पा[illegible] [illegible]मझ उपेक्षा करता है । आश्रितकर्तृक पाप को पुण्य समझनेवाले अतिमात्र [illegible] ईश्वर इस अधिकारी के जिस किसी पाप करनेपर भी उस को पाप न[illegible] समझ पुण्य ही समझता है उस का स्वभाव ऐसा होनेपर भी यह अधिकारी [illegible] में प्रवृत्त न हो नियमपूर्वक वर्तन करने से पाप को पुण्य समझनेवाले ईश्वर [illegible]मात्र करके रह जायगा उस को पाप नहीं मिलेगा । तथा च कर्तव्यतया [illegible] कैंकर्य को जानने के कारण, कैंकर्य दो प्रकार हैं, उन का निरूपण, उन दोनों [illegible] अ[illegible]लंवन अमुक है ऐसा कह उस में प्रसंगात् आई हुई शंका का परिह[illegible] [illegible] हैं ।

[illegible] कैंकर्य इस चेतन से किसी एक प्रकार से होना चाहिये ऐसा विचार इस [illegible]यकरणीयता को कहते हैं कैंकर्य इत्यादि ।

[illegible]कर्य भक्तिद्वारा न होवै तो भीतिमूल तो भी होना चाहिये ॥ २०१ ॥

कैंकर्यं च भक्तिमूलं स्यात्
अथवा भीतिमूलं स्यात् ॥३०१॥
तदपि नास्ति चेत् अधिकारे
उपायोपेययोश्चान्वयो नास्ति ॥ ३०२॥

---

भक्तिमूलत्वं नाम—शेषिणो मुखविकासनिदानस्यैव कर्त्तव्यताप्रयोजकेन तद्विषये प्रेम्णाऽऽगतत्वम् । तदभावे भीतिमूलत्वं नाम— तादृशकैंकर्याभावे 'अकिंचित्करस्य शेषत्वानुपपत्तिः' इत्युक्तप्रकारेण शेषत्वप्रवृत्त्यभावे शेषत्वहानिः स्यादिति भीतिहेतुनाऽऽगतत्वम् । अत्र भक्तिमूलमेव मुख्यं तदलाभे भीतिमूलं वाऽऽवश्यकमित्यर्थः ।

तदपि नास्ति चेत्किं कर्तव्यमित्यत आह—तदपीत्यादिना।

---

भक्तिमूलं च कैंकर्यमथवा भीतिमूलकम् ।
तदपि नास्ति चेदस्याधिकारे नान्वयस्तथा ।
उपायोपेययोश्चैव संबंधो नास्ति सर्वथा ॥

भक्तिद्वारा होना माने—शेषी का मुखोल्लास के उचित करने के योग्य तद्विषयप्रेमद्वारा होना । न हो तो भीतिमूल तो भी होना माने—भक्तिमूल न हो तो 'कुछ भी नहीं करनेवाले को शेषत्व न होगा' इत्युक्त प्रकार शेषत्व सूचक वृत्ति न होने से शेषत्व की हानि होगी एसा भीति से होना । इस में भक्तिमूल होना ही प्रधान है न हो तो भीतिद्वारा तो भी होना चाहिये ।

उस का भी अभाव में क्या किया जाय इस शंका में कहते हैं—उस का भी इत्यादि ।

उसका भी अभाव होनेपर अधिकार उपाय
और उपेय में संबंध छूट जायगा ॥ ३०२॥

## कैंकर्यं फलसाधनमकृत्वा फलं कुर्यात्॥ ३०३॥

---

अमुख्यभीतिमूलकैंकर्याभावे किंचित्काराभावेन शेषत्वस्वरूपरूपाधिकारेऽधिकारिसापेक्षे शेषिणः कृपारूपोपायेऽस्यानुकूलवृत्तिसापेक्षे तस्य मुखविकासरूपे उपेये चान्वयो नास्तीत्यर्थः।

एवं पूर्ववाक्यद्वयेन कैङ्कर्यावश्यकर्तव्यत्वं कैङ्कर्याभावे जायमानोऽनर्थविशेषश्च दर्शितः। एवंविधकैङ्कर्ये साधनबुद्धिं व्यावर्तयति– कैङ्कर्यमित्यादिना।

एवमवश्यकरणीयतया पूर्वोक्तकैंकर्यकरणसमये दृष्टादृष्टफलेषु कस्यचित् साधनत्वप्रतिपत्तिमकृत्वा स्वयंप्रयोजनतया प्रतिपत्तिः कार्येत्यर्थः। एतद्विशदयति—तच्चेत्यादिना।

---

### कुर्यात्फलं हि कैंकर्यमकृत्वा फलसाधनम्।

अमुख्य भीतिमूल कैंकर्य भी न होनेपर किंचित्काराभाव से शेषत्वरूप अधिकार में, अधिकारी की अपेक्षा करनेवाले शेषी की कृपारूप उपाय में, चेतन के अनुकूलवृत्ति की अपेक्षा करनेवाले स्वामी के मुखोल्लास में भी संबंध नष्ट हो जायगा।

तथा च पूर्व दो वाक्य से कैंकर्य की अवश्यकर्तव्यता कैंकर्याभाव में होनेवाले अनर्थ भी दिखाये गये, अब इस कैंकर्य में साधनबुद्धि को दूर करते हैं-- कैंकर्य को इत्यादि।

कैंकर्य को फल का साधन नहीं मान फल मानना चाहिये ॥३०३॥

एवं अवश्यकर्तव्यतया पूर्वोक्त कैंकर्य को दृष्टादृष्टफलों का साधन नहीं मान स्वयं प्रयोजन मानना चाहिये।

इस को विशद करते हैं आप इत्यादि।

तस्य स्वयं हस्तप्रसारणमकृत्वा स
यथा हस्तं प्रसारयेत् तथा करणम् ॥ ३०४ ॥

---

तस्येति— साधनकरणं विना फलकरणं चेत्यर्थः । स्वयं हस्तप्रसारणमकृत्वा स यथा हस्तं प्रसारयेत्तथा करणं नाम— कैङ्कर्यकर्ता स्वयं स्वस्य फलत्वेन तत्सन्निधौ कस्यचिदभ्यर्थनमकृत्वा स्वयं प्रयोजनतया कुर्वन्, कैङ्कर्यस्वीकर्त्ता सः—

'याः क्रियाः संप्रयुक्ताः स्युरेकांतगतबुद्धिभिः ।
ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम् ॥'

इत्युक्तप्रकारेण स्वपूर्तिमदृष्ट्वा सापेक्ष आदृत्य यथा स्वीकुर्यात्तथा करणम्

एतावन्नालं स्वतंत्रःस्व स्वीकृतमित्यस्य प्रत्युपकारः कर्त्तव्य

---

तस्य स्वयमकृत्वा वै हस्तप्रसारणं किल ।
हस्तं प्रसारयेत्स्वेन स यथा करणं तथा ॥ ३०४ ॥

आप हाथ न पसार उन को हाथ पसारने देना ॥ ३०४ ॥

आप इत्यादि—कैंकर्य करनेवाले आप उन का फलतया परमात्मा के पास किसी फल को नहीं मांग स्वयं प्रयोजन मान करना, कैंकर्य को स्वीकार करनेवाले ईश्वर को 'उन सब कार्यों को शिरसा स्वामी प्रतिग्रह करते हैं' इस वचनानुसार स्वपूर्ति को नहीं देख सापेक्ष हो आदर पूर्वक ईश्वर अंगीकार करें ऐसा करना ।

इतना मात्र नहीं किंतु अपने से दिये हुवे को वह स्वीकार किया है इस उपकार को विचार प्रत्युपकार भी करना चाहिये ऐसा कहते हैं— देकर इत्यादि ॥

दत्वा स्वीकारमकृत्वा स्वीकारस्य
हस्तपण्यं च देयम् ॥ ३०५ ॥

---

इत्याह– दत्वेत्यादिना ।

'देहि मे ददामि ते' इत्युक्तप्रकारेण स्वयं तस्यैकं समर्पयित्वा तत्पार्श्वे एकं प्रयोजनमस्वीकृत्य 'अद्यागत्यैतावद्भुक्तं चेदहमेकस्य शतं सहस्रमधिकतया दत्वा पुनश्च दास्यं कुर्यां' इति श्रीविष्णुचित्ततनयावत् स्वयं समर्पितं द्रव्यं सोऽङ्गीचकारेत्यस्योपकारार्थं तादृशद्रव्यं स्वाभिनिवेशानुगुणं परिपूर्णतया समर्प्य पुनश्च कैङ्कर्यकरणरूपपण्यं देयमित्यर्थः ।

एवमनन्यप्रयोजनतया किञ्चित्कारे कृते स्वरूपमुज्वलं भवतीत्यमुमर्थं सदृष्टांतमाह— श्रीविदुरवदित्यादिना ।

---

तस्मै दत्वा ह्यस्वीकार्य्य किञ्चिद्दानपरिग्रहम् ।
पणं च स्वीकारकं तस्मै देयं कृतात्मभिः ॥ ३०५॥

देकर नहीं लेकर स्वीकार के बदले मजूरी देना ॥ ३०५ ॥

'मुझे दो तुझे दूंगा' ऐसा आप उस को देकर उस से एक प्रयोजन को न लेकर 'आज आकर इनने भोजन करनेपर मैं एक को सौहजार देकर फिर भी कैंकर्य करूंगी' इत्युक्त गोदादेवी के तरह अपने से दिये हुवे को वह अंगीकार किया इस उपकार के लिये अपने प्रेमानुगुण परिपूर्ण रीति से समर्पण कर फिर [illegible] मजुरी को भी देना चाहिये ।

ऐसा अनन्यप्रयोजन से कैंकर्य करने से ही स्वरूप उज्वल होगा इस अर्थ को दृष्टांत पूर्वक कहते हैं– श्रीविदुर इत्यादि ।

श्रीविदुरवच्छ्रीमालाकारवत्कुब्जावच्च
किंचित्कारे कृते स्वरूपमुज्वलं भवति ॥ ३०६ ॥
अंकशोधनरहितमोदनं, केशगंधरहितं पुष्पं.
चूर्णस्पर्शरहितो गंधश्च खलु तैर्दत्तः ॥ ३०७ ॥

---

दृष्टांतभूतानां किंचित्कारप्रकारमाह— अङ्कशोधनरहित-मित्यादिना ।

अङ्कशोधनरहितौदनं नाम—प्रथममादरेण दत्वा पश्चादस्य द्रव्यं कुतो न दीयत इति अङ्कवस्त्रशोधनार्थमङ्कशोधनं कृत्वा भुक्तवतो मनो यथा दुःखितं स्यात्तथा प्रयोजनांतरपरदत्तौद-नव्यावृत्तं खलु भुक्तवतो हृदयं यथा प्रसन्नं स्यात्तथानन्यप्र-

---

किंचित्कारे कृते स्वस्य स्वरूपमुज्वलं भवेत् ।
श्रीमद्विदुरवत्कुब्जावन्मालाकारवत्तथा ॥ ३०६ ॥
केशगन्धं विना पुष्पमोदनं शुल्कवर्जितम् ।
चूर्णस्पर्शं विना गन्धमददन् विदुरादयः ॥ ३०७ ॥

श्रीविदुर श्रीमालाकार और कुब्जा के तरह
कैंकर्य करनेपर ही स्वरूप उज्वल होगा ॥ ३०६ ॥
दृष्टान्तभूत तीनों का कैंकर्यप्रकार को कहते हैं- कमर इत्यादि ।
कमर को विना खोजे अन्न, केशगंधरहित पुष्प,
चून के स्पर्शरहित चन्दन भी वे लोग दिये हैं ॥ ३०७ ॥

कमर के विना खोजे अन्न माने— पहिले आदर पूर्वक अन्न को खवाकर पीछे इस का मूल्य दो ऐसा द्रव्य ढूंढने के लिये कमर खोज भोजन करनेवाले के हृदय को दुःखी करनेवाले प्रयोजनान्तर पर दीयमान. अन्न के तरह न होकर भोजन करनेवाले का हृदय संतुष्ट हो जैसा अनन्यप्रयोजन हो दीयमान

योजनौदनम् । एतादृशौदनं खलु-

'भुक्तवत्सु द्विजाग्र्येषु निषण्णः परमासने ।
विदुरान्नानि बुभुजे शुचीनि गुणवंति च ॥'

इति पावनत्वभोग्यत्वप्रशस्तं विदुरेणास्य समर्पितम् । केशगन्धरहितपुष्पं नाम- अग्निस्पर्शे सति यथा केशगंधः स्यात्तथाविधः खलु पुष्पस्वभावः, तथैव प्रयोजनांतरस्पर्शरूपकेशगन्धो यथा न स्यात्तथानन्यप्रयोजनपरिमलयुक्तमर्प्यमाणं पुष्पम् । एतादृशपुष्पं खलु—

'प्रसादपरमौ नाथौ मम गेहमुपागतौ ।
धन्योहमर्चयिष्यामीत्याह माल्योपजीविनः ॥'

इति विशेषणैर्यथा श्लाघ्यते तथाऽत्यादरपूर्वकं श्रीमालाकारेण दत्तम् । चूर्णस्पर्शरहितगन्धो नाम— बहुवित्तव्ययसाध्यत्वेपि चूर्णलवस्पर्शे सति नष्टं यथा स्यात्तथा खलु चन्दनस्वभावः । तथा प्रयोजनांतरस्पर्शरूपदोषं विनाऽनन्यप्रयोजनं चन्दनम् ।

---

अन्न । ऐसे अन्न को ही 'ब्राह्मण लोग भोजन करनेपर उत्तमासन में बैठ शुचि और गुणवंत विदुर के अन्न को भोजन किये हैं' ऐसा पावनत्व भोग्यत्व से प्रशस्त अन्न को श्री विदुर जी समर्पण किये हैं ।

केशगंधरहित पुष्प माने—अग्निस्पर्श होनेपर पुष्प केशगंधवाले हो जाते हैं, ऐसा ही प्रयोजनान्तरस्पर्शरूप केशगंधरहित अनन्यप्रयोजनत्वरूप परिमलयुक्त पुष्प । ऐसे पुष्प के ही 'अनुग्रह करनेवाले सब के मालिक आप दोनों हमारे घर आये हैं मैं धन्य हुआ हूं आप की आराधना करूंगा ऐसा मालाओं को बेंच जीनेवाले मालाकार कहे हैं' ऐसा पराशर ऋषि जैसा श्लाघा करें तैसा मालाकार आदरपूर्वक फूल समर्पण किये हैं । चून के स्पर्शरहित चन्दन माने—सहस्र स्वर्ण के मूल्य से बनाया हुआ चन्दन चून का स्पर्श होने से नष्ट होता है तैसा प्रयोजनान्तरस्पर्शरूप दोषरहित अनन्यप्रयोजनभूत चन्दन । ऐसे चन्दन को 'यह

एतादृशं चन्दनं खलु—

'सुगन्धमेतद्राजार्हं रुचिरं रुचिरानने ।
आवयोर्गात्रसदृशं दीयतामनुलेपनम् ॥'

इति तत्प्रार्थनानंतरमनुलेपनार्हचन्दनतया दत्तं कुब्जया । एवमनन्यप्रयोजनतया किंचित्कारे कृते सत्येव कैंकर्याश्रयं स्वरूपमुज्वलं भवतीत्यर्थः । एवमेतावता वस्तव्यादिगणनायां चरमोक्तं कर्त्तव्यं कैंङ्कर्यं शोधयित्वा तादृशकैंकर्येण स्वरूपमुज्वलं भवतीत्युक्तम् ।

अत्र मुक्तावस्थायां कैङ्कर्यदशायां स्वरूपमुज्वलं भवतीत्यर्थादुक्तमिति विचार्यैवं कैङ्कर्यदशायां स्वरूपं यथोज्वलं क्रियते तथैतत्पूर्वदशाविशेषेष्वपि स्वरूपमुज्वलं कर्तव्यमित्याह— कैङ्कर्यदशावदित्यादिना ।

---

सुगंध है यह राजा के अर्ह है यह सुन्दर है इन से भिन्न हम दोनों के शरीर के सदृश चन्दन दो ' ऐसा श्रीकृष्ण की प्रार्थना करनेपर लगाने योग्य चन्दन कुब्जा दीथी । तथा च इस प्रकार अनन्यप्रयोजनपूर्वक कैंकर्य करने से ही कैंकर्याश्रय स्वरूप उज्ज्वल होता है ।

तथा च एतावत्पर्यंत वस्तव्य आदियों में अन्त में उक्त कर्तव्यरूप कैंकर्य को निरूपण कर तादृश कैंकर्य से स्वरूप उज्ज्वल होता है ऐसा कहे हैं ।

एवं अनन्यप्रयोजन हो कैंकर्य करने से ही स्वरूप उज्ज्वल होता है इस वाक्य में मुक्तावस्था की कैंकर्य दशा में स्वरूप उज्ज्वल होता है यह भी कहागया ऐसा विचार कैंकर्यदशा में जैसा स्वरूप को उज्ज्वल बनाते हैं तैसा कैंकर्य की पूर्वदशा में भी स्वरूप को उज्ज्वल बनाना चाहिये ऐसा कहते हैं कैंकर्यदशा की इत्यादि ।

**कैंकर्यदशावत्पूर्वदशास्वपि स्वरूपमुज्वलं कर्तव्यम् ॥**

**पूर्वं चतस्रो दशाः ॥ ३०९ ॥**

**ताश्च--ज्ञानदशा वरणदशा प्राप्तिदशा प्राप्यानुभवदशा च ॥ ३१० ॥**

---

पूर्वदशास्विति— कैंकर्यात्पूर्वदशास्वित्यर्थः ।
पुर्वं कति दशा इत्याकांक्षायामाह—पूर्वमित्यादि ॥
ता दशा का इत्याकांक्षायामाह— ताश्चेत्यादि ।
ज्ञानदशा नाम—स्वस्याचार्योपदेशेन ज्ञानोत्पत्तिदशा। वरण- दशा नाम—सिद्धोपायभूतः सर्वेश्वरः स्वस्योपाय इति वरणदशा।

---

स्वरूपमुज्वलं कार्यं पूर्वास्वपि दशासु वै ।
आत्मयाथार्थ्यविद्भिर्हि नित्यकैंकर्यकालवत् ॥ ३०८ ॥
पूर्वं दशाश्चतस्रो वै जायन्ते ह्यधिकारिणाः ॥ ३०९ ॥
ताश्च ज्ञानदशा प्राप्तिदशा स्वीकारकस्य च ।
प्राप्यानुभूतिकालश्च चतस्रः परिकीर्तिताः ॥ ३१० ॥

कैंकर्यदशा की तरह पूर्वदशा में भी
स्वरूप को उज्ज्वल बनाना चाहिये ॥ ३०८ ॥

पूर्वदशा माने—कैंकर्य की पूर्वदशा ।
पूर्व में कितनी दशायें हैं इस शंका में कहते हैं—पहिले इत्यादि ।

पहिले चार दशा हैं ॥ ३०९ ॥

वह चार दशायें कौन हैं इस शंका में कहते हैं— ज्ञानदशा इत्यादि ।

ज्ञानदशा, वरणदशा, प्राप्तिदशा और प्राप्यानुभवदशा ॥ ३१० ॥

ज्ञानदशा माने—आचार्योपदेश से अपने को ज्ञानप्राप्ति होने की दशा
वरणदशा माने---सिद्धोपायभूत सर्वेश्वर को अपनी उपायतया स्वीकार करने की

**ज्ञानदशायामज्ञानं पुरस्कार्यं, वरणदशायामपूर्तिः पुरस्कार्या, प्राप्तिदशायामार्तिः पुरस्कार्या, प्राप्यानुभवदशायामभिनिवेशः पुरस्कार्यः ॥ ३११॥**

---

प्राप्तिदशा नाम- सांसारिकसकलदुरितनिवृत्तिपूर्वकं तच्चरणप्राप्तिदशा। प्राप्यानुभवदशा नाम-प्राप्यभूतं तं प्राप्यानुभवदशा । एतदनुभवजनितप्रीतिकारितकैंकर्यमेव परमपुरुषार्थः ; प्रथमापेक्षिततत्त्वज्ञानं ज्ञानफलमुपायवरणं वरणफलं प्राप्तिः प्राप्तिफलमनुभवोऽनुभवजनितप्रीतिकारितकैंकर्यमिति क्रमः । तस्मात्कैंकर्यदशा चरमदशा पूर्वदशाचतुष्टयमप्यत्रारोहितुं सोपानपंक्तिः ।

तत्तद्दशासु स्वरूपस्योज्ज्वलकरणप्रकारं दर्शयति-ज्ञानदशायामित्यादिना ।

---

ज्ञानकाले पुरस्कार्यमज्ञानं वरणे तथा ।
कालेऽपूर्तिः पुरस्कार्या चार्तिः प्राप्तिदशास्वपि ।
प्राप्यानुभवकालेऽभिनिवेशं च तथा मतः ॥ ३११॥

दशा । प्राप्तिदशा माने---संसारिक सकल दुरित निवृत्तिपूर्वक उन के चरणारविन्दों की प्राप्तिदशा । प्राप्यानुभवदशा माने---प्राप्यभूत सर्वेश्वर के पास जा अनुभव करने की दशा । एतत् अनुभवजानित प्रीति से किये जानेवाले कैंकर्य ही परम पुरुषार्थ है प्रथमापेक्षित तत्त्वज्ञान, ज्ञानफल उपायवरण, वरणफल प्राप्ति, प्राप्तिफल अनुभव, अनुभवजनित प्रीति से किये जानेवाले कैंकर्य, ऐसा क्रम है। इस कारण कैंकर्यदशा चरमदशा है उस की पूर्वदशा चारो कैंकर्यदशा में जानेके लिये सीढियां हैं ।

इन दशाओं में स्वरूप के उज्ज्वल बनाने के प्रकार को दिखाते हैं--ज्ञानदशा में इत्यादि ।

ज्ञानदशा में अज्ञान को आगे करेग,

ज्ञानदशायामज्ञानस्य पुरस्करणं नाम – आचार्यस्योपर्युपर्यज्ञानज्ञापनं कर्तुं तत्वहितपुरुषार्थेषु स्वस्याज्ञानस्य बहुकालं विज्ञापनम् । वरणदशायामपूर्तेः पुरस्करणं नाम – 'अनुष्ठितव्रतं नास्ति' 'न धर्मनिष्ठोऽस्मि' 'सत्कर्म नैवकिल किंचन संचिनोमि' इत्यादिप्रकारेण स्वस्मिन् प्राप्तिहेतुत्वेन स्वीकारार्हसुकृताद्यभावरूपाकिंचन्यस्य पुरस्करणम् । प्राप्तिदशायामार्तेः पुरस्करणं नाम—कदा प्राप्तिः स्यात्तदैव स्यादिति स्थितिं विना 'न धर्[illegible]' 'आह्वानकालोऽद्यापि नागत' इत्यादि प्रकारेण विलंबासहत्वनिबंधनस्य स्वक्लेशातिशयस्य प्रदर्शनम् । प्राप्यानुभवदशायामभिनिवेशस्य पुरस्करणं नाम— अतिपिपासितस्य पीतं जलं यथा न पर्याप्तं भवति तथानुभूतांशेन तृप्तिं

---

वरणदशा में अपूर्ति को आगे करेगा,

प्राप्तिदशा में आर्ति को आगे करेगा,

प्राप्यानुभवदशा में आशा को आगे करेगा ॥ ३११ ॥

ज्ञानदशा में अज्ञान को आगे करना माने—आचार्य जैसा अपने को ऊपर ऊपर अज्ञान ज्ञापन करेंगे तैसा तत्वहित पुरुषार्थों में अपने अज्ञान को वारम्वार निवेदन करना । वरणदशा में अपूर्ति को आगे करना माने—व्रतानुष्ठान नहीं किया हूं कर्मनिष्ठ नहीं हूं अच्छेकर्म को किंचित् भी आर्जन नहीं किया हूं इत्यादि प्रकार फल के हेतुतया समझने योग्य किसी तरह के सुकृत भी हम में नहीं हैं ऐसा आकिंचन्य को आगे करना ।

प्राप्तिदशा में आर्ति को आगे करना माने—जब प्राप्त होगा तब प्राप्त हो ऐसा न रह परमपद को विशद ज्ञान पूर्वक कब प्राप्त होऊंगा, धारणा नहीं कर सक्ता हूं बुलालेने का काल अभी आया नहीं क्या इत्यादि प्रकार विलम्बाऽसहनता से होनेवाले अपने क्लेशातिशय को दिखाना ।

प्राप्यानुभवदशा में अभिनिवेश (आशा) को आगे करना माने—अत्यन्त प्यासे को जैसा पीया हुआ जल से तृप्ति नहीं होती तैसा अनुभूत अंश में तृप्त न

अज्ञानस्य निवृत्तिराचार्यज्ञानेन, अपूर्ते-
र्निवृत्तिरीश्वरपूर्त्या, आर्तेर्निवृत्तिः कृपया,
अभिनिवेशस्य निवृत्तिरनुभवेन ॥ २१२॥

---

विनोपर्युपरि स्वस्य वर्द्धमानाभिनिवेशेन प्रकाशनम्। तथा च ज्ञानदशाप्रभृतिदशाचतुष्टये च स्वरूपस्योज्ज्वलकरणं कार्यमिदमा-काराणां पुरस्करणमिति भावः।

एवमनेनैतेषु पुरस्कृतेष्वनन्तरमेतेषां शमनं केनेत्यत आह — अज्ञानस्येत्यादि।

तत्वहितादिष्वस्य विद्यमानस्याज्ञानस्य सवासनं निवृत्तिरेता-न् परस्परमसंकीर्णतया प्रदर्श्याज्ञातज्ञापनं कर्तुमुपयुक्तेनाचार्य

---

आचार्यज्ञानतोऽज्ञाननिवृत्तिरस्य जायते।
ईश्वरपूर्तितोऽपूर्तेर्निवृत्तिः कृपयापुनः।
आर्तेर्नाशोऽनुभूत्या चाभिनिवेशस्य नाशनम्॥ २१२॥

हो ऊपर ऊपर अपने अनुभव की आसक्ति को प्रकाश करना। तथा च ज्ञानदशा प्रभृति चारो दशा में स्वरूप को उज्ज्वल करना मानो—इन इन आकारों को आगे करना ही है।

इस प्रकार यह चेतन इन को आगे करनेपर इन की शांति किस से होती है इस शंका में कहते हैं अज्ञान इत्यादि।

अज्ञान आचार्यज्ञान से दूर होता है, अपूर्ति
ईश्वरपूर्ति से दूर होती है, आर्ति कृपा से
दूर होती है, आसक्ति अनुभव से दूर होती है॥ २१२॥

तत्वहितादि में इस का अज्ञान उन को अलग अलग दिखा अज्ञातज्ञापन करनेवाले आचार्य के ज्ञान से वासना सहित दूर होता है। फल के हेतुतया सत्क-

अज्ञानस्य हेतुरपराधः, अपूर्तेर्हेतुर्ज्ञानपूर्तिः
आर्तेर्हेतुरलाभः अभिनिवेशस्यहेतुः सौंदर्यम् ॥

---

स्य ज्ञानेन, स्वास्मिन् प्राप्तिहेतुभूतसत्कर्माद्यभावरूपापूर्तेः शम-नमस्मिन् विद्यमानमेकमप्यनपेक्ष्य कार्यस्य कर्तुरुपायभूतस्ये-श्वरस्य सहकारिनैरपेक्ष्यरूपपूर्त्या, अविलंबेन चरणप्राप्त्यभा-वरूपार्तेर्निवृत्तिः- आर्तौ दृष्टायामसहमानतया तदैव कार्यं कृत्वा समापयितुं निदानभूतया परदुःखासहिष्णुरूपया कृपया, अनुभवदशायामनुक्षणं आवर्धमानस्याभिनिवेशस्य निवृत्तिस्त-द्विषयस्योपर्युपर्यनुभवेनेत्यर्थः ।

एतदज्ञानादिचतुष्टयस्य को वा हेतुरित्याकांक्षायामाह अ-ज्ञानस्येत्यादि ।

---

अज्ञानहेतुरागः स्यादपूर्तेर्ज्ञानपूर्तिकः ।
आर्तेर्हेतुरलाभः स्यात्सौंदर्यं तुर्यकारणम् ॥ ३१३ ॥

र्मादि का अभावरूप अपूर्ति—चेतन के पास से कुछ भी अपेक्षा नहीं कर कार्य करने वाले ईश्वर की सहकारि निरपेक्षतारूप पूर्ति से दूर होती है । शीघ्र चरणों की प्राप्ति के अभाव से होनेवाली आर्ति—आर्ति को देख न सह उसी वखत कार्य करने के उपयुक्त परदुःखासहिष्णुत्वरूप ईश्वर की कृपा से दूर होती है । अनुभवदशा में क्षण क्षण उत्पन्न होनेवाली आशा—उस विषय का ऊपर ऊपर अनुभव करने से नाश होती है ।

इन अज्ञानादि चारों का हेतु क्या इस आकांक्षा में कहते हैं अज्ञान का इत्यादि ।

अज्ञान का हेतु अपराध है, अपूर्ति का हेतु ज्ञानपूर्ति
है, आर्ति का हेतु अलाभ है, आशा का हेतु सौंदर्य है ॥ ३१३ ॥

आर्त्यभिनिवेशप्रकारोऽर्चिरादिगताबुक्तः ॥ ३१४॥

---

ज्ञानदशायां पुरस्क्रियमाणस्याज्ञानस्य मूलमनादिकालं कृत्याकरणाकृत्यकरणादिरूपोऽपराधः, वरणदशायां पुरस्क्रियमाणाया अपूर्तेर्निदानं स्वस्मिन् प्राप्तिहेतुतया ज्ञातुं योग्यमेकमपि नास्तीति दर्शनोपयुक्तज्ञानपूर्तिः, प्राप्तिदशायां पुरस्क्रियमाणाया आर्तेर्हेतुः प्राप्यवस्तुनः शीघ्रप्राप्त्यभावः, प्राप्यानुभवदशायां पुरस्क्रियमाणाभिनिवेशस्य कारणं अनुभूतमात्रेण तृप्त्यभावादुपर्युपर्याशां कारयितृ विग्रहसौंदर्यमित्यर्थः ।

आर्त्यभिनिवेशयोः कीदृश इत्यत आह— आर्त्यभिनिवेशेत्यादि ।

एतादृशस्वभावमित्यारभ्य लक्ष्म्या शपथस्त्वया शपथ इति

---

अर्चिरादि गतावुक्तोऽभिनिवेश प्रकारकः
आर्तिप्रकारकश्चैव विस्तरेण तपोधनैः ॥ ३१४ ॥

ज्ञानदशा में आगे कियेजानेवाले अज्ञान का हेतु—अनादिकालकृत अकृत्यकरण कृत्य अकरणादिरूप अपराध है। वरणदशा में आगे कियेजानेवाले अपूर्ति का हेतु-फल के हेतुतया समझने के योग्य किसी उपाय के अभाव को दिखाने के उपयुक्त ज्ञान की पूर्ति है। प्राप्तिदशा में आगे कियेजानेवाली आर्ति का हेतु—प्राप्यवस्तु को शीघ्र प्राप्त न होने से आया हुआ अलाभ है। प्राप्यानुभवदशा में आगे कीजानेवाली आशा का हेतु अनुभूत अंश में तृप्त न हो ऊपर ऊपर अनुभव में आशा को बढानेवाला उस का सौंदर्य है।

आर्ति और आशा का आकार क्या है इस शंका में कहते हैं—आर्ति इत्यादि।

आर्ति और आशा का स्वरूप अर्चिरादिगति में कहे हैं ॥ ३१४ ॥

'शरीर के स्वभाव को जैसा हमलोग न प्राप्त होवैं' ऐसा आरंभ कर

अस्य दशाचतुष्टयवद्गुणचतुष्टयमप्यस्ति ॥३१५॥

---

गतिप्रतिरोधं च कृत्वा प्राप्तव्यताप्रयोजकपरमभक्तिवृद्ध्यतिशयेनेत्यंतमार्तिप्रकारः, तत्र रक्तपीतांबरं श्रीमन्मुखं रक्तस्निग्धाधरं कुंतलं दृष्ट्वेति प्रकारेण प्राक् सौंदर्यमनुभूयेत्यारभ्य स्वप्राप्तिजन्यप्रीतिप्रयुक्तकांतिमनुभूयेत्यंतमभिनिवेशप्रकारश्च तस्मिन् प्रबंधे सुस्पष्टमुक्त इत्यर्थः । एवं कैङ्कर्यदशायाः पूर्वं दशाचतुष्टयमस्ति ताश्चैता इति तत्तद्दशानुगुणमज्ञानादिपुरस्करणे तत्तद्दशासु स्वरूपमुज्ज्वलं भवतीति तादृशाज्ञानादिनिवर्तकमाचार्यज्ञानादिकमिति तादृशाज्ञानादिनिदानानि चोक्तानि ।

एतद्दशाचतुष्टयप्रसंगेऽस्य गुणचतुष्टयमाह—अस्येत्यादिना ।

अस्याधिकारिणः स्वरूपौज्ज्वल्यनिदानतया पूर्वोक्तदशाचतु-

---

दशाचतुष्टयी यद्वत्तथा गुणचतुष्टयी । ॥३१५॥

'लक्ष्मीजी का शपथ है आप का शपथ हैं ऐसा रोक घेर प्राप्त होने के उपयुक्त परम भक्ति का बढ़ना' यहां तक आर्ति का स्वरूप, 'रक्तवस्त्र श्रीमुख रक्ताधर केशपाश को देख' इस वचनानुसार पूर्वस्थित सौंदर्य का अनुभव कर ऐसा प्रारम्भ कर चेतन की प्राप्ति से होनेवाली प्रीतिद्वारा आई हुई शोभा को अनुभव कर इत्यंत आशा के स्वरूप को भी अर्चिरादि में स्पष्टतया कहे हैं । तथा च कैंकर्यदशा के पहिले चार दशा हैं वे अमुक हैं तत्तद्दशानुगुण अज्ञानादियों को आगे करने से तत्तद्दशाओं में स्वरूप उज्ज्वल होता है उन अज्ञानादियों को आचार्य ज्ञानादि दूर करते हैं उन अज्ञानादियों का हेतु आदि कहे हैं ।

ये चारो दशाओं के प्रसंग में इस के गुणचतुष्टय को कहते हैं--इस को इत्यादि ।

इस को चार दशा के तरह चार गुण भी हैं ॥३१५॥

इस अधिकारी को स्वरूपोज्ज्वलता के उपयुक्ततया पूर्वोक्त चार दशा के

ज्ञानमज्ञानं शक्तिरशक्तिश्च ॥ ३१६ ॥

इदं च तस्याप्यस्ति ॥ ३१७ ॥

तस्य ज्ञानस्य विषयोऽस्य गुणः, अज्ञानस्य विषयोऽस्य दोषः, शक्तेर्विषयोऽस्य रक्षणं, अशक्तेर्विषयः परित्यागः ॥ ३१८ ॥

---

ष्टयवत् स्वरूपौज्वल्यहेतुगुणचतुष्टयमप्यस्तीत्यर्थः ।

ते च के इत्यत आह— ज्ञानमित्यादि ।

अस्य गुणचतुष्टयवत्तस्याप्यस्तीत्याह— इदं चेत्यादिना ।

तस्येति— पूर्वोक्त ईश्वरः परामृश्यते । एवं स्थितानामुभयोरपि गुणानां विषयाः के इत्यतस्तान् विभजते— तस्येत्यादिना ।

---

अस्यास्ति ज्ञानमज्ञानमशक्तिः शक्तिरेव च ॥ ३१६ ॥
ईश्वरेऽपि वसत्येवामिदं गुणचतुष्टयम् ॥ ३१७ ॥
गुणोऽस्य गोचरस्तस्य ज्ञानस्य परमात्मनः ।
अज्ञानगोचरे दोषो रक्षणं शक्ति गोचरम् ।
अशक्तेर्विषयोऽत्यागश्चेतनस्य परात्मनः ॥ ३१८ ॥

तरह स्वरूपौज्ज्वल्य हेतु चार गुण भी हैं ।

वे कौन इस शंका में कहते हैं—ज्ञान इत्यादि ।

ज्ञान, अज्ञान, शक्ति और अशक्ति हैं ॥ ३१६ ॥

इस का गुणचतुष्टय के कहने के प्रसंग में ईश्वर के भी ये गुण हैं ऐसा कहते हैं-- ये इत्यादि ।

ये गुण उन के भी हैं ॥ ३१७ ॥

इन दोनों के गुणों के विषय कौन हैं इस शंका में उन को बिभंक्त कर दिखाते हैं--उन के इत्यादि ।

पूर्वोपादानक्रमं विनेश्वरगुणविषयाणां प्रथममुक्तिश्चेतनगुण-विषयकथनानंतरं प्रसंगान्निषिद्धचातुर्विध्यं विस्तरेण वक्तुम् । तस्य ज्ञानस्य विषयोऽस्य गुण इति- 'यः सर्वज्ञः' 'सहस्रांशुः' इत्युक्तप्रकारेण सर्वज्ञस्य तस्य दिव्यज्ञानस्य विषयोऽद्वेषाभिमुख्यमारभ्यैतच्चेतने विद्यमाना आत्मगुणा इत्यर्थः । अज्ञानस्य विषयोऽस्य दोष इति 'अविज्ञाता सहस्रांशुः' इति

'अविज्ञाता हि भक्तानामागस्सु कमलेक्षणः ।
सदा जगत्समस्तं च पश्यन्नपि हृदि स्थितः ॥'

इति चोक्तप्रकारेण सर्वज्ञत्वे सत्यपि अविज्ञातुस्तस्य ज्ञानस्य विषयः प्रकृतिवश्येनानेन क्रियमाणोऽकृत्यकरणादिदोष इत्यर्थः । शक्तेर्विषयोऽस्य रक्षणमिति- 'परास्य शक्तिर्विविधैव श्रूयते' इत्युक्तप्रकारेण सर्वशक्तेस्तस्याघटितघटनासामर्थ्यरूपशक्तेर्वि-

---

उन ज्ञान का विषय इस का गुण है,
उन के अज्ञान का विषय इस का दोष
है, शक्ति का विषय इस का रक्षण है,
अशक्ति का विषय इस का परित्याग है ॥ ३१८ ॥

क्रम को छोड ईश्वर गुण के विषयों को पहिले कहने के कारण चेतनगुणों के बिषय को कहने के वाद प्रसंगात् चार प्रकार के निषिद्ध को कहने के लिये । इन के इत्यादि । —जो सर्बज्ञ हैं, अपरिमित ज्ञानवान् हैं इन वचनानुसार सर्वज्ञ उन का दिव्यज्ञान का विषय अद्वेपाभिमुख्य लेकर इस चेतन में रहनेवाले आत्म-गुण हैं । अज्ञान का इत्यादि—नहीं जानते हैं अपरिमित ज्ञानवाले हैं, 'सदा समस्त जगत् को देखते हुवे हृदय में रहनेपर भी कमलेक्षण सर्वेश्वर भक्तों के पापों को नहीं जानता है' इन वचनानुसार सर्वज्ञ होनेपर भी न जाननेवाले उन के अज्ञान का विषय प्रकृतिवश्य चेतन क्रियमाण अकृत्यकरणादि दोष हैं । शक्ति का इत्यादि—उन की शक्ति बडी है नाना प्रकार सुनी जाती है इत्युक्त प्रकार सर्व-

अस्य ज्ञानस्य विषय आचार्यगुणः, अज्ञानस्य विषय आचार्य दोषः, शक्तेर्विषयः आचार्यकैंकर्यं, अशक्तेर्विषयो निषिद्धानुष्ठानम् ॥ ३१९ ॥

---

षयोऽस्य सकलानिष्टानि दूरीकृत्य स्वरूपानुगुणं सकलेष्टप्रदान-रूपरक्षणमित्यर्थः । अशक्तेर्विषयः परित्याग इति- तथा सर्वशक्तेस्तस्याशक्तेर्विषयो दुःसहैरेतत्कृतैर्दोषैः क्रोधेनात्याग इत्यर्थः ।

एवमीश्वरगुणविषयानुक्त्वा चेतनगुणविषयानाह- अस्ये-त्यादिना ।

अस्य ज्ञानस्य विषय आचार्यगुण इति— अस्य चेतनस्य ज्ञानस्य.विषयो महोपकारकस्याचार्यस्य सद्गुणसमूह इत्यर्थः ।

---

देशिकस्य गुणो ज्ञानगोचरोऽस्य च दूषणम् ।
अज्ञानविषयः शक्तेर्विषयस्तस्य दास्यता ।
अशक्तेर्विषयोऽवैधानुष्ठानाभाव उच्यते ॥३१९॥

शक्ति उन का अघटित घटना सामर्थ्यरूप शक्ति का विषय चेतन के.समस्त अनिष्ट को दूर कर स्वरूपानुगुण सकलेष्ट प्रदानरूप रक्षण है। अशक्ति का इत्यादि--- सर्वशक्ति स्वामी की अशक्ति का विषय दुःसह चेतनकर्तृक दोषों से क्रुद्ध हो हाथ छोडना है।

एवं ईश्वरगुणों के विषयों को कह चेतनगुणों के विषयों को कहते हैं -- इस का इत्यादि।

इस का ज्ञान का विषय आचार्यगुण, अज्ञान
का विषय आचार्यदोष, शक्ति का विषय आचार्य
कैंकर्य, अशक्ति का विषय निषिद्धानुष्ठान हैं ॥ ३१९॥

इस का ज्ञान का इत्यादि---इस चेतन का ज्ञान का विषय महोपकारक

निषिद्धानुष्ठानं चतुर्विधम् ॥ ३२० ॥
तच्चाकृत्यकरणं भगवदपचारो भगवता-
पचारोऽसह्यापचारश्च ॥ ३२१ ॥

---

अज्ञानस्य विषय आचार्यदोष इति-- अज्ञानविषयो आचार्य-दिव्यविग्रहस्वभावज आगन्तुकदोष इत्यर्थः । शक्तेर्विषय आचार्यकैङ्कर्यमिति – अस्य प्रवृत्तिशक्तेर्विषयः स्वाचार्यस्य प्रीत्यर्थं क्रियमाणकैङ्कर्यमित्यर्थः । शक्तेर्विषयो निषिद्धानुष्ठान-मिति--- अस्याशक्तेर्विषयः स्वरूपोपायपुरुषार्थविरोधिनां शास्त्र-निषिद्धानामनुष्ठानमित्यर्थः ।

एवंभूतस्य निषिद्धस्य भेदानाह--- निषिद्धेत्यादिना ।

उपादेयगुणचतुष्टयवद्धेयं निषिद्धं च चतुर्विधमित्यर्थः ।

स च चतुर्विधः को वेत्यतस्तान्निर्दिशति-- तच्चाकृत्यकरण मित्यादि ।

---

अवैधकरणं तच्च चतुर्धा कथितं बुधैः ॥ ३२० ॥
अकृत्यकरणं तद्वदपचारो हरेस्तथा ।
भागवतापचारश्चासह्यागः स्यात्ततः परम् ॥ ३२१ ॥

आचार्य के सद्गुण समूह । अज्ञान का इत्यादि—इस के अज्ञान का विषय आचार्य के शरीरस्वभाव से होनेवाला आगंतुक दोप हैं । शक्ति का इत्यादि—इस की प्रवृत्ति शक्ति का विपय स्वाचार्य के मुखोल्लासार्थ क्रियमाण कैंकर्य है । अशक्ति का इत्यादि—इस की अशक्ति का विषय स्वरूपोपायपुरुषार्थों के विरोधी निषिद्धों के अनुष्ठान हैं ।

इस प्रकार निषिद्धों के स्वरूप को कहते हैं-- निषिद्ध इत्यादि ।

निषिद्ध चार प्रकार हैं ॥ ३२० ॥

उपादेय गुणचतुष्टय के तरह त्याज्य निषिद्ध भी चार प्रकार हैं ।

वह चार कौन हैं इस शंका में कहते हैं-- अकृत्यकरण इत्यादि ।

**अकृत्यकरणं नाम—परहिंसा परस्तोत्रं परदारपरिग्रहः परद्रव्यापहरोऽसत्यकथन मभक्ष्यभक्षणमेतत्प्रभृति ॥ ३२२ ॥**

---

अस्य वेषः को वेत्याकांक्षायां नं क्रमेण मिद्दणोति—अकृत्यकरणं नामेत्यादिना।

परहिंसा नाम—'न हिंस्यात्सर्वा भूतानि' इति विधिमतिक्रम्य क्रियमाणा प्राणिपीडा। परस्तोत्रं नाम—प्राप्तविषयस्तोत्राहया वाचाऽप्राप्तविषयस्तोत्रम्। परदारपरिग्रहो नाम—परेषामनन्याहार्णां स्त्रीविषयाणां मोहनादिभिः स्वीकारः। परद्रव्यापहारो नाम— परेषां स्वभूतस्य वस्तुनस्तदनुमतिं विना

---

अकृत्यकरणं नाम परहिंसा परस्तुतिः।
परद्रव्यापहारोथ परदारपरिग्रहः ।
असत्यकथनं तद्वद्भक्ष्यभक्षणादयः ॥ ३२२ ॥

अकृत्यकरण भगवन्अपचार भाग-
वतापचार और असह्यापचार हैं ॥ ३२२ ॥

इन के स्वरूप क्या हैं इस शंका में कहते हैं अकृत्यकरण इत्यादि।

अकृत्यकरण माने—परहिंसा, परस्तोत्र, परदारपरि-
ग्रह, परद्रव्यापहार, असत्यकथन, अभक्ष्यभक्षण आदि हैं ॥ ३२२ ॥

परहिंसा माने—किसी प्राणी की हिंसा मत करो इस विधि को उल्लंघन कर क्रियमाण प्राणिपीडा। परस्तोत्र माने—प्राप्तविषय के स्तोत्र करने योग्य वागिंद्रिय से अप्राप्त विषयों का स्तोत्र करना। परदारपरिग्रह माने—औरों के अनन्यार्ह स्त्रीआदिविषयों को मोहादि से स्वीकार करना। परद्रव्यापहार माने—औरों के

प्रकाशमप्रकाशं वा ग्रहणम् । असत्यकथनं नाम— यथादृष्टार्थविषयत्वं भूतहितत्वं च विना स्थितस्य वचनस्य कथनम् । अभक्ष्यभक्षणं नाम— जात्याश्रयनिमित्तदुष्टानां स्वस्य भक्षणानर्हाणां भक्षणम् । एतत्प्रभृतीनि—

'परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिंतनम् ।
वितथाभिनिवेशश्च त्रिविधं कर्म मानसम् ॥
पारुष्यमनृतं चैव पैशुनं चैव सर्वशः ।
अनिबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ।
अदत्तानामुपादानं हिंसा चैवाविधानतः ॥
परदारोपसेवा च शारीरं त्रिविधं स्मृतम् ।

इत्यादिभिर्मन्वादिस्मृतिषूक्तानामनेकत्वात् ।

अनंतरं भगवदपचारं विवृणोति–भगवदपचारो नामेत्यादिना ।

---

द्रव्य को उन की अनुमति विना । प्रकाशरूप से या गुप्तरूप से ग्रहण करना । असत्यकथन माने—यथा दृष्ट वस्तु के विषय और [illegible] से भिन्न वचन को कहना । अभक्ष्यभक्षण माने—जात्याश्रयनिमित्तरूप [illegible] दोष्ठ अपने को अभक्ष्य वस्तुओं को भक्षण करना । आदि कहने से ।

परद्रव्य में आशा करना, मन से अनिष्ट चिंतन कर[illegible] व्यर्थ ही किसी वस्तु की अपेक्षा करना ये तीनों मानासिक पाप कर्म हैं । [illegible] वचन, असत्य, चुगलखोरी, असंगतप्रलाप, ये चारो वाचिक पाप [illegible] हुवे को लेना शास्त्रनिषिद्ध हिंसा करना, परदारा को भोगना [illegible] हैं इत्यादि मन्वादि स्मृतियों में कहेजानेवाले अनेक हैं ।

अनन्तर भगवत्अपचार को बिवरण करते हैं [illegible]वदपचार इत्यादि ।

भगवदपचारो नाम देवतांतरैस्तुल्यतयेश्वरस्य चिंतनं, रामकृष्णाद्यवतारेषु मनुष्यसजातीयत्वबुद्धिः, वर्णाश्रमविपरीतोपचारः अर्चावतार उपादाननिरूपणं, आत्मापहारः, भगवद्द्रव्यापहार एतत्प्रभृतिः ॥ ३२३ ॥

---

देवतांतरैस्तुल्यतयेश्वरस्य चिंतनं नाम—

'ये तु सामान्यभावेन मन्यंते पुरुषोत्तमम् ।
ते वै पाषंडिनो ज्ञेयाः सर्वकर्मवहिष्कृताः ॥
यस्तु नारायणं देवं सामान्येनाभिमन्यते ।
स याति नरकं घोरं यावच्चंद्रदिवाकरौ ॥'

---

भगवदपचारश्च देवतांतरतुल्यतः ।
भगवच्चिन्तनं रामाद्यवतारे नराकृति—
धीर्वर्णाश्रमवैजात्योपचारोऽर्चावतारके ।
उपादानकथात्मनो हरणं माधवस्य च ।
द्रव्यापहार इत्येवमादयः परिकीर्तिताः ॥ ३२३ ॥

भगवदपचार माने—ईश्वर को देवतांतर के बराबर समझना; रामकृष्णादि अवतारों में मनुष्य सजातीयत्वबुद्धि करना, वर्णाश्रम से विपरीत उपचार करना अर्चावतार में उपादान द्रव्य का निरूपण करना, आत्मापहार और भगवद्द्रव्यापहार आदि हैं ॥ ३२३ ॥

ईश्वर को इत्यादि—जो पुरुष पुरुषोत्तम को अन्य देवताओं के बराबर समझते हैं सर्वकर्म से वहिष्कृत उन को पाषंडी समझना । जो सर्वेश्वर नारायण को अन्यदेवता के समान समझता है वह चन्द्र और सूर्य के आयु तक घोर नरक

इति देवतांतरैरीश्वरस्य समबुद्धिर्नकर्तव्येति शास्त्रं वदति ।

'अंतः प्रविष्टः शास्ता जनानां सर्वात्मा'

'तमीश्वराणां परमं महेश्वरम्'

'न तत्समश्चाभ्यधिकश्च दृश्यते'

इत्युक्तप्रकारेण स्वेतरसकलनियामकस्य समानाधिकरहितस्येश्वरस्यांगान्यन्या देवता इति तच्छरीरतयाऽभिहितैर्ब्रह्मादिदेवतांतरैः समबुद्धिकरणम् । रामकृष्णाद्यवतारेषु मनुष्यसजातीयत्वबुद्धिर्नाम—

'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥'

इत्युक्तप्रकारेणाजहत्स्वभावस्याप्राकृतदिव्यसंस्थानमितरसजातीयं कृत्वा दुःखप्रचुरे मनुष्यजन्मन्याविर्भूतस्य स्थितिमज्ञात्वाऽवतारे याथार्थ्यनिमित्तं तेन कृतं गर्भवासजननमोहादिकमादाय कर्मवश्यानां मनुष्याणां सजातीयोयमिति चिंत-

में वास करता है । ऐसा देवतांतरों के बराबर ईश्वर को न समझना एसे शास्त्र कहते हैं 'भीतर में प्रविष्ट हो सम्पूर्ण लोगों के शासन करनेवाले सब के आत्मा, ईश्वरों के भी परम ईश्वर उस के सदृश और अधिक भी नहीं हैं' इन वचनानुसार ईश्वर व्यतिरिक्त समस्त चेतनों के नियामक समानाधिक रहित ईश्वर को 'अन्यदेवता उन के अंग है' ऐसा उन के शरीरतया कहे जानेवाले ब्रह्मादि देवताओं के समान समझना । रामकृष्णादि अवतार इत्यादि—'जन्मरहित नाशरहित भूतों के ईश्वर होनेपर भी अपने स्वभाव से और इच्छा से अवतार लेता हूं' इस वचनानुसार अपने स्वभाव को न छोड अप्राकृत दिव्यविग्रह को इतर सजातीय कर दुःखसागरमग्न मनुष्यों के रूप में स्थिति को न जान अवतार में विश्वास होनेके लिये तत् कर्तृक गर्भवास जनन शोक मोहादि यों को देख कर्मवश्य मनुष्यों के सदृश समझना । वर्णाश्रम इत्यादि—उस की आराधना करने के समय

नम् । वर्णाश्रमविपरीतोपचारो नाम— तदाराधनदशायां त्रैवर्णिकार्हवैदिकमंत्रैश्चतुर्थवर्णैराराधनं, उत्तमाश्रमिप्रभृतिभिः गृहस्थवत्तांबूलादिनिवेदनकरणम् । आर्चावतारे उपादाननिरूपणं नाम— आश्रिताभिमतं यादृशं रूपमित्यादिप्रकारेणाश्रिताभिमतं यत्किंचिद्द्रव्यं विग्रहत्वेनांगीकृत्य तत्राप्राकृतविग्रहे क्रियमाणमादरं कृत्वा स्थितस्य स्थितिमविदित्वा मातृयोनिपरीक्षकवदिदमेतद्द्रव्यं खल्विति विग्रहोपादाननिरूपणम् । आत्मापहारो नाम—

'योन्यथा संतमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥'

इति सकलपापमूलत्वेनोक्ता भगवदेकशेषभूत आत्मवस्तुनि स्वतंत्रबुद्धिः । भगवद्द्रव्यापहारो नाम— तंडुलचन्दनप्रभृति प्रकाशमप्रकाशं वा स्वस्वत्वापादनम् । प्रभृतिरित्यनेनैवं शास्त्रेषु बहूनामुक्तत्वात् । द्वात्रिंशदपचारा उक्ताः ।

---

त्रैवर्णिकयोग्य वैदिक मंत्रों से चतुर्थ वर्ण के आराधना करना, उत्तमाश्रमी प्रभृति गृहस्थ के तरह ताम्बूलादियों को निवेदन करना इत्यादि । अर्चावतार के इत्यादि— आश्रित लोगों के इच्छित रूपही को अपना रूप मानते हैं इस वचनानुसार आश्रिताभिमत किसी एक द्रव्य को अपने दिव्यविग्रहतया अंगीकार कर उस में अप्राकृतविग्रह में क्रियमाण आदर को कर विराजने के वैभव को न जान मातृयोनि परीक्षकों के तरह यह अमुक द्रव्य है ऐसा विग्रह के उपादान द्रव्य को निरूपण करना । आत्मापहार माने—जो परतंत्र आत्मवस्तु को स्वतंत्र मानता है उस आत्मापहारी चोर से कौन पाप न किया गया ऐसा सकल पाप हेतुतया कहे जानेवाले भगवदेकशेषभूत आत्मवस्तु को स्वतंत्र समझना । भगवद्द्रव्यापहार माने- भोग लगाने योग्य चावल, दाल, चन्दन, कुसुम आदि को प्रकाश या गुप्त रीति से ग्रहण करना । प्रभृति माने—और भी ऐसे क्रूरतया शास्त्रों में कहे जानेवाले बहुत हैं । बत्तीस अपचार कहे गये ।

द्वात्रिंशदपचाराः ।

अपचारास्तथा विष्णोर्द्वात्रिंशत्परिकीर्तिताः ।
यानैर्वा पादुकैर्वापि गमनं भगवद्गृहे ॥
देवोत्सवाद्यसेवा चाप्यप्रणामस्तदग्रतः ।
एकहस्तप्रणामश्चाप्येकवारप्रदक्षिणम् ॥
उच्छिष्टे वापि चाशौचे भगवद्वन्दनादिकम् ।
पादप्रसारणं चाग्रे तथा पर्यंकबंधनम् ॥
शयनं भोजनं चैव मिथ्याभाषणमेव च ।
उच्चैर्हासो वृथा जल्पो रोदनानि च विग्रहः ॥
निग्रहानुग्रहश्चैव स्त्रीषु साकूतभाषणम् ॥
कंबलावरणं चैव परनिंदा परस्तुतिः ।
अश्लीलकथनं चैवाप्यधोवायुविमोक्षणम् ॥
तत्तत्कालोद्भवानां च फलादीनामनर्पणत् ।
विनियुक्तावशिष्टस्य प्रदानं व्यंजनादिषु ॥
पृष्ठीकृत्यासनं चैव परेषामभिवादनम् ।
गुरौ मौनं निजस्तोत्रं देवतानिंदनं तथा ॥
शक्तौ गौणोपचारश्च अनिवेदितभक्षणम् ।
द्वात्रिंशदपचारेण रौरवं नरकं व्रजेत् ॥

इति वराहपुराणोक्ता ज्ञेयाः ।

भगवद्द्रव्यस्य स्वयमपहारोऽपहर्तॄणां सहकारित्वं, तेभ्यो याचितमयाचितं वा परिग्रहश्च भगवतोऽनिष्टः ॥ ३२४ ॥

---

पूर्वोक्तवद्भगवद्द्रव्यापहारश्च भगवदनिष्टः किमिति शंकायां स्वकृतापहारमात्रं विना अपहर्तॄणां सहकरणप्रभृतिकमपि तस्यानिष्टमित्याह— भगवद्द्रव्यस्येत्यादिना ।

स्वयं परिग्रहो नाम– साक्षात् स्वस्यैवात्र कर्तृत्वं, अपहर्तॄणां सहकारित्वं नाम— अस्माभिर्नापह्रियते खलु इति विचार्यास्यापहर्तॄणामनुमत्यादिभिः सहायकरणं, तेभ्यो याचितं परिग्रहो नाम– वयमपहारस्य सहकारिणो न खल्विति

---

हरिद्रव्यहरः किम्वापहर्तॄणां सहायता ।
याचनाऽयाचनातश्च तेभ्यो द्रव्यपरिग्रहः ।
एवं भगवतोनिष्टो वेदितव्यो महात्मभिः ॥ ३२४ ॥

पूर्वोक्त अपचारों के तरह भगवद्द्रव्यापहार भी भगवदनिष्ट है क्या इस शंका में---अपहार करनेवाले को मात्र नहीं किन्तु सहकारियों को भी अपचार लगेगा ऐसा कहते हैं--भगवद्द्रव्य को इत्यादि ।

भगवद्द्रव्य को आप अपहार करना,
अपहार करनेवालों को सहाय करना,
उन के पास से याचित वा अयाचित स्वीकार
करना यह सब भगवान को अनिष्ट है ॥ ३२४ ॥

अपने खुद अपहार करना, हम नहीं अपहार करते हैं ऐसा समझ अपहार करनेवालों को अनुमति आदि से सहाय करना, हम इस अपहार का सहायक

भागवतापचारो नामाहंकारार्थकामहेतुना
श्रीवैष्णवेषु क्रियमणो विरोधः ॥ ३२५ ॥

---

विचार्य तेभ्यः कस्यचिद्याचनापूर्वकं ग्रहणम् । अयाचितं परिग्रहो नाम— अस्माभिरपेक्षा न कृतेति विचार्य तैः स्वयं दत्तस्य ग्रहणम् । भगवतोऽनिष्ट इति— एतत्सर्वमस्योज्जीवन-परस्य कृषिं कुर्वतः सर्वेश्वरस्य हृदयस्यानभिमतमित्यर्थः ।

अनन्तरं भागवतापचारं विवृणोति— भागवतापचारो ना-मेत्यादिना ।

परोत्कृष्टं दृष्ट्वाऽसहनस्य स्वोत्कर्षबुद्धेश्च हेतुना अंहकारेण, तेषां वैष्णवाकारं ज्ञात्वैतदाशाविषयश्चेत् त्यजाम इति स्थातु-मशक्तत्वादर्थकामहेतुना, श्रीवैष्णवेषु क्रियमाणों विरोध इत्यर्थः ।

---

भागवतापचारश्चाहंकारेणार्थकामतः ।
क्रियमाणो विरोधो वै श्रीमद्वैष्णवसन्निधौ ॥ ३२५॥

भी नहीं ऐसा समझ उन के पास से मांग कर किसी अपहृत वस्तु को लेना, हम मांगते नहीं स्वयमेव देते हैं तो लेने में दोष नहीं समझलेना । ये सब इस के उज्जीवन में प्रवृत्त हो यत्न करनेवाले सर्वेश्वर को अनभिमत होते हैं ।

अनन्तर भागवतापचार को विवरण करते हैं भागवतापचार इत्यादि ।

भागवतापचार अहंकार अर्थकामों के द्वारा
श्रीवैष्णवों के विषय में क्रियमाण विरोध ॥ ३२५ ॥

परोत्कर्ष देख न सहना स्वोत्कर्ष बुद्धि का भी कारण अहंकार द्वारा उन के वैष्णवाकार को देख ये लोग जिन पदार्थों को चाहते हैं उन की अपेक्षा हम नहीं करेंगे ऐसा न रह अर्थकाम द्वारा श्रीवैष्णव के विषय में क्रियमाण विरोध ।

**असह्यापचारो नाम— निर्निबंधनं भगवद्भागवतविषय इत्युक्तावसहमानतया स्थितिः, आचार्यापचारः, तद्भक्तापचारश्च ॥३२६॥**

---

अनंतरमसह्यापचारं विवृणोति— असह्यापचारो नामेत्यादिना ।

अन्यापचारेभ्य ईश्वरस्यात्यन्तासह्यत्वादयमसह्यापचार इत्युच्यते । 'भगवदसहनीयागसिरतः' इति हि भट्टार्यैरुक्तम् । निर्निर्बन्धनं भगवद्भागवतविषय इत्युक्तावसहमानतया स्थितिर्नाम— पूर्वोक्तप्रकारेणार्थकामादिनिबन्धनत्वं विना हिरण्यवत् भगवद्विषयो भागवतविषय इत्युक्तौ द्रष्टुं श्रोतुं वाऽसहमानतया स्थितिः । आचार्यापचारो नाम— तदुक्तार्थप्रकारे-

---

असह्यागश्च विज्ञेयो विना कारणमेव वै ।
भगवद्भागवद्वार्ताकथनेऽसहमानतः ।
स्थितिराचार्यतद्भक्तकृतपापसमुच्चयः ॥३२६॥

अनंतर असह्यापचार को विवरण करते हैं—असह्यापचार इत्यादि ।

असह्यापचार माने—निष्कारण भगवद्भागवतविषय में असूया करना, आचार्यापचार और उन के आश्रितों के विषय में अपचार है ॥३२६॥

अन्य अपचारों से यह अपचार ईश्वर को अत्यंत असह्य होने से इस को असह्यापचार कहते हैं । भगवदसह्यापचार में आसक्त हूं ऐसा पराशरभट्टजी कहे हैं । निर्निबंधन इत्यादि—पूर्वोक्त अर्थकामादिहेतु विना हिरण्याक्ष के तरह भगवद्भागवतविषय के प्रसंग में देखने और सुनने को भी असह्य होना । आचार्यापचार माने—उन के कहे हुवे उपदेशानुसार अनुष्ठान न करना उन से उपदिष्ट

एत एकस्मादेकः क्रूरः, उपायविरो-
धिनः, उपेयविरोधिनश्च ॥ ३२७ ॥

---

णानुष्ठानाभावः, तदुपदिष्टमंत्रतदर्थयोरल्पप्रयोजनाशयाऽनधिकारिषूपदेश एतत्प्रभृतिः । तद्भक्तापचारो नाम – आचार्यभक्तैः सह ब्रह्मचारिभिरैकरस्येन स्थित्यावश्यकतायां सत्यां तथाऽकृत्वा तेषु क्रियमाणासूयाऽवज्ञैतत्प्रभृतिः ।

एवमकृत्यकरणादिचतुष्टयं क्रमेण विपर्यस्य क्रौर्यविशेषानिदमेतयोर्विरोधीत्यर्थं चाह – एत इत्यादिना ।

एकस्मादेक इत्यादिना अकृत्यकरणाद्भगवदपचारः क्रूरस्तस्माद्भागवतापचारः क्रूरस्तस्मादसह्यापचारः क्रूरः । एतन्मूलं पूर्वपूर्वापेक्षयोत्तरोत्तरं भगवन्निग्रहातिशयः । अकृत्यकरणे

---

उपायोपेययोरेते घातकाः परिकीर्तिताः ।
उत्तरोत्तरक्रूराश्च सर्वथा नाशकारकाः ॥ ३२८ ॥

मंत्र और अर्थों को अल्प प्रयोजनों की इच्छा कर अनधिकारियों को उपदेश करना । तद्भक्तापचार माने :– आचार्य के आश्रित अपने सब्रह्मचारियों के साथ ऐकमत्य छोड उन के विषय में क्रियमाण असूया अवज्ञा इत्यादि हैं ।

इस प्रकार अकृत्यकरणादि चारों को क्रम से विवरण कर इनकी क्रूरता यह अमुक फल का विरोधी है इस अर्थ को भी कहते हैं– ये इत्यादि ।

ये एक से एक क्रूर, उपायविरोधी और उपेयविरोधी भी हैं ॥ ३२७ ॥

एक से एक क्रूर माने– अकृत्यकरण से भगवदपचार क्रूर है उस से भागवत अपचार क्रूर है उस से भी असह्यापचार क्रूर है समझना । इस का कारण पूर्व पूर्व की अपेक्षा उत्तरोत्तर अपचार में भगवान् का अधिक निग्रह होना ।

स्वाज्ञातिलंघनहेतुना खलु कोपः, तावान्न भवति अस्यात्मन आत्मन्येतत्सत्तामारभ्य रक्षति स्वस्मिन्नपचारेण जायमानः कोपः, तावान्न भवति खलु 'ज्ञानीत्वात्मैव मे मतम्' इत्युक्तप्रकारेण स्वस्य प्राण इत्यनुसंधानविषयेषु भागवतेष्वहंकारादिहेतुना क्रियमाणेनापचारेण जायमानः कोपः, तावान्न भवति खलु निर्निर्बंधनं स्वविषये स्वाश्रितविषये उभयैभवज्ञापकोभयाभिमताचार्यविषये त्रयाणामभिमतभक्तविषये च क्रियमाणेनापचारेण जायमानः कोपः, तस्मादेकस्मादेकः क्रूरः। अकृत्यकरणे भगवदपचारादीनामंतर्भावे संभवति प्रत्येकमेवं विभागेनोक्तिरेतेषां क्रौर्यविशेषमवलंब्य खलु। उपायविरोधित्वमुपेयविरोधित्वं च नाम– अस्यात्मन उज्जीवने तत्परतयोपर्युपरि कृषिं कुर्वाणस्य भगवतः कृपायाः सदाऽस्य प्राप्यभूतस्य तस्य मुखोल्लासस्य विघटकत्वम्। कृपोपायः प्रीतिरुपेयमिति

---

अकृत्यकरण में ईश्वर की आज्ञा का उल्लंघन करने से क्रोध होता है। आत्मा के भीतर रह उस आत्मा की सत्ता को लेकर रक्षा करनेवाले ईश्वर के विषय में अपचार से होनेवाला क्रोध इस से अधिक है। 'ज्ञानी हमारा आत्मा है' इस वचनानुसार अपने प्राणभूत भागवत के विषय में क्रियमाण अपचार से होनेवाला क्रोध इस से अधिक है। निष्कारण अपने और भागवतों के विषय में या आचार्य और उन के भक्तों के विषय में क्रियमाण अपचार से होनेवाला क्रोध पूर्वोक्त से भी अधिक है। इस कारण एक से एक अधिक क्रूर हैं। अकृत्यकरण में भगवदपचारादि अंतर्गत होनेपर भी प्रत्येक ऐसा पृथक्कर कहना इन के क्रौर्य्य को देख कर समझना। उपाय और उपेय विरोधी माने– इस आत्मा के उज्जीवन के लिये ऊपर ऊपर यत्न करनेवाले सर्वेश्वर की कृपा सदा चेतन के प्राप्य होनेवाले सर्वेश्वर का मुखोल्लास इन दोनों को रोकते हैं इस कारण अकृत्यकरणादि

खलु । तस्मादेतेऽकृत्यकरणादयो जलेऽग्निवृद्धिवत्तस्य हृदये निग्रहमुत्पाद्य तस्य कृपाप्रीतिश्चैतद्विषये यथा न प्रसरेत्तथा करणात् उपायोपेयविरोधिन इत्युक्तौ न विरोधः ।

'स्वस्य स्वेन मृग्यमाणो गुण' इत्यारभ्य नमःशब्दार्थस्य विस्तरेण प्रतिपादनात् 'अभिमतस्थलेष्वादरातिशय' इत्यभिमतस्थलप्रसंगेनोपरि भगवत्कैङ्कर्यमित्यत्र भगवच्छब्देन कैङ्कर्यप्रतिसंबंधिप्रतिपादकश्रीमत्पदार्थनारायणपदार्थयोः सूचनाच्च मंगलाशासनप्रकरणाच्च 'कर्तव्यमाचार्यकैङ्कर्यं भगवत्कैंकर्यं च' इत्यारभ्य 'किंचित्कारे कृते स्वरूपमुज्वलं भवति' इत्यंतं चतुर्थ्यर्थस्योक्तत्वाच्च निषिद्धचातुर्विध्यप्रतिपादनमुखेन प्रासंगिकं पुनर्नमःशब्दार्थोक्तेरेतावतोत्तरखंडार्थमवोचत् ।

एवमनेन प्रकारेण पूर्वोक्तोपायेनोपेयं प्रप्स्यतश्चेतनस्योपा

---

जल में अग्नि की उत्पत्ति की तरह उन के हृदय में निग्रह को उत्पादन कर उन की कृपा और मुखोल्लासों को नष्ट करने से उपाय और उपेयविरोधी समझने में दोष नहीं ।

'अपने को आप से ढूंढे जानेवाले सामीर्घान्य' ऐसा आरम्भ कर नमः शब्द को विस्तार पूर्वक प्रतिपादन करने से, 'दिव्यदेशों में आदरातिशय' ऐसा दिव्यदेशों के प्रसंग से 'भगवत्कैंकर्य' इस वाक्य में भगवत्शब्द से, कैंकर्य प्रतिसंबंधी को प्रतिपादन करनेवाले श्रीमत्पद नारायणपदार्थों को दिखाने से, मंगलाशासन के प्रकरण से आचार्यकैंकर्य भगवत्कैंकर्य करना चाहिये ऐसा आरंभ कर कैंकर्य करने से ही स्वरूप उज्ज्वल होता है यहांतक चतुर्थ्यर्थ को कहने से चार प्रकार के निषिद्ध को प्रतिपादन करते हुवे प्रसंगात् नमः शब्दार्थ को कहने से उत्तरखण्डार्थ को कहे हैं ।

तथा च इस प्रकरण से पूर्वोक्त उपाय से उपेय को पानेवाले चेतन का उपाय

योपेयाधिकारप्रधानापेक्षिताः प्रापकांतरपरित्यागहेतुस्वरूपनाशकत्वादयः स्वगतस्वीकारानुपायत्वं परगतस्वीकारोपायत्वं तत्प्राबल्यं सोऽपि स्वीकारसमये पुरुषकारं पुरस्करोतीत्यर्थः । उभाभ्यामपि पुरस्करणस्य प्रयोजनविशेषा उपेयदशायां प्राप्तिदशायां च शेषत्वपारतंत्र्ये स्वदोषनिवृत्तिश्च परानुभवविरोधिनीति प्रकारः स्वेन संपाद्यमानगुणात्तेन संपाद्यमानगुणस्य वैलक्षण्यमीश्वर एव रक्षकः स्वयं स्वस्य नाशक इत्यर्थः स्वेन स्वस्य नाशनप्रकारः अहंकारो विषयाश्च स्वरूपेण भागवतविरोधं वर्द्धयित्वैतत्स्वरूपं नाशयंतीति प्रकारो भागवतापचारक्रौर्यं तत्प्रसंगे भागवतमाहात्म्यं अस्य दिनचर्या दिनचर्योक्तानां सदाचार्यप्रसादेन वर्द्धनसमयेऽपेक्षितानि वस्तव्यादीनि तच्चरमोक्तकर्तव्यरूपकैङ्कर्यवेषस्तत्पूर्वदशासु स्वरूपोज्ज्व-

---

उपेयाधिकार के प्रधानापेक्षित, साधनांतर को छोडने के हेतु स्वरूपनाशकत्वादि, प्रपत्ति का स्वरूप अनुकूलत्वादि स्वगतस्वीकार का अनुपायत्व, परगतस्वीकारोपायत्व, उस की श्रेष्ठता, वही स्वीकार करनेपर भी पुरुषकार को आगे करने का प्रकार, चेतन और ईश्वर दोनों के पुरुषकार को आगे करने का प्रयोजन, उपेयदशा और प्राप्तिदशा में इस का शेषत्व पारतंत्र्यदोषनिवृत्ति ये सब परमात्मा के अनुभव विरोधी हैं, अपने से आनेवाले सामीचीन्य से उन से आनेवाला सामीचीन्य श्रेष्ठ है, ईश्वर ही रक्षक है आप अपने को नाशक है, आप अपने को नाश करने के प्रकार, अहंकार और विषय ये दोनों स्वरूप से और भगवतविरोध को उत्पन्नकरने से इस के स्वरूप को नाश करते हैं भागवतापचार की क्रुरता उस के प्रसंग से भागवतमाहात्म्य इस की दिनचर्या, दिनचर्योक्त सब सदाचार्य के अनुग्रह से वढने के समय अपेक्षित वास करना आदि अन्त में उक्त कर्तव्यरूप कैंकर्य

ल्यप्रकारोऽस्य विद्यमानगुणचतुष्टयं तद्विषयविभागस्तत्राशक्तिविषयनिषिद्धचातुर्विध्यं चोक्तमतोधिकारिनिष्ठाक्रम उक्तः ।

इति प्रपन्नदिनचर्याप्रकरणं समाप्तम् ।

का स्वरूप कैंकर्यदशा और उस की पूर्वदशाओं में स्वरूप को उज्ज्वल करने के प्रकार चेतन का गुणचतुष्टय उस का विभाग उस में अशक्ति का विषय निषिद्ध-चतुष्टय भी कहे जाने से अधिकारी निष्ठाक्रम कहागया ।

प्रपन्नदिनचर्याप्रकरण समाप्त ।



**स्वेन हितोपदेशकरणसमये स्वस्य शिष्यस्य फलस्य च व्यत्यासेनानुसंधानं क्रूरनिषिद्धम् ॥३२८॥**

---

## अथ सदाचार्यलक्षणप्रकरणम् ।

अनंतरं स्वेन हितोपदेशकरणसमय इत्यारभ्य प्रीतिरुपकार स्मृतिश्च वर्तितव्येत्यंतं पूर्वोक्तार्थविशेषाणां सर्वेषामुपदेष्ट्राचार्यविषय आवश्यकप्रतिपत्त्यनुवर्तनप्रकारान् दर्शयितुं सदाचार्यसच्छिष्यलक्षणं तयोरुभयोर्विनियोग एतेषां तत्प्रकार प्रसक्तानुप्रसक्तमाह। अस्याधिकारिणोऽशक्तविषयाणां निषिद्धानां कथनप्रसंगे. तेभ्यः सर्वेभ्यः क्रूरनिषिद्धः परोपदेशविषये विप्रतिपत्तिरित्याह—स्वेन हितोपदेशकरणसमय इत्यादिवाक्यद्वयेन ।

---

हितोपदेशकाले वै स्वेन स्वस्य फलस्य च ।
शिष्यस्य विपरीतेन ध्यानं क्रूराद्धिशिष्यते॥ ३२८ ॥

अथ सदाचार्य लक्षण प्रकरण ।

अनंतर अपने उपदेश करने के समय ऐसा आरम्भ कर प्रीति और उपकार स्मृति होनी चाहिये यहां तक इस अधिकारी को पूर्वोक्तार्थों को उपदेश करने वाले आचार्य विषय में होने के योग्य प्रतिपत्ति अनुवर्तन प्रकारों को दिखाने के लिये सदाचार्यलक्षण सच्छिष्यलक्षण दोनों के विनियोग प्रकार को प्रसक्तानुप्रसक्त कहते हैं । इस अधिकारी को अशक्ति के विषयनिषिद्धों को कहने के प्रसंग में उन सब में क्रूर निषिद्ध परोपदेश समय में उलटा समझना है ऐसा कहते हैं आप इत्यादि ।

आप हितोपदेश करने के समय अपने को शिष्य को और
फल को भी उलटा समझना क्रूर निषिद्ध है ॥ ३२८ ॥

**स्वस्य व्यत्यासेनानुसंधानं नाम--स्वस्याचार्यत्वे नानुसंधानं,शिष्यस्य व्यत्यासेनानुसंधानं नाम-**

---

पूर्वप्रकरण उक्ताधिकारिलक्षणैः सर्वैःपरिपूर्णेन स्वेनोज्जिजीविषूणां स्वोपसत्तिं कुर्वाणानां तेषामुज्जीवनहेतुमंत्ररूपहितस्योपदेशकरणसमये उपदेष्टुः स्वस्योपदेशपात्रस्य शिष्यस्योपदेश फलस्य च विपरीतप्रतिपत्तिकरणं पूर्वोक्तनिषिद्धेभ्यः क्रूरनिषिद्धमित्यर्थः । तानि तानि निषिद्धानि स्वस्य नाशकानि ताव न्मात्रं विना एतदुपदेशं श्रुतवतोपि नाशकत्वादिदमेतेभ्यो क्रूरनिषिद्धमित्युच्यते । उभयोरपि स्वरूपसिद्धिर्नास्तीति खलु वक्ष्यते ।

स्वस्य शिष्यस्य फलस्य च व्यत्यासेनानुसंधानं किमित्याकांक्षायां तदुपपादयति–स्वस्य व्यत्यासेनानुसंधानं नामेत्यादिना ।

---

**स्वव्यत्यसानुसन्धानं स्वस्यचार्यत्वचिन्तनम् ।**
**शिष्यव्यत्याससंधानं स्वाशिष्य इति चिन्तनम् ।**

पूर्व प्रकरण में कहे हूए सब अधिकारीलक्षण से परिपूर्ण आप उज्जीवन इच्छा से अपने को आश्रयण करनेवालों के उज्जीवनहेतु मंत्ररूप हित को उपदेश करने के समय उपदेष्टा अपने को उपदेशपात्र शिष्य को और उपदेशफल को उलटा समझना पूर्वोक्त निषिद्ध की अपेक्षा क्रूर निषिद्ध है । वे निषिद्ध इन के मात्र नाशक हैं इतना ही नहीं यह आचार्य और शिष्य दोनों का नाशक है इस लिये क्रूर निषिद्ध कहते हैं । दोनों की स्वरूप सिद्धि न होगी ऐसा आगे कहेंगे ।

अपने को शिष्य को फल को विपरीत समझना माने कैसा इस शंका में कहते हैं अपने को इत्यादि ।

स्वस्य शिष्य इत्यनुसंधानं, फलस्य व्यत्यासेनानुसंधानं नाम--दृष्टफलप्रयोजनस्य शिष्यस्योज्जीवनस्य भगवत्कैंकर्यस्य सहवासस्य च फलत्वेनानुसंधानम् ॥३२९ ॥

---

उपदेष्टुर्याथार्थ्येनानुसंधानं विना व्यत्यासेनानुसंधानं नाम--उपदेशसमये स्वस्याचार्य एवास्योपदेष्टा स्वयं तस्य करणभूत इति प्रतिपत्तिं कृत्वोपदेशः कर्तव्यः। तथाऽकृत्वा स्वाचार्यपरंतंत्रस्य स्वस्याचार्यत्वेनानुसंधानं, उपदेशपात्रस्य शिष्यस्य याथात्म्येनानुसंधानं विना व्यत्यासेनानुसंधानं नाम-- स्ववदयमपि स्वाचार्यशिष्य इति प्रतिपत्तिं कृत्वोपदेशः कर्तव्यः

---

शिष्योज्जीवनदृष्टार्थभगवद्दास्यकेषु च ।
सहवासे फलत्वेन चिन्तनं देशिकेन यत् ।
तदेवात्र बुधैर्ज्ञेयं फलव्यत्यासचिन्तनम् ॥३२९ ॥

अपने को विपरीत समझना माने-- अपने को आचार्य समझना। शिष्य को उलटा समझना माने-- अपना शिष्य समझना। फल को उलटा समझना माने-- दृष्टप्रयोजन, शिष्य का उज्जीवन, भगवत्कैंकर्य और सहवास को भी फल समझना ॥ ३२९ ॥

अपने को विपरीत समझना माने--- उपदेशसमय में अपने आचार्य को ही इस चेतन का उपदेष्टा हैं हम उन का करण हैं ऐसा समझ उपदेश करना चाहिये ऐसा न कर स्वाचार्यपरतंत्र अपने को इस चेतन को आचार्य समझना। उपदेशपात्र शिष्य को उलटा समझना माने--- अपने सदृश इस को भी अपने आचार्य का शिष्य समझ उपदेश करना चाहिये ऐसा न कर इस को अपना शिष्य

## अनुसंधानाभाव एतत्फलचतुष्टयसिद्धिप्रकारः

तथाऽकृत्वाऽस्य स्वशिष्यत्वेनानुसंधानं, उपदेशफलस्य याथार्थ्येनानुसंधानं विना व्यत्यासेनानुसंधानं नाम— परोपदेशकरणसमयेऽयमात्मानुकूलः सुकुमारविषयस्य मंगलाशासनस्य यथायोग्यः स्यादित्येतत्फलार्थमेवोपदेशमकृत्वा अनेन क्रियमाणशुश्रूषादिरूपस्य दृष्टप्रयोजनस्य वा शिष्यस्य संसारादुत्तीर्याभिवृद्धिरूपोज्जीवनस्य वा श्रीनन्दनवनादिकरणापेक्षयैकस्यात्मन आनुकूल्यसंपादने भगवतो हृदयस्य प्रसन्नत्वात् एतादृशभगवत्कैङ्कर्यस्य वा संसारे स्थितिसमये स्वासहायनिवृत्यर्थं मिलित्वा वर्तमानरूपस्य सहवासस्य वोपदेशस्य फलत्वेनानुसंधानम् ।

एवमनेनानुसंधानाकरण एतत्फलचतुष्टयसिद्धिप्रकारः कथमिति तज्जिज्ञासुप्रश्नमनूद्यैतत्सिद्धिमार्गमाह—अनुसंधानाभाव इत्यादिना ।

---

समझना । उपदेशफल को उलटा समझना माने—परोपदेश करने के समय यह आत्मा शुद्ध हो भगवान के मंगलाशासन के उपयुक्त होना ही फल है ऐसा न समझ इन से मिलनेवाले अर्थशुश्रूषारूप दृष्टप्रयोजन, यह शिष्य संसार से उत्तीर्ण हो उज्जीवन को प्राप्त होगा, नन्दनवनादियों को निर्माण करने की अपेक्षा किसी एक आत्मा को शुद्ध करने से भगवान् का अत्यंत मुखोल्लास होगा, यह भगवत्कैंकर्य है अथवा संसार में रहने तक हमारे संग वास कर हमारा सहाय करेगा आदि को उपदेश का फल समझना ।

ऐसा न समझने से ये चारो फल कैसे मिलेंगे इस शंका में कहते हैं-- नहीं समझनेपर भी इत्यादि ।

नहीं समझनेपर भी ये चारो फल कैसे मिलेंगे इस शंका में—शेषभूत

**कथमिति चेत्—शेषभूतस्य शिष्यस्यानुसंधानेन दृष्टफलं सिद्ध्यति, ईश्वरस्यानुसंधानेनोज्जीवनं सिद्ध्यति, आचार्यस्यानुसंधानेन भगवत्कैंकर्यं सिद्ध्यति, उपकारस्मृत्या सहवासः सिद्ध्यति ॥३३०॥**

---

शेषभूतस्य शिष्यस्यानुसंधानेन दृष्टफलं सिद्ध्यति इति—शिष्यस्य स्वस्य शेषत्वं स्वरूपमित्यनुसंधाय स्थितत्वात् किंचित्काराभावे शेषत्वं नास्तीति स्वस्वरूपलाभार्थं स्वशक्त्यनुरूपकिंचित्कारकरणादर्थशुश्रूषादिदृष्टफलं सिद्ध्यतीत्यर्थः, ईश्वरस्यानुसंधानेनोज्जीवनं सिद्ध्यतीति— सर्वतो व्याप्य संचरतः स्वस्य विशेषकटाक्षेणाद्वेषादीनुत्पाद्याचार्यसमाश्रयणं कारयित्वा

---

देशिकाऽननुसंधाने फलमेतच्चतुष्टयम् ।
कथं चेत्सिद्धिरित्यत्र फलदृष्टस्य साधनम् ।
शिष्यचिन्तनजन्यं स्यान्मुक्तिश्चेश्वरचिंतया ।
भगवद्दास्यता सिध्येदाचार्यस्यानुचिन्तनात् ।
उपकारस्मृतेश्चैव सहवासो हि सिध्यति ॥३३०॥

शिष्य के अभिप्राय से दृष्टफल मिलैगा ईश्वर के अभिप्राय से उज्जीवनरूप फल मिलैगा आचार्य के अभिप्राय से भगवत्कैंकर्यरूप फल मिलैगा उपकारस्मृति से सहवासरूप फल मिलैगा ॥३३०॥

शिष्य अपने को शेषत्व ही स्वरूप है ऐसा अनुसंधान कर रहने से कैंकर्य बिना शेषत्व नहीं रहेगा ऐसा समझ अपने स्वरूपलाभ के लिये यथाशक्ति कैंकर्य करने से अर्थ और शुश्रूषारूप दृष्टफल प्राप्त होता है। अवतार ले चेतनों को ढूंढनेवाले सर्वेश्वर विशेषकटाक्षों से अद्वेषादियों को उत्पादन कर आचार्य समाश्रयण

अस्याचार्यस्योपदेशान्वयं जनयित्वा तेन हेतुनामुं संसारात्तीरं प्रापयितुमनुसंदधानस्य भगवतः कृपाकार्यानुसंधानेन शिष्यस्योज्जीवनं सिद्ध्यतीत्यर्थः । आचार्यानुसंधानेन भगवत्कैंकर्यं सिद्ध्यतीति-- अनेन हितोपदेशं कृत्वा मङ्गलाशासनयोग्यतार्थं चेतनानामानुकूल्यसंपादनस्य भगवद्धृदयस्यात्यंतप्रीतिविषयत्वादिदं भगवत्कैंकर्यं खल्वित्यनुसंदधतः स्वस्याचार्यस्यानुसंधानेनोपदेष्टुः स्वस्य भगवत्कैंकर्यं सिद्ध्यतीत्यर्थः । उपकारस्मृत्या सहवासः सिद्ध्यतीति— अनादिकालमहंकारममकाराभ्यां नष्टप्रायं मामंगीकृत्याज्ञातज्ञापनमुखेनात्र रुचिं दूरीकृत्य मंगलाशासनयोग्यं कृतवान् महोपकारकः खल्वित्युपकारस्मृत्या शिष्यस्य क्षणकालं च विश्लेषाक्षमत्वेन सहैव वर्तमानत्वात् सहवासः स्वत एव सिद्ध्यतीत्यर्थः ।

एवमनेनानुसंधानाकरणे एतत्फलचतुष्टयं शिष्येश्वरस्वाचार्याणामनुसंधानेन सिद्ध्यतीत्युक्तोपदेशस्य साक्षात्फलस्योप-

करा आचार्य के उपदेशपात्र बना तद्वारा इस चेतन को इस संसार से पार लगाना चाहिये ऐसा समझ क्रियमाण अपनी कृपा के कार्य से शिष्य का उज्जीवन होता है । आचार्य हितोपदेश कर मंगलाशासन के उपयुक्त चेतन को शोधन करने से भगवान का मुखोल्लास होता है इस को भगवत्कैंकर्य समझनेवाले अपने आचार्य के विचार से उपदेष्टृभूत अपने को भगवत्कैंकर्य मिलता है । अनादिकाल अहंकार ममकारों से नष्टप्राय मुझ को निर्हेतुक अंगीकार कर अज्ञातार्थ को जनाकर शब्दादियों से रुचि को हटाकर मंगलाशासन के योग्य बनानेवाले महोपकारक हैं ऐसी उपकारस्मृति से शिष्य क्षणकाल भी नहीं छोड संग रहने से उन के साथ सहवासरूप फल मिलता है ।

ऐसा इस आचार्य की इच्छा विना भी ये चारो फल शिष्य ईश्वर और स्वाचार्यों के अभिप्राय से प्राप्त होयंगे ऐसा कह उपदेश का साक्षात्फल उपदेष्टा-

**साक्षात्फलमाचार्यत्वं च कथं सिद्ध्यतीति चेत्—**
**स्वानुसंधानेनेश्वरानुसंधानेन च सिद्ध्यति ॥३३१॥**

---

देष्टुराचार्यपरतंत्रस्योपदेशपात्रमेतं प्रति विद्यमानस्याचार्यत्वस्य च सिद्धिप्रकारं प्रश्नोत्तररूपेणाह– साक्षात्फलमित्यादिना।

साक्षात्फलं नामोपदेशपात्रस्यास्यानुकूलतया मंगलाशासनयोग्यत्वम्। अस्य स्वानुसंधानेन सिद्धिर्नाम– उपदेष्टरि स्वस्मिन् विप्रतिपत्तिं विनेदमेव फलमिति विचार्योपदिशति तस्य तथानुकूलतया मंगलानुशासनाधिकारित्वम्। आचार्यत्वं नाम-स्वमाचार्यपरतंत्रत्वेनानुसंदधतोऽस्य स्वस्मादुपदेशं शृण्वंतमेनं प्रत्याचार्यत्वम्। अस्येश्वरानुसंधानेन सिद्धिर्नाम— एवं स्वस्मिन् शिष्ये फले वा विप्रतिपत्तिमकृत्वा याथार्थ्येनानुसंधायो

---

**देशिकत्वं फलं साक्षात्कथं सिध्यति चेदिति ।**
**स्वचिन्तनेन तत्सिद्धिरीश्वरस्य च चिन्तया ॥ ३३१ ॥**

रूप आचार्यपरतंत्र अपने को उपदेशपात्र इस चेतन को उद्देश कर आचार्यत्व कैसे सिद्ध होगा इस शंका में कहते हैं-- साक्षात्फल इत्यादि ।

साक्षात्फल और आचार्यत्व ये दोनों अपने अभिप्राय
से और ईश्वर के अभिप्राय से सिद्ध होयंगे ॥ ३३१ ॥

साक्षात्फल माने---उपदेशपात्र यह चेतन शुद्ध हो मंगलाशासन के योग्य होना। यह फल अपने अभिप्राय से सिद्ध होता है माने—उपदेशक आप विपरीत न समझ यही फल समझ उपदेश करनेपर शिष्य शुद्ध हो मंगलाशासन के योग्य होता है। आचार्यत्व माने---अपने को आचार्य के परतंत्र समझ रहनेवाले यह अपने से उपदेश पानेवाले का आचार्य होना। यह ईश्वर के अभिप्राय से सिद्ध होता है माने एवं अपने को शिष्य को फल को भी विपरीत न समझ यथावत्

**एवं विनोपदेश उभयोरपि स्वरूपसिद्धिर्नास्ति ॥३३२॥**

---

पदेष्टुं परिपाकयुक्तोऽयमस्याचार्य इति संकल्पकरणेनास्याचार्यत्वसिद्धिः ।

एवं विना क्रूरनिषिद्धत्वेन पूर्वोक्तविप्रतिपत्त्योपदेशे कृते उभयस्वरूपं च न सिध्यतीत्याह— एवं विनेत्यादिना ।

उभयोरपि स्वरूपसिद्धिर्नास्तीति पूर्वोक्तप्रकारेण यथा प्रतिपत्त्योपदेशे कृते विनेश्वरेणाचार्यत्वसंकल्पाकरणादुपदेष्टुराचार्यत्वरूपस्वरूपसिद्धिर्नास्ति । तथा यथाप्रतिपत्त्यास्योपदेशाभावे उपदेशशुध्यभावादुपदेशपात्रस्यास्य शिष्यत्वरूपस्वरूपसिद्धिर्नास्तीत्यर्थः ।

आचार्यस्य द्वौ गुणाववश्यापेक्षिताविन्याह— आचार्यस्येत्यादिना ।

---

**एवं विनोपदेशे वै स्वरूपं नैव सिध्यति ॥ ३३२ ॥**

अनुसंधान कर उपदेश करनेवाले यह इस चेतन का आचार्य है ऐसा ईश्वर समझने से इस को आचार्यत्व प्राप्त होता है ।

ऐसा न कर क्रूर निषिद्धतया पूर्वोक्त विपरीतज्ञान से उपपेश करनेपर दोनों के स्वरूप नष्ट होता है ऐसा कहते हैं—ऐसा विना इत्यादि ।

ऐसा विना उपदेश करे तो दोनों का स्वरूप नष्ट होता है ॥ ३३२ ॥

पूर्वोक्त प्रकार यथावत् जान उपदेश न करे तो ईश्वर इस को आचार्यतया नहीं समझने से उपदेशक को आचार्यत्व प्राप्त नहीं होता है यथान्याय से उपदेश नहीं करनेपर उपदेश शुद्धि न होने से उपदेशपात्र चेतन का शिष्यत्वरूप स्वरूप सिद्ध नहीं होता है ।

आचार्य को दो गुणों की आवश्यकता है आचार्य इत्यादि

**आचार्यस्य शिष्यस्य विषये कृपा स्वाचार्य-**
**विषये पारतंत्र्यं चावश्यापेक्षितम् ॥३३३॥**
**कृपया शिष्यस्वरूपं सिद्धयति, पारतंत्र्येण**
**स्वस्वरूपं सिद्धयति ॥३३४॥**

---

उपदेष्टुराचार्यस्योज्जिजीविषयोपसन्ने शिष्ये हाहेति कृपां कृत्वोज्जीवनोपयुक्तोपदेशादिकं कर्तुमुपयुक्ता कृपा, स्वस्य कर्तृत्वानुसंधानं विना तस्य करणतयानुसंधानोपयुक्तं स्वाचर्यविषये पारतंत्र्यं चावश्यापेक्षितमित्यर्थः ।

अनेन फलितमाह— कृपयेत्यादिना ।

---

आचार्यस्य तथा शिष्यभूतस्यास्य हि वस्तुनः ।
आचार्यापेक्षिता सम्यक् स्वशिष्यविषये कृपा ॥ ३३३ ॥
स्वाचार्यविषये तद्वत्पारतन्त्र्यमपेक्षितम् ।
आचार्यकृपया शिष्यस्वरूपं सूज्वलं भवेत् ॥ ३३४ ॥

आचार्य को शिष्य के विषय में कृपा, अपने
आचार्य के विषय में पारतंत्र्य भी चाहिये ॥ ३३३ ॥

उपदेशक आचार्य का उज्जीवन की इच्छा से आया हुआ शिष्य के ऊपर दया कर उन के उज्जीवन के उपयुक्त उपदेशादि करने को कृपा चाहिये अपने को कर्ता न समझ अपने आचार्य का करण समझने के उपयुक्त स्वाचार्य के विषय में पारतंत्र्य भी होना चाहिये ।

इस का फल कहते हैं कृपा से इत्यादि ।

कृपा से शिष्य का स्वरूप सिद्ध होता है पार-
तंत्र्य से अपना स्वरूप सिद्ध होता है ॥ ३३४ ॥

तथा तस्य स्वरूपसिद्धिपर्यंतमुपदेशादिकं कुर्वतोऽस्य कृपया दिने दिने स्वरूपस्य नैर्मल्योत्पत्त्या शिष्यस्य स्वरूपं सिध्यति, स्वस्य कर्तृत्वबुद्धिं विना स्वाचार्यकरणभूततया स्वस्यानुसंधानस्येतरसर्वकालेषु तदधीनतयावर्तितुं चोपयुक्तेन पारतंत्र्येणाचार्यस्य स्वस्य स्वरूपसिद्धिरित्यर्थः।

एवं पूर्वं हितोपदेशसमये स्वविषये शिष्यविषये फलविषये च जायमाना विप्रतिपत्तयोऽतिक्रूरनिषिद्धा इति ताश्च विप्रतिपत्तय एता इति अस्यानुसंधानाभावेपि दृष्टप्रयोजनादिसिद्धिमार्गः साक्षात् फलाचार्यत्वयोः सिद्धिमार्गः एवं विना विप्रत्तिपत्त्योपदेश उभयस्वरूपसिद्ध्यभावः आचार्यस्यावश्यापेक्षितगुणद्वयं चोक्तम्।

एवमुपदेशानुगुणनियमप्रदर्शनानंतरं उपदेशसमये एतन्मंत्रस्योपदेष्टैव साक्षादाचार्य इत्युच्यते इत्याह—साक्षादित्यादिना।

---

शिष्य का स्वरूप शुद्ध होनेतक उपदेशादि को करनेवाले आचार्य की कृपा से दिनपर दिन स्वरूप निर्मल होने से शिष्य का स्वरूप सिद्ध होता है स्वकर्तृत्वबुद्धि छोड अपने आचार्य का करणभूत समझने के लिये सर्वकाल उन के अधीन रहने के लिये भी उपयुक्त पारतंत्र्य से आचार्य का स्वरूप सिद्ध होता है।

तथा च हितोपदेश के समय में आचार्य शिष्य और फल को विपरीत समझना क्रूर निषिद्ध है, वह विप्रतिपत्ति अमुक है, इस की अपेक्षा विना दृष्टप्रयोजनादि आपही सिद्ध होते हैं, साक्षात्फल और आचार्यत्व सिद्ध होने का प्रकार ऐसा न कर विपरीतज्ञान से उपदेश किये तो दोनों की स्वरूप सिद्धि नहीं आचार्य का अवश्यापेक्षित गुणद्वय उन गुणों के फल भी कहेगये हैं।

एवं उपदेशानुगुण नियमों को दिखा अनंतर उपदेश करने के समय अमुक मंत्र उपदेश करनेवाले को ही साक्षात् आचार्य कहते हैं ऐसा कहते हैं--साक्षात् इत्यादि।

साक्षादाचार्य इत्युच्यते संसारनिवर्त-
कस्य महाश्रीमंत्रस्योपदेष्टा ॥ ३३५ ॥

---

आचार्य इत्युच्यत इति--आचार्यत्वेऽपरिपूर्णे सति प्रतीति-मात्रमादाय कथनं विना साक्षादाचार्य इत्युच्यत इत्यर्थः। संसारनिवर्तकस्य महाश्रीमंत्रस्योपदेष्टेति—ऐहलौकिकमैश्वर्य-मित्यादि प्रकारेणाखिलफलप्रदत्वेप्यन्यफलेषु तात्पर्यं विना मोक्षफले तात्पर्यसत्वात्—

'सर्ववेदांतसारार्थः संसारार्णवतारकः।
गतिरष्टाक्षरो नृणामपुनर्भवकांक्षिणाम्॥'

इत्युक्तप्रकारेण संसारनिवर्तकस्यात एव—

'मन्त्राणां परमो मन्त्रो गुह्यानां गुह्यमुत्तमम्।
पवित्रं च पवित्राणां मूलमन्त्रः सनातनः॥'

इत्युक्तप्रकारेण सर्वमन्त्रांतरोत्कृष्टत्वरूपमाहात्म्यविशिष्टस्य श्री-

---

स्वाचार्यपारतंत्र्येण स्वस्वरूपं च सिध्यति।
भवाब्धितारकस्यास्य श्रीमन्त्रस्योपदेशकः॥

साक्षात् आचार्य कहते हैं संसार
निवर्तक बृहत्श्रीमंत्र के उपदेष्टा को।' ३३५॥

साक्षात् आचार्य माने—आचार्यत्व न्यून होनेपर भी प्रतीतिमात्र को लेकर कहे विना साक्षात् आचार्य कहना। संसारनिवर्तक इत्यादि—'इह लोक ऐश्वर्य' इस वचनानुसार अखिलफलप्रद होनेपर भी अन्य फलों में तात्पर्य नहीं रख मोक्षफल में ही तात्पर्य रखनेवाले होने 'से सर्व वेदांतों के सारभूत अर्थ संसार-समुद्र को तरानेवाले अष्टाक्षरी मंत्र पुनर्जन्म न चाहनेवाले लोगों की गति है' इस

संसारवर्द्धकानां क्षुद्राणां भगवन्मंत्राणा-
मुपदेष्टॄणामाचार्यत्वपूर्तिर्नास्ति ॥३३६॥

---

मन्त्रस्य संसारनिवर्तकत्वप्रतिपत्त्योपदेष्टेत्यर्थः । द्वयस्य पूर्वो-
त्तरवाक्याभ्यामस्य मध्यमचरमपदविवरणत्वाच्चरमश्लोकस्य
पूर्वोत्तरार्द्धाभ्यामस्यपूर्वोत्तरवाक्ययोर्विवरणत्वादितररहस्यद्वय-
स्यापि प्रथमरहस्येनानेनानन्यत्वादेतस्मिन्नुक्ते तयोरुपदेशश्च
स्वत एवोक्त इत्यभिप्रेत्य महाश्रीमन्त्रस्योपदेष्टेत्युक्तम् । तस्मा-
दिदं रहस्यत्रयोपदेशस्याप्युपलक्षणम् ।
भगवन्मन्त्रेषु यस्य कस्य चिदुपदेष्टुराचार्यत्वं नास्ति किमि-
त्यत आह– संसारवर्द्धकानामित्यादि ।

---

फलसाधनविज्ञत्वात्साक्षादाचार्य उच्यते ॥ ३३५ ॥
संसारवर्द्धका गौणा भगवन्मंत्राश्च ये स्मृताः ।
तदुपदेशंकर्तॄणामाचार्यत्वं न पूर्तितः ॥ ३३६ ॥

वचनानुसार संसारनिवर्तक; अतएव 'मंत्रों में श्रेष्ठ मंत्र रहस्यों में परम रहस्य पवित्रों में परम पवित्र है अष्टाक्षरीरूप मूलमंत्र' इस वचनानुसार संपूर्ण इतर मंत्रों से उत्कृष्ट मूलमंत्र को संसारनिवर्तक समझ उपदेश करनेवाले को साक्षात् आचार्य कहते हैं । द्वयमंत्र पूर्वोत्तर वाक्यों से अष्टाक्षरी के मध्यमचरमपदों का विवरणरूप है चरम श्लोक पूर्वार्द्ध उत्तरार्ध से द्वय के पूर्वोत्तरवाक्य का विवरणरूप है इस लिये द्वय और चरम श्लोक ये दोनों रहस्य प्रथम रहस्य अष्टाक्षरी से भिन्न नहीं इन को कहने से ही उन का उपदेश भी सिद्ध होता है ऐसा समझ बृहत्-श्रीमंत्र के उपदेष्टा को ऐसा कहे हैं, यह वाक्य रहस्यत्रय उपदेश का भी सूचक है ।

भगवन्मत्रों में किसी एक के उपदेष्टा को आचार्यत्व नहीं है क्या इस शंका में कहते हैं-- संसार वर्द्धक इत्यादि ।

## भगवन्मंत्राः क्षुद्रा इत्युच्यंते फलद्वारा ॥३३७॥

---

संसारस्य निवर्तकत्वाभावमात्रं विना वर्द्धकानां महत्वं विना क्षुद्राणां तदितरभगवन्मन्त्राणामुपदेष्टॄणामाचार्यत्वप्रतीतिमात्रं विना तत्पूर्तिर्नास्तीत्यर्थः ।

क्षुद्राः क्षुद्रदेवतामन्त्राः खलु भगवन्मन्त्रा एवं कथमुच्यंत इत्यत आह— भगवन्मन्त्रा इत्यादि ।

परदेवताभूतभगवद्विषयत्वाज्जायमानमहत्वविशिष्टा मन्त्राः क्षुद्रा इत्युच्यंते इति— अर्थकामपुत्रविद्यादिक्षुद्रफलप्रदत्वद्वारेत्यर्थः ।

संसारवर्द्धका इति कथमुच्यंत इत्यत आह—संसारेत्यादि ।

---

**कथं गौणा हि मंत्रास्त उच्यंत इतिचेत् खलु ।**
**फलद्वारेण गौणत्वं मुख्यत्वंच स्वरूपतः ॥ ३३७ ॥**

संसार बर्द्धक और क्षुद्र भगवन्मंत्रों के
उपदेष्टाओं को आचार्यत्व पूर्ति नहीं है ॥ ३३६ ॥

संसार निवर्तक न होना मात्र नहीं किन्तु बढानेवाले क्षुद्र अष्टाक्षरी व्यतिरिक्त भगवन्मत्रों के उपदेष्टाओं को आचार्यत्व प्रतीति विना पूर्ति नहीं है ।

क्षुद्रदेवतामंत्रों को ही क्षुद्र कहते हैं भगवन्मंत्रों को क्षुद्र कहते हैं क्या इस शंका में कहते हैं—भगवन्मंत्रों को इत्यादि ।

भगवन्मत्रों को क्षुद्र कहते हैं फलद्वारा ॥ ३३७ ॥

परदेवतारूप भगवान का विषय होने से वैभववाले मंत्रों को क्षुद्र कहते हैं अर्थ काम पुत्र विद्या आदि क्षुद्र फलों को देने से ।

संसारबर्द्धक कैसे इस शंका में कहते हैं— संसार इत्यादि ।

संसारवर्द्धका इत्यपि तेन ॥ ३३८ ॥
इदं चौपाधिकम् ॥ ३३९ ॥
चेतनानां रुच्यागतत्वात् ॥ ३४० ॥

---

तेनेति पूर्वोक्तबन्धकक्षुद्रफलानां प्रदानादित्यर्थः ।

तर्ह्येतेषामिदं स्वाभाविकं किमित्यत आह—इदं चेत्यादि ।

इदं चेति—क्षुद्रफलप्रदत्वं परामृश्यते । औपाधिकमिति—उपाधिप्रयुक्ततयाऽऽगतमित्यर्थः ।

तदुपपादयति चेतनानां रुच्येत्यादिना ।

भगवन्मन्त्रभूतत्वान्मोक्षफलप्रदत्वशक्तौ सत्यामप्येतेषां क्षुद्रफलप्रदत्वं प्रकृतिवश्यस्य चेतनस्य क्षुद्रफलरुच्याऽऽगतत्वा-

---

संसारवर्धकास्ते वै फलद्वारा प्रकीर्तिताः ॥ ३३८ ॥
एषु च हरिमंत्रेषु फलमौपाधिकं त्विदम् ॥ ३३९ ॥
विचित्ररुचिजीवानां रुच्यागमनकारणात् ॥ ३४० ॥

संसारबर्द्धक कहना भी उस से ही ॥ ३३८ ॥

उस से ही-- पूर्वोक्त बंधक क्षुद्रफलों को देने से ही ।

तथा सति इन मंत्रों का यह स्वभाव है क्या इस शंका में कहते हैं— यह इत्यादि ।

यह औपाधिक है ॥ ३३९ ॥

यह— क्षुद्रफलप्रदत्व । औपाधिक— आगंतुक है ।

उस को उपपादन करते हैं-- चेतनों की इत्यादि ।

चेतनों को रुचिद्वारा आने से ॥ ३४० ॥

भगवन्मंत्र होने से मोक्षप्रदत्व शक्ति रहनेपर भी इन का क्षुद्रफलप्रदत्व

दित्यर्थः । ऐश्वर्यकामानां गोपालमंत्रादयः पुत्रकामानां राम-मंत्रादयः, विद्याकामानां हयग्रीवमंत्रादयः, विजयकामानां सुदर्शननारसिंहमंत्रादयः, एवं नियमेन क्षुद्रफलानि प्रत्येव वर्त-माना एते चेतनस्य रुच्यनुगुणमेते मंत्रा एतानि फलानि दद्-त्विति ईश्वरेण नियमेन कल्पितत्वाद्भवंति, तच्च चेतनरुच्यनु-गुणं कल्पितत्वात्तेषामिदं स्वाभाविकं न भवत्यौपाधिकमि-त्युच्यते ।

इति सदाचार्यलक्षणप्रकरणं समाप्तम् ।

---

प्रकृतिवश्यचेतन की क्षुद्रफल रुचिद्वारा होता है । ऐश्वर्यकामों को गोपालमंत्र आदि, पुत्रकामों को राममंत्र आदि, विद्याकामों को हयग्रीवमंत्र आदि, विजयकामों को सुदर्शन नरसिंहमंत्र आदि, इस प्रकार नियमेन क्षुद्रफल ही को देने से चेतनों की रुचिअनुगुण अमुक फल को देगा ऐसा ईश्वर के नियमपूर्वक कल्पित होने से । यह कल्पना चेतनों की रुचिअनुगुण कल्पित होने से क्षुद्रफलप्रदत्व स्वाभाविक नहीं किंतु औपाधिक है ऐसा कहे हैं ।

सदाचार्यलक्षण प्रकरण संपूर्ण ।

शिष्य इत्युच्यते साध्यांतरनिवृत्तिः फलसा-
धनशुश्रूषाऽऽर्तिरादरोऽनसूया इत्येत द्विशिष्टः॥ ३४१॥

---

अथ सच्छिष्यलक्षणप्रकरणम् ।

एवं स्वेन हितोपदेशकरणसमय इत्यारभ्याचार्यत्वपूर्तिर्ना-स्तीत्यंतमाचार्यस्वरूपशोधनं कृत्वा तदुपरि प्रासंगिकांश्च परि-जहार, उपरि शिष्यस्वरूपशोधनं करोति- शिष्य इत्युच्यत इत्यादिना ।

उपदेशश्रवणमात्रमादायोपरितनाकारेण कथनमात्रं विना शिष्य इति मुख्यतयोच्यत इत्यर्थः । साध्यांतरनिवृतिर्नाम-स्वरूपविरोध्यैश्वर्यकैवल्यरूपप्राप्यांतरे विस्मृत्याप्यन्वयस्य रा-हित्यम् । अथवामुमाचार्यं विनोपरि किंचन प्राप्यवस्तु नजाना-

---

फलसाधनशुश्रूषुः साध्यांतरनिवृत्तिमान् ।
आदरार्तियुतो निंदारहितः शिष्य उच्यते॥ ३४१॥

अथ सच्छिष्यलक्षण प्रकरण

तथा च अपने उपदेश करने के समय ऐसा आरंभ कर आचार्यत्व पूर्ति नहीं यहां तक आचार्य स्वरूप शोधन कर अनंतर प्रासंगिक शंकाओं को दूर किये हैं अब शिष्यस्वरूप को शोधन करते हैं- शिष्य इत्यादि ।

शिष्य कहते हैं साध्यांतरनिवृत्ति फलसाधन-
शुश्रूषा आर्ति आदर और अनसूयावाले को ॥ ३४१॥

साध्यांतरनिवृत्ति माने—स्वरूपविरोधिभूत ऐश्वर्यकैवल्यरूप फलान्तर में भूलकर भी संबंध नहीं रखना । यद्वा इस आचार्य को छोड अन्य प्राप्य वस्तु को

मीति स्थितिः। फलसाधनशुश्रूषा नाम– 'गुरुशुश्रूषया विद्या' इति प्रकारेणाचार्यस्य स्वेन क्रियमाणया शुश्रूषया संतोषमुत्पादयित्वा ज्ञानोपजीवनकरणमुचितं, तस्मादाचार्येण स्वस्योपक्रियमाणज्ञानरूपफलस्य सिद्धेः साधनभूताचार्यपरिचर्या। अथवा स्वरूपानुरूपफले साधने च विद्यमानान् श्रोतुमिच्छा शुश्रूषा। अथवाचार्यमुखोल्लासरूपफलस्य साधनरूपा तत्परिचर्या। आर्तिर्नाम— अज्ञानप्रदमहापृथिव्यामित्यादिप्रकारेणोत्पन्नज्ञानविरोधिभूतैतद्विभूतेः शीघ्रं गमनालाभात् जायमानक्लेशः। अथवाचार्यविग्रहानुभवालाभे क्लेशो वा। आदरो नाम— उत्तरोत्तरानुबुभूषा यथा वर्द्धेत तथाऽऽचार्योक्ते भगवद्गुणानुभवे उपर्युपरि जायमान आदरः। अथवा आचार्यं पश्यति चेत् क्षुधित ओदनमिव तदनुभवकैङ्कर्ययोरत्यादरः। अनसूया नाम— आचार्ये भगवद्भागवतवैभवं विस्तरेणोपपादयति 'प्रवक्ष्याम्यनसूयवे' इति प्रकारेणासूयाराहित्यम्।

---

नहीं जानता हूं ऐसा रहना। फलसाधनशुश्रूषा माने--गुरुशुश्रूषा से विद्या प्राप्त होती है इस वचनानुसार आचार्य को अपनी शुश्रूषा से संतुष्टकर ज्ञान प्राप्त करना उचित होने से आचार्य क्रियमाण उपदेश से तत्वज्ञानरूप फलसिद्धि के साधनभूत आचार्यपरिचर्या। यद्वा स्वरूपानुरूपफल को सुनने की इच्छा। अथवा आचार्यमुखोल्लासरूप फल का साधनभूत तत्परिचर्या। आर्ति माने---उत्पन्नज्ञान का विरोधिरूप इस विभूति से शीघ्र नहीं जाने से होनेवाले क्लेश। यद्वा—आचार्य विग्रहानुभवालाभ में होनेवाले क्लेश। आदर माने---उत्तरोत्तर अनुभव से इच्छा होनेके लिये आचार्यउच्यमान भगवद्गुणानुभव में ऊपर ऊपर होनेवाले आदर। यद्वा---आचार्य को देखनेपर भूखा अन्न को जैसा देखता है उन के अनुभवकैंकर्यों में अत्यंत आदर। अनसूया माने—आचार्य के भगवद्भागवतवैभवों को विस्तारपूर्वक कहनेपर उन से असूया नहीं होना। यद्वा– आचार्य के उत्कर्ष और स्वभ्रु-

**मंत्रो देवता फलं फलानुबंधिनः फलसाधनमैहिक-
भोगश्चैते सर्वे आचार्य एवेत्यनुसंधानं कुर्यात् ॥ ३४२ ॥**

---

अथवा आचार्यस्योत्कर्षे सब्रह्मचारिणामुत्कर्षे च दृष्टे तत्रासूयाराहित्यम् । 'असूयाप्रसवभूः' इत्यस्य हितमुक्तवत उत्कर्षे एव भवत्यसूयेति पूर्वैरुक्तम् । भगवद्विषयेप्यसूयायां कृतायां तदीयविषये किं वक्तव्यम् ।

'इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।'

एवमेतादृशसद्गुणसंपन्न एव साक्षाच्छिष्य इत्युच्यते ।

एवमुक्तलक्षणयुक्तस्य शिष्यस्य स्वाचार्यविषय आवश्यकं विप्रतिपत्तिविशेषं विदधाति- मंत्र इत्यादिना ।

मंतारं त्रायत इति मंत्र इत्युक्तप्रकारेणानुसंधातृरक्षकः श्रीमंत्रस्तत्प्रतिपाद्यपरदेवता तत्प्रसादलब्धकैंकर्यरूपं महाफलं

---

**फलानुबंधिनो मंत्रो देवता फलसाधनम् ।
फलमैहिकभोगश्च सर्वमेतद्धि देशिकः ॥ ३४२ ॥**

चारियों के उत्कर्ष को देख असूया नहीं करना । 'असूयाप्रसवभूः' इस वाक्य का 'हितवक्ता आचार्य के उत्कर्ष को ही न सहना' ऐसा पूर्वाचार्य कहे हैं । भगवान के विषय में भी असूया करनेवाले तदीयविषय में करेंगे इस में क्या कहना । असूयारहित तुम को यह उत्तम रहस्य को कहता हूं ऐसा स्वयं भगवान् कहे हैं ऐसे सद्गुणविशिष्ट को ही साक्षात् शिष्य कहते हैं ।

एवं उक्त लक्षणविशिष्ट शिष्य को अपने आचार्य के विषय में आवश्यक प्रतिपत्ति विशेषों को कहते हैं—मंत्र इत्यादि ।

मंत्र, देवता, फल, फलानुबंधी, फलसाधन
ऐहिकभोग ये सब आचार्य ही हैं ऐसा समझना ॥ ३४२ ॥

तदनुबंधिनोऽविद्यादिनिवृत्तिपूर्वकस्वस्वरूपाविर्भावसालोक्यादयः ; तथाविधफलसाधनं पुत्रदारगृहक्षेत्रपश्वन्नाद्यनुभवरूपेहलोकभोग्यमेते सर्वे अस्माकमाचार्य एवेति प्रतिपत्तिः कर्तव्येत्यर्थः ।

'गुरुरेव परं ब्रह्म गुरुरेव परा गतिः ।
गुरुरेव परा विद्या गुरुरेव परायणम् ॥
गुरुरेव परः कामो गुरुरेव परं धनम् ॥
यस्मात्तदुपदेष्टासौ तस्माद्गुरुतरो गुरुः ॥' इति-
'ऐहिकामुष्मिकं सर्वं स चाष्टाक्षरदो गुरुः ।
इत्येवं ये न मन्यंते त्यक्तव्यास्ते मनीषिभिः ॥'

इति शास्त्रेषूक्तत्वादनुसंधानं कुर्यादिति विधिरूपेणोक्तम् ।

एवं स्वोक्तार्थे आप्त्यर्थमयमर्थः परमाचार्यवचनसिद्ध इत्याह—मातेत्यादिना ।

---

अनुसंधान करनेवालों के रक्षक मंत्र, उस मंत्र से प्रतिपाद्य परदेवता, परदेवता के अनुग्रह से मिलनेवाला कैंकर्यरूप महाफल, उस के पूर्व होनेवाले अविद्यानिवृत्तिपूर्वक स्वस्वरूपआविर्भाव और सालोक्यआदि तादृश फल को देनेवाले साधन पुत्र दार गृह क्षेत्र पशु अन्नआदि के अनुभवरूप ऐहिक भोग ये सब हमारे आचार्य ही हैं ऐसा समझना । गुरु ही परब्रह्म गुरु ही परागति गुरु ही पराविद्या गुरु ही परस्थान गुरु ही श्रेष्ठकाम गुरु ही श्रेष्ठधन हैं । जिस कारण से उस मंत्र को उपदेश किये हैं उस कारण से गुरु ही सब से श्रेष्ठ हैं । इह लोक और पर लोक के सब वस्तु अष्टाक्षरप्रद गुरु ही हैं ऐसा जो नहीं समझते हैं वे लोग छोडने योग्य हैं ।

इस प्रकार अपने कहे हुये इस अर्थ में विश्वास होनेके लियें परमाचार्यवचन को दिखाते हैं— माता पिता इत्यादि ।

माता पितेत्यादिश्लोक अयमर्थः
परमाचार्यैरुक्तः ॥ ३४३ ॥
एतन्मूलमुपकारस्मृतिः ॥ ३४४ ॥

---

'माता पिता युवतयस्तनया विभूतिः ।
सर्वं यदेव नियमेन मदन्वयानाम् ॥'

इत्यैहिकसकलभोगान्, सर्वमिति--अनुक्तसकलम्। अनेन मंत्रदेवताफलादींश्चोद्दिश्य तत्सर्वं परांकुशचरणावेवेत्युक्तत्वात्तस्मिन् श्लोकेऽयमर्थः परमाचार्यैरुक्त इत्यर्थः ।

एवमेते सर्वेऽयमेवेत्यनुसंधाने निदानं किमित्यत आह--एतन्मूलमित्यादि ।

एवमाचार्य एवास्माकं सकलमित्यनुसंधाने हेतुर्नित्यसंसारितया स्थितं स्वमुपदेशादिभिर्वशीकृत्य नित्यसूरीणामनुभवस्यार्हमकरोदित्युपकारानुसंधानमित्यर्थः ।

---

इत्थं ध्यानं सदा कार्यं शिष्येणात्माभिलिप्सुना।
माता पितेति वृत्ते श्रीयामुनार्यैः प्रसादितः ॥ ३४३ ॥
अयमर्थो हि तन्मूलमुपकारपरस्मृतिः ॥ ३४४ ॥

'माता पिता युवतयः' इस श्लोक में
इस अर्थ को परमाचार्य कहे हैं ॥ ३४३ ॥

माता पिता स्त्री पुत्र विभव ऐसा ऐहिक भोगों को, सर्वं इस वचन से मंत्र देवता फलादियों को कह ये सब शठकोपसूरि के चरणारविन्द ही हैं ऐसा कहने से उस श्लोक में इस अर्थ को परमाचार्य यामुनाचार्य कहे हैं ।

ऐसा सब आचार्य ही हैं ऐसा अनुसंधान करने का कारण क्या ? इस शंका में कहते हैं– इस का इत्यादि ।

इस का कारण उपकारस्मृति है ॥ ३४४ ॥

**उपकारस्मृतेः प्रथमावधिराचार्यविषये कृतज्ञता, चरमावधिरीश्वरविषये कृतज्ञता ॥३४५॥**

एतदुपकारस्मृतिप्रसंगेऽस्याः प्रथमचरमावधी दर्शयति— उपकारस्मृतेरित्यादिना ।

अनेन चेतनेन प्रथमत अनुसंधेयोऽज्ञातज्ञापनमुखेन स्वस्य सर्वमपि ज्ञापयित्वा भगवद्विषयं हस्तगतं कृतवत उपकारः । अत उपकारस्मृतेः प्रथमावधिराचार्यविषये कृतज्ञतेत्युच्यते । कृतज्ञतोपकारस्मृतिश्च पर्याये । आचार्यगौरवे हृदये लग्ने तद्विषये स्वस्य प्रापितहेतुकृषिपरंपराया अनुसंधानाच्चरमावधिरीश्वरविषये कृतज्ञतेत्युच्यते । इयं चेश्वरविषय उपकारस्मृतिरित्यर्थः । अनेन भगवद्विषयोपकर्त्राचार्यकृतोपकारेऽनुसं-

---

**उपकारस्मृतेः सीमा चाद्याचार्यकृतज्ञता ।**
**कृतज्ञता तथा ज्ञेया चरमावधिरीश्वरे ॥३४५॥**

आचार्य ही हमारा सब है ऐसा अनुसंधान करने का हेतु नित्यसंसारी अपने को उपदेशादि यों से शोधन कर नित्यसूरियों के अनुभव के योग्य बनाये हैं ऐसा उपकार की स्मृति ।

इस उपकारस्मृति के प्रसंग से उस के प्रथम चरमसीमा को दिखाते हैं— उपकारस्मृति का इत्यादि ।

उपकारस्मृति का प्रथमसीमा आचार्य के विषय में
कृतज्ञता, चरमसीमा ईश्वर के विषय में कृतज्ञता ॥ ३४५ ॥

अज्ञातज्ञापन द्वारा अपने को सब जनाकर भगवद्विषय को हस्तगत करनेवाले आचार्यकृत उपकार को चेतन पहिले अनुसंधान करता है आचार्य का गौरव मन में लगनेपर उस विषय में अपने को मिलानेवाले ईश्वरकृत यत्नपरंपरा को पीछे अनुसंधान करता है इस लिये चरमसीमा ईश्वर के विषय में कृतज्ञता । भग-

**शिष्य आचार्यश्चान्योन्यं प्रियहिते प्रवर्तेयाताम् ॥३४६॥**

---

हिते तस्य वैभवे हृदये सम्यक् लग्नेऽस्माभिरेतादृशविषयस्य प्राप्तिर्भगवता खल्विति तत्कृतोपकारानुसंधाने पर्यवस्यतीत्युक्तम् ।

एतत्सदाचार्यसच्छिष्ययोर्वृत्तिप्रकारमाह— शिष्य आचार्यस्येत्यादिना ।

अन्योन्यं प्रियहितप्रवर्तनं नाम— शिष्येणाचार्यस्य प्रियहितयोरुभयोरपि करणम् । आचार्येण शिष्यस्य प्रियहितयोरुभयोः करणं च ।प्रवर्तेयातामिति एतदवश्यकरणीयत्वभानार्थम् ।

उभाभ्यामप्युभयोरपि निर्वहणप्रकारः कथमित्यत आह— शिष्य इत्यादिना ।

---

**शिष्याचार्यौ प्रवर्तेतामन्योन्यहितप्रीणने ॥३४६॥**

वद्विषय को देनेवाले आचार्यकर्तृक उपकार को अनुसंधान करनेपर उन का वैभव ज्ञान हृदय में लगने से ऐसे आचार्य को ईश्वर ही हम को दिये हैं ऐसा उपकार स्मृति ईश्वरपर्यंत पहुंचेगी ।

अब इन सदाचार्य सच्छिष्यों के विनियोग प्रकार को कहते हैं शिष्य इत्यादि ।

शिष्य और आचार्य परस्पर प्रिय<br>और हितों को करना चाहिये ॥ ३४६ ॥

शिष्य आचार्य के प्रिय और हित को करना आचार्य शिष्य के प्रिय और हित को करना ।

दोनों के परस्पर प्रिय हित करने के क्रम को कहते हैं शिष्य इत्यादि ।

**शिष्यः स्वयं प्रियं प्रवर्तयेत् ईश्वरेण हितं प्रवर्तयेत्, आचार्यो व्यत्यासेन प्रवर्तयेत्॥ ३४७॥**

---

शिष्य आचार्यस्योभयोः प्रवर्तनसमये स्वस्वरूपानुगुणमाचार्यमुखोल्लास एव पुरुषार्थ इति विचार्य स्वस्य किंचित्कारादिभिः स्वयमाचार्यस्य सर्वकालं प्रियं कुर्यात् । मंगलाशासनपरत्वादेतद्विभूतिस्वभावेन हृदये किंचिदपि कालुष्यं न स्यादिति तथा कस्यचित्संभवे एतन्निवर्तनीयमिति प्रार्थित्वेश्वरेण हितं प्रवर्तयेदित्यर्थः । व्यत्यासेन प्रवर्तनं नाम-- हितपरत्वादस्य स्वरूपहानिर्यथा न संभवेत्तथा हेयोपादेययोर्हानोपादानयोः स्खालित्यं यथा न स्यात्तथा नियम्य सर्वकालमपि सन्मार्गे प्रवर्तनरूपहितं स्वयं कृत्वा दृष्टे संकोचेनास्यात्यंतक्लेशसमये

---

**देशिकस्य प्रियं शिष्यः स्वयमेव प्रकल्पयेत् ।**
**ईश्वरेण हितं तद्वदाचार्यो व्यत्ययेन वै ॥ ३४७॥**

शिष्य स्वयं प्रिय को करना चाहिये ईश्वर के
द्वारा हित को करना चाहिये । आचार्य को
इस के उलटा करना चाहिये ॥ ३४७ ॥

शिष्य आचार्य के विषय दोनों को करने समय स्वस्वरूपानुरूप आचार्यमुखोल्लास ही पुरुषार्थ समझ अपने कैंकर्यादि से आप आचार्त के प्रिय को सर्वकाल करते रहना मंगलाशासनपर होने से इस विभूतिस्वभाव से मन में किसी प्रकार की व्याकुलता न होना चाहिये ऐसा कुछ कल्मष होनेपर इसे दूर करने के लिये ईश्वर को प्रार्थना कर हित को करना चाहिये । आचार्य को इत्यादि-हितपर होने से शिष्य का स्वरूप नष्ट न होनेके लिये हेयउपादेयों में स्खलन न हो जैसा नियमन कर सर्वकाल अच्छे मार्ग में ले जाना रूप हित को स्वयं

**शिष्यः प्रीतौ तत्परो वर्तेत, आचार्य उज्जीवने तत्परो वर्तेत ।। ३४८ ।।**

---

स्थितिकालेऽस्य क्लेशं विना यथैतदप्यस्य स्यात्तथैवांगीकुरुष्वे-त्यर्थित्वेश्वरेण प्रियं प्रवर्तयेदित्यर्थः ।

एवं करणसमये उभयोरप्युभयमपि समप्रधानं किमिति शंकायामाह – शिष्य इत्यादि ।

शिष्यः शेषभूतत्वात् शेषिण आचार्यस्य प्रीतौ तत्परो वर्तेत । आचार्यः परमकृपावत्त्वात्स्वशिष्यस्यास्य संसारादुत्तीर्योज्जीवने तत्परो वर्तेत । तस्माच्छिष्यस्य प्रियकरणमाचार्यस्य हितकरणं च प्रधानमिति भावः ।

पूर्वोक्तेन फलितमाह – तस्मादित्यादि ।

---

**प्रवर्तेत सदा शिष्य आचार्यप्रीतितत्परः ।**
**प्रवर्तेत तथाचार्यः शिष्योज्जीवनतत्परः ।। ३४८ ।।**

करना । दृष्टवस्तु के अभाव से जब शिष्य दुःखी होता है तब वे वस्तु इन को मिलना चाहिये ऐसा ईश्वर से प्रार्थना कर प्रिय को करना ।

ऐसा करनेपर दोनों का दोनों बराबर हैं क्या इस शंका में कहते हैं– शिष्य इत्यादि ।

शिष्य को आचार्य के प्रिय करने में अधिक
ध्यान देना चाहिये, आचार्य को शिष्य के
उज्जीवन में अधिक ध्यान देना चाहिये ।। ३४८ ।।

शिष्य शेषभूत होनेसे शेषी आचार्य के प्रिय करने में दृढ रहना चाहिये आचार्य परमकृपालु होने से शिष्य को संसार से उत्तीर्ण हो उज्जीवन में दृढ रहना चाहिये इस लिये शिष्य का प्रियकरण और आचार्य का हितकरण प्रधान है ।

पूर्वोक्त का फल कहते हैं– इसलिये इत्यादि ।

**तस्माच्छिष्यस्याचार्यहर्षविषयत्वं विना शेषविषयतया अवकाशो नास्ति ॥ ३४९ ॥**
**निग्रहस्य पात्रं भवति चेत् स**

---

शिष्येणाचार्यप्रियकरणस्याचार्येण शिष्यस्य हितकरणस्य प्रधानतया वर्तनात् शिष्यस्याचार्यस्य प्रीतिविषयत्वं विनानिष्टकरणादिभिर्निग्रहविषयतायाः प्रथममवकाशो नास्तीत्यर्थः ।
तस्मादिति – प्रीतौ तत्परत्वमेवानुवदतीति वा ।

प्रकृतिसम्बन्धेन सत्ता सदैकरीत्या कथं स्यात् कालुष्याणि न जायंते किं तेन हेतुना निग्रहपात्रं भवति चेत् स निग्रह उभयोरपि कथं स्यादित्यत आह – निग्रहस्येत्यादि ।

---

एवं कृते भवेच्छिष्य आचार्यप्रीतिगोचरः ।
तद्दोषगोचरीभावे नावकाशश्च विद्यते ॥ ३४९ ॥
निग्रहस्य भवेत्पात्रं चेत्तयोर्हितरूपतः ।
उभाभ्यामप्युपादेयो निग्रहः शोधनात्मकः ॥ ३५० ॥

इसलिये शिष्य को आचार्य के संतोष का पात्र
विना रोष का पात्र होने का अवकाश नहीं ॥ ३४९ ॥

शिष्य को आचार्य का प्रिय करना आचार्य को शिष्य का हित करना प्रधान होनेसे शिष्य आचार्य के प्रीति का विषय होना छोड अनिष्टकरणादियों से निग्रह का विषय होने का अवकाश नहीं ।

प्रकृतिसंबंध के साथ रहनेवाला यह सदा एक प्रकार रहेगा क्या कलुषित नहीं होगा तद्द्वारा निग्रह पात्र होने के वखत वह निग्रह दोनों के विषय में कैसा होगा इस शंका में कहते हैं– निग्रह का इत्यादि ।

निग्रह का पात्र होने के वखत वह
हितरूप होने से दोनों का उपादेय है ॥ ३५० ॥

हितरूपत्वादुभयोरप्युपादेयः ॥ ३५० ॥
शिष्यस्य निग्रहकारणं त्याज्यम् ॥३५१॥

---

अनिष्टकरणादिहेतुना आचार्यनिग्रहस्य पात्रतादशायां शिष्यममुमपथे प्रवृत्तिं वारयित्वा सन्मार्गे प्रवर्तयितुमुपयुक्तत्वेन हितरूपत्वादेवमस्मासु निग्रहः क्रियते खल्विति अस्य हृदये क्लेशनं, अस्मिन्नेवं निग्रह आवश्यको जात इत्याचार्यस्य हृदये क्लेशनं च विना निग्रहविषयस्यास्य निग्रहाश्रयस्याचार्यस्य चांगीकार्य इत्यर्थः ।

निग्रह उपादेयश्चेन्निग्रहकारणमुपादेयं कुतो न भवतीत्यत आह – शिष्यस्येत्यादिना ।

निग्रह उपादेय इति विचार्य पुनस्तत्कारणं न कर्तव्यम् । येन कारणेन जलेऽग्निवृद्धिवत्स्वविषये शीतले निर्मल आचार्य-

---

सच्छिष्येण सदा त्याज्यं स्वस्य निग्रहकारणम् ॥ ३५१ ॥

अनिष्टकरणादि से आचार्य के निग्रह का पात्र होने के समय वह निग्रह शिष्य की दुष्टप्रवृत्ति को रोक समीचीन मार्ग में प्रवृत्त होनेके लिये उपयुक्त हितरूप होने से ऐसा हम को निग्रह करते हैं देखो इस प्रकार हृदय में दुःख होना इस को इस प्रकार निग्रह करना पडा ऐसा आचार्य के हृदय में दुःख होना विना निग्रहविषय शिष्य और निग्रहाश्रय आचार्य दोनों को उपादेय होता है ।

निग्रह उपादेय हो तो निग्रहकारण भी उपादेय होगा क्या इस शंका में कहते हैं– शिष्य को इत्यादि ।

शिष्य को निग्रहकारण छोडने योग्य हैं ॥ ३५१ ॥

निग्रह को उपादेय समझ फिर भी उस का कारण अकृत्य को नहीं करना

## निगृहश्च भगवन्निगृहवत् प्राप्यांतर्गतः॥ ३५२ ॥

हृदये निग्रहबुद्धिस्तत्कारणं पुनरंकुरं विना त्याज्यमित्यर्थः ।

पूर्वोक्ताचार्यनिग्रहो हितरूप इति वैधतयोपादेयत्वं विनाऽस्य प्राप्यकोटिघटित इत्यमुमर्थं सदृष्टांतमाह— निग्रहश्चेत्यादिना ।

स्वाचार्येण स्वविषये क्रियमाणो निग्रहस्स्वविरोधिनिवृत्तिहेतुत्वात् 'स्वीकृतकोपः' 'क्रूरकर्म माकुरु' इत्यादावुक्तो भगवन्निग्रह इव पुरुषार्थकोटावंतर्भूत इत्यर्थः। आचार्यस्यार्थकामयोराशाविरहात् तद्धेतुकक्षमायाः क्रोधस्य वावकाशो नास्ति। अथैतद्धितरूपतया क्रुध्यति चेत् सोऽपि प्राप्यांतर्गतो भवेदिति अयमर्थो माणिक्यमालायां श्रीकृष्णपादैरुक्तः ।

---

## भगवन्निग्रहो यद्वत्प्राप्यमध्ये प्रकीर्तितः ॥ ३५२ ॥

जिस कारण से जल में अग्नि के उत्पत्ति के तरह शीतल स्वच्छ आचार्य हृदय में निग्रह उत्पन्न हुआ उस कारण को पुनरावृत्ति रहित छोड देना चाहिये ।

पूर्वोक्त आचार्यनिग्रह हितरूप होने से उपादेय होता है इतनाही नहीं प्राप्यांतर्गत भी है इस अर्थ को दृष्टांतपूर्वक कहते हैं— निग्रह इत्यादि ।

निग्रह भगवन्निग्रह के तरह प्राप्यांतर्गत हैं ॥ ३५२ ॥

स्वाचार्य से स्वविषय में हितरूप से क्रियमाण निग्रह स्वविरोधिनिवृत्ति के उपयुक्त भगवन्निग्रह के तरह पुरुषार्थ कोटि में अंतर्गत होता है । आचार्य अर्थ कामो में आशारहित होने से उन के कारण से निग्रह करने को प्राप्ति नहीं, इस के हित करनेके लिये निग्रह किये तो वह प्राप्यांतर्गत होता है ऐसा माणिक्यमाला में श्रीकृष्णपादस्वामी कहे हैं ।

**आचार्यः शिष्यस्य स्वरूपं रक्षेत्,**
**शिष्य आचार्यस्य देहं रक्षेत्॥ ३५३॥**
**उभयमप्युभयोरपि स्वरूपं भगवत्कैंकर्यं च॥ ३५४॥**

---

पूर्वमुभयोरपि प्रधानकृत्यत्वेनोक्तयोर्हितकरणप्रियकरणयोर्वेषं विशदमाह—आचार्य इत्यादिना।

उज्जीवनपर आचार्य उज्जिजीविषयागत्योपसदनं कृत्वा प्रीतौ तत्परतया वर्तमानस्य शिष्यस्य स्वरूपं प्रामादिकतयापि किंचिद्धेयं यथा न जायते तथा एकाग्रचित्त उपदेशादिभी रक्षेदित्यर्थः।

एवमुभयोरप्युभावपि रक्षतोरुभयोरपि फलितमाह—उभयमपीत्यादिना।

---

**शिष्यस्वरूपमाचार्यः सदा रक्षेत् प्रयत्नतः।**
**रक्षेच्छिष्योपि चाचार्यदिव्यमंगलविग्रहम्॥ ३५३॥**
**स्वरूपस्य शरीरस्य मिथो यद्रक्षणं भवेत्।**
**उभयोस्तत्स्वरूपं स्यात्कैङ्कर्यं च हरेर्भवेत्॥ ३५४॥**

पहिले दोनों के प्रधानकृत्यतया उक्त हितकरण और प्रिय करणों के आकार को स्पष्ट कहते हैं— आचार्य इत्यादि।

आचार्य शिष्य के स्वरूप को रक्षा करना
शिष्य आचार्य के देह को रक्षा करना॥ ३५३॥

उज्जीवनपर आचार्य उज्जीवनेच्छा से प्राप्त हुवा शिष्य के स्वरूप को भूल कर भी अपराध नहीं करे जैसा एकाग्रचित्त हो उपदेशादियों से रक्षा करना। प्रिय पर शिष्य अपने उज्जीवन में तत्पर अपने स्वरूप को रक्षा करनेवाले आचार्य के शरीर को उचित कैंकर्यों से सर्वकाल भी एकाग्रचित्त हो रक्षा करना।

एवं दोनों दोनों की रक्षा करने से फलितार्थ को कहते हैं-- दोनों इत्यादि।

दोनों दोनों के स्वरूप हो भगवत्कैंकर्य होता है॥ ३५४॥

आचार्यस्य देहरक्षणं स्वरूपहानिः
शिष्यस्यात्मरक्षणं स्वरूपहानिः ॥ ३५५ ॥

---

आचार्योपहितस्य शिष्यस्य स्वरूपरक्षणं शिष्योपहितस्याचार्यस्य देहरक्षणं चासाधारणाकारः । तस्मादुभयमपि उभयोरपि स्वरूपम् । 'अहमन्न'मिति प्रकारेण तस्य भोग्यतायोग्यमप्यनादिकालं विनियोज्यताप्राप्तिविरहितमस्य स्वरूपं तादृशविनियोगार्हं यथा स्यात्तथा रक्षणकरणस्य 'समीचीनमिति शरीरं न त्यजति' इति प्रकारेण तस्य त्यक्त्वाऽऽदातुमपि यथा न सह्यं तथा भोग्याचार्यविग्रहरक्षणकरणस्य च भगवतोऽत्यंतप्रीतिविषयत्वाद्वस्तुगत्या भगवत्कैंकर्यं च भवतीत्यर्थः ।

एवं व्यवस्था किमर्था? आचार्यस्य स्वदेहरक्षणकरणे शिष्यस्य स्वस्वरूपरक्षणकरणे चान्वये को वा दोष इत्यत आह– आचार्यस्येत्यादि ।

---

आचार्यः स्वस्य देहस्य रक्षणं स्वं करोति चेत् ।
तदा स्वरूपहानिः स्याच्छरीराध्यासकारणात् ।
स्वरूपहानिदं तद्वच्छिष्येणात्माभिरक्षणम् ॥ ३५५ ॥

आचार्य शिष्य के स्वरूप की रक्षा करना शिष्य आचार्य के देह की रक्षा करना इन दोनों के असाधारण आकार होने से ये दोनों दोनों का स्वरूप है । ईश्वर का भोग्य होने योग्य होकर भी अनादि काल से नष्ट हुआ इस का स्वरूप उस के योग्य जैसा हो वैसा रक्षा करना, ईश्वर का भोग्य आचार्य विग्रह की रक्षा करना भगवन्मुखोल्लास होने से ये दोनों भगवत्कैंकर्य होते हैं ।

ऐसी व्यवस्था क्यों आचार्य के अपने देहरक्षण में शिष्य के अपने स्वरूप रक्षण में संबंध होने से दोष क्या इस शंका में कहते हैं– आचार्य को इत्यादि ।

आचार्य को देह रक्षण स्वरूपहानि
शिष्य को आत्मरक्षण स्वरूपहानि ॥ ३५५ ॥

**आचार्येणात्मरक्षणकरणसमय अहंकारो विरोधी,**
**शिष्येण देहरक्षणकरणसमये ममकारो विरोधी ॥**

स्वस्य देहयात्रायां स्वस्मिन्नुपेक्षके सति शिष्येणेदमेवास्माकं स्वरूपमिति स्वदेहो रक्षणीयस्तथा विना स्वदेहस्य स्वेन रक्षणमाचर्यस्याचार्यत्वरूपस्वरूपस्य हानिः । स्वस्याचार्यविषये भरन्यासानंतरं तस्मिन् स्वरूपं रक्षति दृष्ट्वा स्थातव्यं स्वेन स्वात्मरक्षणकरणं शिष्यस्य शिष्यत्वरूपस्वरूपस्य हानिरित्यर्थः । तस्माद्विस्मृत्यापि शिष्यस्य स्वस्वरूपरक्षणमाचार्यस्य स्वदेहरक्षणं च कर्तव्यं न भवतीत्युक्तम् ।

आचार्येण शिष्येण च स्वस्य व्यवस्थितयोरात्मरक्षणदेहरक्षणयोः करणसमयेऽवश्यपरिहरणीयान् विरोधिन आह—आचार्येणात्मरक्षणसमय इत्यादिना ।

आत्मनो रक्षणे काल आचार्येण कृपालुना ।
अहंकारो विरोधी स्यादिति ज्ञेयं सदा बुधैः ।
देहस्य रक्षणे काले शिष्येणापि बुभुत्सुना ।
ममकारो विरोधीः स्याद्धपनीयोहि स स्मृतः ॥३५६॥

अपनी देहयात्रा में विरक्त आचार्य के देह को शिष्य अपना स्वरूप समझ रक्षा करना चाहिये ऐसा विना अपने देह की रक्षा स्वयं करलेना आचार्यत्वरूप स्वरूप की हानि है। आप आचार्य के चरण में भारन्यास कर अपने स्वरूप को वही रक्षा करेगा ऐसा रहना चाहिये ऐसा नहीं कर अपनी आत्मा का आप रक्षा करलेना शिष्य का शिष्यत्वरूप स्वरूप की हानि है इसलिये भूलकर भी शिष्य अपने स्वरूपरक्षा में और आचार्य अपने देहरक्षण में संबंध नहीं रखना चाहिये ।

अब आचार्य और शिष्य के अपने अपने व्यवस्थित देहरक्षण और आत्मरक्षण करने के समय अवश्य छोडने योग्य विरोधियों को कहते हैं-- आचार्य इत्यादि ।

आचार्य के आत्मरक्षा करने के समय अहंकार विरोधी है,

आचार्यः स्वदेहरक्षणं स्ववस्तु गृहीत्वा कुर्यात्, शिष्यः स्वदेहरक्षणमाचार्यवस्तु गृहीत्वा कुर्यात् ॥३५७॥

---

हितपरेणाचार्येण स्वोपदेशादिभिः शिष्यात्मरक्षणकरणसमयेऽहं रक्षामीत्यहंकार आचार्यपारतंत्र्यरूपस्वाधिकारविरोधी। प्रियपरेण शिष्येण द्रव्यादिभिराचार्यदेहरक्षणकरणसमये मम द्रव्यैः करणैश्चैव रक्षामीति ममकारः शरीरार्थप्राणादिकं सर्वमाचार्यशेषमिति वर्तनावश्यकतारूपस्वाधिकारविरोधीत्यर्थः।

आचार्यस्य शिष्यस्य च स्वस्वदेहरक्षणदशायां प्रतिपत्तिविषयौ विभज्याह– आचार्य इत्यादिना।

---

स्वदेहरक्षणं स्वस्य वस्तुबुध्या हि देशिकः।
कुर्याच्छिष्यस्तथाचार्यपदार्थं परिगृह्य वै।
स्वदेहरक्षणं कुर्यात्परमार्थपरायणः ॥३५७॥

शिष्य के देहरक्षण के समय ममकार विरोधी है ॥ ३५६ ॥

हितपर आचार्य अपने उपदेशादियों से शिष्य के आत्मरक्षण करने के समय हम रक्षा करते हैं ऐसा अहंकार आचार्यपारतंत्र्यरूप अपने अधिकार का विरोधि है। प्रियपर शिष्य द्रव्यादियों से आचार्य के देहरक्षण करनेपर हमारे द्रव्य और करणों से ऐसी रक्षा करता हूं ऐसा ममकार शरीर द्रव्य प्राणादि सब आचार्य के हैं ऐसा समझने योग्य अपने अधिकार का विरोधि है।

आचार्य और शिष्य को अपने अपने देहरक्षण करने के समय में अनुसंधानप्रकार को कहते हैं— आचार्य इत्यादि।

आचार्य अपने देह रक्षण अपने वस्तु से, शिष्य
अपना देहरक्षण आचार्य के वस्तु से करना ॥ ३५७ ॥

आचार्यः स्वदेहरक्षणं स्ववस्तु गृहीत्वा कुर्यादिति—

'शरीरमर्थं प्राणं च सद्गुरुभ्यो निवेदयेत् ।'

इत्युक्तप्रकारेण शिष्यस्य सर्वस्वस्यापि प्रथमं समर्पितत्वात्स्वदेहरक्षणार्थं तेन कालोचिततया समर्पितं तदीयमित्यनुसंधानं विना स्वकीयमेवेति गृहीत्वा विनियोगं कुर्यादित्यर्थः । शिष्यः स्वदेहरक्षणमाचार्यवस्तु गृहीत्वा कुर्यादिति– स्ववस्तुत्वं विना सर्वस्याप्याचार्यशेषत्वात् स्वदेहरक्षणार्थं विनियोक्तव्यवस्त्वाचार्यवस्त्विति प्रतिपत्तिं कृत्वा विनियोक्तव्यमित्यर्थः ।

आचार्यदेहरक्षणविषये शिष्यः स्वकीयं सर्वं तदीयमिति बुद्ध्या दद्यात् । आचार्यश्च तादृशवस्तु स्वीकुर्यात् । एवं विना शिष्यस्य ममतादूषितं वस्तूभावप्यादातुं दातुं च नार्हौ इत्याह— आचार्यः शिष्यवस्त्वित्यादिना ।

---

'शरीर द्रव्य प्राण इन को आचार्य के लिये निवेदन कर देना' इस वचनानुसार शिष्य का सर्वस्व पहिले ही आचार्य के चरण में समर्पित होनेसे स्वदेह रक्षण के लिये शिष्य से तत्तत्काल में दिये जानेवाले द्रव्य को शिष्य का न समझ अपना ही समझ विनियोग करलेना । शिष्य का संपूर्ण वस्तु आचार्य के समर्पित होनेसे अपने देह रक्षण के लिये उपयोग कियेजानेवाले आचार्य का समझ विनियोग करलेना ।

आचार्यदेहरक्षण के प्रसंग में शिष्य अपनी संपूर्ण वस्तु आचार्य का है ऐसा समझ देना, आचार्य भी ऐसा समझा हुआ वस्तु को ही लेना ऐसा न कर शिष्य की ममता से दूषित वस्तु को दोनों लेने और देने भी नहीं सक्ते ऐसा कहते हैं— आचार्य इत्यादि ।

आचार्यः शिष्यवस्तु नाद्द्यात् ,
शिष्यः स्ववस्तु न दद्यात् ॥३५८॥
आदाने दरिद्रः स्याद् दाने चोरः स्यात् ॥ ३५९ ॥

---

आचार्यः शिष्यवस्तु नादद्यादिति– अनेन मदीयमित्यभिमानविषयीकृतं वस्तु विस्मृत्यापि नांगीकुर्यादित्यर्थः । शिष्यः स्ववस्तु न दद्यादिति— स्वकीयमित्यभिमानविषयं वस्त्वहंकारममकारस्पर्शविशिष्टं विषमेवेति जुगुप्सतो मृदुप्रकृतेराचार्यस्य विषमिव न समर्पयेदित्यर्थः ।

तथाऽऽदानदानयोः करणे को वा दोष इत्यत आह–आदानं दानं चेत्यादिना ।

---

शिष्य वस्तूनि नादद्यादाचार्यो नयकोविदः ।
शिष्योऽपि स्वस्य वस्तूनि तस्मै दद्यान्न सर्वथा ॥ ३५८॥
आदाने शिष्यवस्तूनि दरिद्रः स्याद्धि देशिकः ।
स्वपदार्थस्य दाने च शिष्यः पाटच्चरो भवेत् ॥ ३५९॥

आचार्य शिष्य के वस्तु को लेना नहीं
शिष्य अपने वस्तु को देना नहीं ॥ ३५८ ॥

शिष्य का अभिमान से दूषित वस्तु को आचार्य भूलकर भी नहीं लेना, शिष्य अपना समझा हुआ वस्तु को अहंकार ममकारस्पर्श वस्तु विष है ऐसा डरनेवाले मृदुप्रकृति आचार्य को विष के तरह नहीं देना ।

ऐसा लेने देने से होनेवाले दोष को कहते हैं— लेनेपर इत्यादि ।

लेनेपर दरिद्र हो जायगा, देनेपर चोर होगा ॥ ३५९ ॥

आदानं दानं च जायते यदि संबंधो नश्येत् ॥ ३६० ॥

---

शिष्येण मदीयमित्यभिमानविषयीकृतस्य वस्तुनश्चापलात् स्वीकारे कृते ईश्वरस्याखिलभरनिर्वाहकत्वेनास्माकं का वा न्यूनता इति वर्तमानः परिपूर्णः स्वयं स्वदेहयात्राया अपि मूलराहित्येन दरिद्रः स्यात् । मदीयमिति बुद्धिं कृत्वैकमाचार्यस्य ददाति चेच्छरीरमर्थमित्यादिप्रकारेण समर्पितत्वात् तदीये मदीयत्वबुद्धिकरणात् आचार्यस्वापहारी भवतीत्यर्थः ।

एतावदेव न संबंधहानिश्च स्यादित्यत आह— आदानं दानं चेत्यादिना ।

शिष्याचार्यसंबंधोस्ति यदि शेषभूतेन शिष्येण शरीरमर्थं प्राणं चेत्यादिप्रकारेण सर्वं तदीयमिति बुद्ध्या समर्पणं, तथा

---

दानादाने तु जायेते संबंधो यदि नश्यति ॥ ३६० ॥

शिष्य के अभिमानग्रस्त वस्तु को चपलता से आचार्य के लेनेपर ईश्वर संपूर्णभार को निर्वाह करते हैं हम को क्या कमती है ऐसा पूर्ण आप देह यात्रा को भी नहीं चला सकनेके योग्य दरिद्र हो जायगा । हमारा ऐसा समझा हुआ वस्तु को देनेपर शरीर अर्थ इस वचनानुसार पहिले ही समर्पित होने से आचार्य के वस्तु में मदीयत्वबुद्धि करनेसे आचार्य वस्तु को चोरी करनेवाला चोर होगा ।

इतना ही नहीं संबंध की हानि भी होगी ऐसा कहते हैं— लेने देने से इत्यादि ।

लेने देने से संबंध नष्ट होता है ॥ ३६० ॥

शिष्याचार्यस्वरूप संबंध होनेपर शेषभूत शिष्य शरीर अर्थ प्राण इत्यादिप्रकार

अयं दरिद्रत्वान्न ददाति,
स संपूर्णत्वान्नाददाति ॥ ३६१ ॥

---

समर्पितस्य तस्य शेषिणाऽऽचार्येणांगीकारश्चोचितः, एवं सत्यस्य स्वकीयमित्यभिमानविषयस्याचार्येण स्वीकारोऽनेन मदीयमित्यभिमानविषयस्याचार्याय समर्पणं इत्येतादृशाननुरूपादानदाने जायेते यदि शिष्याचार्यत्वरूपसंबंधो नश्येदित्यर्थः।

एवं दारिद्र्यापहारप्रसंगः संबंधहानिश्चादानदानयोः करणे खलु ते एतौ न कुरुतामित्यर्थं सहेतुकमाह—अयमित्यादिना।

शिष्योऽयं सकलं चाचार्यस्वमस्मदीयमिति समर्पणार्हं किंचिदपि नास्तीति स्थितत्वेन दरिद्रत्वादहं तस्य किंचिद्दा-

---

नायं शिष्यो दरिद्रत्वात्तस्मै किंचिद्ददाति हि ।
आचार्यः परिपूर्णत्वान्नाददाति च किंचन ॥ ३६१ ॥

सब ही उन का है ऐसा समझ समर्पण करना ऐसे समर्पित वस्तु को शेषी आचार्य अंगीकार करना। शिष्य के ममता से दूषित वस्तु को आचार्य को स्वीकार करना शिषय को देनारूप अक्रमव्यवहार होनेपर शिषयाचार्यत्वरूप संबंध नष्ट होता है।

एवं दारिद्र्य चौर्य और संबंध नाश देने लेने से होते हैं पहिले ही वे दोनों उन को नहीं करेंगे इस अर्थ को हेतुपुरस्सरेण कहते हैं— यह इत्यादि ।

यह दरिद्र होने से नहीं दे सक्ता,
वह पूर्ण होनेसे नहीं ले सक्ता ॥ ३६१ ॥

अपने समझने के योग्य कोई चीज न रहने से दरिद्र शिष्य हम आचार्य

तस्य पूर्त्यां स्वरूपं जीवति,
अस्य दारिद्र्येण स्वरूपं जीवति ॥ ३६२ ॥

---

मीति न ददाति। आचार्य ईश्वरस्य सकलभरनिर्वाहकत्वा-दस्माकमथ का वा न्यूनतेति स्थितत्वेन परिपूर्णत्वादेतदभि-मानदुष्टं किंचिदपि नांगीकरोतीत्यर्थः।

एतत्पूर्तिदारिद्र्याभ्यामुभयोः फलितमाह–तस्येत्यादिना।

आचार्यस्यैतदभिमानदुष्टवस्त्वस्वीकारहेतुपूर्त्याऽऽचार्यत्व-रूपस्वरूपं जीवति। शिष्यस्य स्वकीयत्वबुद्ध्यैकस्यापि समर्पणीयत्वयोग्यताभावहेतुसकलतदीयत्वप्रतिपत्तिसिद्धदारि-द्र्येण शिष्यत्वरूपस्वरूपं जीवतीत्यर्थः।

---

स्वरूपोज्जीवनं तस्य परिपूर्त्या निगद्यते।
स्वरूपोज्जीवनं चास्य दारिद्र्येण भवेत्खलु ॥ ३६२ ॥

के लिये कोई वस्तु को देते हैं ऐसा समझ नहीं देगा। आचार्य सकलभर निर्वा-हक ईश्वर है हम को कुछ कमती नहीं ऐसा अपने को परिपूर्ण समझने से शिष्य की ममता से दूषित किसी वस्तु को नहीं लेगा।

पूर्ति और दारिद्र्यों से फलितार्थ को कहते हैं– उस का इत्यादि।

उस का स्वरूप पूर्ति से जीता है,
इस का स्वरूप दारिद्र्य से जीता है ॥ ३६२ ॥

आचार्य का शिष्य की ममता से दूषित द्रव्य को न लेनारूप पूर्ति से आचार्यत्व जीता है, शिष्य का अपना समझ देनेके योग्य द्रव्याभावरूप दारिद्र्य से शिष्यत्व जीता है।

**तर्हि शिष्येणाचार्यस्य क्रियमाण उपकारः कोऽपि नास्ति किमिति चेत् । आचार्यानुसंधानेनास्ति ॥ ३६३ ॥**

---

अथ शिष्येणाचार्यस्य क्रियमाण उपकारोऽयमिति वक्तुं तद्विषयप्रश्नमनुवदति— तर्हीत्यादिना ।

एवमादानदानयोर्योग्यताविरहेप्युपकारस्मृतिमता शिष्येण महोपकारकस्याचार्यस्य क्रियमाण उपकार एकोऽपि नास्ति किमिति चेदित्यर्थः । तस्योत्तरमाह— आचार्यानुसंधानेनास्तीत्यादि । स्वरूपज्ञस्य शिष्यस्यानुसंधानेन कदापि कोऽपि नास्ति, स्वकृषिफलसंतुष्टस्याचार्यस्यानुसंधानेनास्तीत्यर्थः ।

स च को वेत्यत आह— स चेत्यादि ।

---

**तर्ह्याचार्यस्य शिष्येण क्रियमाणोपकारकः । कश्चिन्नास्ति किमित्थं चेदस्ति त्वाचार्यचिंतनात् ॥३६३ ॥**

अब शिष्य से आचार्य को कर्तव्य उपकार कुछ नहीं है क्या ? इस शंका में कहते हैं– तब इत्यादि ।

तब शिष्य से आचार्य को क्रियमाण उपकार कुछ नहीं है क्या ?

इस शंका में कहते हैं– आचार्य के अभिप्राय से है ॥३६३॥

इस प्रकार लेने देने की योग्यता न होनेपर भी उपकार स्मृतिवाला शिष्य से महोपकारक आचार्य को कर्तव्य उपकार अपने अभिप्राय से नहीं है तो भी अपने कैंकर्य से प्रसन्न हुये आचार्य के अभिप्राय से है ।

उस कैंकर्य को कहते हैं– वह इत्यादि ।

**स च ज्ञानव्यवसायप्रेमसमाचाराः ॥ ३६४ ॥**
**आचार्यस्य प्रीत्यर्थमस्य निवर्तनीयो**
**भगवद्द्रव्यस्यापहारो भगवद्भोजन-**

---

ज्ञानव्यवसायप्रेमसमाचारा नाम- स्वरूपयाथात्म्यज्ञानं तदनुरूपोपायव्यवसाय उपेयप्रेमैतत्त्रयाणामप्यनुरूपं सम्यगनुष्ठानं च। अनेन श्रीमंत्रे पदत्रयेणापि प्रतिपाद्यमानेषु स्वरूपोपायपुरुषार्थेषु ज्ञानव्यवसायप्रेमाणि तदनुरूपानुष्ठानानि चोच्यंते।

आचार्यस्य प्रीत्यर्थं क्रियमाणकैंकर्यस्य प्रवृत्तिनिवृत्तिरूपत्वेन स्थितत्वात् प्रवृत्तिरूपस्य तस्य कथनानंतरं निवृत्तिरूपमाह-- आचार्यस्य प्रीत्यर्थमित्यादिना ।

---

स चोपायः सुविज्ञेयः स्वरूपज्ञानमेव च ।
व्यवसायानुरागौ च समाचारस्तथापरः॥ ३६४ ॥
आचार्यप्रीतिसिद्ध्यर्थं त्यक्तव्यश्च प्रयत्नतः ।

वह कैंकर्य ज्ञान व्यवसाय प्रेम और समाचार है ॥ ३६४ ॥

स्वरूप याथात्म्यज्ञान, उस के अनुरूप उपाय में विश्वास, उपेय में प्रेम ये तीनों के अनुरूप अनुष्ठान भी हैं। इस से अष्टाक्षर मंत्र के पदत्रय से कहे जाने-वाले स्वरूप उपाय पुरुषार्थों में ज्ञान विश्वास और प्रेम तीनों के अनुरूप अनुष्ठान भी कहे जाते हैं।

आचार्य मुखोल्लास के लिये शिष्यकर्तृक कैंकर्य प्रवृत्तिनिवृत्तिरूप होने से प्रवृत्तिरूप कैंकर्य को कह अनंतर निवृत्तिरूप कैंकर्य को कहते हैं- आचार्य इत्यादि।

आचार्य के प्रीत्यर्थ शिष्य के छोडने योग्य :-
भगवद्द्रव्यापहार, भगवद्भोजन को रोकना।

निरोधो गुरुमंत्रदेवतापरिभवश्च ॥ ३६५ ॥
भगवद्द्रव्यापहारो नाम-- स्वातंत्र्यमन्यशेषत्वं च ।
भगवद्भोजननिरोधो नाम-- तद्रक्षकत्वस्य निरोधः ।

---

भगवद्द्रव्यापहार इत्यनेन तमुद्दिशति ।

एवमुद्दिष्टस्य प्रकारान् क्रमेण विशदीकरोति— भगवद्द्रव्यापहार इत्यादिना ।

भगवद्द्रव्यमित्युच्यते— 'अन्यस्य समीचीनपदार्थ'मित्युक्तप्रकारेण श्रीकौस्तुभवदीश्वरस्य स्पृहणीयमात्मद्रव्यं, स्वातंत्र्यं नाम—शेषत्वैकनिरूपणीयस्य स्वार्थत्वानुसंधानं, अन्यशेषत्वं नाम-- भगवदेकशेषस्य तदितरशेषत्वानुसंधानं, इदं

---

हरिद्रव्यापहारोऽथ हरिभोजनवारणम् ।
देवतागुरुमंत्राणां तिरस्कारस्तथैव च ॥३६५॥
हरिद्रव्यापहारोऽन्यशेषत्वं च स्वतंत्रता ।
हरिभोगनिरोधस्तद्रक्षकत्वक्रमापहः ॥ ३६६ ॥

गुरु मंत्र और देवता का तिरस्कार है ॥ ३६५ ॥

इस प्रकार उद्देश कर क्रम से विवरण करते हैं— भगवदित्यादि ।

भगवद्द्रव्यापहार माने :— स्वातंत्र्य और अन्यशेषत्व ।
भगवद्भोजन को रोकना माने :—भगवान के रक्षकत्व को रोकना ॥

भगवद्द्रव्य माने :— श्रीकौस्तुभसदृश ईश्वर का स्पृहणीय आत्मद्रव्य है ।
स्वातंत्र्य माने :— शेषत्व से निरूपण करने योग्य आत्मा को स्वतंत्र समझना ।

च मातापित्रादिदेवतांतरपर्यंतं वर्तते। एतद्द्वयमपि प्रथमाक्षरे चतुर्थ्या मध्यमाक्षरेण च निवर्त्यते हि। इदं च

'किंतेन न कृतं पापं चौरेणात्मापहारिणा'

इति सकलपापमूलत्वेनोक्तं खलु।

रक्षणं भगवद्भोजनमित्युच्यते — रक्ष्यवर्गस्य रक्षणस्य तस्य क्षुधितस्य भोजनवद्धारकत्वात्। 'भूमिमंतरिक्षं सर्वं युगपद्भुक्त्वा'नित्यत्र रक्षणस्य तस्य धारकत्वाद्भुक्तवानित्युक्तं, नो चेद्रक्षितवानिति वक्तव्यमिति कलिवैरिदासैरुक्तम्। एवंभूतस्य तस्य रक्षकत्वस्य निरोधो नाम— 'अवरक्षणे' इति धातुना निरुपाधिकसर्वरक्षकत्वेनोक्तस्य रक्षणस्यावकाशो यथा न स्यात्तथा स्वयत्नेन वाऽन्यैर्वा स्वरक्षणे प्रवर्तनम्। इदं च भगवदेकरक्ष्यत्वप्रतिपादकेन नमःशब्देन निवर्त्यते।

तद्रक्षणक्रमः कथमित्यत आह— तस्येत्यादिना।

---

अन्यशेषत्व माने :—भगवदेकशेषभूत आत्म वस्तु को माता पिता देवतांतर को शेष समझना। ये दोनों प्रथमाक्षर की चतुर्थी से और मध्यमाक्षर से भी दूर किये जाते हैं। 'इस आत्मापहारी चोर से कौन पाप न किया गया' ऐसा सकल पाप का कारण कहा है—

भगवद्भोजन इत्यादि :— रक्षण को भोजन कहते हैं रक्ष्यवर्ग का रक्षण ईश्वर को भूखे को भोजन के तरह धारक होनेसे। 'भूमि और आकाश को पाये हैं' ऐसा रक्षण किये हैं न कह पाये हैं ऐसा सूरिलोग कहे हैं। एवं भूत स्वामी के रक्षकत्व को रोकना माने— अव रक्षणे इस धातु से निरुपाधिक सर्वरक्षकतया कहे जानेवाले ईश्वर को रक्षा करने का अवकाश न दे स्वयत्न से या औरों से अपने को रक्षा करने में प्रवृत्त होना यह भगवदेकरक्षकत्व प्रतिपादक नमः शब्द से दूर किया जाता है।

तस्य रक्षकत्वक्रमः प्रपन्नपरित्राण उक्तः ॥३६७॥
गुरुपरिभवो नाम—श्रुतार्थप्रकारेणानुष्ठानराहित्यं,

---

सर्वरक्षकस्य तस्य रक्षकत्वक्रमः प्रपन्नपरित्राणप्रबंधे विशदमुक्तः, तत्र द्रष्टव्य इत्यर्थः । तत्र तद्व्यतिरिक्ताः सर्वे अरक्षका इत्येतत्प्रतिपादनानंतरमीश्वरो मातापितृभ्यां त्यक्तावस्थायां 'अनंतरं मयि स्थित्वा मम बंधुः सन् पालयित्वा' इति प्रकारेण 'स्वं रूपं विहाय विग्रहांतरं परिगृह्य मातृमुखं प्रदर्श्य च प्रीतिवार्तामुक्तवे'त्यादिना 'अयमेव सर्वेषामपि रक्षक' इत्यंतेन तस्य रक्षकत्वक्रमः सुव्यक्तमुक्तः ।

श्रुतार्थप्रकारेणानुष्ठानराहित्यं नाम—स्वोज्जीवनार्थं तेनोक्तानां स्वेन श्रुतानां त्याज्योपादेयरूपाणामर्थविशेषाणामनुरूपयो-

---

प्रपन्नत्राणके तस्य रक्षकत्वक्रमोऽवादि ॥३६७॥
गुरोः परिभवो ज्ञेयोऽनधिकारिषु कीर्तनम् !

उस के रक्षणक्रम को कहते हैं— उस के इत्यादि ।

उस के रक्षणक्रम को प्रपन्नपरित्राण में कहे हैं ॥ ३६७ ॥

गुरुपरिभव माने— सुना हुआ अर्थ का अनुष्ठान

सर्वेश्वर का रक्षकत्व प्रपन्नपरित्राण में 'ईश्वर से व्यतिरिक्त रक्षक नहीं है' इस अर्थ के बाद 'ईश्वर माता पिताओं के छोडनेपर भी अपने रूप को बदल मातृमुख को दिखा भोग्य वचन कह' ऐसा आरंभ कर 'यही सब का रक्षक' इत्यंत उस के रक्षकत्व क्रम को स्पष्ट कहा है ।

गुरुपरिभव इत्यादि । अपने उज्जीवन के लिये आचार्य से उपदिष्ट त्याज्यो-

अनधिकारिभ्य उपदेशः ।
मंत्रपरिभवो नाम—अर्थविस्मृतिः,
विपरीतार्थप्रतिपत्तिश्च ।
देवतापरिभवो नाम—करणत्रयस्य चाप्राप्त-
विषयेषु प्रावण्यं तद्विषयेऽप्रावण्यं च ॥३६८॥

---

स्त्यागस्वीकारयोरनुष्ठानस्याकरणम् । अनधिकारिभ्य उपदेशो नाम— स्वस्य शरणत्वेन तेनोपदिष्टानां सारार्थानां नास्तिक्यादिभिरस्याधिकाररहितेभ्यः ख्यातिलाभाद्याशयोपदेशः ।

---

श्रुतार्थस्य प्रकारेण चानुष्ठानविहीनता ।
अर्थविस्मरणं तद्वद्विपरीतार्थधारणम् ।
परिभवो हि मंत्राणां ज्ञेयो तत्त्वविचक्षणैः ।
परिभवो हि देवस्याऽप्रावण्यं यच्च माधवे ।
अप्राप्तविषये तद्वदिन्द्रियाणां प्रवीणता ॥ ३६८ ॥

नहीं करना अनधिकारियों को उपदेश करना ।
मंत्र परिभव माने— उपदिष्ट अर्थ को भूल जाना
विपरीत अर्थ को समझना । देवतापरीभव माने—
करणत्रय को अप्राप्तविषय में लगाना प्राप्तविषयमें न लगाना ॥३६८॥

पादेयरूप अर्थों को अनुष्ठानपर्यंत नहीं लाना । अनधिकारियों को इत्यादि— अपने को रक्षकतया आचार्य से उपदिष्ट श्रेष्ठार्थों को नास्तिकों के लिये ख्याति लाभ आदि की इच्छा से उपदेश करना । मंत्रपरिभव माने— आचार्योपदिष्ट अर्थों

अर्थविस्मृतिर्नाम -- आचार्येण मंत्रस्योक्तानामर्थानां बहुवार मनुसंधानेन रक्षणं विनौदासीन्येन विस्मृतिः । विपरीतार्थ-प्रतिपत्तिः--- आचार्योक्तप्रकारं विना मंत्रस्य विपरीतानामर्थानामयमस्यार्थ इति भ्रांत्या प्रतिपत्तिकरणम् ।

करणत्रयस्य चाप्राप्तविषयेषु प्रावण्यं नाम--

'विचित्रा देहसंपत्तिरीश्वराय निवेदितुम् ।'

'आश्चर्यचेष्टितमाश्रयितुं कृतानि करणानि ।' इति प्रकारेण तं स्मर्तुं स्तोतुं चोचितानां मनोवाक्कायानां स्वरूपाप्राप्तहेयविषये-षूच्चस्थजलस्य निम्नस्थलपातवत् प्रावण्यकरणम् । तद्विषयेऽ-प्रावण्यं नाम— 'जिह्वायां किणो यथा स्यात्तथा नारायणेत्याहूय कर्ये किणो यथा स्यात्तथाश्रित्य' इत्यादिषूक्तप्रकारेण स्वरूपप्राप्तविषयेऽभिनिवेशेनलग्नं स्यात्तथाऽकरणम् । एवं 'मंत्रे तद्देवतायां च तथा मंत्रप्रदे गुरौ । त्रिषु भक्तिः सदा कार्या' इति 'मंत्रनाथं गुरुं मंत्रं समत्वेनानुभावयेत् ।' इति च पूज्यत्वेनोक्तस्यास्य विषयत्रयस्य च परिभवोऽपिस्युक्तम् ।

---

को स्मरण करना छोड उदासीनता से भूल जाना । विपरीतार्थप्रतिपति माने— आचार्य उपदिष्टप्रकार के विना विपरीत रूप से समझना ।

देवतापरिभव माने— ईश्वर के समर्पण करने के लिये सृष्ट हुये विचित्र मनोवाक्कायरूप करणत्रय को अप्राप्त हेयविषय में लगाना प्राप्तविषय सर्वेश्वर के स्मृति स्तुति प्रणामरूप कार्यों में न लगाना । तथा च 'मंत्र देवता और मंत्रप्रद आचार्य इन तीनों में सदा प्रेम रखना' ऐसा 'देवता गुरु और मंत्र को बराबर समझना' ऐसा भी कहे हुये इन तीनों का परिभव करना ।

**अस्य शरीरावसानपर्यंतमाचार्यविषये 'मम दुष्टं मनो निवर्तितवान्, एकाकारेणाश्रयणयोग्यं मनो दत्तवान्' इत्युपकारस्मृतिर्वर्तितव्या ॥ ३६९ ॥**

**मनसो दोषः— स्वगुणस्य भगवद्भाग-**

---

एवमाचार्यप्रीत्यर्थतया कर्तव्यं त्यक्तव्यं चोक्तवान्, अथ चास्यापेक्षितमाह– अस्येत्यादिना ।

अस्याधिकारिणः शरीरेण सह स्थितिकाले महोपकारकाचार्यविषये 'मम दुष्टं मनो निवर्तितवान्, अनन्यप्रयोजनतयानुवृत्तिं कुर्वन्मनो दत्तवा'नित्युपकारस्मृतेरनुवृत्तिरावश्यकीत्यर्थः ।

मनसो दोषः क इत्याकांक्षायामाह— मनस इत्यादि ।

---

**आचार्यविषये चास्य ह्युपकारस्मृतिः सदा ॥३६९॥**
**भगवद्भागवताचार्यदोषाणां यच्च चिंतनम् ।**

इस प्रकार आचार्यप्रीति के लिये करने और छोडने योग्य को कह और भी इस के अपेक्षित को कहते हैं– इस को इत्यादि ।

इस को मरणपर्यंत आचार्यविषय में 'हमारे दुष्टमन को दूर किये हो, आदरपूर्वक भजन करनेवाले मन को दिये हो' ऐसा उपकार स्मृति कर्तव्य है ॥ ३६९ ॥

इस अधिकारी को शरीर के साथ रहनेतक महोपकारक आचार्यके विषय में उपकार स्मृति कर्तव्य है ।

मन के दोष को कहते हैं– मन के दोष इत्यादि ।

मन के दोष माने— अपने गुण और

वतदोषस्य चानुसंधानम् ॥ ३७० ॥

स्वगुणस्यानुसंधानं नाम—शमदमाद्यात्मगुणेषु स्वस्य विद्यमानेष्वपि 'पूर्तिरहितः समीचीनगुणरहित' इत्यादिप्रकारेण मम कोप्यात्मगुणो नास्तीति स्वाकिंचन्यमनुसंधेयं, तथा सत्येते सर्वे इदानीं मम संतीति स्वस्य विद्यमानसद्गुणानां पर्याप्ततया स्थिततया चानुसंधानम् । भगवतो दोषस्यानुसंधानं नाम—स्वस्य परतंत्रमिदमात्मवस्तु स्वोपेक्षया अनादिकालकर्म व्याजीकृत्य त्यक्तवान्, तावन्मात्रंविना निर्दयवद्यथाकर्म फलदायी निरयेषु पातयित्वा छेदित्वा क्षारादिकं लिंपति, अंगीकारकरणेपि निरंकुशस्वतंत्रत्वादेतत्काल एवं कुर्यादिति विश्वसनीयो न भवतीतिवत्, कृष्णावतारे स्वैरविहारानवलंब्य धर्मसंस्थापनं कर्तुं

---

मनोदोषः स विज्ञेयः स्वगुणस्य च चिंतनम् ॥३७०॥

भगवद्भागवत के दोष को स्मरण करना ॥ ३७० ॥

अपने गुण को स्मरण करना माने— शमदमादि आत्मगुण अपने में होनेपर भी अपने में एक भी आत्मगुण नहीं मैं गुणहीन हूं ऐसा अनुसंधान करना उचित है ऐसा न कर सब गुण हमारे में पूर्ण हैं ऐसा समझ गर्वित होना। भगवान के दोष को स्मरण करना माने— ईश्वर के परतंत्र इस आत्मवस्तु को अनादिकाल से उपेक्षा कर कर्म के बहाने से छोड दिया है इतना ही नहीं निर्दयी के तरह कर्मानुसार नरकों में दुःख भुगानेवाले अब स्वीकार करने पर भी निरंकुश स्वतंत्र होने से अमुक समय में अमुक करेगा ऐसा विश्वास करने के योग्य नहीं, कृष्णावतर में यथेच्छ विहारों के विषय में धर्मसंस्थापन करने को अवतार

दोषस्याननुसंधानं गुणवद्विद्यमाने न
भवति किंतु तदभावात् ॥ ३७१ ॥

---

जातस्यैवं व्यापार उचितो न भवतीतिवच्चानुसंधानम् । अन्यथा समस्तकल्याणगुणात्मके विषयेऽनुसंधानार्हः कश्चन दोषो नास्ति खलु । अथ भागवतदोषस्यानुसंधानं नाम–विग्रहेण सह स्थितत्वादुपरि भासमानाकारानादाय प्रकृतिवश्योऽहंकारग्रस्त इत्याद्यनुसंधानम् । एवमिदं स्वगुणस्य भगवद्भागवतदोषस्य चानुसंधानं भवति ।

तर्हि स्वस्य केषुचिद्गुणेषु सत्सु ते यथा नानुसंधीयंते तथा तेषां केषुचिद्दोषेषु सत्स्वपि तेषामनुसंधानं न कर्तव्यमित्युच्यते किमित्यत आह–दोषस्येत्यादि ।

---

दोषस्याननुसंधानं गुणवद्विद्यमानके ।
समये न भवेत् किंतु दोषाभावाद्धि हेतुतः ॥ ३७१ ॥

ले ऐसा करना अनुचित है इत्यादि स्मरण करना । ऐसा न हो तो समस्त कल्याण गुणात्मक भगवान् के विषय में स्मरण करने के योग्य कोई दोष नहीं है । भागवतदोष को स्मरण करना माने– शरीर के साथ रहने से ऊपर के आकारों को देख प्रकृति के वश्य हैं अहंकारी हैं ऐसा समझना ।

तब अपने गुणों को जैसा न स्मरण करना तैसे उन के दोष को भी नहीं स्मरण करना क्या ? इस शंका में कहते हैं— दोष को इत्यादि ।

दोष को नहीं स्मरण करना गुण के तरह
रहने पर नहीं किंतु न रहने पर ॥ ३७१ ॥

भगवद्भागवतविषयेषु दोषस्यानुसंधानाभावः— स्वस्य गुणेषु विद्यमानेषु ते यथा नानुसंधीयंते तथा विद्यमानेषु नानुसंधानं कर्तव्यमिति न प्रथमतस्तद्विषये तदभावादित्यर्थः। कथमितिचेत्— सर्वमुक्तिप्रसंगपरिहारार्थं स्वकृतमर्यादयांगीकर्तुं विचार्य 'विचार्य लोकं सृष्टवान्' 'उपायेनाग्रे आगत्ये'ति चोक्तप्रकारेण सकलात्मनामुज्जीवनार्थं सृष्ट्यवतारादिभिः कृषिकरणादनादिकालमुपेक्षया त्यक्तवानिति न शक्यते वक्तुम्। निर्दयवत् कर्मानुगुणदंडने च मृत्तिकां भक्षितवत्याः प्रजाया जिह्वायां चिह्नं कृत्वा भयमुत्पादयंती मातेव हितपरः करोति तस्मादुज्जीवनोपयुक्तं भवति। निरंकुशस्वातंत्र्यं पूर्वं बंधहेतुरपि कृपापरतंत्रतयांगीकारानंतरं नित्यसंसारिणो नित्यसूरिभिः समानभोगित्वकरणसमये निवारको यथा न स्यात्तथा कर्तुमुपयुक्तत्वाच्छ्लाघ्यं खलु। कृष्णावतारे स्वैरविहारः 'यदि मे

---

अपने में गुण होने पर भी जैसा उस को नहीं स्मरण करना कहा है तैसे भगवद्भागवतों में दोष होने पर उसको नहीं स्मरण करना ऐसा अर्थ नहीं किंतु उनमें दोष नहीं रहने से। इस का कारण सर्वमुक्ति प्रसंग न आने के लिये परमात्मा शरणागति को मान अंगीकार करते हैं। समस्त आत्माओं के उज्जीवन के लिये सृष्टि अवतारादि से यत्न करनेवाले सर्वेश्वर में दोष होना असंभव है। निर्दयी के तरह कर्मानुगुण दण्ड देना भी मिट्टी खानेवाले बालक के जिह्वा में चिह्न कर डरानेवाली माता के तरह हित पर हो करने से उज्जीवन का ही हेतु है इसलिये दोष नहीं। निरंकुश स्वातंत्र्य अनादिकाल से बंध का हेतु होनेपर भी कृपा के परतंत्र हो जब अंगीकार किया है तब नित्य संसारी को नित्यसूरि के सदृश करने के समय कोई रोक नहीं सकने के लिये उपयुक्त होता है इसलिये श्लाघ्य है। कृष्णावतार में स्वेच्छासंचार भी दोष नहीं कारण 'मेरेमें ब्रह्म-

दोषोऽस्तीति स्मर्यते यदि स च पर-
दोषो न भवति किंतु स्वदोषः ॥३७२॥

---

ब्रह्मचर्यं स्यात्' इत्युक्तप्रकारेण स्वस्यैतद्भोगे संबंधाभावज्ञापनार्थं 'गोप्यः कामात्' इत्युक्तप्रकारेण तन्मार्गेण ताः स्वविषये प्रवणाः कृत्वोत्तारयितुं च कृतत्वाद्गुण एव न तु दोषः । भागवतानामपि 'दोषं विना गुणं वर्द्धयेत्स्वे'ति प्रकारेण निर्दोषत्वान्निरवधिकगुणत्वात् मर्मस्पर्शितया निरूपणे कृते तेषु द्रष्टुं योग्यः कोऽपि दोषो नास्ति खलु । एवंप्रकारेण भगवद्भागवतविषये दोषभाने परिहारो द्रष्टव्यः । एतत्सर्वमभिप्रेत्य तदभावादित्यनेनोक्तम् ।

दोषो नास्तीति स्वपक्षेण प्रसाधितवान्, अथ परपक्षेण दोषसद्भावमंगीकृत्य तत्परिहारमाह – दोषोऽस्तीत्यादिना ।

---

भगवद्धरिदासेषु दोषोस्तीति स्मृते सति ।
परकीयो न विज्ञेयः स्वकीय इति संस्मरेत् ॥३७२॥

चर्य हो तो' इस वचनानुसार अपने को इस भोग में संबंधाभाव को प्रकट करने के लिये, 'गोपी लोग काम से' इस वचनानुसार गोपी लोगों को काम द्वारा अपने विषय में भक्त बना उद्धार करने के लिये किये हैं इस लिये दोष नहीं । भागवतों में दोष न होने से निरूपण करने पर गुण भरे रहने से उनको दोषी न समझना ।

दोष रहितता को स्वपक्ष से साधन किये हैं, अब पर पक्ष से दोष को अंगीकार कर परिहार करते हैं – दोष है इत्यादि ।

दोष है ऐसा समझने पर वह पर दोष नहीं अपना ही दोष है ॥ ३७२ ॥

स्वदोषः कथमिति चेत् ।
स्वदोषेण च बन्धेन च ॥ ३७३ ॥

---

पूर्वोक्तप्रकारेण विना भगवद्भागवतविषये दोषोऽस्तीत्यनुसंधीयते यदि तेषु तस्य प्रतीयमानदोषस्तेषां दोषो न भवति किंतु तद्द्रष्टुः स्वस्य दोष इत्यर्थः ।

तस्य स्वदोषत्वं साधयितुं तत्प्रश्नमनुवदति – स्वदोष इत्यादिना ।

परगतत्वेन प्रतीयमानः स स्वदोषः कथं जायत इत्यर्थः ।

तस्योत्तरमाह – स्वदोषेणेत्यादिना ।

काचादिदुष्टदृष्टेश्चन्द्रद्वित्वादिकं यथा भासते तथा निर्दोषविषये दोषप्रतीतिहेतुदुर्वासनादुष्टचित्ततारूपस्वदोषेण । यथा पित्रादीनां दोषः पुत्रादीनां भवति तथा तेषां दोषः स्वस्य

---

कथं स्वदोष इत्थं चेत् स्वदोषेण च बंधतः ॥ ३७३ ॥

भगवद्भागवत के विषय में दोष समझने पर वह दोष उनका नहीं किन्तु उसके देखनेवाले अपनेको है ।

उसको स्वदोष कैसे समझना इस प्रश्न में उत्तर देते हैं – स्वदोष इत्यादि ।

स्वदोष कैसा हुआ इस शंका मे –

अपने दोष और बंध से अपना दोष हुआ ॥ ३७३ ॥

काच नामक व्याधि से दुष्टदृष्टि मनुष्य को दो चन्द्रमा दीखते जैसा निर्दुष्ट विषय में दुर्वासना से दुष्ट चित्त मनुष्य को दोष दीखता है । पुत्रादियों के दोष जैसा पित्रादियों का होता है तैसे उनका दोष अपने समझने योग्य

स्वदोषो नास्ति यदि गुणप्रतिपत्तिर्वर्तेत ॥ ३७४ ॥
तदाभवे दोषज्ञानमेव दोषः स्यात् ॥ ३७५ ॥

---

स्यात्तथाविधेन तैः सह स्वस्य विद्यमानेन बंधविशेषेणेत्यर्थः। स्वदोषेणेतीदं तत्र दोषाभावादुच्यते, अन्यद्दोषमंगीकृत्योच्यते।

स्वदोषेणेति वक्तव्यं दोषे सति हीत्यत आह – स्वदोषो नास्तीत्यादि।

चन्द्रद्वित्वदर्शनहेतुदोषाभावे चन्द्रैकत्वं यथा भासते तथा दोषदर्शनहेतुचित्तदोषाभावे भगवद्भागवतविषयेषु गुणप्रतिपत्तिर्वर्तेतेत्यर्थः। तदभावाद्दोषोस्तीत्यंगीकार्यमिति भावः।

गुणप्रतिपत्त्यभावे को दोष इत्यत आह – तदभाव इत्यादि।

---

नास्तिचेद् दूषणं स्वस्य वर्तेत गुणबुद्धितः ॥ ३७४ ॥
तदभावे तु दोषस्य ज्ञानं स्याद् दूषणं परम् ॥ ३७५ ॥

संबंध से है।

स्वदोष से ऐसा कह सक्ते हैं दोष होने पर इस शंका में कहते हैं– स्वदोष इत्यादि।

स्वदोष न हो तो गुण समझेगा ॥ ३७४ ॥

चन्द्रद्वित्व दर्शन हेतु नेत्र में दोष न होने पर जैसा चन्द्रैकत्व भान होता है तैसे दोष दर्शन हेतु दोष अपने चित्त में न होने पर भगवद्भागवत के विषय में गुण प्रतिपत्ति ही रहेगी ऐसा न होने से दोष है समझना।

गुण प्रतिपत्ति न होने से होनेवाले दोष को कहते हैं – न होने पर इत्यादि।

न होने पर दोषज्ञान ही दोष होता है ॥ ३७५ ॥

अस्यावसरो नास्ति ॥ ३७६ ॥
स्वदोषस्य भगवद्भागवतगुणानां
चैव कालस्य पर्याप्तत्वात् ॥ ३७७ ॥

---

गुणप्रतिपत्त्यभावे दोषप्रतिपत्तिः खलु वर्तेत, तद्दोषज्ञानमेवास्य भगवन्निग्रहहेतुर्दोषो भवेत्। एतन्मूलकोऽन्यो दोषो जायत इति न वक्तव्यमित्यर्थः। अनेनेदमवश्यपरिहरणीयमित्युक्तम्।

इदं सर्वं त्यक्तव्यमस्यावकाशे सति हीत्याह—अस्येत्यादिना। भगवद्भागवतदोषचिंतनस्यावसर एवास्य नास्तीत्यर्थः। तत्केन हेतुनेत्यत आह— स्वदोषस्येत्यादि।

---

अवसरोस्य नास्त्येव स्वदोषे कालयापनात् ॥ ३७६ ॥
भगवद्भागवतानां च गुणेषु कालयोजनात् ॥ ३७७ ॥

गुण प्रतिपत्ति न होने पर दोष प्रतिपत्ति करेगा वह इस को भगवन्निग्रहहेतु दोष होता है इस लिये इस को अवश्य हटाना चाहिये।

अब इस को परदोष देखने का अवकाश ही नहीं है ऐसा कहते हैं— इस के इत्यादि।

इस के लिये अपने को अवकाश नहीं ॥ ३७६ ॥

भगवद्भागवत के दोष चिंतन करने को इस चेतन को अवकाश ही नहीं है।

उसका कारण बताते हैं — स्वदोष इत्यादि।

स्वदोष और भगवद्भागवत गुण इन को
अनुसंधान करने में काल व्यतीत होनसे ॥ ३७७ ॥

'नीचः पूर्तिरहितः' 'असत्ये स्थितं ज्ञानं असद्व्यापारो मालिन्यदेह एतादृशस्वभावः' 'अमर्यादः क्षुद्रः' 'विद्वेषमानमदरागविलोभमोहाद्यज्ञानभूमिं'

'अतिक्रामन्नाज्ञां तव विधिनिषेधेषु भवते—
प्यतिद्रुह्यन् वाग्धीकृतिभिरपि भक्ताय सततम् ।
अजानन् जानन् वा भवदसहनीयागसि रतः'

'श्रीरङ्गेश त्वद्गुणानामिवास्मद्दोषाणां कः पारदृश्वा यतोऽहं' इत्यादिपूक्तप्रकारेणानवधिकस्वदोषानुसंधानस्य तादृशदोषमदृष्ट्वांगीकृतवतो भगवतः 'वेदविदः पुरस्कृत्य' इति 'बोधयंतः परस्परं' इति 'तद्दासेषु लघुमहत्सु मम दास्यस्वीकर्तृष्वत्र वर्तमानेषु अत्यंतपरिमलविशिष्टसद्योविकासितकमलचरणयोरधस्तात् प्राप्तिः सदृशा कि'मित्युक्तप्रकारेण पुरुषकाराणां वचनसहायभूतानां प्राप्याणां भागवतानां च 'समस्तकल्याणगुणामृतोदधिः 'असंख्येयकल्याणगुणगणौघमहार्णव'

---

'नीच अकिंचन, असत्यज्ञान अनाचार मालिनदेह, मर्यादारहित क्षुद्र, द्वेष मान मद राग लोभ मोह अज्ञान इनके उत्पत्ति स्थान हैं । आपकी विधिनिषेधरूप आज्ञा को उल्लंघन कर मनोवाकायों से आप और भागवतों के विषय में द्रोह करता हुआ. जान कर वा नजान कर असह्यापाचार में आसक्त होता हूं, हे रंगेश आपके गुणों के तरह हमारे दोषों का पार देखनेवाला नहीं' इत्यादि वचनानुसार अवधि रहित अपने दोषानुसंधान करने के लिये, उन दोषों को न देख अंगीकार 'करनेवाले भगवान्' और वेदाभ्यास करनेवाले, तथा परस्पर गुणानुभव करनेवाले, उनके दास लघु महामनुष्य हमको इस संसार में रक्षा किये हैं हम परमता की प्राप्ति को नहीं चाहते हैं' इन वचनानुसार पुरुषकार सहाय और प्राप्यभूत भागवतों के 'समस्त कल्याण गुणों के समुद्र, हे पुत्र समुद्र के रत्न जैसे असंख्येय हैं तैसा

'यथा रत्नानि जलधेरसंख्येयानि पुत्रक ।
तथा गुणा ह्यनंतस्य असंख्येया महात्मनः ॥' इति,

'नाहं समर्थो भगवत्प्रियाणां वक्तुं गुणान् पद्मभुवोऽप्यगम्यान् ।' इत्युक्तप्रकारेणासंख्येयगुणानुसंधानानां चैव कालः पर्याप्तः । अन्यस्यावकाशाभावादित्यर्थः । अस्यैव कालस्य पर्याप्तत्वादित्युक्तत्वात्– स्वगुणस्मरणस्यावकाशो नास्तीत्यर्थात् सिद्धं खलु ।

एवं मनसो दोष इत्यारभ्यैतावता भगवद्भागवतदोषस्मरणमनुचितमित्यर्थः, तेषां नैर्दोष्यं, दोषोऽस्तीत्यनुसंधाने सति स तद्दोषो न भवति स्वदोष इति, तस्य स्वदोषत्वे निदानं, स्वदोषाभावशंकाया उत्तरं, दोषप्रतिपत्तौ सत्यां सैवास्य महादोष इति, स्वदोषभगवद्भागवतगुणानुसंधानानामेव कालस्य पर्याप्तत्वादस्यावसरो नास्तीति चोक्तम् । एवं स्वस्योद्देश्यभगवद्भागवतविषयेषु दोषानुसंधानं न कार्यं, करोति चेत् स स्वदोष

---

परमात्मा के गुण असंख्येय हैं, मैं ब्रह्मा को भी अगम्य भागवतों के गुणों को कह नहीं सक्ता हूं' इन वचनानुसार असंख्येय कल्याण गुणों के अनुसंधान के लिये भी अवकाश नहीं तव दोषों के अनुसंधान करने को अवकाश न होने में क्या कहना ।

तथा च मन का दोष माने ऐसा आरंभ कर यहां तक भगवद्भागवत दोषों को नहीं स्मरण करना, उन की निर्दोषता, दोष है समझने पर वह उन का दोष नहीं अपना दोष, उस के स्वदोष होने का कारण, स्वदोषाभाव शंका का उत्तर, दोष प्रतिपत्ति होने पर वही चेतन का महा दोष है, अपना दोष और भगवद्भागवतगुणानुभव को ही समय पूर्ण है बाकी विषय के चिंतवन करने का अवकाश

संसारिणां दोषं स्वदोष इति स्मरेत् ॥ ३७८॥

तस्य च हेतुर्बन्धज्ञानम् ॥ ३७९ ॥

---

इत्यनुसंधानं कर्तव्यमित्युक्तिप्रसंगे संसारिदोषविषयानुसंधानं चैवं स्यादित्याह— संसारिणामित्यादिना ।

संसारिणां भगवद्वैमुख्यमनात्मन्यात्मबुद्धयस्वे स्वबुद्धिप्रभृतिदोषेषु दृष्टेषु तादृशदोषानादाय तांस्त्यक्त्वैतेषामस्माकं च को वा संसर्ग इति स्थितिं विना तेषां दोषश्च स्वस्य दोष इत्यनुसंधानं कुर्यादित्यर्थः ।

तस्य को हेतुरित्यत आह— तस्य च हेतुरित्यादि ।

स्वस्य शेषिभूतानां भगवद्भागवतानां दोषः स्वदोष इत्यनुसंधाने हेतुस्तैः सह स्वस्य विद्यमानसंबंधज्ञानं यथा भवति

---

दोषः संसारिणां स्वस्य दोष इत्येव संस्मरेत् ॥ ३७८॥

तत्स्मरणस्य हेतुस्तु संबंधज्ञानमुच्यते ॥ ३७९॥

नहीं इत्यादि पहिले कहे हैं, अव इस के प्रसंग में संसारियों का दोषानुसंधान इस तरह होना चाहिये ऐसा कहते हैं—संसारियों के इत्यादि ।

संसारियों के दोष को अपना दोष समझना ॥ ३७८ ॥

संसारियों की भगवद्विमुखता देहात्मबुद्धि स्वतंत्रता बुद्धि प्रभृति दोष को देखने पर उन दोषों को लेकर उन को नीच समझ उन से हमको काम क्या ऐसा न रह कर उन के दोष को भी अपना दोष समझ रहना ।

उस का हेतु वताते हैं—उस का इत्यादि ।

उस का हेतु बंध ज्ञान है ॥ ३७९ ॥

अपने शेषी भगवद्भागवतों के दोष को अपना दोष समझने का कारण जैसा

निमेषकालमपि न स्मराम
इत्युक्तत्वात्स च न प्रतीयते ॥ ३८० ॥

तथा संसारिणां दोषस्य स्वदोषत्वेनानुसंधानस्य हेतुर्नाराय-णत्वप्रयुक्तसंबंधज्ञानमित्यर्थः । सर्वेषामपीश्वरेण संबंधस्या विशिष्टत्वात् तन्मार्गेण स्वस्य तेषां च संबंधस्य सत्वात् स्वस्यावर्जनीयानां प्रकृतिबंधूनामागतो दोषः यथा स्वदोष इत्यनुसंधीयते तथा संसारिणां दोषः स्वदोष इत्यनुसंधाने न विरोधः खलु ।

इदं चावश्यकं स्यात् तेषां दोषस्यास्य प्रतीतौ हि सैव प्रथमतोऽस्य नास्तीत्याह— निमेषकालमपीत्यादिना ।

'कडल्मल्लैस्थलशयने शयानाननुसंधाय वर्तमानान् वि-

निमेषकालमित्यादि सूक्तितः स न दृश्यते ॥ ३८० ॥

उन के साथ अपना संबंध हुआ संसारियों के दोष को अपना दोष समझने का हेतु नारायणत्वप्रयुक्त संबंधज्ञान । सब के साथ ईश्वर का संबंध बराबर होने से तद्द्वारा अपने को भी उन के साथ संबंध है इसलिये अपने को अवर्जनीय प्रकृतिबंधुओं के दोष अपना दोष जैसे समझता है संसारियों के दोष को अपना दोष समझने में कोई हानि नहीं ।

यह तब होगा जब उन का दोष अपने को दीख पडै वह इस को दीखता ही नहीं ऐसा कहते हैं—क्षण भर भी इत्यादि ।

क्षण भर भी याद नहीं करेंगे ऐसा
कहने से वह दीखता ही नहीं ॥ ३८० ॥

'कडल्मल्लै स्थलशयन भगवान् का स्मरण नहीं करनेवालों को क्षण भर भी

मेषकालमपि न स्मरामः' इति परमपदे नित्यसूरिभिः प्रीत्या परिचर्याकरणप्रयोजकमहत्त्वविशिष्टस्तिरुक्कडल्मल्लैदिव्यदेशे आगत्य स्वात्मनः प्राप्तुं स्थले शेते इत्येतादृशस्वभावविशिष्टोऽयमेकः स्वभावः खलु इति तादृशस्वभावेन जितैरनवरतानुसंधानं कर्तव्यं, एवं सति तद्व्यापरेण कार्यं किमिति केवलदेहपोषणादिपरान् संसारिणः क्षणकालमपि न स्मराम इत्युक्तत्वात् संसारिदोषोऽस्याधिकारिणो न भासत इत्यर्थः । श्रीपरकालोक्तिरियं श्रीवैष्णवानां सर्वेषां समाना खलु ।

न प्रतीयत इति कथमुच्यते 'अभिधाने विरोधः' 'एकनायकः' 'परिगृहीतभार्या' इत्यादिना परांकुशस्यापि संसारिणां दोषो न प्रकाशते किमित्यत आह— प्रतीतिश्चेत्यादि ।

---

हम नहीं याद करेंगे' ऐसा परमपद में नित्यसूरि लोग आदर पूर्वक परिचर्या करने योग्य होकर भी कडल्मल्लै दिव्यदेश में आ चेतनों की प्राप्ति के लिये भूमि में सोनेवाले स्वामी के सौशील्य गुण को देख विद्ध हो उस शील गुण में हार कर निरंतर अनुसंधान करना चाहिये ऐसा न कर केवल देह पोषणादिपर संसारियों को क्षण मात्र भी याद नहीं करेंगे ऐसा कहने से संसारियों का दोष इस अधिकारी को नहीं दीखता है । परकालसूरि से कहा हुआ यह सब श्रीवैष्णवों को बराबर है ।

नहीं दीखता है यह बात कैसे कहते हैं, 'कहे तो विरोध, एक नायक, परिगृहीत भार्या' इत्यादि इन दश कों में शठकोपसूरि को भी संसारियों का दोष दीखा नहीं क्या इस शंका में कहते हैं—भान होना इत्यादि ।

**प्रतीतिश्च निवर्तनार्थम् ॥ ३८१ ॥**
**जानकी राक्षसीनामपराधं स्वामिनो**

---

संसारिणां दोषप्रतीतिस्तादृशदोषेभ्यस्तान्निवर्तयितुमित्यर्थः। 'अभिधानेविरोध' इत्यादौ परांकुशैस्तत्र मनसः प्रवर्तनमसे-व्यसेवादिभ्यस्तान्निवर्तयितुं खलु, तत्सर्वेषां तुल्यमिति भावः।

एवमस्याधिकारिणः संसारिदोषे दृष्टेऽनुसंधानप्रकारः, तद् दोषोऽस्य न भासत इत्यर्थः, भानंचैतदर्थमिति चोक्तम्! एवं कादाचित्कतया भासमानसंसारिदोषस्य स्वदोषत्वेनानुसंधानं तन्निवर्तकत्वमात्रं विना स्वविषयेऽपराधेषु कृतेषु अस्य स्थित्यौचित्यप्रकारमाह— जानकीत्यादिना।

---

**निवर्तनार्थं विज्ञेया प्रतीतिश्च सदा बुधैः ॥ ३८१ ॥**
**स्वगोचरे कृतो दोषो स्वामिने मारुतौ तथा।**

भान होना दूर करने के लिये ॥ ३८१ ॥

संसारियों का दोष दीखना उन दोषों से उन को दूर करने के लिये 'कहे तो विरोध' इत्यादि से शठकोपसूरि भी उन दोषों में मन रखते थे असेव्य सेवादियों से उन को हटाने के लिये, वह सब सूरियों को बराबर है।

तथा च इस अधिकारी के संसारियों के दोष देखने पर अनुसंधान करने का प्रकार, वे दोष उन को पहिले भान ही नहीं होते, भान होने का कारण पहिले कहे हैं इस प्रकार कभी कभी दीखनेवाले संसारियों के दोषों को अपना दोष मान उन को दूर करना इतना ही नहीं अपने विषय में अपराध करने पर यह अधि-करी को कैसा रहना चाहिये उस को कहते हैं— सीताजी इत्यादि।

सीताजी राक्षसियों के दोष को भगवान और

मारुतेश्च नावेदयत्, तथा स्व विषये-
न्यैः कृतमपराधं भागवतविषयेषु
च न निवेदयेत् ॥ ३८२ ॥

---

एकाक्ष्येककर्णीप्रभृतिभिः सप्तशतराक्षसीभिरेकस्मिन् दिवस इव दशमासपर्यंतं तर्जनभर्त्सनं कृत्वा कृतानपराधान् जानकी भगवद्विषयभूतस्वामिनो भागवतविषयमारुतेश्च नावेदयत्तथा स्वविषयेऽन्यैः कृतानपराधान् भगवद्विषये वा भागवतविषये वा विस्मृत्यापि न विज्ञापयेदित्यर्थः । न निवेदयेदिति तेषां हृदये व्रणे जाते पूर्वमेव प्रच्युतानामेतेषामत्यंतं विनाशहेतु स्यादिति विचार्य ।

---

राक्षसीभिर्हि दुष्टाभिर्जानकी न न्यवेदयत् ।
तथा स्वविषयेऽन्यैश्च कृतमागःशतं परम् ।
निवेदयेन्न श्रीनाथे श्रियःपतिजने तथा ॥ ३८२ ॥

हनुमानजी से जैसा नहीं कहीं तैसा अपने
विषय में अन्यकर्तृक अपराधों को भगव-
द्भागवत विषय में नहीं जनाना चाहिये ॥ ३८२ ॥

एकाक्षी एककर्णी प्रभृति सात सौ राक्षसियां एक दिन भी न छोड दश मास तर्जन भर्त्सन करने पर भी उन के दोषों को सीताजी भगवान् श्रीरामजी भागवत श्रीहनुमानजी इन दोनों से जैसा नहीं कही तैसा अपने विषय में अन्यकर्तृक अपराधों को भगवद्भागवतों के विषय में भूल कर भी नहीं कहना । उन के हृदय में दुःख होने पर पहले ही नष्ट हुए लोग और भी अधिक नष्ट होंगे ऐसा समझ नहीं कहना ।

ज्ञापयितुं शक्तोऽपि मुखमनुद्घाट्य
सर्वज्ञविषयाणामप्याच्छादयतीत्युक्तं हि ॥३८३॥

---

इदं किंपुनर्न्यायसिद्धं यथा स्यात्तथेश्वरस्य प्रकारमाह—ज्ञापयितुं शक्त इत्यादिना ।

अग्रत उपायेनागत्येत्युक्तप्रकारेण स्वसौशील्यसौलभ्यादिकं प्रदर्श्य चेतनान् लक्ष्यस्खलनं विनांगीकर्तुमवतीर्य स्वस्य दासा आवश्यका इत्यपेक्षमाणे तेऽनुकूलाः संतो नागच्छंति चेदपि एते यथेच्छं कुर्वंतु वयमेतदर्थमभवामेति तदेव भाग्यमिति तिष्ठति, तदुपरि ते वैमुख्यमकुर्वन्निति तेषामपराधमेकांतस्थितौ लक्ष्म्या अपि न वदतीति 'आवृत्य दासाः' इति गाथायां चेतनकृतानपराधान् स्वहृदयाभिमतानां ज्ञापयितुं प्राप्तः सर्वेश्वरोऽपि

---

ज्ञापने शक्तिमत्वेपि मौनं कृत्वा प्रयत्नतः ।
सर्वज्ञविषयाणां चाच्छादयतीति सूक्तितः ॥ ३८३ ॥

यह जैसा कैमुत्यन्याय सिद्ध हो तैसा ईश्वर के प्रकार को कहते हैं—जनाने योग्य इत्यादि ।

जनाने योग्य स्वामी भी मुंह बंद कर सर्वज्ञों
के विषय में भी छिपाता है ऐसा कहा है ॥ ३८३ ॥

अपने सौशील्य सौलभ्यादियों को दिखा संसारियों को वश करने के लिये आकर अवतार ले अपने दासों को ढूंढने पर भी वे न मिलने से ये कैसा भी करैं हम इन के उपयुक्त होगये ऐसा समझ उन के दोषों को भोग्य मानते हैं उस के बाद उन की विमुखता प्रभृति दोषों को एकांत में लक्ष्मीजी से भी नहीं कहते हैं । यह अर्थ 'परिवृत्त्य दासाः' इस गाथा में चेतनों के दोषों को अपने अभि-

अपराधकर्तृविषये क्षमा कृपा हासः
प्रीतिरुपकारस्मृतिश्च कर्तव्याः ॥ ३८४ ॥

---

स्वमुखमुद्घाट्य न वदति । स्वेनानुक्तावपि ज्ञातुं शक्तसर्वज्ञविषयाणामप्याच्छादयतीत्युक्तं हीत्यर्थः । अनेन तस्मिन्नप्येवमाच्छादयतीत्यस्य वक्तव्यं किमित्यर्थः ।

एवमुद्देश्यविषयेषु ज्ञापनाभावमात्रं नालमपराधकर्तृविषये क्षमादयादयश्च कर्तव्या इत्याह– अपराधकर्तृविषय इत्यादिना ।

क्षमा नाम-- तत्कृतापराधस्य स्वयं प्रतिक्रिया मनस्युद्विग्नता–एतदकरणरूपापराधसहिष्णुत्वम् । कृपा नाम–अस्माभिः क्षमायां कृतायामपि भगवानुचितदंडं कुर्यात् खलु हंतास्य किं कुर्यामिति परदुःखासहिष्णुत्वम् । हासो नाम– अदृष्टविरोधि-

---

क्षमा हासः कृपा प्रीतिरुपकारस्मृतिस्तथा ।
आगस्कर्तृजने कार्या स्वेष्टसाधनतत्परैः ॥३८४॥

मत विषयों से कहने के योग्य सर्वेश्वर भी अपना मुंह नहीं खोलते हैं इतना ही नहीं जानने योग्य सर्वज्ञों के विषय में भी छिपाते हैं ऐसा कहा। इस से सर्वेश्वर के ही छिपाने पर इस चेतन को क्या कहना ।

इस प्रकार उद्देश्य विषयों में नहीं जनाना इतना ही मात्र नहीं दोषियों के ऊपर क्षमा दयादि की भी आवश्यकता है ऐसा कहते हैं– दोषियों के इत्यादि ।

दोषियों के विषय में क्षमा, कृपा, हंसी,
प्रीति और उपकारस्मृति भी चाहिये ॥ ३८४ ॥

क्षमा माने— उनके कृतदोष को प्रतिक्रिया करना, मन में दुःख पाना इत्यादि न करना । कृपा माने— हमारे क्षमा करने पर भी सर्वेश्वर उचित दंड देगा अहो इसमें क्या करना चाहिये ऐसा परदुःखासहिष्णुत्व । हंसी माने— ये लोग

तयैतैः कर्तव्यं किंचिदपि नास्ति खलु पारुष्यादिमुखेन ख्यातिलाभादिदृष्टविरोधाः खल्वेतैः कर्तुं शक्यास्तथा केषुचित्कृतेषु स्ववद्वयमपि अस्मिंश्चपला एतद्धान्या दुःखितमनस्काः क्लिश्याम इति स्थिताः खल्वेतेषां बुद्धिशून्यताप्रकारः कीदृश इति क्रियमाणो हासः । प्रीतिर्नाम– तैः क्रियमाणपरिभवादीनां विषयं शरीरं स्वस्य शत्रुरिति तत्कृतहानिविषयान् दृष्टपदार्थान् स्वस्य प्रतिकूला इति चानुसंधाय स्थितत्वात्स्वशत्रुविषये कैश्चित्परिभवादिषु स्वस्य प्रतिकूलानां निवृत्तौ च क्रियमाणायां यथा प्रीतो भवति तथा तेषु जायमाना प्रीतिः । उपकारस्मृतिर्नाम– अस्माकमस्मद्दोषज्ञानाभावदशायां दोषान् ज्ञापयित्वाऽस्माकमेतस्यां स्थितौ यथाऽऽशा निवर्तेत तथा पीडनानि च कृत्वाऽस्मद्विषय एतैः कीदृश उपकारः कृत इति जायमाना कृतज्ञता । कर्तव्या इत्युक्तिरेतत्सर्वमपराधकृद्विषयेऽस्यावश्यापेक्षितमिति ज्ञापयितुम् ।

---

कितना भी करें तो भी हमारे अदृष्ट का विरोध तो नहीं कर सके परुषवचन द्वारा ख्याति लाभ आदि दृष्ट वस्तुओं में ही विरोध ये लोग कर सके हैं ऐसा कुछ करने पर अपने सदृश हम लोग भी इन ख्याति आदि में चपल हो इनकी हानि से मन में दुःख पाकर शिथिल होयंगे ऐसा समझ ये लोग रहते हैं कैसा अज्ञान है ऐसा समझ हंसना । प्रीति माने— वे लोगों से क्रियमाण परिभवों के विषय अपने शरीर को शत्रु समझना, वह जिन के हानि कारक हैं ऐसे दृष्ट पदार्थों को अपने को प्रतिकूल समझना इससे अपने शत्रु के विषय में किसीके परिभव करने पर अपने प्रतिकूल वस्तुओं को हटाने पर आप संतुष्ट होना चाहिये ऐसा समझ कर प्रीति करना । उपकारस्मृति माने– हमारे दोषों को हम भूले रहने के समय हम को जनाते हैं हमारी आशा इस विषय से जैसे छूटे ऐसे करते हैं– इस प्रकार के उपकार को स्मरण करना ।

एवमनेन प्रकरणेन हितोपदेशसमये विप्रतिपत्तिविशेषाः, तद्रहितमुपदेशः कर्तव्य इति, उपदेशसाक्षात्फलमुपदेष्टुराचार्यत्वसिद्धिप्रकारः, विप्रतिपत्त्योपदेशे उभयोरपि स्वरूपसिद्ध्यभावः, उपदेष्टुराचार्यस्यावश्यापेक्षितगुणद्वयं, साक्षादाचार्यत्वमेतन्मंत्रोपदेष्टुरिति चोक्तम् । अतः सदाचार्यलक्षणं, तदनन्तरं सच्छिष्यलक्षणं, तदुभयोर्वृत्तिविशेषाः, शिष्यस्याचार्यविषये दुष्टं मनो निवर्तितवानिति प्रकारेण यावच्छरीरपातमुपकारस्मृतेः कर्तव्यता, मनसो दोषोयमिति, तत्रोपपादनीयांशे उपपादनं, तत्प्रसंगेऽन्येस्यापेक्षितार्थविशेषाश्च प्रतिपादिताः । अतः पूर्वोक्तद्वयनिष्ठाधिकारिणस्तदुपदेष्ट्राचार्यविषये आवश्यकाः प्रातिपत्यनुवर्तनप्रकारा उक्ताः ।

इति सच्छिष्यलक्षणं समाप्तम् ।

---

तथा च इस प्रकरण से हितोपदेशकरण समय में उलटा समझना, विपरीतबुद्धि छोड कर उपदेश करना. उपदेश का साक्षात् फल, उपदेशक को आचार्यत्व का सिद्धिक्रम, विपरीतबुद्धि से उपदेश करने पर दोनों की स्वरूप सिद्धि नहीं होगी, उपदेष्टा आचार्य को अवश्यापेक्षित गुणद्वय, अमुक मंत्र उपदेश करनेवाले को साक्षात् आचार्यत्व है इत्यादि सदाचार्य लक्षण, तदनंतर सच्छिष्य लक्षण, उन दोनों के आचरण विषय. शिष्य को यावद्देह आचार्य का उपकारस्मृति, मन का दोष उन का उपपादन, उसके प्रसंग में शिष्य का आवश्यक विषय इत्यादि प्रतिपादन करने से पूर्वोक्त द्वयनिष्ठ अधिकारी को तदुपदेष्टृ आचार्य विषय में अवश्य कर्तव्य प्रतिपत्ति अनुवर्तन प्रकार कहे गये ।

इति सच्छिष्य लक्षण समाप्त ।

## अथ भगवन्निर्हेतुकविषयीकारप्रकरणम् ।

अथ स्वदोषानुसंधानं भयहेतुः भगवद्गुणानुसंधानमभयहेतुरित्यारभ्य निवर्त्यज्ञानं भयहेतुः निवर्तकज्ञानमभयहेतुरित्यंतं तस्याधिकारिणोऽनादिकालार्जितकर्मविनाशकारणस्य अद्वेषादिप्राप्तिपर्यंतं मध्यस्थफलानां प्रधानहेतोर्भगवन्निर्हेतुककृपाया वैभव उच्यते ।

संसारिणां दोषः स्वदोष इत्यनुसंधानमारभ्य प्रसक्तानुप्रसक्ततया आगतार्थविशेषाणां प्रतिपादनानंतरं पूर्वस्वदोषस्येत्यादिवाक्येऽस्यानवरतकर्तव्यतयोक्तस्वदोषभगवद्भागवतगुणा-

---

### अथ भगवन्निर्हेतुक विषयीकार प्रकरण ।

अब स्वदोषानुसंधान ऐसा आरम्भ कर निवर्त्यज्ञान भय हेतु निवर्तक ज्ञान अभय हेतु इत्यंत इस अधिकारी को अनादिकाल आर्जित कर्म के विनाश कारण अद्वेष प्रभृति प्राप्ति पर्यंत संपूर्ण फलों का प्रधानहेतु भगवन्निर्हेतुक कृपा वैभव कहा जाता है ।

संसारियों के दोष को अपना दोष समझना प्रभृति प्रसक्तानुप्रसक्ति आये हुये अर्थ विशेषों को प्रतिपादन कर अनंतर स्वदोष इत्यादि वाक्य से इसके अनवरत कर्तव्यतया उक्त स्वदोष और भगवद्भागवत गुणानुसंधानों में भागवतगु-

स्वदोषानुसंधानं भयहेतुः
भगवद्गुणानुसंधानमभयहेतुः ॥ ३८५ ॥

---

नुसंधानेषु भागवतगुणानुसंधानस्य प्रतिपाद्यांशस्यानुपयुक्तत्वात्तद्विहाय तदुपयुक्तस्वदोषभगवद्गुणानुसंधाने अंगीकृत्य तयोर्द्वयोरपि प्रयोजनमेतदित्याह—स्वदोषानुसंधानमित्यादिना।

अनात्मगुणादयस्तन्मूलत्वेनानादिकालमारभ्य सारतयास्थिता अविद्यादयश्च दोषः, एतदनुसंधानमेतेन हेतुना पुनः संसरणागतौ किंकर्तव्यमिति भयस्य हेतुः। भगवद्गुणा नाम—एतद्दोषं दृष्ट्वाऽपरित्यज्यांगीकृत्यैतं क्षंत्वाऽमुमात्मानं चरणौ प्रापयितुमुपयुक्तास्तस्य दयाक्षांत्यादयः, एतदनुसंधानम्— अनादिकालं संसरणहेतुस्वदोषबलदर्शनेन चैवं भवति चेत् किं कर्त-

---

स्वस्य दोषानुसंधानं भयहेतुर्भवेत्सदा।
हरेर्गुणानुसंधानं भयाभावस्य कारणम् ॥ ३८५ ॥

णानुसंधान प्रतिपाद्य अंश के उपयुक्त न होनेसे उसको छोड तदुपयुक्त स्वदोष और भगवद्गुणानुसंधान इन दोनों का प्रयोजन कहते हैं— स्वदोष इत्यादि।

स्वदोषानुसंधान भय हेतु भगवद्गुणानुसंधान अभय हेतु ॥ ३८५ ॥

स्वदोष माने— अनात्मगुण उनका हेतुभूत अनादिकाल के अविद्यादि हैं इनका अनुसन्धान— ये और भी अनुवर्तन कर स्वरूप का नाश करेंगे तो क्या कर्तव्य है ऐसा भय का हेतु होता है। भगवद्गुण माने—इन दोषों को देख उपेक्षा न कर अंगीकार कर इनको क्षमा कर इस आत्मा को चरणारविंदों में मिला लेने के उपयुक्त उनकी क्षांत्यादि गुण। इनका अनुसन्धान अनादिकाल संसारहेतुभूत स्वदोष बल को देख और भी ऐसा ही करेंगे तो क्या होगा

व्यमिति जायमानस्य भयस्य निवृत्तिहेतुरित्यर्थः ।

'दुरंतस्यानादेरपरिहरणीयस्य महतो
निहीनाचारोहं नृपशुरशुभस्यास्पदमपि ।
दयासिंधो बंधो निरवधिकवात्सल्यजलधे
तव स्मारं स्मारं गुणगणमितीच्छामि गतभीः ॥'

इत्युक्तं हि ।

एवमत्र भयाभयहेतवः सकलदोषाः सकलगुणाश्चोक्ताः, तथा पि हानिहेतुः कर्म प्राप्तिहेतुः कृपेति कर्मफलवत् कृपाफलं चानुभाव्यमेवेतिच कर्मकृपे हानिप्राप्त्योर्हेतुत्वेनोक्त्वा भयहेतुः कर्माभयहेतुः कारूण्यमिति निगमनं कृतं,एतेषु सर्वेष्वस्य संसारमोक्षयोः प्रधानहेतुत्वात्तयोरेतावुभावप्यनुगच्छंतोऽन्ये यत्रैतौ वर्तेते तत्र सर्वे स्वत एवागच्छंति, एवं विना तत्प्रकारस्मरणेन भयं स्वप्रकारस्मरणेनाभयं च भवति चेदज्ञतैव फलतीत्याह—

---

इस प्रकार की भय निवृत्ति का हेतु होता है ।

'अंतरहित अनादि अपरिहार्य महत् अशुभ का स्थान निहीनाचारी मैं, हे दयासिंधो हे बंधो हे निरवधिकवात्सल्यजलधे ! आप के गुणगण को स्मरण कर निर्भीक हो कैंकर्य को चाहता हूं' ऐसा कहा है ।

इस प्रकार यहां भयाभयहेतुतया सकल दोष और गुणों को इकठ्ठा करने पर भी हानि का हेतु कर्म फल का हेतु कृपा, कर्मफल के माफक कृपाफल भी अवश्य अनुभाव्य ही है ऐसा कर्म और कृपा को ही हानि और फल का हेतुतया कह भयहेतु कर्म अभयहेतु कारुण्य ऐसा समाप्त करने का कारण चेतन के संसार और मोक्ष का प्रधान हेतु कर्म और कृपा होने से । इन दोनों के पीछे सर्व गुण भी आ जाते हैं । ऐसा न कह परमात्मा के प्रकार को याद कर भय भीत अपने प्रकार को याद कर अभय ऐसा अर्थ करने पर मूर्खता प्रकट

भयाभययोरुभयोरपि व्यत्यासेऽज्ञतैव सिद्धयति ॥

भयाभययोरुभयोरपीत्यादिना ।

पूर्वोक्तप्रकारेण विनानादिकालं स्वस्य परतंत्रमात्मवस्तु कर्मव्याजेन संसारे स्थापितवान् खलु निरंकुशस्वतंत्रः स पुनः संसारयति चेत् किं कर्तव्यमिति तत्स्वभावमनुसंधाय भयं, पूर्ववद्विनास्माकमिदानीमात्मगुणानामुत्पन्नत्वात्प्राप्तौ बाधो नास्तीति स्वस्वभावमनुसंधाय भयनिवृत्तिश्च भवतिचेत् स्वयं स्वस्य विनाशक इति भयकरणस्येश्वरो रक्षक इति भयनिवृत्तेश्च ज्ञातृत्ववेषस्याभावात् अज्ञतैव सिद्धयतीत्यर्थः ।
अज्ञतैव सिद्धयतीत्यमुमर्थं निराकर्तुं दिव्यसूरिपाशुरानादाय प्रत्यवस्थानकर्तॄणां शंकामनुवदति- तर्हीत्यादिना ।

भीत्यभीत्योर्द्वयोर्मध्ये व्यत्यासे सर्वथाऽज्ञता ।
सिध्यत्येव न संदेहो विपरीतार्थधारणात् ॥ ३८६ ॥

होगी ऐसा कहते हैं- भयाभय इत्यादि ।

भयाभय दोनों विपरीत होने पर अज्ञता ही सिद्ध होगी ॥ ३८६ ॥

पूर्वोक्तप्रकार विना अनादिकाल अपने परतन्त्र आतम वस्तु को कर्म के वहाने से संसारी वनानेवाले निरंकुश स्वतंत्र ईश्वर और भी संसारी वना वैगा तो क्या किया जाय ऐसा उनके प्रकार को याद कर डरना, पहिले के माफक नहीं हम में अब आत्मगुण होने से फल अवश्य मिलेगा ऐसा अपने प्रकार को याद कर भयाभाव भी होने पर अज्ञता ही फलित होगी। ऐसा हो तो सूरिलोग भगवान के ऊपर दोष क्यों लगाये ? इस शंका में कहते हैं — ऐसा हो तो इत्यादि ।

तर्हि बाधितुमितः परमपि विचारयासि, नदीकूलस्थ-
वृक्षवद्बिभेमीति गाथानां किं निदानमितिचेत् ॥

---

एवं चेत्तत्वविदग्रेसराणां दिव्यसूरीणां शरीरांतः संचरद्भिः पंचेंद्रियैर्बाधां भोजयित्वा मां त्वत्पादपंकजाप्राप्तिप्रकारेण बाधितुं विचारयसीति दर्शयित्वा नाशयसीति प्रकारेण विषयदर्शने नाशयोग्यं मामंतर्निरंतरं वासकरणादांतरशत्रुभिः पंचेंद्रियैर्बाधां कारयित्वा प्राप्यभोग्यभूतत्वच्चरणौ यथा न प्राप्नुयां तथा शरणागतिकरणानंतरमपि संसारे स्थापयित्वा बाधितुं विचारयसीति मनुष्योत्पत्तिस्थानभूतावटे उत्पादयसि किमिति नदीकूलस्थवृक्षवद्बिभेमीति च मनुष्याणां गर्भस्थाने मम कर्मानु-

---

इतोर्ध्वं बाधितुं तर्हि नदीकूलस्थवृक्षवत् ।
बिभेमीत्यादिसूक्तीनां किं निदानं भवेत्किलं ॥

ऐसा हो तो, दुःख देने को और विचार करते हो, नदी के
तीर के वृक्ष के माफक कांपता हूं. एसा इन गाथाओं
का हेतु क्या ? इस शंका में उत्तर— सबंध का अनुसन्धान ॥ ३८८ ॥

तत्ववेत्ताओं में अग्रसर सूरिलोग भीतर में वास करनेवाले पंचेंद्रियों से पीडित कर मुझ को तुमारे चरणकमल में आश्रयण नहीं करने के प्रकार बाधा करने का विचार करते हो, दिखा कर दुःखी करोगे इन वचनानुसार प्राप्य और भोग्य आप के चरणारविन्दों की प्राप्ति जैसा न हो वैसा शरणागत होने के अनन्तर भी हम को संसार में रख दुःखित करने का विचार करते हो गर्भ में हम को और भी डालोगे समझ नदीतट के वृक्ष के तरह डरता हूं मनुष्यों के गर्भ

बंधानुसंधानम्॥३८८॥
प्रजा वीथ्यां स्खलित्वा मातृपृष्ठे प्रहरति
तथा निरुपाधिकबंधुना शक्तेन निवारणे न

---

गुणमितः परमपि संसारयसि किमिदानीं नष्टमिति भयस्थाने नदीकूले वर्तमानो वृक्ष इव स्वातंत्र्यमनुसंधाय बिभेमीति चोक्तानां गाथानां निदानं किमित्यर्थः ।

तस्या उत्तरमाह—बंधेत्यादिना ।

प्राप्तिहान्युभयमपि तेनैवेति वक्तुं योग्यतया निरुपाधिकरक्षकेण तेन स्वेषां विद्यमानस्य संबंधस्यानुसंधानेनेत्यर्थः ।

बंधानुसंधानेनैवं स्वेनागतो दोषस्तेनागत इति कथमुच्यते इत्यतस्तमर्थं सदृष्टांतमाह—प्रजेत्यादिना ।

---

संबंधस्यानुसंधानं निदानं तत्र मृग्यते ॥ ३८८ ॥
वीथ्यां स्खलित्वा पुत्रो हि मातृपृष्ठे प्रताडयेत् ।
तथा शक्तेन शुद्धेन बन्धुना न निवारिते ।

स्थानों में हमारे कर्मानुगुण और भी संसारी करोगे ऐसा आप के स्वातंत्र्य को स्मरण कर डररहा हूं ऐसा भी शठकोप सूरि और परकालसूरियों के गाथाओं का हेतु क्या ? इस शंका में — बंधानुसंधान माने :— फल, हानि दोनों भी परमात्मा से ऐसा कहने योग्य निरुपाधिक रक्षक सर्वेश्वर के साथ अपने को विद्यमान संबन्ध का अनुसन्धान समझना ।

संबंधानुसंधान से अपने कर्म फल के हेतु परमात्मा कहे जासक्ते हैं क्या ? इस शंका में दृष्टांत पूर्वक समाधान कहते हैं— प्रजा इत्यादि ।

प्रजा रास्ते में ठोकर लगने पर माता की पीठ में जैसा

कूने तथोक्तिरुचिता खलु ॥ ३८९ ॥
प्रजां कूपसमीपान्नापनयति यदि मातर-

---

क्रीडार्थं वीथ्यां प्रधाव्य संचरन्ती प्रजा तत्र स्खलनेन पादवेदनायां रुदन्ती गृह आगत्य स्वस्यै तद्वेदना मातृगतेत्यनुसंधाय तस्याः पृष्ठे प्रहारं करोति तथा किंचिदुपाधिप्रयुक्तत्वाभावात्स्वाज्यबंधविशिष्टः, अस्य चेतनस्य कर्मणः प्रकृतिप्राकृतानां चाविशेषेण स्वाधीनत्वात्कर्मानुगुणं प्रकृतिप्राकृतैरनेनानुभूयमानं निवर्तयितुं शक्तः स दुःखानुभवं दृष्ट्वा न निवारयति चेत्स एतैर्बाधते इत्युक्तिरुचिता खल्वित्यर्थः ।

अनिवारणमात्रमादाय सोऽकरोदिति कथमुच्यत इत्यत आह— प्रजामित्यादि ।

---

तथोक्तिरुचिता ज्ञेया सर्वथा नयकोविदैः ॥ ३८९ ॥
प्रजां कूपसमीपाद्धि नानयेद्धि यदा तदा ।

घूंसा मारती है तैसा निरुपाधिक बंधु समर्थ ईश्वर
के नहीं रोकने पर तैसा कह सक्ते हैं ॥ ३८९ ॥

क्रीडार्थ रास्ते में भागते हुवे खेलनेपर ठोकर लग पांव दुःखनेपर रोते हुवे घर में आकर अपने को यह दुःख माता से हुआ है समझ उस की पीठ में जैसा घूंसा मारता है निरुपाधिक संबंधवाले चेतन के कर्म प्रकृति प्राकृत के मालिक ईश्वर होने से कर्मानुगुण प्रकृति प्राकृतों से होनेवाले दुःख को दूर करने को समर्थ होने पर भी दुःखित कर रक्खा है ऐसा कह सक्ते हैं।

नहीं रोकने मात्र से वह किये हैं ऐसा कह सक्ते हैं क्या? इस शंका में कहते हैं— प्रजा को इत्यादि ।

प्रजा को कूप के किनारे से नहीं हटाने पर

मपातयदिति वदंति खलु ॥ ३९० ॥
अस्यानुमतिः प्राप्तेर्यथा न हेतुस्तथा

---

कूपतीरे तिष्ठंतीं प्रजां दृष्ट्वा माता तदानीमेव प्रधाव्य गत्वा कूपतीरान्नापनयति चेत्प्रजायां कूपे पतितायां माता तदानीमेव गत्वा गृहीतवती चेदियं प्रजा कथं पतति कूपतीरस्थितिमियमनुमत्य स्थिता तेनैवेयमपतत् तस्मादियमेवापातयदिति लोका वदंति खल्वित्यर्थः।

तर्ह्यप्रतिषिद्धमनुमतमिति न्यायेनानिवारणमनुमतिरभूत् तथाच तस्यानुमतिरेव किमस्य हानेर्हेतुरित्यत आह—अस्येत्यादि।

---

इयमपातयदित्थं वै मातरं प्रवदंति च ॥ ३९० ॥
प्राप्तेर्यथा न हेतुः स्यादस्याप्यनुमतिस्तथा।

माता ही ढकेल दी ऐसा कह सक्ते हैं ॥ ३९० ॥

कूप के किनारे बैठा हुआ प्रजा को देख उसी वख्त जा प्रजा को न हटानेपर कूप में प्रजा गिरे तो माता उस वख्त हटाई हो तो यह प्रजा कूप में गिरा होता क्या कूप के किनारे बैठने की अनुमति दी है इसलिये ही कूप में गिरा अतएव वही गिराई है ऐसा लोग कह सक्ते हैं।

ऐसा हो तो 'अप्रतिषिद्धमनुमतम्' इस न्याय से नहीं रोकनी अनुमति होती है तो उसकी अनुमति इस की हानि का हेतु है क्या? इस शंका मे कहते हैं—इस की इत्यादि।

इस की अनुमति जैसा फल का हेतु नहीं तैसा

**तस्यानुमतिर्हानिहेतुर्न भवति ॥ ३९१ ॥**
**द्वयमप्युभयोः स्वरूपम् ॥ ३९२ ॥**

---

रक्ष्यभूतस्यास्य रक्ष्यत्वानुमतिरचिद्व्यावृत्तिवेषरूपत्वाद्भग-वल्लाभस्य यथा हेतुर्न भवति तथा रक्षकस्य तस्य संसारानुम-तिश्च स्वाज्ञारूपशास्त्रमर्यादाजीवनार्थं क्रमेणांगीकुर्यामित्ये-तद्रुचिदर्शनार्थं स्थितिरूपत्वात्तद्लाभस्य हेतुर्न भवतीत्यर्थः।

एतदनुमतिद्वयं च पुनः किं भवतीत्यत आह---द्वयमपी-त्यादि ।

उभयोः स्वरूपमिति--परतंत्रस्वतंत्रयोरुभयोः स्वासाधार-णाकारं इत्यर्थः। परतंत्रस्यास्य स्वरक्ष्यत्वानुमतिः स्वरूपातिरे-कित्वाभावात्स्वरूपं, स्वतंत्रस्य तस्य स्वरक्ष्यवस्तुरक्षणे स्वाज्ञा-

---

तस्यानुमतिका नैव हानेर्हेतुः कदाचन ॥ ३९१ ॥
द्वयमप्युभयोरेतत्स्वरूपं नात्र संशयः ॥ ३९२ ॥

उस की अनुमति हानि का हेतु नहीं होती है ॥ ३९१ ॥

रक्ष्यभूत इस चेतन की रक्ष्यत्वानुमति अचिद्व्यावृत्त आकार होने से भग-वल्लाभ का हेतु जैसा नहीं होती है तैसा रक्षक ईश्वर की संसारानुमति भी स्वाज्ञारूप शास्त्रमर्यादा को जीवित रखने के लिये क्रमेण अंगीकार करेंगे ऐसा इस की रुचि को देखने से उस को हानि का हेतु नहीं होती है।

ये दोनों अनुमति कैसे होती हैं इस शंका में कहते हैं– दोनों इत्यादि ।

दोनों दोनों का स्वरूप है ॥ ३९२ ॥

दोनों का स्वरूप माने:— परतंत्र और स्वतंत्र दोनों के असाधारण आं-कार। परतंत्र इस चेतन की स्वरक्ष्यत्वानुमति स्वरूप से भिन्न न होने से स्व-

हानिहेतुः कर्म, प्राप्तिहेतुः कृपा ॥३९३ ॥
अन्यथोक्तौ हानिहेतुः स्यात् ॥ ३९४ ॥

---

रूपशास्त्रानुगुणनिर्वहणार्था संसारानुमतिः स्वातंत्र्यवेषरूपत्वात् स्वरूपमित्यर्थः ।

तर्हि हानिप्राप्त्योर्हेतुः क इत्यत आह—हानिहेतुरित्यादि ।

अनादिकालं भगवद्विषयाप्राप्तेर्हेतुः पूर्वं कृतमहापापविशिष्ठ इति प्रकारेणानादिकालं संचितमस्य कर्म, एवं प्राप्तिरहितस्य सतस्तद्विषयप्राप्तेर्हेतुः 'निरोधः कः' इति प्रकारेणोभयकूलमप्यतिक्रम्य प्रवहंती भगवत्कृपेत्यर्थः ।

अन्यथा व्यत्यासेनोक्तावनर्थं दर्शयति—अन्यथेत्यादीना ।

---

कर्म हानेर्भवेद्धेतुः प्राप्तिहेतुः कृपा तथा ॥ ३९३ ॥
अन्यथा हानिहेतुः स्याद् व्यत्यस्ते च भयाभये ॥३९४॥

रूप है । स्वतंत्र ईश्वर की स्वरक्ष्य वस्तु के रक्षण में स्वाज्ञारूप शास्त्रानुगुण निर्वाह करने के लिये संसारानुमति स्वातन्त्र्य का आकार होने से स्वरूप होता है ।

ऐसा हो तो हानिलाभों का हेतु क्या ? इस शंका में कहते हैं — हानि का इत्यादि ।

हानि का हेतु कर्म, लाभ का हेतु कृपा ॥ ३९३ ॥

भगवद्विषय का अनादिकाल से अलाभ का हेतु अनादिकाल संचित चेतन का कर्म इस प्रकार का चेतन के उस विषय के लाभ का हेतु कूलंकष बहनेवाली भगवत्कृपा ।

ऐसा न कह उलटा कहने से होनेवाला अनर्थ को कहते हैं— अन्य प्रकार इत्यादि ।

अन्य प्रकार कहने में हानि होगी ॥ ३९४ ॥

**उद्धर्तुं चिंतयंतं प्रत्यपातयदित्युक्तिरनुद्धरणहेतुर्भवति खलु ॥ ३९५ ॥**

---

एवं विना भयाभययोरुभयोर्व्यत्यास इत्यत्रैवालाभहेतुरीश्वरस्वातंत्र्यं लाभहेतुश्चेतनसद्गुण इति हानिलाभयोर्हेत्वोर्व्यत्यासेनोक्तावीश्वरेण हस्तत्यागकरणात् तच्चरणप्राप्तिं विना हानिहेतुः स्यादित्यर्थः । अथवा अन्यथेत्यादि वाक्यस्यालाभहेतुश्चेतनकर्म लाभहेतुरीश्वरकृपेति, अलाभोऽनेन लाभस्तेनेत्युक्तप्रकारेणानंगीकृत्य लाभालाभयोरुभयोर्हेतुरीश्वरस्वातंत्र्यमिति अनादिकालमलाभस्य हेतुरपि स इत्युक्तौ तेन हस्तत्यागात् कदापि तत्प्राप्तिं विना हानेर्हेतुः स्यादित्यर्थः ।

एवमुक्तावीश्वरस्त्यजतीत्यमुमर्थं लौकिकन्यायमुपजीव्य दर्शयति — उद्धर्तुमित्यादिना ।

---

उद्धर्तुं चिंतयंतं तु पुरुषं मामपातयत् ।
इत्युक्तिः सर्वथा तस्यानुद्धारे कारणं मतम् ॥ ३९५ ॥

भयाभय-दोनों को उलटा कहने से जैसा-तैसा हानि का हेतु ईश्वर स्वातंत्र्य लाभ का हेतु चेतन का सद्गुण ऐसा कहनेपर ईश्वर छोड देने से उन की प्राप्ति नहीं होगी, अथवा हानि लाभ दोनों का कारण ईश्वर स्वातंत्र्य अनादिकाल से च्युत होने का कारण भी वही है, ऐसा कहने से ईश्वर छोड देता है कभी उस की प्राप्ति नहीं होगी ।

ऐसा कहनेपर ईश्वर छोडदेता है, इस अर्थ को दृष्टांत पूर्वक कहते हैं-उठाने की इत्यादि ।

उठाने की इच्छा करनेवाले को तुमने गिराया है
ऐसा कहना नहीं उठाने का हेतु होता है ॥ ३९५ ॥

'क्रोधोस्तीति' अनन्तरममुमर्थं स्वयमेवावोचत् खलु ॥

---

अगाधे कूपे स्वकर्मानुगुणमनवधानेन पतितं समीपस्थिते कस्मिंश्चित् कृपावति उद्धर्तुमीहति स्वपतनसमये स आसन्न इत्येतावन्मात्रमादाय स स्वमपातयदिति निश्चित्य अस्मिन्कूपे मां त्वमेवापातय इत्युक्तिरस्माभिरकृतं कार्यमयं वदति इति कोपोत्पत्त्योद्धरणमकृत्वा त्यागे यथा निदानं भवति तथा संसाररूपमहागर्ते पतितं स्वात्मानमुद्धर्तुं चिंतयंतं कृपावन्तमीश्वरं प्रत्येतावत्कालं संसारे मां पातयित्वा स्थापितवान् त्वमेवेत्युक्तिः कोपेन त्यक्त्वा एवमेवातिष्ठत्विति स्थातुं निदानं भवतीत्यर्थः।

एवमुक्तिरीश्वरस्य कोपस्य निदानमित्ययमर्थो लौकिकन्यायमादाय वक्तव्यं किं तत्त्वदर्शी श्रीपरकालसूरिः पूर्वोक्तेरनंतरं स्वयमेवावोचत् खल्वित्याह— क्रोध इत्यादिना ।

---

क्रोधोस्तीति गिरा सम्यगमुमर्थमनंतरम् ।<br>
अवोचद्भगवान् सर्वपारदर्शी परांतकः ॥ ३९६ ॥

अथाह कूप में स्वकर्मानुगुण अनवधान से गिरे हुवे को पास में रहनेवाला एक कृपावान् उठाने की इच्छा करने पर अपने गिरने के वखत वह समीप में रहा इतना मात्र को लेकर वही अपने को गिराया समझ इस कूप में हम को तुमने ही गिराया ऐसा कहे तो हमारे ऊपर विना ही अपराध दोष लगता है, ऐसा विचार कुपित हो जैसा नहीं उठाने का हेतु होता है तैसा अपने कर्म से संसाररूप अथाह गड्ढा में गिरे हुवे अपने को उठाने की इच्छा करनेवाले कृपावान् ईश्वर को इतनाकाल हम को संसार में तुमने ही गिरा रक्खा है ऐसा कहने पर कुपित हो हाथ खींच भोगने दो ऐसा छोडने का हेतु होता है ।

एसा कहना ईश्वर को कोपजनक है इस अर्थ में लौकिक न्याय मात्र नहीं तत्वदर्शी परकाल सूरि के पूर्वोक्त के अनंतर आप ही कहे हैं ऐसा कहते हैं— कोप होनेपर इत्यादि ।

कोप होनेपर इस उक्ति के अनंतर इस अर्थ को आप ही कहे हैं ॥ ३९६ ॥

क्रोधास्तीति ज्ञाने कथमुच्यत इति चेत् ।
कृपार्तिरनन्यगतित्वं च भाषयति ॥ ३९७॥

---

इतः परमपि मनुष्योत्पत्तिस्थानावेट उत्पादयसि किमितीश्वरस्वातंत्र्येण संसारयतीत्युक्तिरियं कर्मानुगुणं संसरतमात्मानं संसाराढुद्धर्तुं कृपिं कुर्वतस्तस्य हृदये कोपस्य निदानं भवतीति विचार्य पूर्वं विज्ञापितवार्तया हृदये कोपोस्तीति प्रथमा वार्ता अनंत्तरमलाभहेतुः स इत्युक्तिर्निग्रहजनकेत्यमुमर्थं पूर्वमेवमुक्तवान् स्वयमेवावोचादित्यर्थः ।

क्रोधोस्तीत्यनंतरं तथापि वदामि इति पूर्वोक्तार्थस्यैव कथनस्य हेतुं प्रश्नोत्तररूपेण प्रकाशयति—क्रोध इत्यादिना ।

---

क्रोधोस्तीति विदन् किंस्विदुच्यते चेदितीर्यते ।
कृपानन्यगती तद्वदार्तिर्भाषयति स्फुटम् ॥ ३९७॥

गर्भ में हम को रक्खोगे ऐसा ईश्वर अपने स्वातंत्र्य से हम को संसारी बनाता है ऐसा कहा हुवा यह अर्थ कर्मानुगुण संसारी होनेवाले आत्मा को संसार से उठाने का यत्न करनेवाले सर्वेश्वर के हृदय में कोप को उत्पादन करेगा ऐसा विचार पूर्व विज्ञापन किया हुआ वचन से परमात्मा कुपित होगा ऐसा कह अनंतर हानि का हेतु उस को बतलाना निग्रहजनक होता है ऐसा इस अर्थ को वही परकाल सूरि कहे हैं ।

कोप होनेपर इस वचन के अनंतर तथापि कहूंगा ऐसा पूर्वोक्त को ही कहने का हेतु प्रश्नोत्तररूप से प्रकाश करते हैं—कोप इत्यादि ।

कोप होगा ऐसा जानकर कैसे कहे हैं इस शंका
में—कृपा, आर्ति, अनन्यगतित्व ये तीनों कहाते हैं ॥ ३९७॥

पूर्वोक्तेनानेनेश्वरहृदयस्य क्रोधोस्तीति ज्ञाने पुनश्च वार्ता संकोचं विनाग्रे कथमुच्यते इति चेत्तस्य क्रोधः स्वसन्निधौ न जीवति यथा तथा परदुःखासहिष्णुत्वरूपा कृपा, क्रोधदर्शनजन्यभयेन तूष्णीं स्थितेः प्रतिबंधकभूतोत्कूला संसारार्तिः, क्रोधेन निष्कासने कृतेपि गत्यंतराभावरूपानन्यगतित्वं च कथने प्रवर्तयतीत्यर्थः। अस्मिन् दशके 'यथाहं प्राप्नुयां तथा कृपां कुरु, तव कृपां विना अन्यं नाध्यवसामि, कैंकर्यरुचिविशिष्टानां त्वं कृपाकरणशीले'ति बहुस्थलेषु तस्य कृपां, 'महामारुताक्रांतनौकाविशिष्टानां मन इवात्यंतं कंपे, सर्पेण सहैकस्मिन् गृहे कृतपरिचयमिवास्वस्थहृदयं व्याकुलं भवति, उभयत्रज्वलदंगारे क्लिश्यती पिपीलिकेव हृदयं क्लिश्यति, प्रवाहमध्ये स्थितगोमायुगणवद्धृदयं कंपते, नदीतीरे वर्धमानवृक्षवद्बिभेमि' इत्यनेकदृष्टांतैः स्वार्त्यनन्यगतित्वे अवोचत् खलु ।

एवमनन्यगतित्वादिसत्त्वेपि तस्य कोपोत्पत्तिहेतवः केचन कथमुच्यंत इत्यत आह—क्रोधे कृतेपीत्यादि ।

---

पूर्वोक्त से ईश्वर कुपित होगा ऐसा जान फिर भी इस वार्ता को निडर हो सामने कैसे कह सक्ते हैं इस शंका में—उन के कोप को नहीं जियानेवाली परदुःखासहिष्णुत्वरूप कृपा, कोप को देख डर मुख न वन्दकरने के हेतु कूलंकष संसार में आर्ति, कुपित हो फेंक देनेपर भी किसी गति का अभावरूप अनन्यगतित्व ये तीनों कहाते हैं ।

ऐसा अनन्यगतित्वादि होनेपर भी उन को कुपित करना युक्त है क्या इस शंका में कहते हैं—कुपित होनेपर भी इत्यादि ।

क्रोधे कृतेपि पादावरोधनयोग्यः कश्चन प्राप्तश्चेत् सर्वं वक्तु शक्यते खलु ॥ ३९८॥
कृपया पर्यपालयत् (आरि-
शिनत्ताल्) अत्यंतकोपेन ॥ ३९९॥

---

क्रोधकालेपि क्रोधविषयैश्चरणावरोधनयोग्यः परमकृपावान् कश्चन प्राप्तश्चेत् यथेच्छं वक्तुं शक्यते खल्वित्यर्थः ।

क्रोधदशायामपि पादावरोधनयोग्यत्वे प्रमाणं दर्शयति— कृपयेत्यादि ।

'स तं निपतितं भूमौ शरण्यः शरणागतम् ।
वधार्हमपि काकुत्स्थः कृपया पर्यपालयत् ॥'

इति अपराधं पूर्णं कृत्वा ब्रह्मास्त्रविषयं अन्यत्रगत्यभावादागत्य चरणयोः पतितं काकं कृपया ररक्षेत्युक्तत्वात्,

---

क्रोधे कृतेपि पादावरोधने शक्तिमान् यदि ।
कश्चित्प्राप्तस्तदा तेन सर्वं वक्तुं हि शक्यते ॥ ३९८॥
वाक्येनात्यन्तकोपेन कृपयापर्यपालयत् ।
इति चोत्तमवाक्येन सोयमर्थो निगद्यते ॥ ३९९॥

कुपित होनेपर भी पांव को बांधे जैसा रहनेवाले
परमकृपालु को प्राप्त होनेपर सब कुछ कहसक्ते हैं ॥ ३९८॥

कुपित होनेपर भी पांव पकडने योग्य प्रकार का प्रमाण दिखाते हैं— कृपया इत्यादि ।

कृपा से परिपालन किये, अत्यंत कोप से ॥ ३९९॥

भूमि में गिरा हुआ शरणागत बधयोग्य काकासुर को रक्षक श्रीरामजी कृपा से परिपालन किये, पूर्ण अपराध कर ब्रह्मास्त्र का लक्ष्य हो वाह्यगति अभाव होने पर चरण में गिरा हुआ काक को कृपा से रक्षा किये हैं । अतिदुःख से प्रस ।

'दूरीकरणहेतुना कोपेन प्रसवित्र्यां मातरि दूरीकुर्वंत्यामपि पुनश्च तस्या मातुः कृपामेव स्वीकृत्य पादौ गृहीत्वा रुदन् शिशुरिव स्थितोऽहं' पुत्रोत्पत्त्यर्थं प्रयासेन वरमनुष्ठाय प्रसवित्र्यां मातरि एतद्दुश्चेष्टितं दृष्ट्वा दूरीकरणहेतुक्रोधविशिष्टायां समीपे यथा नागच्छेत्तथा दूरीकुर्वंत्यां गत्यंतराभावेन कोपेन दूरीकुर्वंत्या मुखे कृपामेव विचिंत्य रोदनेन चरणग्रहीतृशिशुवन्मदपराधं दृष्ट्वा समीपे यथा नागच्छेयं तथा भवति दूरीकर्तुं विचारयत्यपि चरणव्यतिरिक्तगत्यंतररहितोहमिति श्रीकुलशेखरैरुक्तत्वात्, क्रोधेकृतेपि पादावरोधनयोग्य इति सिद्धमित्यर्थः। एवं दिव्यसूरिभिरुक्तमर्थं–

> 'निरासकस्यापि न तावदुत्सहे
> महेश हातुं तव पादपङ्कजम्।
> रुषा निरस्तोऽपि शिशुस्तनंधयो
> न जातु मातुश्चरणौ जिहासति ॥'

---

करनेवाली माता इस का दुष्ट कृत्य को देख अपने से इस को अलग करने के लिये लात मार निकाल देनेपर भी बाहर किसी के रक्षकत्वाभाव से कुपित माता की कृपा को ही स्मरण कर रो पांव पकडनेवाले शिशु के जैसे मेरे अपराध को देख आप के समीप में न आवे जैसा आप हटाने का विचार करनेपर भी आप के चरण बिना दूसरा रक्षक नहीं ऐसा श्रीकुलशेखरसूरि कहे हैं इस लिये कुपित होने पर भी पांव बांधने योग्य रहते हैं यह अर्थ सिद्ध हुआ। इस अर्थ को यामुनाचार्य स्वामी 'आप छोड देनेपर भी हम आप के चरणों को नहीं छोड सक्ते हैं कोप से निकालेजावे पर भी स्तन्यपायी शिशु माता के चरणों को नहीं छोडता है ऐसा कहे हैं।'

इति यामुनाचार्योऽवोचत् ।

एवमेतावता भयाभययोरुभयोर्व्यत्यासेऽज्ञतैव सिध्यतीत्येतदुपर्यागतशंकापरिहारौ कृतौ ।

इति तृतीयप्रकरणं समाप्तम् ।

तथा च यहां तक भयाभय दोनों विपरीत होनेपर अज्ञता ही सिद्ध होगी इस अर्थ के ऊपर आये हुये शंका और परिहार किये गये हैं ।

इति तृतीयप्रकरण समाप्त ।



त्रिपाद्विभूतौ परिपूर्णानुभवे वर्तमानेपि तस्याकि-ञ्चित्करत्वेन देशांतरस्थपुत्रविषये पितृहृदयवत्सं-सारिचेतनविषये हृदयस्य स्थित्या तद्विश्लेषासहि-

---

## अथ चतुर्थं प्रकरणम् ।

अथ भगवद्गुणानुसंधानमभयहेतुरिति पूर्वोक्तं विशदीकर्तु-मीश्वरेणैतदात्मोज्जीवनार्थं क्रियमाणकृषिपरंपरामाह- त्रिपा-द्विभूतावित्यादिना ।

'त्रिपादस्यामृतं दिवि' इत्युक्तत्वान्नित्यविभूतिस्त्रिपाद्विभूतिरि-

---

त्रिपाद्विभूतौ पूर्णानुभवसत्त्वेपि तदकिंचित्कर इति हि ।
देशांतरस्थसूनौ जनकहृदयवत्संसारिषु च ।
हृदयास्थित्या तेषां विश्लेषासहनेन तैर्मिलित्वा तु ।

### अथ चतुर्थ प्रकरण ।

अव भगवद्गुणानुसंधान अभयहेतु इस पूर्वोक्त अर्थ को विवरण करने के लिये ईश्वर से इस आत्मा के उज्जीवन के वास्ते क्रियमाण कृपिपरंपरा को कहते हैं- त्रिपाद्विभूति में इत्यादि ।

त्रिपाद्विभूति में परिपूर्णानुभव चलनेपर भी वह अकिंचित्कर हो देशांतर-गत पुत्र के विषय में जैसा पिता का मन होता है तैसा संसारियों के विषय में मन

---

आकाश में नाश रहित स्थान तीन पाद है ऐसा कहने से नित्यविभूति को

ष्णुतया तैः सह मिलित्वा विनियोक्तुं करणक-
लेवराणि दत्वा तैर्व्यापारान् कर्तुमुपयुक्तान्
शक्तिविशेषांश्च दत्वा चक्षुर्दृश्यतया स्थितौ शप-
थं कृत्वा निवारयेयुरिति नेत्राविषयतया स्थितः
स्वपंतीं प्रजां माता पृष्ठे आलिंगंती यथा शेते

---

त्युच्यते । अस्यास्त्रिपात्त्वमनेकप्रकारं निर्वाह्यते तथाहि –
'पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि'
इत्यस्यां विभूतौ सर्वाणि भूतानि अस्य चतुर्थांश इति प्रका-
रेणाल्पो' वर्तते । परमाकाशे तस्य नित्यविभूतिस्त्रिपादिति
प्रकारेण त्र्यंशको वर्तते । एद्द्विभूतिद्वयविषयपादशब्दस्त्रि-
पाच्छब्दश्चाल्पत्वमहत्वयोरुपलक्षणे न तु परिच्छेदपरौ ।

---

सहभोक्तुं करणादीन् तैश्च कर्तुं शक्तिमददाच्च ;
दृग्दृश्यतया स्थित्यां हि शपथं विधाय निवारयेयुरिति तु ।
नेत्राविषयतया सन् पृष्ठे सुप्तप्रजां जननी ।

चल कर इन के विश्लेष में असह्य हो इन के साथ मिल विनियोग करने के लिये करण कलेवरों को दे उन को ले कार्य करने के योग्य शक्तिविशेषों को प्रदान कर नेत्रगोचर होनेपर शपथ कर हटावेंगे समझ नेत्र का अविषय हो सोनेवाले शिशु

---

त्रिपाद्विभूति कहते हैं इस का त्रिपादत्व बहुप्रकार से वर्णन किया जाता है तथा हि इस विभूति में संपूर्ण भूत परमात्मा का एक पाद कहने योग्य अल्प है परमाकाश में उस की नित्यविभूति त्रिपाद कहने योग्य तिगुना है। इस विभूतिद्वयविषयक यह पाद शब्द अल्पत्व महत्व को दिखाता है इतना ही विना परिच्छेदपर

तथा स्वावगतसंबंधहेतुना त्यक्तुमसमर्थोऽत
एवालिंग्यानुभवादपि स्वीयत्वख्यापनानुवृत्तिरेव
समीचीनेति सत्तां रक्षन् समदुःखी एतेष्वसत्क-

---

लीलाविभूतावंडान्येवासंख्यातानि खलु वर्तंत इति दीपप्रकाशे यतिभिरुक्तत्वात् अस्यां विभूतौ कार्यरूपप्रदेशापेक्षया परमाकाशे नित्यविभूतिस्त्रिगुणा वर्तते इति वा, अथवा दिवीत्यप्राकृतं स्थानमुच्यते। त्रिपात्त्वं चाप्राकृतैर्भोग्यभोगोपकरणभोगस्थानविशेषैर्वा भूषणास्त्रादिरूपेण जगदंतर्गतवस्त्वभिमानिभिर्नित्यैर्भगवदनुभवमात्रपरैश्च नित्यसिद्धैर्मुक्तैश्चात्मभिर्वा संभ-

---

आलिंगंती यथा हि शेते तथा नियतस्वसम्बंधतः।
त्यक्तुमसमर्थोन्तरे च आलिंगन्ननुभवतोपि हि।
स्वीयत्वख्यापनस्य अनुवृत्तिरेव समीचीनेति वै।
चेतनसत्तां रक्षन् समक्लेशी तेषु कुकर्मसु।

को माता आलिङ्गन कर जैसा सोती है तैसा अपना जाना हुआ संबंधरूप हेतु से न छोड भीतर में आलिंगन कर अनुभव की अपेक्षा अनुवर्तन करना अच्छा समझ त्याग ने कर सत्ता की रक्षा करते हुये इन के दुःख में अपना दुःखी हो

---

नहीं लीलाविभूति में अंडों की संख्या नहीं ऐसा दीपप्रकाशिक नाम ग्रंथ में यति कहे हैं यद्वा इस विभूति में कार्यरूप प्रदेश की अपेक्षा परमाकाश में नित्यविभूति तीन गुना है ऐसा भी कह सक्ते हैं अथवा दिवि नाम अप्राकृत स्थान को कहते हैं त्रिपादत्व नाम अप्राकृत भोग्य भोगोपकरण भोगस्थान विशेषों से या भूषण अस्त्रादिरूप से जगत् अंतर्गत वस्त्वभिमानी नित्य भगवदनुभव मात्र पर नित्य सिद्ध मुक्तरूप आत्माओं से हो सक्ता है ऐसा श्रुतप्रकाशिका में व्यासभट्टार्य कहे हैं तथा

मेसु प्रवर्तमानेषु निवर्तनाक्षमोऽनुमतिं कुर्वन्नु-

---

वतीति श्रुतप्रकाशिकायां भट्टार्य्योक्तप्रकारेणाप्राकृतभोग्यवि-
शेषभोगोपकरणभोगस्थानविशेषरूपांशत्रययुक्तत्वाद्वस्त्रभूषणा-
ध्यायप्रकारेण भूषणास्त्रादिरूपेण जगदंतर्गतवस्त्वभिमानिनि-
त्याः केवलभगवदनुभवपरा नित्या मुक्ताश्चेत्येवमंशत्रयविशि-
ष्टात्मविशिष्टत्वाद्वा त्रिपात्त्वमिति । एवं लीलाविभूतेरत्यंत-
व्यावृत्तत्वान्निरतिशयसुखावहायां नित्यविभूतौ । परिपूर्णानुभवे
वर्तमाने—नित्यमुक्तैः सह स्थित्वैकैकांशे निरतिशयानंदजन-
कानां स्वरूपरूपगुणविभूतीनां सर्वदा युगपदेवानुभवरूपपरि-
पूर्णानुभवेऽविच्छिन्नतया वर्तमान इत्यर्थः । तस्याकिंचित्कर-
त्वेन---तदा शरीरे प्रवेश्य दूरीकरणतन्नशीभवनप्रयोजकस्य त-
स्यानुभवस्य शरीरे किंचिदपि भानाभावादित्यर्थः । देशांतर-
स्थपुत्रविषये पितृहृदयवत्संसारिचेतनविषये हृदयस्य स्थित्या-

---

तिष्ठत्सु निवर्तयितुमबलोऽनुमतिं विदधदुदासीनस्तु ।

इन के असत्कर्मों में प्रवृत्त होनेपर हट ने को असमर्थ हो अनुमति दान कर उदा-

च इस प्रकार लीलाविभूति से अत्यंत विलक्षण होने के कारण निरतिशय सुखावह
नित्यविभूति में । परिपूर्णानुभव होते हुये—नित्यमुक्तों के साथ मिल निरतिशया-
नन्द जनक स्वरूप रूप गुण विभूति सब को एक ही काल में अनुभव करनारूप
परिपूर्णानुभव अपरिच्छिन्न होते हुवे । वह अकिंचित्कर हो—प्रतिक्षण नवीन
रसानुभव भी अकिंचित्कर हो । देशांतर्गत इत्यादि—अनेक पुत्रों में से एक पुत्र
स्वकर्मानुगुण देशांतर जानेपर अन्य पुत्रों के साथ मिल कर अनुभव करते हुए भी
इन के तरह वह भी मिल कर अनुभव करने योग्य होनेपर भी इस को छोड कहीं

दासीनवत्स्थित्वा व्यावर्तयितुमवकाशं दृष्ट्वा

---

अनेकपुत्राणां मध्य एकस्मिन् स्वकर्मानुगुणं देशांतरं गतेऽन्येषु पुत्रेषु स्वस्मिंश्च स्थित्वोज्जीवत्सु एत इव सोऽपि सह स्थित्वा वर्द्धितुमुत्पन्न एतस्मात्प्रच्युतस्तिष्ठतीति देशांतरगततत्पुत्रविषये यथा पितृहृदयं तिष्ठति तथा नित्यमुक्तेषु स्वस्मिंश्च मिलित्वा वर्द्धमानेष्वेतद्भोगे प्राप्तौ सत्यामप्ययं चेतनोऽस्माकं च्युतो वर्तत इति देशांतरस्थसंसारिविषये हृदयस्य साक्षाद्गमनेनेत्यर्थः । तद्विश्लेषासहिष्णुतया—संहृतिसमये प्राप्तौ सत्यां नित्यविभूतावेतत्संसारिचेतनात् विश्लिष्य स्वस्य स्थितिसमये पुत्रपौत्रादिभिः सहजीवितवंतस्तद्विश्लेषेण यथैकाकिनो भवंति तथा 'स एकाकी न रमेत' इत्युक्तप्रकारेणैतद्दुःखासहिष्णुतयेत्यर्थः ।

संहततया स्थितिदशायामप्येतान् शरीरतया स्वी-

---

तिष्ठन् व्यावर्तयितुं ह्यवकशमवलोक्य पुण्यमिति ।

सीनवत् रह लौटाने का अवकाश देख पुण्य कहने योग्य एक पाप को भी न देख

पडा है ऐसा देशांतरगत उस पुत्र के विषय में पिता का हृदय जैसा लगा रहता है तैसा नित्यमुक्त और आप मिल कर सुख भोगने पर भी इस भोग में प्राप्ति होते हुवे ये चेतन इस को छोड हमे से च्युत रहते हैं अहो ऐसा देशांतरस्थ संसारियों के विषय में मन जाकर । इन को इत्यादि—संहार समय में प्राप्ति होने पर नित्य विभूति में इन संसारी चेतनों को छोड आप रहने के समय जैसा पुत्र पौत्रादियों के साथ रहनेवाले उन को छोड अकेला समझ दुःख पाता है तैसा उस दुःख को न सह ।

संहृत दशा में भी इन को शरीरतया परिग्रह कर आप शरीरी होते हुवे भी

पुण्यमिति नामकरणार्हमेकं पापमप्यदृष्ट्वा मु-

---

कृत्य स्वस्मिन् शरीरितया वर्तमानेऽपि तादृशस्थितिमपि संश्ले-षतयाऽननुसंधाय करणकलेवरसहिततयाऽवस्थानकालेऽन्तरात्म-तया प्रवृत्तिनिर्वहणपूर्वकं स्थितिप्रभृतिकं एतत्संश्लेषः, एतेषु करणकलेवरविधुरेष्वचिद्विशेषितेषु स्थितेषु स्वस्य नित्यविभू-तौ स्थितिरेतद्विश्लेष इत्यनुसंधाय वर्तमानत्वात् तद्विश्लेषेत्या-दिकमवोचत । तैः सह मिलित्वा विनियोक्तुं करणकलेवराणि दत्वा---अंतरात्मतयाऽर्चावतारैश्चैतैर्मिलित्वा विनियोक्तुमुपयु-क्तानि 'विचित्रा देहसम्पत्ति'रित्यादिप्रकारेण स्वचरणकमल-समाश्रयणोपकरणानि करणकलेवराणि दयमानमनाः सन् दत्वेत्यर्थः । तैर्व्यापारं कर्तुमुपयुक्तान् शक्तिविशेषांश्च दत्वा---तादृशकरणकलेवरैर्ज्ञातव्यं ज्ञात्वा कर्तव्यं कृत्वा त्याज्यं त्यक्त्वा

---

ख्यापनयोग्यमेकमपि पापमनुपलभ्य मुखे वेधित्वाऽपि ।

उस संश्लेष को एक चीज न समझ करण कलेवर सहित रहने के समय उन के अंतरात्मतया प्रवृत्ति निवृत्तियों को निर्वाह करना प्रभृति को इन के साथ संश्लेष समझ ये करण कलेवर विधुर हो अचित् के समान रहने पर आप नित्य-विभूति में रहना इन का विश्लेष समझने से इन के विश्लेष में ऐसा कहते हैं । इन के साथ इत्यादि---अंतरात्मता से अवतार और अर्चावतारों से भी इन के साथ मिल कर विनियोग करने के लिये स्वचरणकमल समाश्रयण के उपकरणभूत करणकलेवरों को दयमान मनवाला हो देकर । उन को ले इत्यादि---उन करण कलेवरों को लेकर जानने योग्य को जान करने योग्य को कर छोडने योग्य को

खे वेधित्वा दृष्ट्वकेनापि मार्गेण द्रव्यादर्शनेऽप्रा-

---

एवमुपकर्तुमुचितान् चिच्छक्तिप्रवृत्तिनिवृत्तिरूपशक्तिविशेषान् दत्त्वेत्यर्थः । चक्षुर्दृश्यतया स्थितौ शपथं कृत्वा निवारयेयुरिति नेत्राविषयतया स्थितः—एतत्सर्वं कृत्वापि स्वामित्वप्राप्तिर्यथा भासेत तथैतेषां नेत्रयोर्विषयतया स्थितौ त्वं मे इत्युक्तौ तद्-सहतयाऽहं मे इति कथनेन स्वतंत्रत्वात् अस्माकमग्रतस्त्वं क-दापि न तिष्ठेति लक्ष्मीशपथं कृत्वा निषेधं कुर्युरिति विचार्य 'न चक्षुषा पश्यति कश्चनैनं, नेत्रयोर्नास्ति' इत्युक्तप्रकारेण स-दैतेषां नेत्राविषयतया स्थित इत्यर्थः । स्वपंतीं प्रजां माता पृष्ठे आलिंगंती यथा शेते तथा स्वभावगतसंबंधहेतुना त्यक्तु-मसमर्थांतरालिंगन्—स्वं मातरं चाविदित्वा स्वपंतीं प्रजां व-त्सला माता स्वावगतरक्ष्यरक्षकसम्बन्धहेतुना पृष्ठे आलिंगंती

---

अवलोकिते केनापि च्छिद्रेण द्रव्यादर्शने च ।

ललाट को वेध कर देखने पर किसी प्रकार का आर्द्रता को न देखने से हाथ से

---

छोड संचार करने के लिये चित्शक्ति प्रवृत्तिशक्ति निवृत्तिशक्तिरूप शक्तिविशेषों को देकर । नेत्र के इत्यादि:—इतनाकर स्वामित्वप्राप्ति भासमान हो जैसा इन के नेत्रों के गोचर होनेपर 'तुम हमारे' ऐसा कहनेपर न सह 'मैं मेरा' ऐसा कहनेवाले स्वतंत्र होनेसे हमारे सामने तुम कभी नहीं रहसक्ते हो ऐसा शपथ कर रोकेंगे समझ इन के नेत्र के भी गोचर न हो ।

सोती हुई प्रजा को इत्यादि—अपने को और माता को भी न जान कर पडी सोती हुई प्रजा को वत्सल माता अपने ज्ञात रक्ष्यरक्षकभाव संबंध द्वारा

ण्यामिति नेत्रजलेन निवर्तते । स्वस्य किञ्चिद्-

---

यथा शेते तथाऽनादिमायया सुप्तान् स्वपरस्वरूपयोरेकमप्य-जानत एतान् चेतनान् शेषिणा स्वेनावगत रक्ष्यरक्षकसंबंध-हेतुना त्यक्तुमशक्तो य आत्मनि तिष्ठन्नित्यादिप्रकारेणात्मतयै-तान् स्पृशन्नित्यर्थः । अनुभवादपि स्वीयत्वख्यापनानुवृत्तिरेव समीचीनेति सत्तां रक्षन्--कस्यचिद्वस्तु कस्मिंश्चिदपहृत्यानुभ-वति वस्तुस्वाम्यपहृतवस्तुमान् स्वीयमिति यथा ज्ञायते तथा बहुकालं स्वीयत्वख्यापनं कुरुते चेत् पश्चाद् व्यवहारे विजय-हेतुर्भवति खलु तथैवानुभवविभवादित्युक्ताच्चेतनानुभवात् अस्मदीयत्वख्यापनायैकरीत्यानुवृत्तिः प्रबलेति विचार्यांतरा-त्मतयाऽवस्थितः स्वयमेतान् कदाप्यत्यजन् धारकः सन् धार्य-भूतानामेतेषां सत्तां नाशं विना रक्षन्नित्यर्थः । समदुःखी--

---

अप्राप्यमिति नेत्राश्रुजलेन निवर्तते कारुणिकः सः ।

छूट गया समझ आंसुओं के साथ लौटते हैं। आप किंचित् अवकाश पानेपर हमारे

जैसा आलिंगन कर पडी रहती है तैसा अनादिमाया से सुप्त स्वस्वरूप परस्वरूप आदि किसी को न जान पडे हुवे इन चेतनों को आप से जाना हुआ रक्ष्यरक्षक संबंध ही के कारण छोड न सक अंतरात्मतया इन को स्पर्श करते हुवे । अनुभव की अपेक्षा इत्यादि--किसी की चीज को किसी के अपहार करनेपर मालिक अपना चीज है जैसा भासमान हो तैसा अनुवर्तमान किये तो व्यवहार में विजय का हेतु होता है ऐसा ही चेतनों के अनुभव की अपेक्षा हमारा करके जैसा भास-मान हो तैसा बराबर अनुवर्तन करनेपर हमारी जीत होगी समझ अंतरात्मतया स्थित आप इन को एक समय भी न छोड धारक हो धार्यभूत इन की सत्ता की

वकाशलाभे मद्ग्राममवोचः स्वं नामावोचः

---

एवं सत्ताधारकतया स्वर्गनरकप्रवेशादिसर्वावस्थायामप्येतेषां सहायभूत इत्यर्थः । समदुःखी— अस्य दुःखं स्वस्य दुःखमिति वर्तमानः । एतेष्वसत्कर्मसु प्रवर्तमानेषु निवर्तनाक्षमोऽनुमतिदानं कुर्वन्नुदासीनवत् स्थित्वा व्यावर्तयितुमवकाशं दृष्ट्वा ।

'आदावीश्वरदत्तयैव पुरुषः स्वातंत्र्यशक्त्या स्वयं ।
तत्तज्ज्ञानचिकीर्षणप्रयतनान्युत्पादयन्वर्तते ॥'

इत्युक्तप्रकारेणादौ स्वेन दत्तया ज्ञातृत्वरूपस्वातंत्र्यशक्त्या स्वरुच्यनुगुणं प्रवृत्तिं कर्तुं योग्येष्वेतेषु चेतनेषु दुर्वासनाबलेन पापकर्मसु प्रवर्तमानेषु अंतर्यामिणः स्वस्येच्छायां व्यावर्तनस्य शक्यत्वेपि तथा करणे स्वाज्ञारूपशास्त्रविनियोगभंगः स्यात् सर्वमुक्तिप्रसंगश्च स्यादिति व्यावर्तयितुमक्षमोऽनुमतिदानं कृत्वोदासीनत्वं विना स्थितोऽप्येतेषां किं वा स्यात्समीचीनमे-

---

किंचिद्वकाशमिलने मदीयनाम ग्राममवोचः ।

रक्षाकर । संग रह—एवं सत्ताधारकतया स्वर्ग नरक प्रवेशादि सर्वावस्थाओं में भी इन के सहाय हो । इन के दुःख में आप दुःखी हो इन के असत्कर्मों में इत्यादि—आदि में ईश्वर से दिया हुआ ज्ञातृत्वरूप स्वातंत्र्य शक्ति से स्व रुच्यनुगुण प्रवृत्ति में लगने योग्य इन चेतन दुर्वासनावल से पापकर्मों में प्रवृत्त होने पर अंतर्यामी आप चाहै तो लौटा सक्ते हैं तो भी ऐसा करने पर स्वाज्ञारूप शास्त्र का विनियोग नष्ट होगा सर्वमुक्तिप्रसंग आवेगा ऐसा समझ लौटाने को असमर्थ हो अनुमति दान कर उदासीन न होने पर भी ये लोग कैसा भी भोगें तो हमें क्या

मद्दासानरक्षस्तच्छ्रमंन्यवतर्यस्तेषां स्थातुं छाया-

वेति वर्तमानोदासीनवत् स्थित्वा। तस्मादेतेषां व्यावर्तनार्थं कथनार्हसुकृतरूपावकाशं दृष्ट्वेत्यर्थः।

पुण्यमिति नामकरणार्हमेकं पपमप्यदृष्ट्वा— एवमवकाशान्वेषणसमये शास्त्रमर्यादानुगुणं वा स्वावगततयाऽऽरोपयित्वाचेतानसत्कर्मभ्यो व्यावर्तयितुमवकाशरूपैकपुण्यस्यादर्शनमात्रं विना तादृशासत्कर्मसु पुण्यमिति नाम कृत्वा स्वीकारार्हमेकं पापमप्यदृष्ट्वेत्यर्थः। पुण्यमिति नामकरणार्हं पापं नाम—परहिंसां कृत्वा संचरणसमये भगवद्भागवतविरोधिनो यादृच्छिकं हिंसनं विषयप्रावण्येन दासीरनुगम्य बहुवारं मंदिरेषु प्रवेशनिर्गमनं, सस्यं जग्ध्वा गच्छंतीं गामनुगम्य सा कंचिन्मंदिरं प्रदक्षिणी-

---

मद्दासानरक्षो हि तच्छ्रमं न्यवर्तयस्तेषां स्थातुम्।

ग्राम का नाम कहा हमारा नाम लिया हमारे दासों की रक्षा किया उन की थका-

---

ऐसा कहनेवाले उदासीन के तरह रह उन को लौटाने के योग्य सामीचीन्यरूप अवकाश को देख।

पुण्य करके नाम रखने योग्य इत्यादि—इस प्रकार अवकाश देखते रहने पर शास्त्रमर्यादानुगुण या अपने ज्ञानपूर्वक आरोपण कर इन चेतनों को सत्कर्मों से लौटाने को अवकाशरूप एक सत्कर्म को न देखने मात्र विना उन असत्कर्मों में सत्कहने योग्य किसी एक असत्कर्म को भी नहीं देख। पुण्य कहने योग्य पाप माने—परहिंसा करते हुवे संचार करनेपर भी भगवद्भागवत विरोधियों को यदृच्छा से हिंसा करना। विषय प्रवण हो भगवद्दासियों के पीछे पड वहुवार मंदिरों में प्रवेश कर वाहर निकलना। खेती को खायी हुई गौ के पीछे मारने दौडने पर

मदा इतिवत्कानिचिदारोप्यांके आस्रं निक्षिप्य

कृत्य गच्छति चेत्ताडनाग्रहेण स्वयमपि प्रदक्षिणकरणं, निंदार्थं श्रीनाम्न उच्चारणमेतत्प्रभृतिकम् । मुखे वेधित्वा दृष्टैकेनापि मार्गेण द्रव्यादर्शनेऽप्राप्यमिति नेत्रजलेन निवर्तते—सर्पदष्टान्मृतकल्पान्मंत्रादिभिरुत्थापयितुं प्राणस्थितिपरीक्षार्थं मुखे वेधित्वा दृष्टे एकप्रकारमपि रक्तस्पर्शादर्शनेऽयं विषयोऽस्माकं हस्तगतो न भवेदिति बन्धव एतान् यथा त्यजंति तथा पुण्यादर्शनमात्रेणापरित्यज्य पुण्यमिति नामकरणार्हमेकं पापमस्तिकिमित्यन्वेषणे कृतेऽपि एकप्रकारेणापि तेष्वार्द्रताऽदर्शनेऽयं विषयोऽस्माकं प्राप्तियोग्यो न भवत्ययं च्युत इति नेत्राश्रुणा निवर्तत इत्यर्थः । अथवा पुण्यमिति नामकरणार्हमेकं पापमिति— 'श्येनेनाभिचरन् यजेत' इत्यास्तिक्यजनकतया हि

छायामदा हि इतिवत् कानिचिदारोप्यांके स्वयम् ।

वट को दूर किया उन के रहने को स्थान दिया इस तरह सुकृतों का आरोपण

वह एक मंदिर को प्रदक्षिणकिये तो उस के मारने के आग्रह से आप भी मंदिर के चारों तरफ भागना। निंदार्थ श्रीनामों को कहना। ललाट को वेधकर इत्यादि—सर्पदष्ट मृतप्राय मनुष्यों को मंत्रादियों से जगाने को प्राणस्थिति की परीक्षा करने के लिये ललाट को वेध कर देखनेपर भी किसी प्रकार की रक्त की आर्द्रता को न देख—यह चेतन अभी हमारे हाथ में लगेगा ऐसा न रह दुःख के साथ हाथ खींचनेवाले बंधुओं के तरह पुण्य न देखने मात्र से न छोड पुण्य करके नाम रखने योग्य एक पाप भी है क्या ऐसा विचार देखनेपर भी किसी प्रकार इन के पास आर्द्रता को न देख यह हम को नहीं मिलैगा इस को हम गमाये हैं ऐसा रोकर आंसुओं के साथ लौटना। यद्वा आस्तिक्य जनकतया विहित होने से श्येनयाग

सुवर्णवणिक् स्वर्णं घर्षणोपले विघृष्य मधूच्छि-

---

विहितत्वात्पुण्यमिति नामकरणार्हं परहिंसारूपत्वात्पापं श्येन-
विध्यनुष्ठानम् । अंगीकारोपयुक्तपुण्यदर्शनाभावमात्रं किंना शा-
स्त्रमर्यादयोपरि वानुष्ठानयोग्यशास्त्रास्तिक्यस्योपयुक्तस्यापि ते-
ष्वदर्शनेनेत्यर्थः । तदा सुखे वेधितस्य दृष्ट्वेत्यादिना ज्ञातसुकृत-
योग्यताभावादज्ञातसुकृतं वास्ति किमित्यन्विष्य तस्याप्यभा-
वादेकमार्गेणाप्यंगीकारयोग्यताऽभावेन दुःखेन निवर्तत इत्यु-
च्यते । स्वस्य किंचिदवकाशलाभे— एवं पुनर्निवृत्तिं विनैत-
दुज्जीवने विद्यमानचापल्येन पुनश्चांगीकर्तुमवकाशं दृष्ट्वा संच-
रतः स्वस्य किंचिदवकाशलाभ इत्यर्थः । मद्ग्राममवोच इत्या-
दि इतिवक्तारं किंचिदारोप्य— तद्ग्राम एतद्ग्राम इत्यनेकेषां ग्रामाणां
कथनसमये श्रीरंगवेंकटाद्रिप्रभृतिस्वाभिमतग्रामेष्वेकस्मिन्नुक्ते
तावन्मात्रमवलंब्य मम ग्राममवद इति, अयं स इति वदन्

---

निक्षिप्याग्रं स्वर्णं हि स्वर्णघर्षणोपले विघृष्य वै ।

कर आंचल में आंस रख स्वर्णकार स्वर्ण को शाण में घिस मोम से उठा पावरत्तो

पुण्य कहलाता है। परहिंसा होने से पापरूप श्येनयाग अंगीकार के योग्य पुण्यरूप उस को न देख। अपने अवकाश पानेपर—ऐसा न लौट कर इन के उज्जीवन का अवकाश देख संचार करनेवाले अपने को अवकाश मिलनेपर। हमारे ग्राम को नाम कहा ऐसा कहने योग्य किसी को आरोपण कर—वह ग्राम यह ग्राम ऐसा यह चेतन बहुत ग्रामों का नाम लेते वखत श्रीरङ्ग वेंकटगिरि प्रभृति अपने दिव्य-देशों में किसी एक को कहने पर उतना ही लेकर हमारे ग्राम को कहा। वह यह ऐसा अनेकों के नाम लेने पर किसी एक का नाम अपना नाम होने से उतने ही

ष्टेन कालांतरे यथैकीकरोति तथा प्रतिजन्मपरं-

कस्यचिन्नाम वक्तुं श्रीनामस्वेकं वदति चेत्तावन्मात्रमादाय मम नामावोच इति, केषुचिद्भागवतेषु वने मार्गे गच्छत्सु तान् हिंसित्वा हस्तस्थितमपहर्तुं मार्गापहर्तृषु चौरेषूद्योगं कुर्वाणेषु स्वकार्यार्थं गच्छति कस्मिंश्चिद्भटे तेषां पृष्ठतो दृश्यमाने तं तद्रक्षणार्थमागच्छतीति ज्ञात्वा तेषु भीत्या चौर्याक्षिप्तेषु तद्वलंव्यागतं भटं मम दासानरक्ष इति, कस्मिंश्चिद्धर्मकाले स्वसस्ये शुष्यति यत्र जलं वर्तते ततः सस्ये जलं प्रापयितुं बहुदूरे बध्वा जलमुत्क्षिपति मरुभूमौ बहुदूरं पादेनागत्य किंचिज्जलं प्राप्यते चेदस्मत्प्राणो धर्तुं शक्यते इति क्लेशेनागच्छंतः केचन भागवतास्तद्वेदनं तज्जलेषु श्रीपादादिकं प्रक्षाल्य विश्रम्य गताश्चेत्तेन हेतुना मद्दासानां श्रमं न्यवर्तय इति, कश्चित्स्वस्य

मधूच्छिष्टेन काले प्राप्ते यथैकीकरोति सः ।

हुआ समझ जैसा गोली करता है तैसा प्रत्येक जन्मपरंपरा में यादृच्छिक प्रासंगिक

मात्र से हमारा नाम लिया। कई भागवत लोग अरण्य की रास्ता चलनेपर उन को मार लूटने के लिये चोरों के उद्योग करने पर अपने कार्य से जाता हुआ एक राजभट उस के पीछे देखने पर यह उन की रक्षणार्थ आरहा है ऐसा समझ वे डरकर भागने पर उतने मात्र से वह राजभृत्य दासों की रक्षा किया ऐसा, किसी एकने ग्रीष्मकाल में अपनी खेती सूखनेपर जल के स्थान से खेत में लानेके लिये बहुत दूर से नाला खोद पानी को बहाते हुवे मरुभूमि से बहुत दूर चल कर इतना जल प्राप्त होनेपर हमारे प्राण बचेंगे ऐसा कहने योग्य थकावट से आनेवाले भागवत लोग खेतीवाले न जाने जैसे नाले के पानी से अपना चरणारविंद धो थकावट को दूर कर जानेपर उतना ही मात्र से हमारे भक्तों के आयास को दूर

परस्या यादृच्छिकप्रासंगिकानुषंगिकसुकृतविशेषान्

द्यूतचतुरंगयुद्धविनोदार्थं वातापेक्षायां स्थातुं च बहिर्वेदिकानिर्माणमकरोत्स्वेदूर्षपीडितेष्वत्र तिष्ठाम इत्यागच्छत्सु केषु चिद्भागवतेषु तत्र स्थित्वा गतेषु तावन्मात्रेण मद्दासानां स्थातुं छायामदा इति चैवंप्रकारेण कानिचित्तैरविदितानि स्वयमेवारोपयेत्यर्थः । अङ्के आम्रं निक्षिप्येति— आम्रफलमगृहीत्वा कस्य चिन्मार्गे गच्छतोऽके आम्रफलमाच्छादयन् गत्वा प्रक्षिप्य चाम्रफलमचोरय इत्युक्तेत्यर्थः । इदं बलादारोपणस्य दृष्टांतः ।

सुवर्णवणिगित्यादि--एकं दश कृत्वा वर्तयेत्--स्वर्णवाणिज्यकर्ता केनचित्परीक्षार्थं प्रदर्शितं स्वर्णं घर्षणोपले घर्षयित्वा सुवर्णं यथा न विकीर्यते तथा मधूच्छिष्टेनादाय कालदैर्घ्येण पादस्वर्णं जातमेकं स्वर्णं जातमिति यथैकीकरोति तथैकज-

---

तथा प्रतिजन्मपंक्त्यां यादृच्छिकप्रासंगिकानुषंगीकान् ।

किया है ऐसा, किसी एकने जूआ चतुरंग खेलनेके लिये हवा के अपेक्षित होने से बाहर चबूतरा बनाकर रखने पर वर्षा से पीडित हो वहां च्छाया में बैठेंगे ऐसा विचार भागवत लोग वहां बैठ कर जानेपर उतना ही मात्र से ही हमारे दासों के रहने को छाया दिया है ऐसा भी कई अज्ञात सुकृतों को उन के ऊपर आरोपण कर। आंचल में आम बांधना माने—आम न ले रास्ते में जानेवाले के आंचल में आम को छिपा आम चुराया ऐसा कहना। यह बलात्कार से आरोपण करने का दृष्टांत है।

स्वर्णकार इत्यादि—स्वर्णकार किसी एकके परीक्षा के लिये स्वर्ण लाने पर उस को शाण में घिस कर मोम से निकाल संध्या होते ही पाव भर हुआ आधा

कल्पयित्वा स्वयमेव तदेकं दश कृत्वा वर्तयेत् ॥
ललिताचरितादिष्वयमर्थः संकोचं विना द्रष्टव्यः ॥

---

न्मजन्मद्वयपर्यन्तं विना प्रतिजन्मपरम्परा: श्रमं निवर्त्यः स्थातुं छायामदा इतिवज्जायमानं यादृच्छिकं ग्राममवदः नामावद इतिवदागतं प्रासंगिकं दासानरक्ष इतिवज्जायमानमानुषंगिक-मिति सुकृतविशेषान् शास्त्राविहितान् चेतनाविदितान् स्वय-मेवं कल्पयित्वा कलितमेकमनेकं कृत्वा वर्तयेदित्यर्थः ।

एतदज्ञातसुकृतहेतुनेश्वरोऽगीकरोतीति क्व दृष्टमित्यतो ललिताचरितादिष्वयमर्थो विस्तरेण द्रष्टव्य इत्याह— ललि-तेत्यादि ।

---

सुकृतान् कल्पयित्वा तेष्वेकं दश कृत्वा वर्तयेत् ॥४००॥
संकोचमन्तरा चैतदर्थं द्रष्टुं हि शक्यते ।
ललिताचरितादौ वै पुराणागमकोविदैः ॥ ४०१ ॥

आनुषंगिकरूप सुकृत विशेषों को कल्पना कर आप ही एक को दश कर चलाते हैं ॥ ४०० ॥

भर हुआ ऐसा गोला करने के तरह एक दो जन्म नहीं चेतनों के प्रति जन्म परंपरा में थकावट को दुर किया रहने को छाया दिया इस तरह उत्पाद्यमान यादृच्छिक, ग्राम को कहा नाम को कहा इस तरह प्रासंगिक, दासों की रक्षा किया इसतरह के आनुषंगिक सुकृत विशेषों को शास्त्र विहित चेतन ज्ञात न होने पर भी आप ही कल्पना कर एक को बहुत कर चलाते हैं ।

इस अज्ञात सुकृत द्वारा ईश्वर अंगीकार करता है । इस अर्थ को देख सक्ते हैं क्या इस शंका में कहते हैं—ललिता चरितादियों से इत्यादि ।

ललिता चरितादियों से इस अर्थ को विस्तार पूर्वक देख सक्ते हैं ॥ ४०१ ॥

विदर्भराजसुता काशीराजमहिषी ललिता सपत्नीभ्यस्त्रिशताभ्य आभिरूप्यमतिवश्यभर्तृता देहतेजः सर्वगुणसंपत्तिरित्येतद्विशिष्टाहोरात्रविभागं विना भगवत्संनिधावनेकदीपान्प्रज्वाल्य तत्र निरताऽतिष्ठत्तद्दृष्ट्वा तवैतदाभिरूप्यादीनां दीपारोपणकैङ्कर्यप्रावण्यस्य च को हेतुरिति सपत्न्योऽपृच्छन् , सा जातिस्मृत्योत्पन्ना—

'तदेष कथयाम्येतद्यद्वृत्तं मम शोभनाः !'

इत्यारभ्य 'सौवीरराजस्य पुरा मैत्रेयोऽभूत्पुरोहितः ।
तेन चायतनं विष्णोः कारितं देविकातटे ॥
अहन्यहनि शुश्रूषां पुष्पधूपानुलेपनैः ।
दीपदानादिभिश्चैव चक्रे तस्य वसन् द्विजः ॥'

इति सौवीरराजपुरोहितो मैत्रेयो देविकानदीतीरे भगवतो मंदिरं निर्माय तत्र प्रतिदिनं सकलकैङ्कर्याणि च कुर्वन्नवर्ततेत्यमुमर्थं—

'कार्तिके दीपितो दीप उपात्तस्तेन चैकदा ।

विदर्भराज पुत्री काशीराज की पत्नी ललिता देवी सपत्नी तीन सौ स्त्रियों से अति सौंदर्य पतिवश्यता देह तेजस और सर्वगुणसंपत्तिवाली हो अहोरात्र भगवत्संनिधि में अनेक दीपक जला उस कार्य में तत्पर हो रही थी उसको देख तुमारा यह सौंदर्य और इस दीपारोपण में प्रीति इस का कारण क्या ऐसा सपत्नियों के पूंछने पर वह जातिस्मृति से जन्म लेने से हे सुन्दरियो जो कुछ हमारा पूर्ववृत्त है उसे कहती हूं सुनो पूर्वकाल में सौवीर राजा का पुरोहित मैत्रेय ऋषि देविका नदी के किनारे विष्णु का मंदिर बनाया और प्रति दिन पुष्प धूप जल चन्दन दीपदान आदि से नारायण की शुश्रूषा करता भया एक दिन कार्तिक मास में जलाया हुआ दीप परमात्मा के सामने नष्ट होने लगा मैं उस मंदिर में मूषिका

आसीन्निर्वाणभूयिष्ठो देवस्य पुरतो निशि ॥
देवतायतने चासं तत्राहमपि मूषिका ।
प्रदीपवर्तिग्रहणे कृतबुद्धिर्वरानना: ॥
गृहीता च मया वर्तिः पृषदंशो रुराव च ।
नष्टा चाहं ततस्तस्य मार्जारस्य भयानुगा ॥
वक्त्रप्रांतेन नश्यंत्या स दीपः प्रेरितो मया ।
जज्वाल पूर्ववद्दीप्त्या तस्मिन्नायतने पुनः ॥'

इति कार्तिकमासे तेन तद्भगवत्सन्निधावारोपितदीपस्य नाशसमये तस्मिन्मंदिरे मूषिकारूपेण वर्तमानया तद्दीपवर्तिकां गृहीत्वा गंतुं विचार्य तद्ग्रहणसमये मार्जारशब्दं श्रुत्वा भयेन मरणे प्राप्ते तदा भयेन कंपमानेन स्वमुखेन सा वर्तिका दीर्घीकृता ततः पूर्ववत्स दीपोऽतिप्रकाशो जज्वालेत्यमुमर्थं,

'मृता चाहं ततो जाता वैदर्भी राजकन्यका ।
जातिस्मरा कांतिमती भवतीनां वरा गुणैः ॥'

एतदनंतरं स्वयं मृता विदर्भराजस्य पुत्री जातिस्मृत्यादिभिरुत्पन्नेत्यमुमर्थं,

'एष प्रभावो दीपस्य कार्तिके मासि शोभनाः ।

---

हो रहती थी दीप की वत्ती को लेजाने के लिये उद्योग करती हुई मुख से वत्ती को खीची थी इतने ही में बिल्ली पुकारी उस बिल्ली के भय से मैं मर गई। मरती हुई मेरे मुख से वत्ती खीचा जाकर दीपक प्रज्वलित हुआ मैं मर कर विदर्भ देश के राजा की कन्यारूप से जन्म ली जातिस्मृति के साथ आप लोगों के सौंदर्यादि से श्रेष्ठ हुई। हे सुंदरियों कार्तिक मास में विष्णु मन्दिर में जलाया हुआ दीप का यही प्रभाव है। कि इच्छा के विना भी मुझ से प्रेरित हो दीपक जलने से मैं इस

दृत्तस्य विष्णवायतने यस्येयं व्युष्टिरुत्तमा ॥
असंकल्पितमप्यस्य प्रेरणं यत्कृतं मया ।
विष्णवायतनदीपस्य तस्यैतद्भुज्यते फलम् ॥
ततो जातिस्मृतिर्जन्म मनुष्ये शोभना वपुः ।
वश्यः पतिर्मे सर्वासां किं पुनर्दीपदायिनाम् ॥'

इत्यज्ञातसुकृतफलतया स्वस्यैतदाधिक्यं सर्वं जातमित्यर्थश्चावोचदिति श्रीविष्णुधर्मे ललिताचरितं विस्तरेणोक्तम् ।

आदिशब्देन तत्वविदः कस्यचिद् ब्राह्मणस्य पुत्री सुव्रताऽतिवाल्ये मातृहीना जाता, तद्यथा न ज्ञायते तथा परमदयालुना पित्रा वर्द्धिता ततः कस्मैचित्प्रदानं प्राप्तमित्यवस्थायां तस्याः पितुर्नष्टत्वात् अतीव शोकार्ता—

'येन संवर्द्धिता वाल्ये येनास्मिन्परिरक्षिता ।
तेन पित्रा वियुक्ताहं न जीवेयं कदाचन ॥
नद्यां वा निपतिष्यामि समिद्धे वाँ हुताशने ।
पर्वताद्वा पतिष्यामि पितृहीना निराश्रया ॥'

इति यदा देहत्यागोद्युक्ताभूत्तदा—

---

फल को पा रही हूं जातिस्मृति मनुष्यजन्म सुन्दरशरीर और पतिवश में आपलोगों की अपेक्षा मुझ में अधिक है और जान बूझ कर दीप जलानेवाले को क्या नहीं होगा श्रीविष्णुधर्म में ललिताचरित क्रन से विस्तार पूर्वक कहा गया है।

आदि शब्द से——तत्वविद् एक ब्राह्मग की लडकी सुव्रता नामवाली वाल्यावस्था में मातृ हीना हुई वह दुःख जैसा न मालुम हो तैसा परम दयालु पिता पोषण करता रहा विवाह समय प्राप्त होने पर पिता के देहांत होने से अत्यंत शोक से पीडित हो वाल्यावस्था में जिस करके रक्षित हुई उस पिता के मरने पर मैं कदापि न जीऊं गी नदी मे अग्नि में या पर्वत के ऊपर से पितृ होना निराश्रया

'आगत्य करुणाविष्टो यमः सर्वहिते रतः ।
स्थविरो ब्राह्मणो भूत्वा प्रोवाचेदं वचस्तदा ॥
इत्युक्तप्रकारेण सर्वप्राणिनामपि हिते निरतो यमः कृपाविष्टो वृद्धब्राह्मणवेषः —
'अलं बाले विशालाक्षि रोदनेनातिविह्वले ।
न भूयः प्राप्यते तातस्तस्मान्नार्हसि शोचितुम् ॥'
इत्यादिनाऽस्याः शोकापनोदनं कृत्वा—
'तस्मात्त्वं शोकमुत्सृज्य श्रोतुमर्हसि सुव्रते ।
पितृभ्यां विप्रयोगोऽयं येनाभूत्कर्मणा तव ॥'
इति तस्मात्त्वं दुःखमुत्सृज्यैतन्मातापितृवियोगस्तव येन कर्मणा जातस्तद्वदामि शृण्विति स्वयमेवोक्त्वा-
'पुरा त्वं सुंदरीनाम वेश्या परमसुंदरी ।
नृत्यगीतादिनिपुणा वीणावेणुविचक्षणा ॥'
इत्यारभ्य त्वं पूर्वस्मिन् जन्मनि सुंदरीनाम काचिद्वेश्या, त्वया वशीकृतस्त्वयासंसर्गं कुर्वन् वर्तमानः कश्चिद्ब्राह्मणपुत्रः त्वन्निमित्तं स्पर्द्धया केनचिच्छूद्रेण हिंसितः, तस्य मातापितरा-

---

मैं गिरूंगी ऐसा विचार देह त्याग में उद्युक्त होने पर सर्व हितपर यमधर्मराज करुणाविष्ट हो एक वृद्ध ब्राह्मणरूप से प्रकट हो यह वचन कहा हेबाले हेविशालाक्षि व्याकुल हो रोना बंद करो तुमारा पिता अब तुम को नहीं मिलेगा इस लिये शोक मत करो इत्यादि वचन से उस के शोक को दूर कर हेसुव्रते शोक को छोड सुनो जिस कारण से माता और पिता का वियोग हुआ । पूर्वकाल में तुम सुंदरी नामक परम सुंदर वेश्या थी नृत्य गीत आदि में निपुण और वीणा वेणु में चतुर थी ऐसा प्रारंभ कर तुम एक ब्राह्मण के लडका को वश कर उस के साथ भोगती थी स्पर्द्धा के मारे तुमारे निमित्त एक शूद्र उस को बध किया उसका माता,

वस्मत्पुत्रममारयस्त्वं कस्मिंश्चिज्जन्मनि मातापितृविहीना क्लेशेन परितप्यस इति शेपतुः, अतस्तवायं शोक आगत इत्यवोचत्। तर्हि एवं पापिष्ठाया ममोत्तमजातौ जन्मनः को हेतुरिति साऽपृच्छत्—

'श्रृणु तस्य महाप्राज्ञे निमित्तं गदतो मम।
येन त्वं ब्राह्मणस्यास्य कुले जाता महात्मनः॥'

इत्यारभ्य ज्ञानाधिकः सर्वत्र विरक्तः सर्वत्र-समदर्शी भगवद्ध्यानपरो ग्रामैकरात्रन्यायेन सर्वत्र सञ्चरन् कश्चिद्भागवत एकस्यां रात्रौ तव बहिर्वेदिकायामतिष्ठत्तद्राधिकारिणश्चोर इति गृहीत्वा बबंधुः, तदानीं त्वं प्रधाव्य बंधं मोचयित्वा तं भागवतं गृहे आनीयाश्वासनं कृतवती तेनेदं तव जातमितीतिहाससमुच्चयोक्तं सुव्रताख्यानम्।

अथ काचित् स्त्री यमभटैरत्यंतं पीडिता आकाशे रक्षकापेक्षा-

---

पिता हमारे लडके को मरानेवाली तूं और जन्म में माता पिता से हीन हो अत्यंत शोकातुर होगी ऐसा शाप देने से तुमको यह शोक उत्पन्न हुआ। यह सुन लडकी के ऐसी पापिनी मैं ब्राह्मणयोनि में जन्मलेने का कारण पूछनेपर यमराज सुन हेमहाप्राज्ञे जिस कारण से महात्मा ब्राह्मण के कुल में तुम ने जन्म लिया उस कारण को सुनो ज्ञानाधिक निरपेक्ष सर्वत्र समदर्शी भगवद्ध्यान पर ग्रामैकरात्र न्याय से सर्वत्र संचार करनेवाले एक भागवत एक रात्रि में तुमारे घर के वाहर चबुतरा पर सोया राजभट उस को चोर समझ बांधने पर तुम जाकर उस बंधन को छुडाई अपने घर के भीतर ला आश्वासन दिलाई उस सुकृत कर्म से यह जन्म तुमारा हूआ। ऐसा इतिहास समुच्चय में कहा हुआ सुव्रतोपाख्यान को जानना।

और भी एक स्त्री यमभटों से अत्यंत पीडित हो आकाश के तरफ रक्षा करनेवाले

प्रकाशं नदंत्यागता तदाऽश्वत्थतीर्थे चिरकालं तपः कुर्वाणा स्थिता माधवी तद्दृष्ट्वा कृपां कृत्वा स्वयमेकदिवसकृततपः-फलमस्यै प्रादात्तदैव यमभटा बंधुभूताः याम्यमार्गः सुखोत्तरो जातः यातनाशरीरं गतं विलक्षणशरीरं जातं, तां चादाय तेषु यमसन्निधिं प्राप्तेषु—

'पितेव धर्मराजोऽभूत्तस्यास्तत्प्रियदर्शनः ।
सांत्वयन् स महातेजा व्याजहार च तां प्रति ॥'

इति पितृवत्प्रसन्नवदन इमां प्रति वचनमुक्त्वा यमः—

'भद्रे त्वया सुष्ठु कृतं न किञ्चिदिह विद्यते ।
इतो द्वादशजन्मांते त्वां कश्चित्सिद्ध आविशत् ॥
विष्णुभक्तो निवासार्थं रात्र्यां तु तव वेश्मनि ।
तत्सन्निधानप्रभवस्तव साधुसमागमः ।
सा हि वै ब्रह्मविदुषी श्रीमद्रङ्गमुपाश्रिता ॥
तत्र तीर्थोत्तमं श्रीमदश्वत्थं नाम संश्रिता ।
धर्मज्ञा धर्मपरमा यस्यास्ते संगमोऽभवत् ॥'

---

कौन ऐसा आक्रोश करती हुई जाती थी अश्वत्थ तीर्थ में चिर काल से तपस्या करता हुआ मातली उसको देख कृपा कर अपने एक दिन के तपस्या के फल को उसे दिया उसी वखत यमभट बंधु हो गये. याम्य मार्ग सुखोत्तर हुआ. यातना शरीर छूट कर विलक्षणरूप धारण कर ली. इस को लेकर वे दूत लोग यमराज की सन्निधि में जाने पर यमराज पिता के सदृश अति प्रिय दर्शन हुआ. उस स्त्री को आश्वासन दिलाता हुआ भद्रे तुम किसी प्रकार का सुकृत नहीं किया इस जन्म से पहिले बारहवें जन्म के अंत में विष्णुभक्त सिद्धपुरुष रात्रि में तुमारे घर वास करने के लिये आया था उन की सन्निधि के प्रभाव से तुमारा साधु का समागन हुआ तब तुम ब्रह्मज्ञानी हो श्रीरंगजी को गई वहां उत्तमोत्तम अश्वत्थ नामक तीर्थ में स्नान

इति यो माधव्या अंगीकारस्तव जातस्तस्य हेतुस्त्वया बुद्धि-पूर्वकं कृतं किंचिदपि पुण्यं नास्ति एतज्जन्मनो द्वादशे जन्म-न्येकरात्रं तव गृहे विश्रम्य गंतुमेको भागवत आगतस्तव सन्निधौ स्थित्वा गतः तत्संनिधानेन जातस्तन्नायं साधुसमा-गम इति पूर्वं जातमेकमज्ञातसुकृतमेतस्याः फलस्य हेतुतयाऽ-वोचदिति गरुडपुराणे श्रीरंगमाहात्म्ये कथाप्रकृतिकं चोच्यते। संकोचं विना द्रष्टव्य इति— विस्तरेण द्रष्टव्य इत्यर्थः। एत-दज्ञातसुकृतहेतुना भगवत्कटाक्षस्यैवैतेषामेतत्फलप्राप्तेर्हेतुत्वा-दज्ञातसुकृतमवलंब्येश्वरोंगीकरोतीत्यस्यैतदुदाहरणं भवेत्।

एवं सर्वेश्वरः स्वनिर्हेतुककृपया संसारिचेतनोज्जीवन उद्यु-क्तः करणकलेवरप्रदानादिकं कृत्वा स्वाज्ञारूपशास्त्रानुगुणमे-तेषु कश्चित्सुकृतविशेषं दृष्ट्वांगीकारमार्गोऽस्ति किमिति विचार्य तदभावे सर्वमुक्तिप्रसंगवैषम्यनैर्घृण्यव्यावृत्त्यर्थमज्ञातसुकृतानि स्वयं कल्पयित्वा तानि च प्रतिजन्मपरंपरामेकं दश कृत्वा

---

की. धर्मात्मा हो धर्मज्ञा हुई. तुमारा मातली ऋषि का संबंध का हेतु तुमारा जाना हुआ कर्म नहीं यह कथा गारुड पुराण में श्रीरंगजी के माहात्म्य में कही गई है। इन अज्ञात सुकृतों के द्वारा होनेवाले भगवत्कटाक्ष ही इन फलों के हेतु होने से अज्ञात सुकृत द्वारा ईश्वर अंगीकार करता है ऐसा कहने में कोई दोष नहीं।

तथा च सर्वेश्वर अपनी निर्हेतुक कृपा से संसारी चेतनों के उज्जीवन में उद्युक्त हो करण कलेवर दे स्वाज्ञारूप शास्त्रानुगुण इन के पास किंचित् सुकृतविशेष को देख अंगीकार करने को मार्ग है क्या? ऐसा विचार उस के अभाव में सर्व-मुक्तिप्रसंग वैषम्य नैर्घृण्य न आने के लिये अज्ञातसुकृतों को आपही कल्पना कर उन सुकृतों को जन्म परंपरा में एक को दशगुण कर अंगीकार करने के प्रकार

अज्ञा मनुष्यास्तूष्णीं दत्तवानिति तिष्ठन्ति ॥ ४०२ ॥
ज्ञानिनः 'अद्य मां पदार्थं कृत्वा स्वं मदंतः

---

वर्तयेदित्यर्थं विस्तरेणोक्त्वाऽज्ञातसुकृतस्यांगीकारहेतुत्वप्रकारं च प्रादर्शयत् ।

अथैतन्निर्हेतुकविषयीकारवैलक्षण्यानभिज्ञा अस्याभिमतिं कृत्वाप्येतदनुसंधानेन विद्धा न भवंतीत्याह— अज्ञा मनुष्या इत्यादिना ।

अज्ञाः— निर्हेतुकविषयीकारवैभवानभिज्ञाः । तूष्णीमेव दत्तवानिति तिष्ठंतीति– एवमुपकुरुते खल्विति अत्यंतं विस्मये कर्तव्ये तथाऽकृत्वा तूष्णीमुपकृतवानित्येतावदनुसंधाय वर्तत इत्यर्थः ।

एतद्वैलक्षण्याभिज्ञानां विस्मयप्रकारमाह– ज्ञानिन इत्यादिना ।

निर्हेतुकविषयीकाराभिज्ञा । अद्य मां पदार्थं कृत्वा स्वं मदंतः

---

अज्ञो मनुष्य स्तूष्णीं वै दत्तवानिति तिष्ठति ॥ ४०२ ॥
ज्ञानिनोऽद्य मां वस्तु हि विधाय स्वं मदन्तः स्थापयित्वा ।

को विस्तार पूर्वक कहे हैं । अज्ञातसुकृत अंगीकार का हेतु होता है ऐसा भी दिखाये हैं ।

इस निर्हेतुक विषयीकार के वैभव को न जाननेवाले इस को मान कर भी इस के अनुसंधान से विद्ध नहीं होते हैं ऐसा कहते हैं—अज्ञ मनुष्य इत्यादि ।

अज्ञ मनुष्य व्यर्थ ही दिया ऐसा ही समझते हैं ॥ ४०२ ॥

अज्ञ माने—निर्हेतुक विषयीकार का वैभव नहीं जाननेवाले । व्यर्थ इत्यादि– ऐसा उपकार किया है ऐसा समझ विद्ध होना चाहिये ऐसा नहीं कर व्यर्थ उपकार किया है ऐसा समझ रहते हैं ।

इस के वैभव जाननेवाले विद्ध होने का प्रकार कहते हैं—ज्ञानवान् इत्यादि ।

ज्ञानी लोग–आज हम को वस्तु बना कर अपने को हमारे भीतर

स्थापितवान्' 'किं पुण्यमकरवं मम हृदये भाति' 'मध्य आगत्योज्जीवयन्नाथः' 'अज्ञातज्ञापकः स्वामी' 'त्वत्कृतान्दासोऽहं न

---

स्थापयित्वेत्यादि— 'अनादिकालमपदार्थभूतं मामद्य पदार्थं कृत्वा नित्यसूरीणामप्यतिशयिनं स्वात्मानं नित्यसंसारिणामप्यपकृष्टस्य मम हेये मनसि स्थापितवान्, महाराजवदुपरोधेन मृतः किं, मारुतिवद् दृष्टा सीतेत्यागतः किं, अथवा स्वस्याज्ञानुवर्तनकरणरूपविहितकर्मानुष्ठानमकरवं किं, किं पुण्यमकरवमिति मम हृदये प्रविश्यालभ्यं लब्ध्वा इव भासते, विषयप्रावण्येन गच्छति मध्य आगत्योज्जीवयन् स्वामी,

---

किं पुण्यं कृतं मेऽहो हृदि भात्यंतर आगत्य वै !
उज्जीवयन् नाथ हे अज्ञातज्ञापकस्वामी त्वत् ।
कृतान् दासो न जाने ह्यवस्तुभूतं मां वस्तु वै । ।

में रक्खा है । कौन सुकृत हमने किया है हमारे मन में वास करते हैं। बीच में आकर उद्धार करनेवाला नाथ। अज्ञात ज्ञापन

ज्ञानी माने :—निर्हेतुक विषयीकार वैभव को यथार्थ रीति से जाननेवाले । आज इत्यादि—अनादिकाल अवस्तुभूत मुझ को वस्तु बना नित्यसूरियों से अपरिच्छेद्य अपने को नित्य संसारियों की अपेक्षा अति नीच मेरे हेयभूत मन में, जटायु के तरह रोक कर मरा हूं क्या ? हनुमानजी के तरह दृष्टा सीता ऐसा कहता हुआ आया हूं क्या ? यद्वा अपना आज्ञानुवर्तन करने के लिये विहित कर्मों का अनुष्ठान किया हूं क्या ? कौन सुकृत किया है समझ हमारे मन में प्रवेश कर अलभ्य वस्तु को प्राप्त हुआ जैसा प्रकाश कर रहा है, विषयप्रवण हो संचार करनेवाले मुझ को

जानासि' 'अपदार्थभूतं मां पदार्थं कृत्वा
दास्यं स्वीकृतवान्' 'मम दुष्टं मनो निव-
र्तितवान्' 'अनन्यप्रयोजनतयाऽऽश्रयन्मनो
दत्तवान् इति विशिष्टाशिष्टांति ॥४०३॥

---

ममाज्ञातज्ञापनं कृत्वा स्वामी, त्वया शेषभूते मयि कृत उप-
कार उपकृतवता त्वया ज्ञातुं शक्यते मयोक्त्वा समापयितुं
शक्यते किं, असन्नेवेति प्रकारेणासत्कल्पतया स्थितं मां
संतमेनमित्युक्तप्रकारेण सत्तावंतमेकं वस्तु कृत्वा तादृशसत्ता
सुस्थिता स्यात्तथा कैङ्कर्यं च स्वीकृतवान्, अमृते विषे च
समानतया प्रीतिकर्तृवन्मयि क्षुद्रविषयेषु च प्रीतिं कुर्वद्दुष्टं

---

कृत्वादास्यं वृहन् मे दुष्टं मनो निवर्तितवान् वै ।
अनन्यार्थं आश्रयन् मनोऽदादित्यहो तिष्ठन्ति ॥४०३॥

करनेवाले हे पितः तुमारे कृत्य को मैं नहीं जानता हूं । नाचीज
मुझको चीज बना दास्य स्वीकार किये हो । हमारे दुष्ट मन को
दूर किये हो । आदर पूर्वक भजन करनेवाले मन को दिये हो
ऐसा विद्ध होते हैं ॥ ४०३ ॥

बीच में आ उद्धार करनेवाले हे स्वामिन् मुझको अज्ञात ज्ञापन कर शेषभूत मेरे
विषय में कृतउपकार को उपकार करनेवाले तुम ही जान सक्ते हो मैं कह सक्ता हूं
क्या ? असन्नेव इत्युक्तप्रकार असत्प्राय मुझको एक वस्तु बना उस सत्ता को स्थिर करने
के लिये कैंकर्य स्वीकार किये हो, अमृत और विष को बराबर चाहनेवाले जैसे आप
और क्षुद्र विषयों को बराबर समझनेवाले हमारे दुष्ट मन को दूर किया, अनन्य

भाष्यकारकाले एकस्मिन् दिने श्रीरंगनाथस्य

---

मनो दूरीकृतवान्, अनन्यप्रयोजनतया त्वामनुभवितु मनो दत्तवान्' इति निर्हेतुकं तत्कृतानुपकारविशेषाननुसंधायात्यंतं विद्धा भवंतीत्यर्थः।

अथवा अज्ञा इत्यादिवाक्यस्यासिना दत्तवानिति पाठश्चेत्— एवं सर्वेश्वरो निर्हेतुककृपया स्वोज्जीवनार्थं कृषिं करोतीति प्रकारमजानंतो मनुष्या असिबलेनोज्जीवनं प्राप्ताः स्वेषामागतां समृद्धिमस्माकमसिर्दत्तवानित्यनुसंधाय यथा तिष्ठंति तथा निर्हेतुकभगवदंगीकारं स्वसुकृतबलेनागतमिति तिष्ठंतीत्यर्थः। सकलमपि तत्कृपयागतमिति सम्यग्जानंतस्तेन निर्हेतुकं कृतानुपकारविशेषाननुसंधाय विस्मिता भवंतीति प्रकारमाहेत्युत्तरवाक्यसंगतिः।

एतन्निर्हेतुकविषयीकारस्थापकमेकमैतिह्यं स्मारयति — भाष्यकारकाले इत्यादिना।

---

भाष्यकारस्य काले हि कस्मिंश्चिद्दिवसे हरेः।
रङ्गनाथस्य यात्राया विलम्बं वीक्ष्य ज्ञानिनः।

प्रयोजन हो आप को ही अनुभव करनेवाले मन को दिये हो, ऐसा उन के कृत निर्हेतुक उपकारों को अनुसंधान कर अत्यंत विद्ध होते हैं।

इस निर्हेतुक विषयीकार को स्थिर करने के लिये एक ऐतिह्य को स्मरण कराते हैं— भाष्यकार के इत्यादि।

भाष्यकार के समय में एक दिन भगवान् के पधारने

यात्रापर्यंतं प्रतीक्ष्य महामण्डपस्याधस्तात्
ज्ञानाधिकेषु सर्वेषु समूहतया स्थितेष्वेतद-
र्थप्रस्तावे वार्ताः स्मर्तव्याः ॥ ४०४ ॥

---

सकलवेदांततात्पर्याणां संशयविपर्ययौ विना प्रवृत्तियोग्ये समीचीने भाष्यकारकाले एकस्मिन् दिवसे श्रीरंगनाथस्य यात्रापर्यंतं प्रतीक्ष्य महामण्डपस्याधस्ताज्ज्ञानाधिकेषु सर्वेषु समूहतया स्थितेषु तदानीमेकः श्रीवैष्णवो बहुकालमिदं केषां द्वारि तेषां निर्गमनं प्रतीक्ष्यातिष्ठदिति न ज्ञायते अद्य प्रातःशेषिणः स्वामिनो निर्गमनं प्रतीक्ष्यातिष्ठाम अस्य किं सुकृतमकुर्मेत्यवदत् तत्प्रसंगेन नित्यसंसारिणो भगवद्विषये रुच्युत्पत्तेर्मूलं किमिति विचारे प्रवृत्ते यादृच्छिकं सुकृतमज्ञातसुकृतमिति

---

महामण्डपतोऽधस्तात्समूहीभूय संस्थिताः ।
एतदर्थस्य प्रस्तावे ज्ञेया वार्ता हि तैः कृताः ॥ ४०४ ॥

पर्यंत देखते हुवे बडे मण्डप के भीतर स्वामी लोग
इकट्ठे रहने के समय इस अर्थ के प्रस्तुत होने पर
कही वार्त्ताओं को स्मरण करना ॥ ४०४ ॥

सकल वेदांत तात्पर्यार्थ संशय विपर्यय विना चलने के समय भाष्यकार के काल में एक समय भगवान के पधारने का समय देखते हुवे बडे मण्डप में ज्ञानाधिक समस्त श्रीवैष्णव के इकठ्ठे रहने पर उन के वीच में से एक श्रीवैष्णव यह आत्मा अनादिकाल किसके द्वार में किस के पधारने की प्रतीक्षा करते हुवे रहा है मालुम नहीं आज प्रातशेषी स्वामी के पधरावनी को देखता हुआ रहा है कौनसा सुकृत का फल है ऐसा कहने पर नित्यसंसारी इस चेतन का भगवद्विषय में रुचि

तस्मादज्ञातानि सुकृतान्येवावलंबनं कुर्वन् कटाक्षते ॥

विचारो जातस्तदा किडांबिपेरुमाल् तत्र स्थितोऽस्माकं भगवद्विषयवत् सुकृतदेव इति कश्चिदाश्रयणीयो किमित्यवदत् । पिळ्ळैतिरुनरैयूररैयर् सुकृतमित्यप्यनुसंधीयमानविषयः स एवोच्यते इत्यवदत् । एवमुत्पन्ना वार्ता अत्रानुसंधेया इत्यर्थः । इयं कथा 'दीयमानं दुःखं न रुजत्सि चेत्' (तरुतुपरं तडायेल्) इति गाथाव्याख्याने संग्रहेण पूर्वैरुक्ता खलु । अनेनाज्ञातसुकृते सत्यपि तत्फलहेतुर्न भवति, तद्व्याजं कृत्वांगीकर्ता ईश्वर एव फलहेतुरित्युक्तम् ।

पूर्वोक्तमर्थं निगमयति– तस्मादित्यादिना ।

पूर्वोक्तप्रकारेण सर्वमुक्तिप्रसंगादिपरिहारार्थमेतच्चेतनावि-

---

तस्मादज्ञातपुण्यानि ह्यवलंब्य कटाक्षते ॥ ४०५ ॥

उत्पन्न होने का कारण क्या ऐसा उन में विचार होने लगा, यादृच्छिक सुकृत कहनेवाले अज्ञात सुकृत कहनेवालों के बीच में किडांबी स्वामी हम को भगवद्विषय के सदृश सुकृतदेव ऐसा एक देवता आश्रयणीय है क्या ऐसा कहने पर पिळ्ळैतिरुनरैयूररैयर सुकृत कहे जाने वाले भगवान् ही हैं ऐसा कहे हैं इन वार्ताओं को स्मरण करना । यह कथा 'दीयमानदुःखं न निर्वतयसिचेत्' इस गाथा के व्याख्यान में संग्रह से पूर्वाचार्य कहे हैं । इस से अज्ञात सुकृत होने पर भी वह फल हेतु नहीं उसको बहाना कर अंगीकार करनेवाले ईश्वर ही फलहेतु है ।

पूर्वोक्त अर्थ को समाप्त करते हैं इस कारण से इत्यादि ।

इस कारण से अज्ञात सुकृतों को
अवलंबन कर कटाक्ष करते हैं ॥ ४०५ ॥

पूर्वोक्त प्रकार से सर्वमुक्तिप्रसंगादि न होने के लिये यह चेतन न जान कर

एतानि च यथा फलितानि भवंति
तथा खल्विमं प्रथमतः सोऽसृजत् ॥ ४०६ ॥

---

द्वितया जायमानान्कांश्चन सुकृतविशेषानेवैतदंगीकारस्या-वलम्बनतया स्वीकृत्य विशेषकटाक्षं करोतीत्यर्थः ।

एवमज्ञातसुकृतान्यपि हेतुतयादाय कटाक्षं करोति चेदंगी-कारः सहेतुको न भवति किमित्यत आह–एतानि चेत्यादि ।

एतानि यादृच्छिकादिसुकृतान्यप्यस्य यथा फलितानि भवंति तथा खलु एतेषामपि योग्यता यथा न स्यात्तथा कर-णकलेवरविधुरमिमं सृष्टिकाले करणादीनि दत्त्वा स उत्पादि-तवानित्यर्थः । अनेन कटाक्षहेतुत्वेनोक्ततया यादृच्छिकादीन्य-

---

फलितानि यथैतानि चेतनस्य भवंति वै ।
सोऽसृजत् कृपया स्वामी तथेमं प्रथमं खलु ॥ ४०६ ॥

ही होनेवाले कई सुकृतों को इन के अंगीकार के लिये अवलंबन कर ईश्वर विशेष कटाक्ष करते हैं ।

इस प्रकार अज्ञात सुकृतों को भी हेतु कर कटाक्ष करने पर अंगीकार सहे-तुक नहीं होगा क्या ? ऐसी शंका पर कहते हैं ये भी इत्यादि ।

ये भी इस को जैसा हो तैसा इस चेतन
को पहिले वह सृष्टि किया है ॥ ४०६ ॥

ये यादृच्छिकादि-सुकृत इस को जैसे प्राप्त हों तैसा इस की योग्यता भी जब नहीं थी तब करण कलेवर विधुर अवस्था में सृष्टि के समय में करणादियों को दे यादृच्छिक सुकृतादि को वह उत्पादन किये हैं इस से कटाक्ष हेतुतया उक्त यादृच्छिकादि उन की कृषि का फल है । ज्ञातसुकृत फलों का भी कारण उन ही

तन्निरूपितं चेदस्यैकमपि न कर्तव्यमिति वर्तते ॥

---

पयस्य कृषिफलमित्युक्तम् । चशब्देन तुल्यन्यायात् ज्ञात-सुकृतानामपि मूलं तस्य कृषिरित्युच्यते । अथवा वक्ष्यमाण निरूपणविशेषाः समुच्चीयंते । सृष्टिश्चेतनकर्मानुगुणा खल्विति-चेत् कर्मकटाक्षित्वैव सृष्टिः क्रियते तथापि यौगपद्यमनुग्रह-कार्यं हि ।

तन्निरूपणेऽस्य संभाव्यमानमाह— तन्निरूपितं चेदि-त्यादिना ।

अचिद्विशेषिततया स्थितिदशायामुज्जीवनोपयोगिकरण-कलेवराणां परमदयया तत्कृतदानप्रकारोऽनुसंहितश्चेत् तद-धीनसत्तादिकेनानेन स्वोज्जीवनांशे तत्कृतप्रकारे दृष्ट्वा स्थातव्यं नतु स्वेनाप्येका प्रवृत्तिः कर्तव्येति वर्तत इत्यर्थः ।

---

तच्चेन्निरूपितं सम्यगस्यैकमपि सर्वथा ।
कर्तव्यं दृश्यते नैव चेत्थं वर्तनसंस्थितिः ॥ ४०७ ॥

का कृषि फल है सृष्टि चेतन का कर्मानुगुण है न ? ऐसा कहे तो कर्मानुगुण होने पर भी एक काल में सब की सृष्टि करना अनुग्रह का कार्य है ।

उस के निरूपण में इस चेतन को क्या होगा उस को कहते हैं—उस को इत्यादि ।

उस को निरूपण करने पर इस
चेतन का कर्तव्य कुछ नहीं है ॥ ४०७ ॥

अचित् के सदृश रहने की दशा में उज्जीवनोपयोगी करण कलेवरों को परमदया से परमात्मा दिये हैं इस बात को अनुसंधान करने पर तदधीन सत्तादि-वाले इस चेतन को अपने उज्जीवन के विषय में उस के कृत्य को देखते रहना छोड

प्राचीनतया कृष्यते रोप्यते फलतीत्येव
वर्तमाने क्षेत्रे विकीर्णान्यंकुरितानि फल-
पर्यंतानीव यथैतानि स्वत एव फलि-
तानि भवंति तथा भक्तिकर्षकेण प्राची-
नस्यास्य सृष्टिकरणप्रकारः ॥ ४०८ ॥

---

ईश्वरसृष्ट्यास्य जायमानान्यंगीकारावलंबनानि याहच्छि-कादीनिमात्रं न किंत्वन्यान्यपि कानिचित्संतीति प्रदर्शयितुं वा पूर्वोक्तानामेतेषामुत्पत्तिप्रकारमुपपादयितुं चाह— प्राचीनत-येत्यादि ।

---

पुरातनतया कृष्टे रोपिते फलतीति वै !
एवं क्षेत्रे स्थिते बीजं विकीर्यांकुरितानि च ।
परिपाकान्तकानीवैतानि स्वेच्छात एव हि ।
फलितानि भवंत्येवं भक्तिकर्षणहेतुना ।
प्रांचीनस्यास्य सृष्टेर्हि प्रकारः करणस्य वै ॥४०८॥

अपने को कोई कर्तव्यांश नहीं ।

ईश्वर सृष्टि से अंगीकार के हेतु इस चेतन में होनेवाले याहच्छिकादि मात्र नहीं और भी कई होते हैं ऐसा दिखाने को या पूर्वोक्त ये सब होने के प्रकार को उपपादन करने के लिये कहते हैं—पहिले के तरह इत्यादि ।

पाहिले के तरह हल से जमीन को खोदना बोना
उगना आदि विशिष्ट क्षेत्र में नीचे गिरा हुआ
धान्य स्वयं ऊग कर फल पर्यंत जैसा होता तैसा
ये आप ही उत्पन्न होंय जैसा भक्तिकर्षक
पुराण क्षेत्र को सृष्टि करने का प्रकार हैं ॥ ४०८ ॥

तानि कानीति चेत् ॥ ४०९ ॥
पूर्वं कृतपुण्यापुण्यफलानि चिरकालं

---

नवीनतया समीकरणकरणादिकं विना प्राचीनतया कृष्यते आरोप्यते फलतीत्येवं निरंतरं क्रियमाणसस्ये क्षेत्रे कर्षकेनैतन्निमित्तं कृष्यकरणेऽपि यथा विकीर्णान्यंकुरितानि संति फलपर्यंतं पर्यवस्यंति तथोपरि वक्ष्यमाणनिरूपणविशेषा वा पूर्वोक्तयादृच्छिकादीनि वा । एतदर्थकृषिर्नापेक्षितैतच्चेतने यथा स्वत एव भवेयुस्तथा भक्तिकर्षकेणेश्वरेण प्रवाहरूपेण वर्तमानं संसाररूपं प्राचीनक्षेत्रं सृष्ट्वा सम्यक् क्रियत इत्यर्थः ।

एतानीति पूर्वोक्तं विशदीकर्तुं तद्विषये प्रश्नमनुवदंति—तानीत्यादिना ।

तस्योत्तरमाह— पूर्वं कृतेत्यादिना ।

---

पूर्वकर्म फलंभुक्त्वा चिरकालं तथोत्तरे ।

नवीन क्षेत्र विना अनादिकाल से खोदना बोना ऊगना आदिवालेक्षेत्र में कर्षक के कृषि विना भी गिरे हुवे धान्य ऊग कर फल पर्यंत जैसे होते हैं तैसे पूर्वोक्त यादृच्छिकादि विना ईश्वर के कृषि चेतन के विषय में आपही उत्पन्न होवें तैसा भक्ति कर्षक ईश्वर प्रवाहरूपेण प्रवर्तमान संसाररूप पुराने क्षेत्र को सृष्टि करने का प्रकार ।

'ये' करके पूर्वोक्त को स्पष्ट करने के लिये तद्विषय प्रश्न को अनुवाद करते हैं—वे इत्यादि ।

वे कौन हैं इस शंका में ॥ ४०९ ॥

इस का उत्तर देते हैं—पूर्वकृत इत्यादि ।

पूर्वकृत पुण्यापुण्य फलों को चिरकाल भोग कर

भुक्त्वोत्तरकाले वासनामादाय प्रव-
र्तनयोग्यकार्यशून्यदशायां वयं केऽस्म-
त्स्थितिः कीदृश्यस्माकमुपरि गन्तव्यं
किमिति जायमानाः केचन निरूपण-
विशेषाः संति ते वा पूर्वोक्तानि वा॥ ४१० ॥

---

पूर्वकृतपुण्यापुण्यरूपकर्मद्वयस्य च फलानि स्वर्गनरका-
दिभिर्बहुकालमनुभूय उपरितनकाले पूर्वकर्मवासनामादाय
पुण्यपापरूपकर्मसु प्रवृत्तिः कर्तव्येति वक्तुं योग्यतयाच्छकर्मणः
कर्मफलानुभवे कार्याभावदशायां परिदृश्यमानदेहा वा देहा-
तिरिक्ता वा स्वतंत्रा वा परतंत्रा वा के वयं नाशयोग्यतया

---

काले हि वासनां गृह्य वर्तनायोग्यकालके ।
वयं केऽस्मत्स्थितिः का वै किं गन्तव्यं ममोपरि ॥
जायमाना इतीयं वै निरूपण विशेषकाः ।
सन्ति केचन ते वा किं पूर्वोक्तानि भवन्ति वा ॥४१०॥

उत्तर काल में वासना के साथ प्रवृत्त होगा ऐसा
कहने योग्य हस्तच्युत दशा में हम कौन हमारी
स्थिति क्या हमें आगे जाने का मार्ग कौन ऐसा कई
निरूपण विशेष होते हैं ये, या पूर्वोक्त यादृच्छिकादि हैं ॥४१०॥

पूर्वकृत पुण्यपापरूप कर्मद्वय के फलों को स्वर्ग नरकादियों में दीर्घ काल भोग कर आगे के काल में पूर्व कर्मवासना ले पुण्य पाप कर्मों में प्रवृत्त होगा ऐसा कहने योग्य स्वच्छकर्मा हो कर्मफलानुभव में हाथ खींच कर रहने की दशा में दीखनेवाला देह हूं क्या देहातिरिक्त हूं क्या स्वतंत्र हूं क्या परतंत्र हूं क्या मैं कौन

**यथा हि मोषकाः पान्थ इत्यारभ्यैतस्य क्रमो भगवच्छास्त्र उक्तः ॥ ४११ ॥**

---

स्थिता वा जीवनयोग्यतया स्थिता वाऽस्माकं स्थितिः कीदृशी-ति, एवं स्थितानामस्माकमुपर्युज्जीवनयोग्यगंतव्यप्रकारः क इति स्वत एव जायमानाः केचन निरूपणविशेषाः संति तादृ-शनिरूपणविशेषा वा, पूर्वोक्तानि यादृच्छिकादिसुकृतानि वेत्यर्थः ।

एतन्निर्हेतुकविषयीकारक्रमः शास्त्रे कुत्र उक्त इत्यत आह—'यथा हि मोषकाः पान्थ' इत्यादिना ।

भगवच्छास्त्रमष्टोत्तरशतसंहितात्मकं वर्तते । तत्रैकाहिर्बु-ध्न्यसंहिता । 'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयं' इत्यु-

---

**यथा हि मोषकाः पांथ इत्यारभ्यास्य वै क्रमः ।**
**भगवच्छास्त्रमुख्येषु कथितः पूर्वसत्तमैः ॥४११॥**

हूं ऐसा नष्ट होनेवाला हूं अथवा उज्जीवन को प्राप्त होनेवाला हूं हमारी स्थिति कौन सी ऐसा, इस प्रकार रहनेवाले हम को अतःपर उज्जीवन का मार्ग कौन ऐसा भी अपने आप कई निरूपण विशेष होते हैं । या पूर्वोक्त यादृच्छिकादि सुकृत होते हैं ।

इस निर्हेतुक विषयीकार क्रम को शास्त्र में कहां कहा है इस शंका में कहते हैं—यथा हि इत्यादि ।

'यथा हि मोषकाः पान्थे' इत्यारभ्य इस
के क्रम को भगवच्छास्त्र में कहा है ॥ ४११ ॥

भगवच्छास्त्र पांचरात्र को कहते हैं वह १०८ संहिता रूप से है उन में अहिर्बुध्न्य संहिता एक है संपूर्ण पंचरात्र का वक्ता भगवान होने पर भी तत्तत्सं-

क्तप्रकारेण सर्वस्यादिवक्ता भगवान्, तथापि तत्तत्संहितानामवांतरवक्तारश्च संति । तत्रास्याः संहिताया अहिर्बुध्न्यसंज्ञको रुद्रो वक्ता तस्मादियमहिर्बुध्न्यसंहितेत्युच्यते । अस्यां संहितायां 'सूक्ष्मविषयज्ञानविशिष्टनीलकंठः स्वामी' इत्युक्तप्रकारेण सत्त्वोद्रेके सूक्ष्मदर्शिनं रुद्रं देवर्षिब्रह्मवित्तमः श्रीनारद्भगवान् गत्वानुवर्त्य स्वसंशयान् सर्वानपृच्छत, तस्मिन्निर्णयं कुर्वति चतुर्दशाध्याये एतत्कृतप्रश्नस्योत्तरतया संसारमोक्षहेतुर्निग्रहशक्तिरनुग्रहशक्तिश्चेति सर्वेश्वरस्य द्वे शक्ती स्त इति प्रतिज्ञां कृत्वा तत्र—

'तिरोधानकरी शक्तिः सा निग्रहसमाह्वया ।
पुमांसं जीवसंज्ञं सा तिरोधापयति स्वयं ॥' इति

निग्रहात्मिकया शक्त्या तिरोहितस्वस्वरूपादिकस्य जीवात्मनः संसरणप्रकारं विस्तरेण प्रतिपाद्य अनंतरमनुग्रहात्मिकया शक्त्या संसारान्मुक्तो भवतीति प्रतिपादयितुं—

'एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः।
जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते ॥

---

हिताओं के अवांतर वक्ता भी हैं। उन में इस संहिता का अहिर्बुध्न्य नामक रुद्र वक्ता होने से इस को अहिर्बुध्न्य संहिता कहते हैं। इस में सत्वोद्रिक्त दशा में सूक्ष्मदर्शी रुद्र के देवर्षि ब्रह्मविदग्रेसर श्रीनारद भगवान् अनुवर्तन कर अपने सर्व संशयों को पूछने पर वह रुद्र निर्णय करते भये। १४ वां अध्याय में नारदकृत प्रश्न का उत्तरतया संसार मोक्षहेतुत्वेन निग्रहशक्ति अनुग्रहशक्ति नामक सर्वेश्वर की दो शक्ति हैं। निग्रहात्मिका शक्ति जीवात्मा के स्वरूप को ढक उस को संसारी बनाती है ऐसा विस्तार पूर्वक उपपादन कर अनंतर अनुग्रहस्वरूपशक्ति से संसार से मुक्त होने के प्रकार का प्रतिपादन करते हुवे 'संसारचक्रस्थ दुःखा-

समीक्षितस्तु दासोऽयं करुणावर्षरूपया ।
कर्मसाम्यं भजत्येव जीवो विष्णुसमीक्षया ॥
शक्तिभावः स वै जीवमुत्तारयति संसृतेः ।
कर्मणीव समे तत्र तूष्णींभावमुपागते ॥'

इति संसारचक्रस्थदुःखाकुलजीवविषये सर्वेश्वरस्य कापि कृपा जायत इति प्रकारं तादृशकृपाहेतुना जायमानतत्कटाक्षस्य विषयभूतः सन्नयं कर्मसाम्यं भजत इत्यमुमर्थं तादृशानुग्रहात्मिकायाः शक्तेः सद्भावोऽमुं संसारादुत्तारयतीत्यमुमर्थं पूर्वकर्मसाम्यमित्यस्य तात्पर्यं च संग्रहेणोक्त्वा—

'यथा हि मोषकाः पांथे परिबर्हमुपेयुषि ।
निवृत्तमोषणोद्योगास्तदा संत उदासते ॥
अनुग्रहात्मिकायास्तु शक्तेः पातक्षणे तदा ।
उदासाते समीभूय कर्मणी ते शुभाशुभे ॥
तत्पातानंतरे जंतुर्युक्तो मोक्षसमीक्षया ।
प्रवर्तमानवैराग्यो विवेकाभिनिवेशवान् ॥
आगमाननुसंचिंत्य गुरूनप्युपसद्य च ।

---

कुल जीवत्मा के ऊपर सर्वेश्वर की कृपा उत्पन्न होती है। उस कृपा के द्वारा उस के कटाक्ष का विषय हो यह चेतन कर्म साम्य को पाता है। वह अनुग्रहात्मिका शक्ति इस चेतन को संसार से उद्धार करती है पूर्वोक्त कर्मसाम्य को संग्रह से कह पथिक बोझ को रख छिप कर रहने के समय उस वोझ को अपहार करने के लिये उद्योग करनेवाले चोर लोग उस वोझ को वह पथिक आकर लेते देख अपहार करने के उद्योग को छोड जैसा उदासीन हो जाते हैं तैसा भगवदनुग्रह शक्ति इस चेतन के पास आनेपर इस को अपने मार्ग में खींचने वाले पुण्य पाप

लब्धसत्तः प्रकारैस्तैः प्रबुद्धो बोधपालनः ॥'

इत्याद्यध्यायशेषेण मार्गगामिनि संभारं निधायापावृत्ते तिष्ठति तस्य संभारमपहर्तुमुद्योगं कुर्वंतस्तस्करास्तं संभारं तस्मिन्नागत्य गृह्णंति यथा निवृत्तमोषणोद्योगाः संतस्तदोदासीनास्तिष्ठंति तथैव च भगवदनुग्रहशक्तिर्यदैतस्मिन्नागच्छति तस्मिन् क्षणेऽमुमात्मानं स्वमार्गे आक्रष्टुं स्थिते पुण्यपापकर्मणी अमुं नाक्रम्योदासीने तिष्ठतः, तादृशानुग्रहात्मिकायाः शक्तेः स्वविषये पातानंतरमयं चेतनो मोक्षसमीक्षायुक्तः प्रवर्तमानवैराग्यो विवेकाभिनिवेशी शास्त्रप्रवणः सदाचार्यसमाश्रयणं कृत्वा लब्धसत्ताको लब्धज्ञानस्तादृशज्ञानं रक्षन् सारग्राही समुचितोपायपरिग्रहेण संसारादुत्तीर्णः परमपदं प्राप्नोतीत्यवोचद्रुद्रः खलु । तस्माद्यथा हि मोषकाः पांथे इत्यारभ्यैतन्निर्हेतुकविषयीकारस्य क्रम आप्तप्रमाणे भगवच्छास्त्र उक्त इत्यर्थः ।

एवं शास्त्रोक्तिमात्रं विना निर्हेतुकविषयीकारस्य साक्षात्पात्रभूत आप्ततमाग्रेसरः श्रीपरांकुशोऽमुमर्थं विशदमवोचदि-

---

कर्म इस को छोड उदासीन होते हैं । वह अनुग्रहात्मिका शक्ति अपने पास आते ही यह चेतन मोक्षरुचिवाला हो प्रवृत्त वैराग्यवाला होकर विवेक में आशा करते हुवे शास्त्र में प्रवण हो सदाचार्य समाश्रयण कर सत्ता को प्राप्त हो ज्ञान को प्राप्त हो उस ज्ञान की रक्षा करते हुवे सारग्राही हो उचित उपाय को स्वीकार कर संसार से उत्तीर्ण हो परम पद को प्राप्त होता है ऐसा रुद्र ने कहा है । इस लिये ये लोकाचार्यस्वामी निर्हेतुक विषयीकार क्रम को आप्तप्रमाण भूत भगवच्छास्त्र में कहा है ऐसा कहते हैं ।

इस प्रकार शास्त्र में उक्तमात्र विना निर्हेतुक विषयीकार का साक्षात्पात्रभूत

'अकांडमेव कृपां करोति'
इत्यमुमर्थं स्पष्टमवोचत् ॥ ४१२ ॥
'कुर्वतां' इति कृपाया हेतुः सुकृतमित्युक्ति

---

त्याह— अकांडमेवेत्यादिना ।

अकांडमेव कृपां करोतीति निर्हेतुकं कृपां करोतीत्यर्थः । अमुमर्थं स्पष्टमवोचदिति-- एतन्निर्हेतुकविषयीकाररूपरहस्यार्थं संशयविपर्ययनिवृत्तिपूर्वकं सर्वे यथा जानीयुस्तथा प्रकाशमवोचदित्यर्थः ।

तद्दिव्यसूक्त्यनंतरोक्ताभिप्रायानभिज्ञानां शंकामनूद्य परिहरति— कुर्वतामित्यादिना ।

---

कृपां करोत्यकांडं चेत्यमुमर्थमचोदयत् ॥ ४१२ ॥
कुर्वतोऽतः कृपाहेतुः सुकृतं नेति चेत्किमु ।

आनतम अग्रेसर शठकोप सूरि इस अर्थ को स्पष्टतया कहे हैं ऐसा कहते हैं— निर्हेतुक इत्यादि ।

'निर्हेतुक ही कृपा करते हैं' ऐसा इस अर्थ को स्पष्टतया कहे हैं ॥४१२॥

इस निर्हेतुक विषयीकाररूप रहस्यार्थ को संशय विपर्यय रहित सब लोग जानें जैसे स्पष्टतया कहे हैं ।

उस दिव्यसूक्ति के अनंतर सूक्ति में अभिप्राय को नहीं जाननेवालों की शंका को अनुवाद कर परिहार करते हैं— करनेवालों को इत्यादि ।

'करनेवालों को' ऐसा कृपा का हेतु सुकृत
है ऐसा कहा है न ? इस शंका में :—तब

नास्ति किमिति चेद् 'अकांडमेव' इत्यस्य विरोधः ॥
भगवदाभिमुख्यं सुकृतेन न जायते

---

कृपां करोतीत्युक्त्यनंतरं केषामित्यपेक्षायां कुर्वतामिति कृपाहेतुतया भगवन्मुखोल्लासार्थं कानिचित्कुर्वतामित्युक्तत्वात्, तेन कृपाकरणस्य हेतुश्चेतनसुकृतमित्युक्तमिति चेत्, तथोक्तौ निर्हेतुकवाचकाकांडमेवेत्युक्तिरसंगता स्यादित्यर्थः । तस्मात्कुर्वतामित्यस्य येषां स्वयं कर्तुमिच्छति तेषामित्यर्थो द्रविडमर्यादया भवतीति भावः ।

आभिमुख्यस्य भगवत्कृपा कारणं, अद्वेषस्य सुकृतं कारणमिति विभागं वदतां वचनमनूद्य परिहरति— भगवदाभिमुख्यमित्यादिना ।

---

एवं तदाकांडमेवेत्यस्य स्यात्प्रतिरोधकः ॥ ४१३ ॥

'निर्हेतुक' यह पद संगत नहीं होसक्ता ॥ ४१३ ॥

कृपा करते हैं इस के अनंतर किसपर इस आकांक्षा में कृपा के उपयुक्त ईश्वर के मुखोल्लास के लिये कुछ कृत्य करनेवाले पर ऐसा कहने से उस के कृपा करने का हेतु चेतन कृत सुकृत ऐसा कहा है न ? इस शंका पर :—ऐसा कहने पर निर्हेतुक पद संगत नहीं होगा इस लिये करनेवाले को माने :—आप जिन पर कृपा करने को चाहते हैं ऐसा अर्थ कर लेना।

आभिमुख्य का भगवत्कृपा कारण है अद्वेष का सुकृत कारण है ऐसा समझ कहनेवालों के वचन को अनुवाद करते हैं— भगवदाभिमुख्य इत्यादि ।

भगवदाभिमुख्य सुकृत से नहीं भगवत्कृपा से उत्पन्न

किंतु भगवत्कृपया, अद्वेषः सुकृते-
नेति चेत्तस्य फलविशेषस्य तत्
कारणमिति वक्तुं न शक्यते ॥ ४१४॥

---

अनादिकालं विमुखस्यास्य चेतनस्य भगवद्विषये जायमानाभिमुख्यमेतत्सुकृतनिबंधनं न भवति किंतु केवलभगवत्कृपया जायते। तत्पूर्वभाव्यद्वेषः सुकृतेन जायते इत्युक्तौ अखिलात्मगुणादेरात्मोज्जीवनांकुरस्य भगवदद्वेषरूपस्यास्य फलविशेषस्यातिक्षुद्रं यादृच्छिकादिसुकृतं कारणमिति न वक्तुं शक्यत इत्यर्थः। तस्मादद्वेषस्य भगवत्कृपैव कारणमिति वक्तव्यमिति भावः।

---

भगवदाभिमुख्यं न सुकृतेनैव जन्यते।
किंतु श्रीशकृपाधीनोऽद्वेषः समुपजायते।
सुकृतेनेति चेदस्य फलभेदस्य कारणम्।
तद्भवेदिति नो वक्तुं शक्यते नयकोविदैः॥ ४१४॥

होता है अद्वेष सुकृत से उत्पन्न होता है ऐसा कहने
पर उस फल विशेष का उस को साधन नहीं कर सक्ते ॥ ४१४॥

अनादिकाल से विमुख हुआ यह चेतन भगद्विषय में अभिमुख होना सुकृत के कारण से नहीं केवल भगवत्कृपा से उस के पहिले होनेवाला अद्वेष सुकृत से उत्पन्न होता है ऐसा कहने पर अखिलात्मगुणों के कारण आत्मोज्जीवन का अंकुर भगवदद्वेषरूप इस महाफल का अति क्षुद्र यादृच्छिकादि सुकृत के कारण करके नहीं कह सक्ते हैं। इस लिये अद्वेष का भी भगवत्कृपा ही कारण है ऐसा कहना चाहिये।

शास्त्राविहितस्यास्मदज्ञातस्य सुकृतमित्यस्माभि-
र्नाम कथं क्रियते इति चेन्न वयमीश्वर इति श्रुतम् ॥

---

शास्त्राविहितानां चेतनाविदितानामेतेषां याहच्छिकादीनां सुकृतमिति नामकर्तारमित्यमुमर्थं शंकापरिहाररूपेणाह—तस्येत्यादिना ।

इदं कुर्यादिति शास्त्रेण विहितानामेतत्सुकृतमकुर्मेति कर्तृभूतैश्चेतनैर्बुद्धिपूर्वकमनुष्ठितमेकं खलु सुकृतमित्युच्यते, तथैतत्कुर्यादिति शास्त्रेणाविहितानामेतत्सुकृतमकुर्मेति तत्तत्कर्तृभिरस्माभिरप्यविदितानामेतेषां याहच्छिकादीनां सुकृतमित्यस्माभि-

---

शास्त्रेणाविदितस्यास्य मत्तोप्यविदितस्य च ।
सुकृतमित्यमस्माभिः कथं नामप्रकीर्त्यते ।
इतिचेन्न वयं किंतु हरिरित्थं श्रुतं हि नः ॥ ४१५ ॥

शास्त्र में विहित न हो चेतन से ज्ञात न होनेवाले इस याहच्छिकादि को सुकृत के नाम देने वाले अमुक ऐसा कहते हैं— शास्त्र भी इत्यादि ।

शास्त्र भी विधान न कर हम भी नहीं
जाने हुवे इस को सुकृत ऐसा हम नाम
कैसे रख सक्ते हैं इस शंका में :—हम
नहीं ईश्वर रक्खा है ऐसा सुनते हैं ॥ ४१५ ॥

इदं कुर्यात् ऐसा शास्त्र विहित कर्तृभूत चेतन से बुद्धिपूर्वक अनुष्ठित कर्म को सुकृत कहते हैं इस को करें ऐसा शास्त्र नहीं विधान कर अमुक सुकृत किये हैं ऐसा चेतन न जानकर होनेवाले इस याहच्छिकादि को सुकृत नाम से हम कैसे कह सक्ते हैं। इस शंका में :—इस को सुकत नाम रखनेवाले हम नहीं

# एतदर्थविषयतया दिव्यसूरीणां गाथासु परस्परविरोध इव भासते तत्र वक्तव्यान्

नाम कथं क्रियत इति चेत्तेषां सुकृतमिति न वयं नाम कुर्मः किंतु सर्वमुक्तिप्रसंगपरिहारार्थं सर्वज्ञ ईश्वरः सुकृतमिति नामाकरोदिति तत्त्वदर्शिभिराचार्यैरुक्तमस्माभिः श्रुतमित्यर्थः। एवं पूर्वमकांडमेव कृपां करोतीति अज्ञाननिवृत्तिपूर्वकानंदरूपापन्नज्ञानं प्राप्तेष्वग्रेसरेण परांकुशेन निर्हेतुकविषयीकाररूपोऽयमर्थो विशदमुक्त इति प्रदर्श्य तदुपर्यागतशङ्कापरिहारांश्चाकरोत्।

अथैतदर्थविषयत्वेन दिव्यसूरीणां गाथास्वन्योन्यविरुद्धवत् प्रतीयमानस्य परिहारस्यैतदर्थस्थापकतयान्येषामपि कर्तव्यानां प्रमाणतर्काणामत्र स्वेनानुक्तेर्हेतुमाह— एतदर्थविषयतयेत्यादिना।

---

एतदर्थमुपष्टभ्य दिव्यसूरिवचःसु च।
दृश्यते बाध्यता तद्वत्तद्वक्तव्यान् तथापरान्।

सर्वमुक्तिप्रसंग न होने के लिये सर्वज्ञ ईश्वर सुकृत करके नाम रक्खा है ऐसा तत्वदर्शी आचार्यों के मुख से हम सुने हैं। तथा च निर्हेतुक कृपा करता है ऐसे सूरियों में अग्रगण्य शठकोप सूरि निर्हेतुकविषयीकाररूप इस अर्थ को स्पष्टतया कहे हुवे प्रकार को दिखा उस विषय में हुई शंका परिहार किये हैं।

अब इस अर्थ के विषय में सूरियों के गाथाओं में अन्योन्य विरुद्ध के तरह भान होनेवाले का परिहार, इस अर्थ के स्थापनार्थ अवश्य वक्तव्य प्रमाण तर्कों को इस स्थल में नहीं कहने का कारण भी कहते हैं— इस अर्थ के इत्यादि।

इस अर्थ के विषय में सूरियों के गाथाओं में

परिहारानन्यांश्च वक्तव्यान् विस्तरभयान्न वदामः ॥

---

निर्हेतुकविषयीकाररूपैतदर्थविषयतयैतद्विषयीकारविषयाणामज्ञाननिवृत्तिपूर्वकानंदरूपापन्नज्ञानं प्राप्तानां दिव्यसूरीणां भगवदंगीकारप्रकाशकेषु गाथासु 'अकांडमेव कृपां करोति' 'किं पुण्यमकरवम्' 'मम हृदये भाति' 'तिरुमालिरुंशोलैमलै इत्यवदं' इति 'माधव इत्युक्तिमेवादाय' इति 'समीचीनधर्मं न कृतवान्' इति 'बहुजन्मव्रतमकरवं' इति 'अहं केन तपसा पश्यामि' इति 'अहमेव तपः कृतवान्' इत्यादिभिर्भगवदंगीकारहेतुरेकोऽपि स्वेषु नास्तीत्युक्तिरस्तीतिवद्योक्तिर्वर्तते, अतो भावानभिज्ञानां परस्परं विरोध इव भासते इत्यर्थः । तत्र वक्तव्या परिहारा नाम— 'माधवस्य' 'पर्वतः' इत्यस्य व्यावृ-

---

परिहारांश्च वक्तव्यानन्यान् विस्तारभीतितः ॥४१६॥

परस्पर विरुद्ध के माफक दीखेंगे उन में कहे
जानेवाले परिहार और अवश्य वक्तव्यों को
भी विस्तार के डर से नहीं कहते हैं ॥ ४१६ ॥

निर्हेतुक विषयीकाररूप इस अर्थ के विषय में इस विषयीकार के पात्रभूत सर्वज्ञ सूरियों के भगवदंगीकार प्रकाशक गाथाओं में 'निर्हेतुक कृपा करते हैं, क्या सुकृत मैं किया हूं हमारे मन में वास करते हैं' 'सुन्दरवाहु पर्वत के नाम कहा हूं' 'माधव इस उक्तिमात्र को ले' 'कोई सुकृत मैंने नहीं किया' 'बहु जन्मों में व्रतानुष्ठान किया हूं' 'हम किस तपस्या से देखेंगे' 'हमहीने तपस्या किया है' इत्यादियों से भगवदंगीकार हेतु एक भी अपने पास नहीं है ऐसा कहना अपने पास किंचित् है ऐसा कहना इस तरह के वचनों के अभिप्राय को नहीं जाननेवालों को परस्पर विरुद्ध के माफक भासमान होयंगे उन में कहे जाने वाले परिहार— 'माधव' 'पर्वत' ये व्यावृत्ति उक्ति मात्र होने से उन को आरोपण कर ऊपर आ

त्युक्तिमात्रत्वात्तदारोप्यागत्योपरिपतंती भगवत्कृपैवांगीकारहेतु-स्तानि तु न हेतुरिति सिद्धम् । 'बहुजन्मव्रतमकरवं' इति मम बहुजन्महेतुतयाऽहं साधनानुष्ठानमकरवमिति स्वनिकर्ष-उक्तः, अनेकजन्मनि त्वां प्राप्तुं साधनानुष्ठानमकरवमिति नार्थः ! 'अहमेव तपः कृतवान्' इति महाद्राविडप्रबंधरूपश्लाघ्यमालायाः परस्परसदृशचरणयोरेकविषयतयार्पणकरणजन्यप्रीत्यतिशयेना-हमिव भाग्यकर्ता नास्तीत्येतत्फललाभवतः स्वस्य श्लाघामा-त्रमित्येवं प्रकारेण निर्हेतुकवचनविरोधो यथा न स्यात्तथा सहेतुकत्ववद्भासमानानां वक्तव्यान् परिहारान् । अन्यान् वक्त-व्यान्– अन्यान् एतन्निर्हेतुकत्वस्थापनार्थं वक्तव्यान्—

'एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः
जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते ॥
निर्हेतुककटाक्षेण मदीयेन महामते ।
आचार्यविषयीकारात्प्राप्नुवन्ति परां गतिम् ॥

---

गिरनेवाली भगवत्कृपा ही अंगीकार का हेतु है वे हेतु नहीं हैं यह बात सिद्ध है । बहु जन्मों में व्रतानुष्ठान किया हूं माने :—बहु जन्म लेने के किये साधनानुष्ठान किया हूं ऐसा अर्थ, मैंने ही तपस्या किया हूं :—माने—सुंदर द्राविडमाला चरणार विंदों में कहने के भाग्यवान् हुआ हूं ऐसी प्रीति से हमारे सदृश भाग्यवान् और कोई नहीं है ऐसा इस महाफल को प्राप्त हुये अपने को प्रशंसा करलिये इतना हीं इन वचनों में निर्हेतुक वचन विरोध न होने के लिये सहेतुकवत् भासमान होने-वालों का परिहार कहे गये समझना । और अवश्य वक्तव्य माने :—इस निर्हे-तुकता के स्थापनार्थ अवश्य बक्तव्य :—'इस प्रकार संसार चक्र में दुःख से व्याकुल हो घूमनेवाला चेतन के ऊपर विष्णु की निर्हेतुक कृपा उत्पन्न होती है' 'हे महामते ? हमारे निर्हेतुक कटाक्ष से होनेवाली आचार्यविषयीकार से परगति

तस्मादस्य विमुखदशायामप्युज्जीवनार्थं
कृषिं कुर्वाण ईश्वरेऽनुसंहिते सदा निर्भरस्तिष्ठेत्॥

---

नासौ पुरुषकारेण न चाप्यन्येन हेतुना ।
केवलं स्वेच्छयैवाहं प्रेक्ष्ये कंचित्कदाचन ॥'

इत्यादिप्रमाणानि एतदनुग्राहकांस्तर्कांश्च । विस्तरभयेन न वदाम इति— एतेषां सर्वेषामुक्तौ ग्रंथविस्तारः स्यादिति भयेन न वदाम इत्यर्थः ।

एवं पूर्वं भगवद्गुणानुसंधानमभयहेतुरिति प्रतिज्ञाया उपपादकतया त्रिपाद्विभूतावित्यारभ्यैतावतेश्वरेणैतदात्मोज्जीवनस्य विमुखदशायामपि कृषिकरणप्रकारं विस्तरेणावोचत्, तन्निगमयति— तस्मादित्यादिना ।

---

न वदामो हि ग्रन्थस्य लाघवेन प्रसादनात् ॥
तस्मादस्य च वैमुख्यदशायामपि जीवने ।

को प्राप्त होते हैं 'मैं पुरुषकार से या और किसी हेतु से भी कटाक्ष नहीं करता हूं केवल अपनी इच्छा से ही कभी किसी पर कटाक्ष करता हूं' इत्यादि प्रमाणों को जानना । विस्तार भय से इत्यादिः—ये सब कहने से ग्रंथ विस्तार हो जायगा इस भय से नहीं कहते हैं ।

तथा च भगवद्गुणानुसंधान अभय हेतु इस प्रतिज्ञा को उपपादकतया त्रिपाद्विभूति में ऐसा आरंभ कर यहां तक ईश्वर इस आत्मा के उज्जीवनार्थ विमुख दशा में भी कृषि करता है इस बात को विस्तार पूर्वक कहे हैं उसी को समाप्त करते हैं— इस लिये इत्यादि ।

इस लिये इस की विमुख दशा में भी उज्जीवन
के लिये कृषि करनेवाले ईश्वर का अनुसंधान
करने पर सदा निर्भर हो रह सकता है ॥ ४१७ ॥

'अग्रे व्यापने प्रविश्य' एकं ग्रहीतुं
विचार्य यथा ग्रामं रुध्यंति तथा

---

ईश्वरेणैतदात्मोज्जीवनार्थं कृषिकरणप्रकारस्यैतादृशत्वात्, एवं चेतनस्य स्वविषये वैमुख्यावस्थायामप्येतदुज्जीवनार्थं कृषिं कुर्वाणे गुणाधिके तस्मिन्ननुसंहिते एवंभूतः स एतदवस्थापन्नान् कृत्वाऽस्मान्कर्मानुगुणं न संसारयतीति तद्गुणविश्वासेन सर्वकालमपि निर्भरास्तिष्ठेद्भयप्रसंगो नास्तीत्यर्थः ।

विमुखतादृशायामप्युज्जीवनार्थं कृषिं कुर्वाणे ईश्वरेऽनुसंहिते इति स्वेन पूर्वोक्तार्थे आस्थार्थं ज्ञानाधिकानामनुसंधानविशेषमाह– अग्रे व्यापने प्रविश्येत्यादिना ।

---

कृषिकृति हरौ ध्याते निर्भरः सततं भवेत् ॥ ४१७ ॥
व्यापनेऽग्रे प्रविश्यैकं ग्रहीतुं तु विचार्य हि ।
यथाग्रामं निरुन्धन्ते तथा व्याप्तिरुदाहृता ।

ईश्वर इस आत्मा के उज्जीवन के लिये कृषि करने का प्रकार यह होने से एवं इस चेतन अपने विषय में विमुख होनेकी अवस्था में भी इस के उज्जीवन के लिये कृषि करनेवाले गुणाधिक उस के अनुसंधान करनेपर एवंभूत वह हम को इस अवस्था वाला बना कर्मानुगुण संसारी नहीं बनावेगा ऐसा उस के गुण में विश्वास से सर्वकाल भी निर्भर रहेगा इतना ही, भय प्रसंग नहीं है ।

'विमुखदशा में भी उज्जीवन के लिये कृषि करनेवाले ईश्वर का अनुसंधान किये तो' ऐसा पहिले कहे हुवे अर्थ में विश्वास होनेके लिये ज्ञानाधिक का अनुसंधान विशेष को कहते हैं—सामने इत्यादि ।

'सामने रोक कर'

व्याप्तिरपि सृष्ट्यवतारादिवत्स्वार्थमि-
ति हि ज्ञानाधिकानामनुसंधानम् ॥ ४१८ ॥

---

अग्रे व्यापने प्रविश्येति— मम च्यवनं यथा न स्यात्तथा दृष्टस्थलं सर्वं स्वयमेवेति व्यापने प्रविश्येत्यर्थः । अग्रे व्यापने इत्यस्यावतारपरतयान्यै र्व्याख्यातत्वेऽपि अत्रायमिदानीं व्याप्तिपरत्वेन वदंति । अनेकयोजनाः संति खलु । तस्य दृष्टांतं एकं ग्रहीतुं विचार्य यथा ग्रामं रुंधंति इति—यथैकं ग्रहीतुमिच्छावंतः सोऽलक्ष्यच्युति ग्रहीतव्य इत्यभिनिवेशेन ग्रामं रुंधंति तथैकस्यात्मनोऽगीकारार्थं सकलचेतनाचेतनेषु व्याप्तिं कृत्वा तिष्ठति अतो व्याप्तिश्च स्वार्थेति खलु ज्ञानाधिकानामनुसंधा-

---

सृष्ट्यवतारवत् स्वार्थेत्येवं ज्ञानाधिका कथा ॥४१८॥

सामने रोक कर:—हम को वचाकर भागनेको अशक्य दृष्ट स्थल सर्वत्र जैसा आप ही हो तैसा व्याप्ति में अंतर्गत हो कर । यह वाक्य अवतार परतया पूर्वाचार्यलोगों से व्याख्यान किया गया तब भी इस स्थल में व्याप्तिपरतया कहते हैं ।

उस का दृष्टांत कहते हैं—एक मनुष्य को इत्यादि ।

एक मनुष्य को पकडनेका विचार कर ग्राम
को घेरनेवाले के तरह ईश्वर की व्याप्ति है ।

एक आदमी को पकडनेकी इच्छा करनेवाला उस को जरूर पकडने में आग्रह से जैसा उस ग्राम को घेरता है तैसा एक आत्मा को वश करनेके लिये सकल चेतनाचेतनों में व्याप्त हो रहते हैं । इस कारण व्याप्ति भी अपनेलिये ऐसा ज्ञानाधिक लोग समझते हैं । व्याप्ति भी ऐसा कहनेसे सर्व सत्ता हेतुभूत वह भी ऐसा अर्थ है ।

कर्मफलवत्कृपाफलमप्यनुभाव्यमेव ॥ ४१९ ॥

---

नमिति वदति । व्याप्तिरपीति— सर्वसत्ताहेतुः साऽपीत्यर्थः । सृष्ट्यवताराादीनां स्वार्थतयाऽनुसंधानं सिद्धवत्कृत्यास्य दृष्टांततयाऽऽह— सृष्ट्यवतारवदिति । 'त्रिविधनीरभूमौ' प्रथमगाथायां सृष्टिं स्वार्थतया द्वितीयगाथायां तृतीयगाथायां चाऽवतारान् स्वार्थतया स स्वयमेवानुसंहितवान् खलु । अवताराादीत्यत्रादिशब्देन गुणचेष्टितादृयुच्यते ।

एवमस्य वैमुख्यदशायामपि सृष्ट्यवताराादिभिरस्योज्जीवनस्य तेन कृषिः क्रियते स्वस्य निर्हेतुककृपया खलु, तादृशकृपाफलमस्यावश्यानुभाव्यमित्यमुमर्थं सदृष्टांतं वदन् पूर्वं निर्भरस्तिष्ठेदित्युक्तं स्थिरीकरोति कर्मफलवदित्यादिना ।

---

यथा कर्मफलं लोके सर्वैरप्यनुभूयते ।

सृष्टि अवताराादियों को स्वार्थतया अनुसंधान करना सिद्ध हुआ । इस का दृष्टांत कहते हैं—सृष्टि इत्यादि ।

सृष्टि अवताराादियों के तरह स्वार्थतया
ज्ञानाधिक लोग अनुसंधान करते हैं ॥ ४१८ ॥

त्रिविधजल पृथिवी इस दशक के पहिली गाथा में सृष्टि को स्वार्थतया. दूसरी और तीसरी गाथा में अवतारों को स्वार्थतया यह शठकोपसूरि अनुसंधान किये हैं । आदिशब्द से गुणचेष्टितादियों को लेना ।

इस प्रकार इस के विमुख होनेकी दशा में भी सृष्ट्यवताराादियों से इस के उज्जीवन के लिये वह कृषि करता है अपनी निर्हेतुक कृपा से । तादृश कृपाफल इस चेतन को अवश्यानुभाव्य है इस अर्थ को दृष्टांत पूर्वक कहते हुए पहिले 'निर्भर होना चाहिये' ऐसा कथित अर्थ को स्थिर करते हैं—कर्मफल के तरह इत्यादि ।

कृपानिस्सरतिचेदुभयोरपि स्वातन्त्र्येण
यथा निरोद्धुं न शक्यते तथोभयकू-

---

स्वकृतपुण्यपापकर्मफलमवश्यमनुभोक्तव्यमित्युक्तप्रकारेण यथावश्यमनुभाव्यमेव भवति तथा नित्यसंसारहेतु कर्म दूरीकृत्य नित्यसूरिभिः समानभोगिनं कर्तुं हेतुभूतायास्तस्य कृपायाः फलमिच्छाभावेप्यवश्यमनुभोक्तव्यमित्यर्थः ।

एवंभूतकृपाया अनादित्वेऽपि कर्मकर्तुश्चेतनस्य तत्फलदातुरीश्वरस्य च स्वातन्त्र्याभ्यां निरुद्धा खलु स्थिता, इतः परमपि तथा भवति चेत् किं स्यादित्यत आह- कृपा निःसरति चेदित्यादि ।

---

अनुभाव्यं तथा लोके कृपायाः फलमुत्तमम् ॥४१९॥
कृपानिस्सरणे चोभौ स्वातंत्र्येण यथा नहि ।
शक्नुयातां निरोद्धुं वै तथा कूलद्वयं स्वयम् ।

कर्मफल के तरह कृपाफल भी अवश्य अनुभोक्तव्य है ॥ ४१९ ॥

स्वकृत पुण्यपापरूप कर्मफल जैसा अवश्य अनुभोक्तव्य है तैसा नित्य संसार हेतु कर्म को दूर कर नित्यसूरियों के साथ समान भोगभागी बनानेका हेतु उस के कृपा का फल इस की इच्छा विना भी अवश्य अनुभोक्तव्य होता है ।

एवंभूत कृपा अनादिकाल से होनेपर भी कर्मकर्ता चेतन तत्फलभोक्ता ईश्वर इन दोनों के स्वातंत्र्य से रुकी रही, अब आगे भी ऐसा ही रुक गई तो क्या होगा ? इस शंका में कहते हैं---कृपा इत्यादि ।

कृपा बहने पर दोनों के स्वातंत्र्य से भी जैसा

लमप्युपमर्द्य प्रवहति ॥ ४२० ॥

---

कृपागुणः निरंकुशस्वतंत्र ईश्वरः स्वकृतमर्यादायामागतश्चें-दंगीकुर्यामित्येतच्चेतनं कर्मानुगुणं निर्वहेच्चेत् उभयोरपि स्वा-तन्त्र्येण निरुद्धो भवेत्, तादृशमर्यादायामागमनाभावेन दुर्गतिमेवावलंबनं कृत्वा स एवांगीकर्तुमुपयुक्तत्वेन निःसरति चेत् स्वाश्रयस्येश्वरस्य चेतनकर्मानुगुणं निर्वाहः कार्य इति स्वातंत्र्येण, स्वविषयस्य चेतनस्य 'श्रुतिस्मृती ममैवाज्ञा यस्तामुल्लंघ्य वर्तते' इत्युक्तप्रकारेणेश्वराज्ञामतिलंघ्य स्थातुं हेतुभूतेन स्वातंत्र्येण च यथा निरोद्धुं न शक्यते तथा 'विधि-रासन्नो निरोधकः कः' इत्युक्तप्रकारेणोभयस्वातंत्र्यरूपोभयकू-लमपि यथा नष्टं स्यात्तथैकमर्यादां विनोपर्युपरि परिवहती-त्यर्थः ।

---

उपमर्द्य महावेगा पावनी याति निर्भया ॥४२०॥

न रोकी जाय तैसा दोनों कूल को तोडकर बहेगी ॥ ४२० ॥

कृपागुण निरंकुश स्वतंत्र ईश्वर अपनी आज्ञा में आनेपर अंगीकार करेंगे ऐसा इस चेतन का कर्मानुगुण निर्वाह करनेके समय दोनों के स्वातंत्र्य से रोकी जाती है इतना ही। उस आज्ञा में नहीं आनेसे दुर्गति ही को अवलंबन कर इस चेतन को वही ऊपर गिर अंगीकार करनेके उपयुक्त कृपा बहने पर स्वाश्रय ईश्वर का चेतनकर्मानुगुण ही निर्वाह करेंगे ऐसे स्वातंत्र्य से भी, अपने विषय चेतन का श्रुति स्मृतिरूप ईश्वर की आज्ञा को उल्लंघन करनेका हेतु स्वातंत्र्य से भी रोकी नहीं जायगी। 'कृपा बहनेपर कौन रोक सक्ता है' इस बचनानुसार उभय स्वातंत्र्यरूप दोनों किनारों को तोडती हुई ऊपर ऊपर बहेगी तो रोकने-वाला कौन ?।

## भयहेतुः कर्म, अभयहेतुः कारुण्यम् ॥४२१॥

प्रकरणादौ भयाभयहेतुतयोक्तस्वदोषभगवद्गुणयोर्मध्ये कर्म कारुण्ययोः प्रधानत्वात्तदुपपादितवान् पूर्वं, तन्निगमयति— भयहेतुरित्यादिना ।

ईश्वरएवोपायोपेयाविति स्थितस्याधिकारिणोऽस्येतःपरमपि संसारोऽनुवर्ततेचेत् किं कर्तव्यमिति भयस्य हेतुरनादिकालं संसारकारणस्वकर्मस्मरणं 'चक्रवत्परिवर्तमानं जन्मसमीप आगच्छेत्किं' इत्युक्तप्रकारेण संसारोऽस्माकं नागच्छेत् शरीरावसाने भगवत्प्राप्तौ बाधा नास्तीति निर्भयं स्थितेर्हेतुः कर्मादृष्ट्वांगीकृत्य संसारं निर्मूलं कृत्वा स्वचरणौ प्रापयितुमुपयुक्तनिर्हेतुककारुण्यस्मरणमित्यर्थः । 'स्वदोषानुसंधानं' 'भगवद्गुणा-

---

भयहेतुर्भवेत्कर्माभयहेतुः कृपा स्मृता ।
भयाभयोभयं तावत्पर्यायेण प्रवर्तते ॥ ४२१ ॥

प्रकरण के आदि में भयाभयहेतुतया कहेगये स्वदोष भगवद्गुणों में कर्म और कारुण्य प्रधान होनेसे उन को उपपादन पहिले किये हैं, अब समाप्त करते हैं—भय हेतु इत्यादि ।

भय हेतु कर्म अभय हेतु कारुण्य ॥ ४२१ ॥

ईश्वर ही उपाय है ऐसे रहनेवाले अधिकारी को और भी संसार अनुवर्तन किये तो क्या किया जाय ऐसा भय का हेतु—अनादिकाल संसार का कारणभूत अपने कर्म का स्मरण । संसार हमारे पर्यंत नहीं आ सकेगा शरीरावसान में भगवत्प्राप्ति में संशय नहीं ऐसा निर्भय होनेका हेतु—कर्म को न देख अंगीकार कर संसार का मूलच्छेद कर अपने चरणों में मिलालेनेके उपयुक्त उस के निर्हेतुक कारुण्य का स्मरण ।

भयाभयोभयमपि पर्यायेण प्राप्तिपर्यंतं स्यात् ॥४२२॥

---

नुसंधानं' इत्यारभ्य तन्निगमनस्थलरूपत्वात्कर्मकारुण्यमित्यत्र स्मरणपर्यंतं त्रिवक्षितम् ।

एतद्भयाभयोभयमप्यस्य कियत्पर्यंतं भवेदित्यत आह— भयाभयोभयमपीत्यादिना ।

भगवत्कृपाविषयभवनानंतरमपि प्रकृत्या स्थितत्वादनादि-कालं संसरणहेतुस्वकर्मानुसंदधानः तददृष्ट्वांगीकृतवतो भगवतः कारुण्यमनुसंदधानश्च खल्वयमधिकारी तिष्ठति, तत्र कर्मा-नुसंधानसमये भयं कारुण्यानुसंधानसमयेऽभयं च द्वयमपि पर्यायेण प्रकृतिसंबंधनिवृत्तिपूर्वकं भगवत्प्राप्तिकरणपर्यंतं गच्छ-तीत्यर्थः ।

एवमुभयमपि पर्यायेण प्राप्तिपर्यंतं किमर्थं गच्छति

---

यावच्छ्रीनाथसम्प्राप्तिर्हस्तामलकवन्नु हि ॥ ४२२ ॥

ये भयाभय दोनों इस चेतन को कहांतक चलेंगे इस प्रश्न में कहते हैं— भयाभय इत्यादि ।

भयाभय दोनों बदल बदल कर प्राप्ति पर्यंत रहेंगे ॥ ४२२ ॥

भगवत्कृपा का विषय प्रकृति के साथ रहनेसे अनादिकाल संसार का हेतु अपने कर्म का स्मरण करना, उस को न देख अंगीकार करनेवाले भगवन् के कारुण्य को अनुसंधान करना यह दोनों इस अधिकारी के स्वरूप हैं, उन मे कर्म का अनुसंधान करनेके समय भय भी कारुण्य का अनुसंधान करनेके समय अभय भी ये दोनों बदल बदल कर प्रकृति संबंध से मुक्त हो भगवत्प्राप्ति के लाभ होने पर्यंत अनुवर्तमान होयंगे ।

इस प्रकार दोनों बदल बदल कर प्राप्तिपर्यंत क्यों अनुवर्तमान होयंगे उस

## निवर्त्यज्ञानं भयहेतुः, निवर्तकज्ञानमभयहेतुः ॥४२३॥

---

तद्गुणविश्वासेन सदैकरीत्या निर्भयः स्थातुं न शक्यते किमित्यत आह- निवर्त्येत्यादि ।

तस्य कारुण्यनिवर्त्यानामविद्याकर्मवासनारुचिप्रकृतिसंबंधानां ज्ञानं, एतेषां सत्वादितःपरमपि संसार आक्रमते चेत्किं कर्तव्यमिति भयहेतुरित्यर्थः । 'सर्वपापेभ्यो मोक्षयिष्यामि' इति सर्वेश्वरो यथेमानि नाशयेत्तथा करोतीत्यत एतस्य निवर्तकभूतः सर्वेश्वरस्य कारुण्यविषयज्ञानं तद्भयराहित्यहेतुरित्यर्थः । निवर्तकबले ज्ञातेपि निवर्त्यस्थितिपर्यंतमुभयमपि मध्ये मिलित्वा गच्छतीति भावः ।

एवमनेन प्रकरणेनास्य भयाभयहेतुः, तदुभयविपर्यये

---

निवर्त्यधीस्तु भीतेर्हि हेतुर्भवति सर्वथा ।
ज्ञानं निवर्तकस्याशु भयाभावस्य करणम् ॥ ४२३ ॥

के गुण के विश्वास से सदा निर्भय नहीं रह सक्ते हैं क्या ? इस शंका में कहते हैं—निवर्त्यज्ञान इत्यादि ।

निवर्त्यज्ञान भयहेतु, निवर्तकज्ञान अभयहेतु ॥ ४२३ ॥

उस के कारुण्य से निवृत्तहोने योग्य अविद्या, कर्म, वासना, रुचि, प्रकृति संबंध विषय ज्ञान ये सब रहनेसे और भी संसार अनुवर्तन किये तो क्या किया जाय ऐसा भय का हेतु है । सर्वपापों से छुडाऊंगा ऐसा कहनेवाले सर्वेश्वर के कारुण्यविषय ज्ञान अभय का हेतु है । निवर्तक के बल को जाननेपर भी निवर्त्य जब तक रहेगा तबतक भय भी बीच बीच में मिल कर सतावेगा ।

तथाच इस प्रकरण से इस चेतन के भयाभय के हेतु; उस के विपरीत

सिद्धयमानं, तन्निबंधनशङ्कापरिहाराः, सर्वेश्वरेण संसार्युज्जीवनार्थं कृषिकरणप्रकारः, अज्ञातसुकृतभगवदंगीकारहेतुत्वं, एतन्निर्हेतुकविषयीकारवैभवानभिज्ञानां प्रकारः, अयमर्थोऽभियुक्तवचनसिद्ध इत्यर्थः, अज्ञातसुकृतव्याजेन तेनांगीकरणप्रकारः, अङ्गीकारहेतूनामज्ञातसुकृतानां तत्कृषिफलत्वं, तन्निरूपणफलितं अङ्गीकारावलंबनानां कादाचित्कतया स्वयमेवोत्पादने मूलं, तद्द्वैविध्यं, एवंभूतविषयीकारशास्त्रसिद्धत्वं, एतद्विषयीकारं प्राप्तानामेतद्विषयिकस्पष्टोक्तिः, एतदनभिज्ञवचनपरिहारः, आभिमुख्यवदद्वेषस्य तत्कृपाजनितत्वं, यादृच्छिकादीनां सुकृतत्वमीश्वरकृतमित्यर्थः, एतदर्थविषयाभियुक्तवचनपरस्परविरोधपरिहाराद्यनुक्तिहेतुः, पूर्वं विस्तरेणोपपादितस्य फलितं, तदाप्तिहेतुतया ज्ञानाधिकानुसंधानं, निर्हेतुककृपाफलावश्यानुभाव्यत्वं, ईदृशकृपाप्रवाहदुर्निवारत्वं, प्रकरणादिप्रतिज्ञातार्थ-

---

समझने में होनेवाला अनिष्ट, तन्निमित्त शंका परिहार, सर्वेश्वर के संसारियों के उज्जीवन में कृषि करनेका प्रकार, अज्ञात सुकृत भगवदंगीकारहेतुत्व, एतन्निर्हेतुक विषयीकार वैभव को न जाननेवालों के प्रकार, एतद्वैभव को जाननेवालों के प्रकार, यह अर्थ आप्तवचन सिद्ध, अज्ञातसुकृत व्याज से ईश्वर के अंगीकार प्रकार, अंगीकार हेतु अज्ञातसुकृत उनकी कृषि का फल, उस के निरूपण से फलित, अंगीकार के उपयुक्त कदाचित् स्वयमेव उत्पन्न होनेका कारण. उन की दो प्रकारता, एवंभूत विषयीकार का शास्त्र सिद्धत्व, इस विषयीकार को प्राप्त होनेवालों के विशदवचन, एतदनभिज्ञवचन परिहार, आभिमुख्य के तरह अद्वेष भी उस की कृपा से होता है, यादृच्छिकादियों को सुकृत कहनेवाले ईश्वर, एतदर्थविषय आप्तवचनों में परस्पर विरोध परिहारों के नहीं करनेमें हेतु, पूर्व विस्तारपूर्वक उपपादन किया हुआ का फल, उस की आप्ति के हेतुतया ज्ञानाधिकों का अनुसंधान, निर्हेतुक कृपाफल का अवश्य अनुभाव्यत्व, ईदृश कृपाप्रवाह का दुर्निवारकत्व,

निगमनं, भयाभयाऽनुवर्तनकालावधिः, एतदुभयहेतुभूतज्ञानविशेषौ चोक्ताः; अतोऽस्याधिकारिणोऽद्वेषादिमोक्षपर्यंताखिललाभहेतुर्भगवदाकस्मिककृपाप्रभावो विस्तरेण प्रतिपादितः। अनेन द्वयोपदेष्टृभूताचार्योपसत्त्यादीनां तदुपदिष्टद्वयार्थज्ञानादीनां च हेतुभूतभगवन्निर्हेतुककृपावैभव उक्तः।

इति निर्हेतुककृपावैभवप्रकरणं समाप्तम्।

---

प्रकरणादि प्रतिज्ञात अर्थों की समाप्ति, भयाभयानुवर्तनकाल का अवधि, एतदुभय हेतुभूत ज्ञानविशेष, इन सब को कहने से इस अधिकारी का अद्वेषादि मोक्षपर्यंत अखिल लाभ हेतु भगवन्निर्हेतुक कृपाप्रभाव विस्ताररूप से प्रतिपादन किया गया। इस से द्वयोपदेष्टृ आचार्य की सेवादि और तदुपदिष्ट द्वयार्थज्ञानादियों का भी हेतुभूत भगवन्निर्हेतुक कृपावैभव कहा गया।

इति निर्हेतुक कृपावैभव प्रकरण समाप्त।

## अथ चरमप्राप्यप्रापकप्रकरणम् ।

—=:❀:=—

अस्मिन् प्रबन्धे उपक्रममारभ्यैतावता सिद्धोपायभूत-सर्वेश्वर एव चेतनानां परमपुरुषार्थलक्षणमोक्षसिद्धेर्निरपेक्ष-साधनमित्युक्तोपायभूतस्य सर्वेश्वरस्य कर्मनिबन्धनेन सं-सारिणं कर्तुं कारुण्यनिबंधनेन मुक्तं च कर्तुं समर्थनिरंकुश-स्वतंत्रत्वात्तमुपायतयाश्रित्य वर्तमानानां स्वकर्मानुसंधानेन त-त्कारुण्यानुसंधानेन चागते भयाभये यावत्प्राप्ति पर्यायेण वर्तेते इत्यमुमर्थमवोचत् । इतःपरं 'साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम्' इति श्रीमहालक्ष्मीवल्लभः स्वयमेवाचार्यो भू-त्वा' इति चोक्तत्वात्तादृशसिद्धोपायबहिर्भूतत्वं विना तच्चरमा-

---

### अथ चरम प्राप्यप्रापक प्रकरण ।

——❀——

इस प्रबंध में उपक्रम से ले यहां तक सिद्धोपायभूत सर्वेश्वर ही चेतन का परमपुरुषार्थलक्षण मोक्षसिद्धि के लिये निरपेक्ष साधन है, ऐसा कह उपायभूत सर्वेश्वर कर्मद्वारा संसारी बनाने को भी कारुण्य द्वारा मुक्तबनाने को भी समर्थ निरंकुश स्वतंत्र होनेसे उन को उपायतया आश्रयण करनेवालों को स्वकर्मानुसंधान से भी उस के कारुण्यानुसंधान से भी होनेवाले भयाभय मोक्षपर्यंत बराबर होते रहेगा ऐसा पहिले कहे हैं, अब 'साक्षात् देव नारायण मनुष्यशरीर धारण कर' 'श्रियःपति आप ही गुरु हो' इत्यादि वचन से उस सिद्धोपाय से बहिर्भूत न हो

स्वतंत्रस्योपायत्वेनाश्रयणकाले
एव खल्वयं प्रसंगोऽस्ति ॥४२४॥

---

वधिः, बंधमोक्षयोरुभयोरपि मध्यस्थलं विना मोक्षैकहेतुत्वात्तन्निष्ठानां भयप्रसंगं विना सदा निर्भयं स्थितेर्मूलं चरमावधिस्वरूपप्राप्ययोरनुरूपश्चरमोपायः सदाचार्याभिमान एवेति सकलवेदांतसारवित्तमैः पूर्वाचार्यैः स्वेषां शरणत्वेनानुसंधानायोपदिष्टं रहस्यार्थं सर्वे ज्ञात्वा यथोज्जीवेयुस्तथा प्रबंधशेषेण सुस्पष्टं वदति ।
तत्रैवं भयाभययोरुभयोः पर्यायेणानुवर्तनं विना सदैकरीत्या निर्भयं स्थातुमुपयुक्तः कश्चन मार्गो नास्ति किमित्याकांक्षायामाह— स्वतंत्रस्येत्यादि ।

---

स्वतंत्रस्य हरेरेवोपायेनाश्रयणक्षणे ।
एवं खलु प्रसंगो हि वर्तते शास्त्रसम्मतः ॥ ४२४ ॥

उस का चरमावधि हो बंधमोक्ष दोनों का समान न हो मोक्षैकहेतु होनेसे तन्निष्ठों को भय का प्रसंग न हो सदा एक प्रकार से निर्भयता हो सक्ती है तादृश चरमावधिभूत स्वरूप प्राप्यों के अनुरूप चरमोपाय सदाचार्य्याभिमान ही है ऐसा सकलवेदांतसारवित्तम पूर्वाचार्य अपने उपायतया अनुसंधान कर उपदेश करते हुवे रहस्यार्थ को संपूर्णलोग जान उज्जीवित हो ऐसा समझ इस प्रबंधशेष से इस अर्थ को स्पष्टतया कहते हैं ।

इस प्रकार भयाभय दोनों वराबर न हो सदा निर्भय होनेका एक मार्ग नहीं है क्या ? इस आकांक्षा में कहते हैं—स्वतंत्र इत्यादि ।

स्वतंत्र को उपायतया आश्रयण करते-
पर ही भयाभय का प्रसंग होता है ॥ ४२४ ॥

**भोजनकाले एकां वर्ता भोजनाभावकाले**
**एकां वार्तां च वदंतो दश संति हि**

---

कर्मानुगुणं संसारयितुं कारुण्यानुगुणं संसारनिवृत्तिं कृत्वा चरणौ प्रापयितुं च शक्तस्य स्वतंत्रस्येष्टानिष्टप्राप्तिपरिहारयोरुपायत्वेनाश्रयणकाले आमोक्षमपि भयाभये पर्यायेण स्यातामित्ययं प्रसंगोस्तीत्यर्थः । परतंत्रस्वरूपस्य मोक्षैकहेतोराचार्यस्योपायत्वेन स्वीकारेऽयं प्रसंगो नास्ति सततं निर्भयस्तिष्ठेदिति भावः ।

प्रमाणात्प्रमेयनिश्चयः कर्तव्यः, अमुमर्थं केन निश्चिनुम इत्याकांक्षायामाह— भोजनकाल इत्यादि ।

---

**एकां वार्तां भोगस्य काले चैका तदन्यथा ।**
**वदन्त इति दिक्सन्ति तच्छ्रीसूक्तं प्रगृह्य वै ।**

कर्मानुगुण संसारी बनाना कारुण्यानुगुण संसार से अलग कर श्रीचरणों में मिला लेना इन दोनों के समर्थ निरंकुश स्वतंत्र ईश्वर को इष्टानिष्ट प्राप्तिपरिहारों के उपायतया आश्रयण करनेपर ही मोक्ष तक भयाभय दोनों बराबर होते रहेंगे ऐसा प्रसंग है । परतंत्रस्वरूप मोक्षैकहेतु अपने आचार्य को उपायतया आश्रयण करनेसे यह प्रसंग नहीं, सदा निर्भय हो सक्ता है ।

प्रमाण से प्रमेय का निश्चय होता है,इस अर्थ को किस प्रमाण से निश्चय कर सक्ते हैं इस आकांक्षा में कहते हैं—भोजन करचुकने पर इत्यादि ।

**भोजन करचुकने पर एक वार्ता**
**नहीं करने पर एक वार्ता कहने**

तेषां गाथा आदायायमर्थो न निश्चीयते ॥४२५॥

अज्ञाननिवृत्तिपूर्वकमानंदरूपापन्नज्ञानं प्राप्तानां भगवदनु- भवैकधारकाणां दिव्यसूरीणां भोजनकालभोजनाभावकालौ नाम– भगवदनुभवतदलाभकालौ । तत्र भगवदनुभवं कृत्वा यदा हृष्टा भवंति तदा तद्दास्यविवृद्धिकामतया तदीयदा- स्येऽवगाह्य 'प्रतिजन्मावकाशं मां दासत्वेन स्वीकुर्वंतः परमाः' 'प्रतिदिनं प्रतिजन्मावकाशमस्मान् दासत्वेन स्वीकुर्वंतो नाथाः सर्वदास्मान् रक्षंत उपकारकाः' 'अपर्याप्ति अस्मान् दासत्वेन स्वीकृत्य जन्मांतरेषु रक्षंतः' 'उज्जीवयंतो विश्वसनीयाः' जन्म- जन्मन्यपकृष्टकुलोत्पन्ना अपि' 'तद्दासा लघुमहामनुष्या मां दासत्वेन स्वीकुर्वंतोऽत्र संचरंति रक्तकमलसदृशनेत्रयुक्तश्री-

निश्चीयते हि नाथोयं तत्सूक्तेरव्यवस्थया ॥४२५॥

वाले दश हैं, उन के गाथा को लेकर
इस अर्थ को नहीं निश्चय करते हैं ॥ ४२५॥

अज्ञाननिवृत्ति मत्यानन्द प्राप्त भगवदनुभवैक धारक सूरियों को भोजन करना भोजन नहीं करना माने—भगवदनुभव और उस के अलाभ के समय । उस में भगवदनुभव कर हृष्ट होनेके समय उस के दास्य वृद्धि कामना से तदीयों के दास्य में दृढ हो 'प्रति जन्म हमारे दास्य स्वीकार करनेके योग्य स्वामी हैं' 'प्रति जन्म हमारे मालिक हैं' 'भविष्यत् और वर्तमान में हमारी रक्षा करनेवाले मालिक हैं' 'आयास विना हम को रक्षा कर जन्मजन्मांतरों में रक्षा करेंगे' 'सुकृत को बढ़ाकर हम को प्रतिदिन उज्जीवित करनेवाले स्वामी हैं' 'हमारे बहुत जन्म में वंदनीय मालिक हैं' 'उन के दास लघुमहामनुष्य हो हम को रक्षा करते हुए

वामनस्यात्यंतपरिनलसुक्तसद्योविकसितकमलचरणयोरधस्ता-
त्प्रवेशस्तत्सदृशः किं पापिष्ठस्य मम' 'चिंतनोपयुक्तमनस्कास्त
एव मम स्वामिनः' 'ज्ञानस्य प्रकाशमानस्वरूपं चिंतयंतो
नायकाः' 'आदरेणाश्रयत आश्रय समीचीनहृदय' 'महापुरुषस्य
नामोच्चारयतो महतः कदापि विश्लेषयितुं न शक्तोस्मि' 'नेत्रा-
भ्यां सम्यग्दृष्ट्वा हस्ताभ्यामाश्रयतो यदा चिंतयति तदा पापं
न तिष्ठति' 'गोष्ठी दृष्टा चेदिदमेव युष्माकं नेत्रयोः फलं' 'भक्त-
चरणरजोऽवगाहने प्राप्ते गङ्गाजलस्नानानुरागेण किं' 'आनंदपू-
र्णभक्तरक्तचरणौ स्तुत्वा वर्द्धयति मन्मनः' इत्यादिभिस्तद्वि-
षयादपि तदीया एवास्माकं शेषिण उपायोपेयभूता इत्यादरं
कृत्वा वदंति । यदा भगवदलाभक्लिष्टा भवंति तदा परम-
शेषिषु परमप्राप्यभूतेषु तदीयेषु सन्निहितेष्वपि तेषु हृदयस्या-

यहां संचार करते हैं तो कमलनेत्र वामन भगवान् के सुंदर कमल सदृश चरणार
विंदों के नीचे प्रवेश करना प्राप्य होगा क्या ? पापी को' ऐसा 'जो लोग उन
के स्मरण करते हैं वे ही हम को रक्षा करेंगे' 'ज्ञानरूपी तेजोवस्तु को स्मरण
करनेवाले हमारे मालिक हैं' 'आदर पूर्वक सेवा करनेवालों को आदर पूर्वक
सेवा करो हे हमारे मन' 'सहस्रनामवाले के नाम अभ्यास करनेवाले महात्माओं
को एक क्षण भी नहीं छोड सक्ता हूं' 'नेत्र से देख द्रवीभूत हो हाथों से सेवा
करनेवालों को दर्शन करनेपर मृत्यु नहीं भक्षण करेगी पाप नहीं घेरेंगे' ऐसा,
'समूह को देखने का भाग्य हो तो वही नेत्र का फल है' 'भक्तों के चरणधूलि
में स्नान करने पावे तो गङ्गाजल में अवगाहन करनेसे क्या होगा' 'आनंद
पानेवाले दासों के चरणों को मंगलाशासन करता है हमारा मन' इत्यादिओं से
परमात्मा की अपेक्षा उन के भक्त ही हमारे शेषी और उपायोपेयभूत भी हैं ऐसा
अत्यादर पूर्वक कहना, भगवदनुभावलाभ से क्लेश पानेके समय तादृश परमशेषी
परमप्राप्य प्रापकभूत तदीय समीप में रहनेपर भी उन के विषय में मन नहीं

वगाहनाभावेन भगवद्विषय एव प्राप्यः प्रापकश्चेति निश्चित्य 'द्रष्टुमागच्छ' 'द्रष्टुं प्रकारं वद' 'रेखायुक्तक्रूरं धनुर्नामयत्स्वामीं नागतः किं कुर्यां' 'युद्धे हिंसकबाणं प्रेरयदस्मत्स्वामी नागच्छति हंत' 'वासुदेव त्वदागमनं प्रतीक्ष्य प्रवाहसैकते-प्रातिष्ठं' इत्यादिभिरार्तिपरवशा अनवरतं वदंति प्रणयरोषं कुर्वंति । 'क्रूरपक्षविशिष्टपक्षी' 'युष्माभिरस्माकं प्रसंगो नास्ति' इत्यादिभिरुपालभंते त्यजंतीत्येवं स्थितत्वाद्भोजनकाल एकां वार्तां भोजनाभावकाल एकां वार्तां च वदंतीत्युक्तम् । सूरीणां सर्वेषामेकप्रकृतिकत्वादेककंठ्याच्च दश संतीत्युक्तम् । तेषां गाथा आदायायमर्थो न निश्चीयत इति- अज्ञाननिवृत्तिपूर्वका-नंदरूपापन्नज्ञानं प्राप्तत्वात्प्रथमपर्वापेक्षया चरमपर्वस्य विद्यमा-नमाधिक्यं सर्वं विशदं दृष्ट्वाऽवदन्, तथापि चरमपर्वैकनिष्ठां विना प्रथमपर्वेऽभिनिवेशेन तदनुभवहृष्टतासमये एकं वदंति

---

लगकर भगवद्विषय को ही प्राप्य और प्रापक समझ 'देखनेको आओ' 'देखने का उपाय बताओ' 'क्रूर बाणप्रयोग करनेवाले कुमार भी आया नहीं क्या करूं' 'क्लेशरहित क्रूर बाणों को संधान करनेवाले हमारे मालिक भी नहीं आता है तो' 'वासुदेव तुमारे आगमन को देख सुंदर रेती के ढेर पर रो रही हूं' इत्यादियों से आर्तिपरवश हो रोना, प्रणयकलह करना 'क्रूरपक्ष पक्षी' 'तुम से हमारा संबंध नहीं' इत्यादियों से ऊब जाना, झटक देना, आदि करनेसे भोजन करनेपर एक वार्ता नहीं करनेपर एकवार्ता कहनेवाले ऐसा कहतेहैं । सबही सूरि एक स्वभाववाले एककंठ होनेसे दश हैं ऐसा कहते हैं । उनकी गाथा लेकर इस अर्थको नहीं निश्चय करते हैं इति—अज्ञाननिवृत्ति सत्यानंद प्राप्त होनेसे प्रथमपर्व की अपेक्षा चरमपर्व की श्रेष्ठता को अच्छीतरह से देख कहने पर भी चरमपर्व के निष्ठावाले न हो प्रथम-पर्व में मग्न हो उन के अनु व से हृष्ट होनेके समय एकवार्ता उस के अलाभ से

तान् विहस्य तिष्ठति खल्वेकस्तस्य
गाथामादायामुमर्थं निश्चिनुमः ॥ ४२६ ॥

---

तद्भलाभक्लिष्टतासमये एकं वदंति तस्मादेकप्रकाररहितानां गाथा आदाय न क्रियते आचार्य एवोपाय इत्येतदर्थनिश्चय इत्यर्थः ।

पुनः कस्य गाथामादाय निश्चीयत इत्यत आह— तानि-त्यादि ।

'तस्य स्पृहणीयचरणौ निरंतरमाश्रितः' 'अन्यं देवं न जानामि' इति स्वाचार्यपरांकुशस्य चरणावेव प्राप्यत्वेन प्रापकत्वेन च निरंतरमाश्रित्याविदितान्यदेवतः 'जिह्वया संकीर्त्या-

---

तद्विहस्य वसत्येकस्तच्छ्रीसूक्तं श्रुतं मया ।
सम्यक् ततोमुमर्थं तु निश्चिनुमो वयं खलु ॥ ४२६ ॥

क्लेश पाने के समय एक वार्ता कहना, एक प्रकार नहीं रहना इत्यादि से उन की गाथा को लेकर नहीं आचार्य ही उपाय हैं इस अर्थ को निश्चय करते हैं ।

पर किस के वचन को लेकर निश्चय करते हैं इस आकांक्षा में कहते हैं—उन को इत्यादि ।

उन को हसनेवाले एक हैं उन की गाथा
को लेकर इस अर्थ को निश्चय करते हैं ॥ ४२६ ॥

'उन के स्पृहणीय चरणों का आदर किया हूं' 'अन्य देवता को नहीं जानता हूं' ऐसा स्वाचार्यभूत श्रीशठकोपसूरि के श्रीचरणों को ही प्राप्य और प्रापकतया संशयरहित आश्रयण कर अन्य देवताओं को न जान 'जिह्वा से

नंदं प्राप्तवान्' इति तत्संकीर्तनानंदनिर्भरतया 'दासश्चतुरो जातः' इत्यनुरूपाश्रयणरूपचातुर्ययुक्ततया स्थिततरत्वात् चरमपर्वे आधिक्यं ज्ञात्वोक्तावपि तदेकनिष्ठां विना प्रथमपर्वेऽभिनिवेशेन तद्वैलक्षण्यपरवशान् भोजनसमय एकवार्तां भोजनाभावसमय एकवार्तां च वदतो दिव्यसूरीन्दश च 'प्रथमं कस्यचिदाचार्यस्य चरणावाश्रित्यानवरतसुखितया स्थित्यलाभास्ववैलक्षण्येन व्यामोहयद्भगवद्विषये प्रथमतः प्रविश्य तदनुभवदशायामेकमुक्त्वा तदलाभदशायामेकमुक्त्वा तैरनुभूयमानावस्था कीदृशीति परिहस्य स्थितः श्रीमधुरकविरेकोऽस्ति खलु, चरमपर्वनिष्ठस्य सदैकरूपवचनस्य तस्य सूक्तिरूपकण्णिनुण् शिरुत्तांबाख्यमादायामुमर्थं संशयविपर्ययगंधं विना निश्चिनुम इत्यर्थः ।

---

अभ्यास कर आनंद पाया है' ऐसा उन के संकीर्तन से आनंदपूर्ण हो 'दास चतुर हो गया' ऐसा प्राप्त जान कर आश्रयण करनेवाले चतुर होनेसे, चरमपर्व की श्रेष्ठता जान कहनेपर भी तदेकनिष्ठ न हो प्रथम पर्व में मग्न हो उस के सौंदर्य परवश हो भोजन करनेपर एक वार्ता और न करनेपर एक वार्ता कहनेवाले दश सूरियों को, पहिले एक आचार्य के चरणों का आश्रयण कर निरंतर सुखी न हो अपने सौंदर्य से पागल बनानेवाले भगवद्विषय में पहिले से ही अवगाहन कर उन की अनुभवदशा में एक कहना अलाभदशा में एक कहना ऐसा से सूरिलोग क्लेश पाते हैं यह क्या आश्चर्य है समझ परिहास करनेवाले श्रीमधुरकवि सूरि एक हैं, चरमपर्व निष्ठ सदा एकरूप वचनवाले इन का गाथारूप ग्रंथिपूर्ण अल्प रज्जु (कण्णिनुण् शिरुत्ताम्बु) प्रबंध को ले इस अर्थ को संशयविपर्यय रहित निश्चय करते हैं ।

अथवा भोजनकाल इत्यादिवाक्यस्य भगवदनुभवकरणसमये 'भुक्त्वा तृप्तस्य मम तदुपरि का न्यूनता' 'विस्तृते परमाकाशे को वा समः' 'पृथिव्यां सदृशमस्ति किं ? इत्येवमनुभवजनितहर्षप्रकर्षगर्वितामेकां वार्तां, तदनुभवालाभसमये 'ज्ञानं सर्वं मर्मस्पर्शि क्षुभितं मुह्यति' 'अवयवकांतिना सह समुदायकांतिर्निर्गता' 'द्रष्टुमागच्छ इति नेत्रमधरं च शुष्यति' 'अग्निसकाशस्थितमधूच्छिष्टवत् लोके संचरामि' इत्येवं शोकवेगजनितैकां वार्तां च वदंतः । एको द्वौ वा न दश संति हि । तदीया एव शेषिण उपायोपेयभूता इति ज्ञानेऽपि तदनुगुणं स्थातुमशक्तानां भगवद्विषयवैलक्षण्यपरवशानां भोजनकाले एकवार्तानां भोजनाभावकाले एकवार्तानां तेषामुक्तीरादाय न स्वाचार्यचरणयुगलमुपायोपेय इत्येतत्परमार्थनिर्णयः

---

अथवा भोजन करनेपर इत्यादि को भगवदनुभव करनेके समय 'अनुभव कर आनंद पानेवाले को नित्यसूरिलोग सदृश हैं क्या' 'परमपद के नित्यसूरिलोग भी समान नहीं' 'मर्त्यलोग समान होयंगे क्या' ऐसा अनुभव जनित हर्षाधिक्य से गर्वित हो एक वार्ता, तदनुभवालाभ के समय 'बुद्धि सब अंतर व्याकुल हो मोहित होती है अहो' 'कांति के साथ मणिवर्ण छूट गया' 'देखने को आओ ऐसा कह नेत्र और मुह खोल' 'अग्नि के साथ रहनेवाले मोम के तरह लोक में संचार करती हूं' ऐसा शोक वेग जनित एक वार्ता कहनेवाले, एक दो नहीं दश हैं । भागवत ही शेषी और उपाय उपेयभूत हैं ऐसा जाननेपर भी तदनुगुण नहीं रहकर भगवद्विषयसौंदर्य में परवश हो इस प्रकार भोजन करनेपर एक वार्ता नहीं करनेपर एक वार्ता कहनेवालों के श्रीसूक्ति लेकर नहीं स्वाचार्यचरणयुगल ही उपयोपेय हैं इस परमार्थ को निर्णय करना । सूरि के चरण ही अपने को उपायतया आश्रयण कर 'अन्यदेवता को नहीं जानता हूं' ऐसा रहने

स्वरूपस्य प्राप्यस्य चानुरूपः स्यात् खलु प्रापकः ॥

क्रियेति, 'पराङ्कुशचरणावेव स्वस्य शरणत्वेनाश्रित्य 'देवमन्यं न जानामि' इति स्थितत्वात्प्रथमपर्वेऽभिनिवेशेन हर्षशोकपारवश्येन वदतः परिहसन् वर्तमानः कश्चिदस्ति हि, तथा वर्तमानस्य श्रीमधुरकवेः श्रीसूक्तिमादायैतदर्थनिर्णयं कुर्म इति वा योजना ।

एवं प्रमाणसिद्धमर्थमुपपत्त्या स्थिरीकरोति— स्वरूपस्येत्यादिना ।

स्वरूपोपायपुरुषार्थानां निष्कर्षसमये प्रथमं स्वरूपं याथार्थ्येन निष्कृष्यानंतरं प्राप्यं तदनुरूपं निष्कृष्य प्रापकस्तदुभयानुगुणं निष्कर्षयितव्यः । व्युत्पत्तिदशायामुपेयं पूर्व-

---

स्वरूपप्राप्ययोस्तुल्यं प्रापकस्स्यात्सदा खलु ॥४२७॥

से प्रथमपर्व में मग्न हो हर्ष शोक परवश हो कहनेवालों को परिहास करनेवाले एक हैं । ऐसे रहनेवाले श्रीमधुरकवि के दिव्यसूक्ति को लेकर इस अर्थ को निश्चय करेंगे ऐसा भी योजना कर सक्ते हैं ।

इस प्रकार प्रमाण सिद्ध अर्थ को उचित न्याय से स्थिर करते हैं— स्वरूप इत्यादि ।

स्वरूप और प्राप्य के सदृश होना चाहिये प्रापक ॥४२७॥

स्वरूपोपायपुरुषार्थों को निर्णय करनेके समय पहिले स्वरूप को यथार्थतया निष्कर्ष कर अनंतर प्राप्य को तदनुरूप निष्कर्ष कर पश्चात् प्रापक को तदुभयानुरूप निष्कर्ष करना चाहिये । व्युत्पत्ति दशा में उपेय पहिले हो उपाय पीछे होता

भावि,. उपायः पश्चाद्भावी स्यात् । अनुष्ठानदशायां व्यत्यासेन तिष्ठति । स्वरूपस्य प्राप्यस्य चानुरूप्याभावादेव ह्युपायांतर पं-रित्यक्तं, तस्मात्स्वरूपस्य प्राप्यस्य चानुरूपः स्यात् खल्विति वदति । अथ स्वरूपे निरूपिते ज्ञानानंदौ बहिर्दलमिति प्रकारेण भगवदनन्यार्हशेषत्वमेवाकारः, तस्य याथात्म्यं तच्छेषत्वं च बहिर्दलमिति प्रकारेण तदीयशेषत्वमेवाकारो भवति । एवंभूतस्वरूपानुरूपे प्राप्ये निरूपिते तत्कैंकर्यं प्रथमावधिः तदीयकैंकर्यं चरमावधिर्भवति । स्वरूपप्राप्यवेषस्यै-तादृशत्वात्तदुभयानुगुणप्रापकस्तदीया एव स्युः खलु । अथैतेषु प्रथमं स्वमंगीकृत्य तत्वज्ञानप्रदानं कृतवतो महोपकारकस्याचार्यस्यैव शेषत्वं समस्तभागवतानां प्रीतिविषयः स्वस्वरूपस्य सीमाभूमिश्च भवति । एतत्स्वरूपस्यानुरूपं प्राप्यं चाचार्यचरणयोः क्रियमाणं कैंकर्यं भवति । एवं स्वरूपप्राप्ययोः स्थि-

है । अनुष्ठानदशा में व्यत्यास से होता है । स्वरूप और प्राप्य के अनुरूप न होने से ही उपायांतर को परित्याग किये हैं । इस कारण से स्वरूप और प्राप्य के सदृश होना चाहिये ऐसा कहते हैं । अब स्वरूप को निरूपण करने से ज्ञानानंदों को भी बहिर्दल समझने योग्य भगवदनन्यार्हशेषत्व ही आकार होता है । उस का याथात्म्य तच्छेषत्व ही बहिर्दल समझने योग्य तदीयशेषत्व ही आकार होता है । एवंभूत स्वरूपानुरूप प्राप्य को निरूपण करनेसे भगवत्कैंकर्य प्रथमावधि हो तदीय कैंकर्य चरमावधि होता है । स्वरूपप्राप्यवेष यह होनेसे तदुभयानुगुण प्रापक तदीय ही हो सक्ते हैं । अब उन भागवतों में पहिले अपने को अंगीकार कर तत्वज्ञान को देनेवाले महोपकारक स्वाचार्य का शेष होना समस्त भागवतों का मुखोल्लास हो अपने स्वरूप का चरमावधि होता है । इस स्वरूप के अनुरूप प्राप्य भी स्वाचार्यचरणों में क्रियमाण कैंकर्य होता है । एवं स्वरूप और प्राप्य निश्चित होनेसे

आंध्रपूर्णः कूरेशं दाशरथिं
चोभयकूलस्थाविति वदंति ॥ ४२८ ॥

---

तत्वादनयोरुभयोरप्यनुरूपं प्रापकमाचार्यचरणयुगलमेव भवे-दित्यर्थः । अयमेव स्वरूपप्राप्ययोरनुरूपोपाय इत्युक्तत्वादीश्वरस्वातंत्र्यभीत्या निर्भयत्वमवलंब्यात्रावगाहनं न भवति मुख्योपाय इदमेवेति सम्प्रतिपन्नम् ।

एतदर्थविषयमेकमैतिह्यमाह— आंध्रपूर्ण इत्यादिना ।

परांकुशचरणयोर्मधुरकविरिव प्राप्यप्रापकोभयमपि रामानुजचरणावेवेति प्रतिपत्तिं कृत्वाऽन्यं देवं न जानामीति स्थितः आंध्रपूर्णः रामानुजस्य पादच्छाया पादरेखेवाऽविनाभूतो

---

दाशरथिं कूरेशं चोभयकूलस्थिताविति ।
आन्ध्रपूर्णो महाप्राज्ञः सदा वदति भावुकः ॥४२८॥

इन दोनों के सदृश प्रापक स्वाचार्य चरणयुगल होना चाहिये । यही स्वरूप प्राप्यों के सदृश उपाय कहनेसे ईश्वर स्वातंत्र्यभीता निर्भय होने के लिये मात्र इस को मानते नहीं किंतु मुख्योपाय यही है यह अर्थ सिद्ध हुआ ।

इस अर्थ विषय में एक ऐतिह्य को कहते हैं—आंध्रपूर्ण इत्यादि ।

आंध्रपूर्ण कूरेश और दाशरथी
को उभयकूलस्थ कहते हैं ॥ ४२८ ॥

शठकोपसूरि के चरणों में श्रीमधुरकवि सूरि जैसे रहे थे तैसे प्राप्य प्रापक दोनों रामानुजस्वामी के चरण ही ऐसा विश्वास कर 'अन्यदेव को नहीं जानता हूं' ऐसे रहनेवाले आंध्रपूर्ण स्वामी रामानुजस्वामी के छाया और पादुका के तरह अविनाभूत हो 'रामानुज के चरणों को उपायतया विश्वास करता हूं'

'रामानुजस्य चरणौ शरणं प्रपद्ये' 'रामानुजार्यवशगः परिवर्तिषीय' इत्युपायोपेयौ तच्चरणौ तच्चरणयोः क्रियमाणं कैंकर्यं चेति स्थितं कूरेशं तादृशदाशरथिं च संसारे स्थितौ पाददाहेनागतार्त्यतिशयेन कालुष्यं प्राप्य कादाचित्कं स्वामिपार्श्वे च गत्वा दंतप्रदर्शनं तद्वैलक्षण्यदर्शनेन प्रावण्यमित्येतावदादाय रामानुजचरणावेव प्राप्यप्रापकौ चेत् 'देवमन्यं न जानामि' इति न स्थातव्यं किं? तथा विना चरमावधिं प्रथमावधिं चावलंब्य वर्तमानावेतावुभयकूलस्थाविति वदतीत्यर्थः।

स्वरूपस्य प्राप्यस्य चानुरूपः स्यात् खल्वित्यत्र स्वरूपमेकमार्गेणांगीकृत्य भगवत्कैंकर्यं खलु प्राप्यं, प्राप्यस्य सदृशं स्यादिति कथमिति वदतां शंकां परिहर्तुं प्रथमं प्राप्यविशेषं विशिष्य दर्शयति— प्राप्यस्येत्यादिना।

---

'रामानुजस्वामी के वश में हो कैंकर्य करूंगा' ऐसा उपायोपेय उन के चरण और उन चरणों में क्रियमाण कैंकर्य ही है ऐसा समझ रहनेवाले कूरेश और तादृश दाशरथि इन दोनों को संसार स्थिति से पांव जल कर आर्ति की अधिकता से कदाचित् भगवान् के पास जा दांत दिखाना उस के सौंदर्यादि को देख कर प्रवण होना इतने ही को लेकर रामानुजस्वामीजी के चरण ही प्राप्यप्रापक होतो अन्यदेव को नहीं जानता हूं ऐसा रहना चाहिये ऐसा न कर चरमावधि और प्रथमावधि में हाथ रखनेवाले उभयकूलस्थ हैं ऐसा कहते हैं।

स्वरूप और प्राप्य के सदृश होना चाहिये इस स्थल में स्वरूप को एक प्रकार मान भगवत्कैंकर्य ही प्राप्य होता है, प्राप्य का सदृश होना चाहिये ऐसा कैसे कह सक्ते हैं? इस शंका को परिहार करनेके लिये पहिले प्राप्यस्वरूप को दिखाते हैं—प्राप्य का इत्यादि।

**प्राप्यस्य प्रथमपर्व आचार्यकैंकर्यं मध्यमपर्व भगवत्कैंकर्यं चरम-पर्व भागवतकैंकर्यम् ॥ ४२९ ॥**

---

प्राप्यं नाम—शेषत्वैक निरूपणीयस्यात्मवस्तुनः पुरुषार्थ-भूतं कैङ्कर्यम्। पर्वशब्दोंऽशवाची। अत्र प्रथमपर्वत्वेनोक्तमा-चार्यकैङ्कर्यं— 'समीचीनं कृत्वा लक्ष्मीवल्लभार्थं कृत्वा' इत्युक्त-प्रकारेण प्रथमं स्वमंगीकृत्य भगवद्विषयस्य किंकरं कृतवत आचार्यस्य प्रीत्यर्थं क्रियमाणं भगवत्कैंकर्यम्। मध्यमपर्व-त्वेनोक्तं भगवत्कैंकर्यं— 'दासानां मां दासं कृतवान् विमलः' इत्युक्तप्रकारेण स्वप्रीतिविषयान् स्वदासानां दासान् कुर्वतो

---

प्राप्ये हि प्रथमं पर्व देशिकस्यार्चनं विदुः।
मध्यमं हरिदास्यं च भागवतस्य चांतिमम् ॥ ४२९ ॥

प्राप्य का प्रथम पर्व आचार्यकैंकर्य मध्यम पर्व
भगवत्कैंकर्य, चरम पर्व भागवतकैंकर्य है ॥ ४२९ ॥

प्राप्य माने—शेषत्वैकनिरूपणीय आत्मवस्तु का पुरुषार्थभूत कैंकर्य। पर्व माने—अंश है। यहां प्रथम पर्वतया कहे जानेवाले आचार्य कैंकर्य माने—'शोधन कर श्रियःपति के लिये किये पीछे' इस वचनानुसार पहिले अपने को अंगीकार कर भगवद्विषय के दास हो जैसा शोधन करनेवाले आचार्य के मुखो-ल्लासार्थ क्रियमाण भगवत्कैंकर्य है। मध्यम पर्वतया कहे जानेवाले भगवत्कैंकर्य माने—'दासों के दास बनानेवाले निर्मल' इस वचनानुसार अपने भक्तों को अपने दासों के दास बनानेवाले भगवान् के मुखोल्लासार्थ क्रियमाण भागवत

## स्वरूपप्राप्तिं शास्त्रेषु पुरुषार्थत्वेन वदति

भगवतः प्रीत्यर्थं क्रियमाणं भागवतकैंकर्यम्। चरमपर्वत्वेनोक्तं भागवतकैंकर्यं आचार्यवानिति स्वीकुर्वतामाचार्यवैभवज्ञापकानामाचार्यकैंकर्यस्याधिक्यं जानतां सर्वेषां भागवतानां प्रीत्यर्थं क्रियमाणमाचार्यकैंकर्यम्। एवमाचार्यप्रीतिविषयं भगवत्कैङ्कर्यमाचार्यकैङ्कर्यमिति भगवत्प्रीविषयं भागवतकैंकर्यं भगवत्कैंर्यमिति भागवतप्रीतिविषयमाचार्यकैंकर्यं भागवतकैंकर्यमिति चोक्तम्। तस्मादाचार्यकैंकर्यं प्राप्यमित्यत्र न विरोध इति भावः।

एवमाचार्यकैङ्कर्यमेव चरमपर्व इति शास्त्रेणानुक्तावेवमिदं कथं निश्चीयत इति शंकायामाह---स्वरूपप्राप्तिमित्यादि।

---

शास्त्रे स्वरूपप्राप्तिं हि पुरुषार्थतया विदुः।

कैंकर्य। चरमपर्वतया कहे जानेवाले भागवत कैंकर्य माने---आचार्यपर है ऐसा समझ संतुष्ट होनेवाले आचार्यवैभव ज्ञापक और आचार्य कैंकर्य की उत्कृष्टता को जाननेवाले सब भागवतों के संतोष के लिये क्रियमाण आचार्य कैंकर्य है। तथा च--आचार्य प्रीतिविषय भगवत्कैंकर्य को आचार्य कैंकर्य, भगवत्प्रीति विषय भागवत कैंकर्य को भगवत्कैंकर्य, भागवतप्रीतिविषय आचार्य कैंकर्य को भागवतकैंकर्य ऐसा कहा गया। इस लिये आचार्य कैंकर्य को प्राप्यतया कहने में विरोध नहीं।

एवं आचार्य कैंकर्य ही चरमपर्व करके शास्त्र के नहीं कहनेपर भी यह कैसा हो सक्ता है इस शंका में कहते हैं---स्वरूपप्राप्ति को इत्यादि।

स्वरूपप्राप्ति को शास्त्र पुरुषार्थतया<br>
कहनेपर भी जैसा प्राप्तिफलतया

**यथा प्राप्तिफलतया कैंकर्यमागच्छति तथा साध्यविवृद्धित्वेन चरमपर्व आगच्छति ॥४३०॥**

---

'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति परप्राप्तिपूर्विकामनादिकर्मनिबन्धनाचित्संबंधेन मलावकुंठितमणिप्रभावत्तिरोहितस्वासाधारणाकारस्याविर्भावरूपां प्राप्तिं वेदांतशास्त्रं पुरुषार्थत्वेन वदति, एवमाविर्भूतस्वरूपविशिष्टस्यात्मनः शेषत्वैकनिरूपणीयतया शेषिविषयकिंचित्कारेण विना सत्ताभावात्, तादृशस्वरूपप्राप्तिफलतया भगवदनुभवजनितप्रीतिकारितकैंकर्यं यथाऽऽगच्छति तथा शेषिणो भगवतः स्वविषयकिंचित्कारात् स्वकीयविषयकिंचित्कारस्य प्रीतिविषयत्वात्तादृशभगवत्कैंकर्यरूपसाध्यस्य वृद्धिरूपत्वेन मध्यमपर्वभूतभागवतकैं-

---

**यथा प्राप्तिफलत्वेन कैंकर्यागमनं भवेत् ।**<br>**आयाति चरमं पर्व तथा साध्यविवृद्धितः ॥ ४३० ॥**

होनेवाले कैंकर्य है तैसा साध्य-<br>वृद्धिरूपतया चरमपर्व आता है ॥४३०॥

'परं ज्योति को प्राप्त हो अपने रूप से प्रकट होता है' ऐसा परप्राप्ति पूर्वक अनादिकर्म के कारण अचित्संबंध से मलसे ढका हुआ मणिप्रभा के तरह ढका हुआ स्वासाधारणाकार का आविर्भाव रूप प्राप्ति को ही वेदांतशास्त्र के पुरुषार्थतया कहनेपर एवं आविर्भूतस्वरूप वाले आत्मा शेषत्वैकनिरूपणीय होने से शेषिविषय किंचित्कार बिना नहीं रहसकने से तादृश स्वरूप प्राप्ति के फलरूप से भगवदनुभवजनित प्रीति से किये जानेवाले कैंकर्य जैसा आता है तैसा शेषिभूत भगवान् का स्वविषय किंचित्कार की अपेक्षा स्वभक्तविषय किंचित्कार संतोष जनक होनेसे उस भगवत्कैंकर्य रूप साध्य के वृद्धिरूप हो मध्यमपर्व भूत भागवत कैंकर्य आता

इदं च दुर्लभम् ॥ ४३१ ॥
विषयप्रवणस्य तं विहाय भगवद्विषय
आगमने यावान् परिश्रमोऽस्ति तावान्न
भवति प्रथमपर्व विहाय चरमपर्वणि आगमने ॥

---

कर्यमागच्छेत् , तादृशभागवतानां सर्वेषां स्वविषयकिञ्चित्का-
रात् स्वस्योपकारकाचार्यविषयकिंचित्कारस्यैवाभिमतत्वात्तादृ-
शसाध्यस्य विशेषवृद्धित्वेन चरमपर्वभूताचार्यकैंकर्यमागच्छे-
दित्यर्थः ।

एतच्चरमपर्वलाभस्य कृच्छ्रत्वं दर्शयति- इदं चेत्यादिना ।
तद् विवृणोति विषयप्रवणस्येत्यादिना

---

इदं च दुर्लभं ज्ञेयं सर्वप्राधान्यहेतुतः ॥ ४३१ ॥
विषयासक्तचित्तस्य तं विहाय हरौ किल ।
आयाने विषये यावान् श्रमो तावान्न विद्यते ।
विहाय प्रथमं पर्व आगमनेवसानके ॥ ४३२ ॥

है । उन संपूर्ण भागवतों के अपने विषय कैंकर्य की अपेक्षा अपने को उपकारक आचार्य विषय में कैंकर्य ही संतोष जनक होनेसे उस साध्य के विशेषवृद्धिरूप हो चरमपर्व भूत आचार्य कैंकर्य आता है ।

इस चरमपर्व लाभ की दुर्लभता को दिखाते हैं---यह तो इत्यादि ।

यह तो दुर्लभ है ॥ ४३१ ॥.

इस को विवरण करते हैं---विषयप्रवण को इत्यादि ।

विषयप्रवण को उस को छोड भगवद्विषय
में आनेके दुःख के तरह नहीं, प्रथमपर्व

**तत्र दोषदर्शनेन निवृत्तिः स्यात्**
**अत्र तत्कर्तुं न शक्यते ॥ ४३३ ॥**

---

क्षुद्रविषयाणामुपरिलेपनभूतवैलक्षण्ये विद्धस्य निवर्तनयोग्यता यथा न स्यात्तथा तत्र प्रवणस्य तांस्त्यक्त्वानुरूपभगवद्विषय आगमने विद्यमानः परिश्रम इव न भवति पुंसां दृष्टिचित्तापहारिभगवद्विषयप्रवणस्य तत्कैंकर्यनिरतस्य प्रथमपर्वभूतं तत्त्यक्त्वा चरमपर्वभूताचार्यकैंकर्ये आगमने परिश्रम इत्यर्थः।

तत्कथमित्याकांक्षायामाह— तत्रेत्यादि ।

क्षुद्रविषयेषु देहदोषाणामल्पास्थिरत्वादिदोषाणां च सत्त्वात् तद्दर्शने सति जुगुप्सया निवृत्तिः स्यात् , विलक्षणविग्रहयुक्ते समस्तकल्याणगुणात्मके नित्येऽपरिच्छेद्ये एतद्विषये दोषगंधा-

---

**तत्र दोषस्य दृष्ट्या हि निवृत्तिः स्यात्सतां ततः ।**
**अत्र तु तां निवृत्तिं वै कर्तुं नैव च शक्यते ॥ ४३३ ॥**

को छोड चरमपर्व में आनेकी दुर्लभता ॥ ४३२ ॥

क्षुद्रविषयों के बाहर के वैलक्षण्य में मग्न हो लौटा न सके जैसे उन में प्रवण होनेवाले को उन को छोड प्राप्तविषय भगवान् में आनेकी दुर्लभता के तरह नहीं पुरुषों के दृष्टि और चित्त को अपहार करनेवाले भगवान् में प्रवण हो तत्कैंकर्य में आसक्त मनुष्य को प्रथमपर्व भूत उस को छोड चरमपर्वरूप आचार्य कैंकर्य में आने की दुर्लभता ।

वह कैसा इस आकांक्षा में कहते हैं—वहां इत्यादि ।

वहां दोष दर्शन से लौट सक्ते
हैं, यहां वैसा नहीं कर सक्ते ॥ ४३३ ॥

क्षुद्रविषयों में देहदोषादि अल्पास्थिरत्वादि दोष होनेसे उन को दिखाते हीं घृणा से लौट सक्ता है, विलक्षणविग्रह युक्त समस्त कल्याणगुणात्मक नित्य अपरि

## दोषसत्त्वेऽपि गुणवदुपादेयो भवति ॥४३४॥

भावात् दोषदर्शनं कृत्वा न निवर्तयितुं शक्यत इत्यर्थः ।

'संख्यातुं नैवं शक्यंते गुणा दोषाश्च शार्ङ्गिणः ।
आनंत्यात्प्रथमो राशिरभावादेव पश्चिमः ॥'

इत्युक्तं हि ।

क्षुद्रविषयाणामुच्यमानस्य दोषस्यात्र कस्यापि वक्तव्यस्याभावेऽपि स्वविषयभक्तिपरवशानां स्वसंश्लेषसुखं नित्यमकृत्वा विश्लेषदुःखवर्द्धनात् 'कठिन क्रूर' इत्यादिप्रकारेण वक्तुं योग्याः केचन दोषाः संति हि ते व्यावृत्तिहेतवो भवंति किमित्यत आह— दोषसत्त्वेऽपीत्यादि ।

तथा विश्लेषव्यसनेन भासमानानां केषांचिद्दोषाणां सत्त्वेऽपि 'क्रूरं मन्मनः स एवेति तिष्ठति' इति तमेवादृत्याभिनि-

---

## अत्र तु दोषसत्त्वेपि गुणवद्ग्राह्यमीरितम् ॥४३४॥

च्छेद्य इस भगवद्विषय में दोष का लेश भी न होनेसे दोष को देख नहीं लौट सक्ता है । 'परमात्मा के गुण और दोष नहीं गिने जासक्ते हैं, गुण अनंत होनेसे दोष बिलकुल न होनेसे' ऐसा कहा है ।

क्षुद्रविषयों में कहे जानेवाले दोष एक भी भगवान में नहीं कह सक्ते हैं तो भी अपने विषय में भक्ति से परवश भागवतों को अपने संश्लेष सुख को पूर्णतया न दे छोडकर दुःख देनेसे 'कठिन क्रूर' इत्यादि प्रकार कहनेयोग्य कई दोष भान होते हैं वे लौटने को उपयुक्त होयंगे क्या इस शंका में कहते हैं—दोष होनेपर भी इत्यादि ।

दोष होनेपर भी गुण के जैसे उपादेय होता है ॥४३४॥

वैसा विश्लेषासह्यता से भान होनेवाले कई दोष होनेपर भी 'क्रूर हमारा

लोकविपरीतं खल्वत्र वर्तते ॥ ४३५॥
गुणस्योपादेयत्वप्रयोजको हेतुर्दोषस्याप्यस्ति हि ॥

---

वेशकरणात् हेयो न भवति। विषयमादृत्याभिनिवेशोपयुक्तगुणवदुपादेयो भवतीत्यर्थः ।

लोके दोषो हेयो गुण उपादेयः खलु वर्तते दोषो गुणवदुपादेयः कथं स्यादित्यत आह—लोकविपरीतं खल्वित्यादि ।

दोषस्त्यागे निदानं गुण आश्रयणे हेतुरिति लोकप्रक्रियावैलक्षण्येन दोषो गुणवदुपादेयतया खल्वेतद्विषयेऽस्तीत्यर्थः।

तथापि दोषो गुणवदुपादेयः कथं स्यादित्यत आह—गुणस्येत्यादि ।

---

लोकस्य वैपरीत्येन सर्वं खल्वत्र वर्तते ॥ ४३५॥
गुणोपादेयताहेतुर्दोषस्याप्यस्ति सर्वथा ॥ ४३६ ॥

मन उस ही को चाहता है' ऐसा दोषों को ही आदर कर ऊपर गिरने योग्य होनेसे हेय नहीं होता है, विषय को आदर कर ऊपर गिरने योग्य गुण के तरह उपादेय होता है ।

लोक में दोष को हेय और गुण को उपादेय कहते हैं । इस नियम को छोड दोष गुण के तरह उपादेय हो सक्ता है क्या ? इस आकांक्षा में कहते हैं—लोक विपरीत इत्यादि ।

लोक विपरीत यहांपर है ॥ ४३५ ॥

दोष छोडने योग्य और गुण स्वीकार करने योग्य न हो दोष भी गुण के तरह इस विषय में उपादेय होता है ।

सबकुछ करने पर भी दोष गुण के तरह उपादेय होसक्ता है क्या ? इस आकांक्षा में कहते हैं—गुण इत्यादि ।

गुण उपादेय होने का हेतु दोष में भी है ॥ ४३६ ॥

निर्घृण इत्युक्त्वा विरामात्पूर्वं
गुणवानिति वक्तव्यतया स्थितः ॥ ४३७ ॥

---

भगवद्गुणस्य तत्प्रवणानामुपादेयत्वप्रयोजकः प्राप्तशेषिगतत्वरूपो हेतुरस्मिन् विषये भासमानदोषस्याप्यस्तीत्यर्थः । अनेन तस्मिन् विद्यमानत्वहेतुना यथा गुण उपादेयस्तथा तस्मिन् विद्यमानत्वहेतुना दोषस्याप्युपादेयत्वे न विरोध इत्युक्तम् । एवं स्थितत्वाद्दोषसत्त्वेऽपि स त्यागहेतुर्न भवतीति भावः ।

विश्लेषदशायां भासमाननैर्घृण्यादिदोषमंगीकृत्य तस्य गुणवदुपादेयत्वमवोचत् , तादृशनैर्घृण्यादिदोषश्च प्रथमतोऽत्र विषये नास्तीत्यभियुक्तवचनैर्दर्शयति, तत्र प्रथमं परांकुशवचनं दर्शयति— निर्घृण इत्यादिना ।

---

निर्घृण इत्युक्तैवं विरामात्पूर्वमेव तु ।
गुणवानिति वक्तव्या तथातिष्ठन्महामुनिः ॥४३७॥

भगद्गुण भक्तों के उपादेय होने के कारण प्राप्त शेषी में होना, यह दोष में भी समान है । इस से गुण परमात्मा में हैं, इस हेतु गुण उपादेय होते हैं, वैसे ही दोष भी उन के होनेसे उपादेय होते हैं । ऐसा होनेसे दोष होनेपर भी वह उस विषय से हटाने का हेतु नहीं हो सक्ता है ।

विश्लेषदशा में देखे जानेवाले नैर्घृण्यादि दोष को अंगीकार कर वह गुण के तरह उपादेय होने के प्रकार को कहे हैं, वह नैर्घृण्यादि दोष परमात्मा में बिलकुल नहीं हैं ऐसा आप्तवचनों से दिखाते हैं, उस में पहिले सूरि के वचन को दिखाते हैं—निर्घृण इत्यादि ।

निर्घृण, ऐसा कह मुख बंद करने के
पहिले दयावान् ऐसा कहने योग्य था ॥ ४३७ ॥

एवं वक्तुमर्हता कृता कृपयेति स्नेह
उपकारस्मृतिश्चावर्तत खलु ॥ ४३८ ॥

---

'किं धवलवर्णस्य दयाः' इति कीदृश्यः स्थिताः शुद्धस्वभावस्य तव कृपाः, लोके एवमृजवः परदुःखासहिष्णवश्च केचन धार्मिकाः संतिचेदबलानां समीचीनः संश्लेषः कर्तुं शक्यत इति नायक्या विषादातिशयेनागतं दृष्ट्वा मात्रा निर्घृण इत्युक्त्वा विरामात्पूर्वं तन्मुखं मुद्रयतीव 'दयावानेवेति' ननु आकरे दया क्षीयते किं तदस्मदपराध इति घृणावत्ता वक्तव्यतया स्थितेत्यर्थः ।

इयमुक्तिर्मात्रोक्ताया गुणहानेः परिहारोक्तिमात्रं वोत सहृदया वेति शङ्कायां तस्याः सहृदयतां घटयति--- एवमित्यादिना ।

---

अर्हता वक्तुरेवं हि कृपया किं स्मृतिः खलु ।
उपकारस्य प्रीतिश्च वर्तते साधके जने ॥४३८॥

"हमारे शुद्ध स्वभाव वाले की कृपाएं" ऐसा शुद्ध स्वभाव आपकी कृपाएं कैसी थीं, लोक में ऐसे सीधे और परदुःखासहिष्णु धार्मिक लोक होएंगे तो अवलाओं को सुरक्षित रहने की स्थिति मिलेगी ऐसा पुत्री के विश्लेष व्यसन में सहाय नहीं करने से माता निर्घृण कह मुखवंद करने के पहले ही उस के मुख को वंद करने के तरह "कृपावान्" ऐसा कह, पापिष्ठे ! खानें में कृपा का अभाव होगा क्या ? वह हमारा दोष है ऐसा कह उस की कृपावत्ता को प्रकट की है ।

यह उक्ति माता से कही हुई गुणहानिका परिहार मात्र है या मनः पूर्वक कही हुई इस शंका में कहते हैं---इस प्रकार इत्यादि ।

इस प्रकार कहने योग्य वनानेवाली कृपा है ऐसा
समझ स्नेह और उपकार स्मृति को करते भये ॥४३८॥

**निर्घृणतया शंकित्वा कथन-**
**दशायामपि कारणं स्वगतत्वेनोक्तम् ॥४३९॥**

---

गुणहान्युक्तिं निरस्य गुणकथनार्हता कृता कृपयेति 'अत्यन्तमाद्रियते' इति स्नेह उपकारस्मृतिश्चावर्तत खलु । तस्माद् दयावानेवेत्युक्तिः सहृदयोक्तिरित्यर्थः ।

अनन्तरं जानकीवचनं दर्शयति– निर्घृणतयेत्यादिना ।

विश्लेषव्यसनेनात्यंतक्षुभितया जानक्या स्वामिना स्वस्य विश्लेषसमये मुखदर्शनादानाज्जातेन दुःखेन—

'ख्यातः प्राज्ञः कृतज्ञश्च सानुक्रोशश्च राघवः ।
संवृत्तो निरनुक्रोशः शंके मद्भाग्यसंक्षयात् ॥'

इति स्वामिनं निर्घृणत्वेन शंकित्वा कथनावस्थायामपि मद्-

---

**निर्घृणत्वेन शंकित्वा कथनस्य क्षणेपि च ।**
**कारणं स्वगतत्वेन सम्यगुक्तं महर्षिणा ॥४३९॥**

कही हुई गुण हानि का तिरस्कार कर गुण को कहने का हेतु कृपा ही है । "अत्यादर करती है" ऐसा स्नेह भी, "उपकारक" ऐसा उपकार स्मृति भी की गई है इस कारण "कृपावान्" यह सहृदयोक्ति है ।

अनंतर लक्ष्मीजी के वचन को दिखाते हैं– निर्घृगतया इत्यादि ।

निर्घृगतया शंका कर कहने की अवस्था
में भी कारण को अपने में बताये हैं ॥ ४३९ ॥

विश्लेष दशा में अति व्याकुल हो श्रीसीताजी रामचन्द्र इस अवस्था में आकर मुख न दिखाने से "बुद्धिमान्, दयावान्, कृतज्ञ, सद्वृत श्रीरामचन्द्र निर्दय हैं ऐसी शंका करती हूं" ऐसा श्रीरामजी को दया रहित जान कहने की अवस्था में भी "हमारे भाग्य के क्षय होनेसे" ऐसी शंका करने का कारण

गुणदोषावुभावपि क्षुद्रपुरुषार्थं
पुरुषार्थकाष्ठां च नाशयतः ॥ ४४० ॥

---

भाग्यसंक्षयादित्येवं शंकाया मूलं मद्भाग्यहानिरित्युक्तत्वात् शंकाकारणं स्वगतत्वेनोक्तमित्यर्थः ।

प्रथमपर्व विहायेत्यत्रार्थादुक्तेन भगवत्संश्लेषेण दोषसत्त्वेऽपीत्यत्रार्थादुक्तेन तद्विश्लेषेण चैतदुभाभ्यां क्रियमाणमाह— गुणदोषावित्यादिना ।

गुणो नाम— स्वसौंदर्यादिकलाश्रितानां साकल्येनानुभवार्थं ददत् वर्तमानस्वरूपसंश्लेषः । दोषो नाम— तादृशानुभवालाभेन तेषु नेत्रभ्रमणेन क्लिश्यमानेषु स्वेन मुखदर्शनादानरूपविश्लेषः । एताभ्यामुभाभ्यामपि क्षुद्रपुरुषार्थस्य पुरु-

---

क्षुद्रेष्टं परमेष्टं च गुणदोषावुभावपि ।
नाशयतः स्वरूपेण भाषितं नयकोविदैः ॥४४०॥

हमारी भाग्य हानि है ऐसा कहने से शंका का कारण अपने में है ऐसा कहागया ।

"प्रथमपर्व को छोड" इस स्थल में अर्थात् उक्त भगवत्संश्लेष, "दोष हो तो भी" इस स्थल में अर्थात् उक्त भगवद्विश्लेष इन दोनों के कार्य को कहते हैं—गुण दोष इत्यादि ।

गुण दोष ये दोनों क्षुद्र पुरुषार्थ और
पुरुषार्थ काष्ठा को भी नाश करते हैं ॥ ४४० ॥

गुण माने—अपने सौंदर्यादियों को अपने आश्रितों को पूर्ण अनुभव कराना रूप संश्लेष, दोष माने—उस अनुभव के अलाभ से वे व्याकुल होने के समय आप मुख न दिखाना रूप विश्लेष है । ये दोनों इत्यादि—एक एक ही दोनों का

पार्थकाष्ठायाश्च नाशनं नाम— एकैकेन वोभयोरपि नाशनम्। अत्र गुणेनोभयोर्नाशनं नाम— 'स्वामिविषये मनसि लग्ने स्त्रीणां भुजं त्यक्त्वा' इति गृहे जातैरुत्पत्तिफलतयानुभूयमानानि महासुखानि तद्भगवतो भुजमाश्रितास्त्यजन्ति' इति तद्विषयवैलक्षण्येन क्षुद्रविषयवैराग्योत्पादनात्, क्षुद्रपुरुषार्थान्वयनाशनं 'अभ्यस्यमानतेजो' दशके तदीयशेषत्वेऽवगाह्य स्थितं परांकुशं; तेषां तदीयानां स्वरूपनिरूपकत्वेन प्रस्तुतैस्तत्सौंदर्यशीलादिभिस्तदीयदास्यरसं विस्मृत्य तदनुभव उत्कूलाशयानंतरदशके स्वयं करणग्रामाश्च क्लेशेन यथा क्रोशेयुस्तथाऽकरोत्, एवमन्यार्थप्रवेशेऽपि स्वव्यतिरिक्तविषयस्याहों यथा न स्यात्तथा कुर्वद्दृष्टिचित्तापहारिविषये नद्यावर्तपतितं कृत्वा पुरुषार्थकाष्ठाभूततदीयशेषत्वस्थितिनाशनम्। दोषेणोभयोर्नाशनं नाम— अनुभवालाभक्लेशेन सर्वकालमपि स्वविषये मनसो लग्नत्वात्

---

नाश करना, इन में गुण दोनों को नाश करना माने—परमात्मा में मन लगने पर "स्त्रीयों के भुजों को छोड" ऐसा, 'संसार में जन्म लेनेवाले पाने योग्य महानंद सब को छोडते हैं भगवान के भुजा सौंदर्य में विद्ध होनेवाले' ऐसा भगवद्विषय सौंदर्य से क्षुद्रविषय में वैराग्य उत्पन्न होनेसे क्षुद्र पुरुषार्थ संबंध का नाश करना, अभ्यस्य मान तेजो दशक में तदीय शेषत्व में मग्न हुए सूरि को उन तदीयों के स्वरूप निरूपकतया प्रस्तुत भगवत्सौंदर्य शीलादियों से तदीय दास्य रस को भूलकर उन के अनुभव में आशा को बढा अनंतर दशक में आप और अपने करण समूह अति व्याकुल हो पुकारे तैसा अन्यानुभव में प्रवृत्त होनेपर भी अपने को छोड और किसी के उपयुक्त न हो जैसा करनेवाले दृष्टि चित्तापहारी भगवान के विषय में मग्नकरा पुरुषार्थ काष्ठारूप तदीय शेषत्वरूप में स्थिति का नाश करना। दोष दोनों को नाश करना माने— अनुभवालाभ क्लेश से सर्वकाल भी

'न भुंक्ते' 'निद्रां नाद्रियते' 'कंदुकानि लीलोपकरणं नाद्रियते' 'स्पृहणीयशुकं दुग्धं न पाययति शालभंजिकां नाद्रियते' इत्युक्तप्रकारेण पूर्वमनुभूतप्राकृतभोगरूपक्षुद्रपुरुषार्थानामसह्यतापादनं, 'तद्दासा लघुमहामनुष्या मां स्वीकृतवंतोऽत्र संचरंति रक्तकमलनेत्रश्रीवामनस्यात्यंतपरिमलयुक्तसद्योविकसितकमलचरणयोरधस्तात्प्रवेशः सदृशः किं' इति 'अद्वितीयमहापुरुषस्य प्रवालसदृशचरणयोरधस्तात्प्रवेशं विना तद्दासानां भोग्यभूतसंश्लेषानंद एव प्रतिदिनं लभ्येतास्माकं' इति, एवं तद्विषयसंश्लेषरसो नापेक्षितस्तदीयविषयसंश्लेषरस एवालमिति वर्तमानानामपि तदीयैः सह संश्लेषावस्थायामपि तेषु मनसः प्रावण्यं विना तदनुभवाशया 'द्रष्टुमागच्छ' 'दर्शनोपायं वद' इत्याक्रोशकरणं, 'क्रूरपक्षविशिष्टपक्षी' इत्यादिभिस्तान्प्रति क्रोधवार्ताकथनमित्याद्यवस्थासंपादनं, पुरुषार्थका-

अपने विषय में मन लगा "भोजन और निद्रा को आदर नहीं करती है," "गेन्द प्रभृति को देखती नहीं, शुक को दूध नहीं मिलाती है खिलौना का आदर नहीं करती हैं" इन वचनानुसार पूर्व अनुभूत प्राकृत भोगरूप क्षुद्र पुरुषार्थों में असह्यता का उत्पादन करना, "उन के दास लघुमहामनुष्य हो यहां संचार करते हुए हम को रक्षा किये हैं, रक्त कमल सदृश नेत्र वाले वामन भगवान के सुंदर कमल सदृश चरणों में प्रवेश करना मुझ पापी को युक्त है क्या" ऐसा 'अद्वितीय भगवान के कोमल चरणों के नीचे प्रवेश विना उन के दासों के संश्लेष सुख ही हम को प्राप्त हो' ऐसा तद्विषय संश्लेष रस में अपेक्षा छोड तदीय विषय संश्लेष रस ही हम को प्राप्त है ऐसा रहनेवालों को भी उन तदीयों के साथ मिले रहनेपर भी उन के विषय में आशा छोड भगवदनुभव में आशा करने से "देखने को आओ" "देखने का उपाय बताओ" ऐसा पुकारना 'क्रूर पक्ष पक्षी' इत्यादियों से उन में असह्यता प्रतिपादन करना इत्यादि होने

नित्यशत्रुत्वेन खलु वर्तते ॥ ४४१ ॥

---

ष्ठायां मनसोऽभिनिवेशशून्यतासंपादनं च ।

अत्र क्षुद्रपुरुषार्थं नाशयतीत्युक्तिः स्वविषयेवगाहतां बहिरेकोऽपि विषयो ज्ञातो न स्यात्तथा कुर्वत एतद्विषयस्वभावस्य कथनार्थं पुरुषार्थकाष्ठां नाशयतीत्येतदेवात्रापेक्षितं, तथा च क्षुद्रपुरुषार्थभञ्जकत्वस्य प्रासंगिकत्वात् तद्विहाय प्राकरणिकपरमपुरुषार्थभञ्जकत्वं विशदयति— नित्यशत्रुत्वेनेत्यादिना ।

'शत्रुघ्नो नित्यशत्रुघ्न'इति स्वामिनोऽभिमतविषयं श्रीभरतं स्वस्योद्देश्यत्वेनाश्रित्य तदन्यानभिज्ञः सन् स्थितः श्रीशत्रुघ्नः श्रीभरतानुवृत्तिविरोधिनं रामसौंदर्यरूपनित्यशत्रुं जयतीत्युक्त्वा-त्तदीयकैंकर्यनिष्ठस्य नित्यशत्रुत्वेन खलु भगवत्सौंदर्यं तिष्ठती-

---

वर्तते किल नित्यं हि शत्रुत्वेनेति ज्ञायताम् ॥४४१॥

से पुरुषार्थ काष्ठा में मन को नहीं लगाना ।

इस में क्षुद्र पुरुषार्थ को नाश करना माने अपने में लगनेवालों को बाह्य-विषयों को भुलानेवाले इस विषय के स्वभाव को कहने के लिये मिलालिये इतना ही, पुरुषार्थ काष्ठा को नाश करेगा यही इस स्थल में अपेक्षित है, तथा क्षुद्र पुरुषार्थ भंजकत्व प्रासंगिक होनेसे उन को छोड प्राकरणिक चरम पुरुषार्थ भंजकत्व को कहते हैं नित्य शत्रु इत्यादि ।

नित्यशत्रु रूप से रहता है ॥ ४४१ ॥

"शत्रुघ्न नित्यशत्रु का संहार करनेवाले" ऐसा श्रीरामचन्द्र के अभिमत श्रीभरतसूरि को ही अपना उद्देश्यमान आश्रयण कर तदन्य को नहीं जाननेवाले श्रीशत्रुघ्नसूरि भरतानुवृत्ति के विरोधी राम सौंदर्यरूप नित्य शत्रु को जीतते हैं ऐसा कहने से तदीय कैंकर्य निष्ठ का भगवत्सौंदर्य नित्यशत्रु होता है । इस

त्यर्थः । तस्मादेवं विलक्षणविषये संश्लेषविश्लेषावुभावपि पुरुषार्थकाष्ठां नाशयतीत्यत्र न विरोध इति भावः ।

अथवा पूर्वोक्तगुणदोषाभ्यामुभाभ्यां क्रियमाणमाह—गुणदोषावुभावपीत्यादिना । गुणो नाम—'अत्र सा कर्तुं न शक्यते' इत्यत्रोक्तपुंसां दृष्टिचित्तापहारिसौंदर्यादयः । दोषो नाम—गुण इव दोष उपादेय इत्यत्रोक्ताः 'कठिनः क्रूर' इत्यादयः । उभावपि क्षुद्रपुरुषार्थं काष्ठां च नाशयत इति—एकैकमेवोभयमपि करोतीत्यर्थः । गुणेनोभयोरपि नाशनं नाम—'गृहे जातैरनुभूयमानमुत्पत्तिप्रयुक्तमहानंदं सर्वं त्यजाते तद्भुजमाश्रयंतः' इत्यादिप्रकारेण क्षुद्रपुरुषार्थनाशनं स्ववैलक्षण्येनावगाहनं कारयित्वा पुरुषार्थकाष्ठाभूततदीयशेषत्वनिष्ठानाशनम् । दोषेणोभयोरपि नाशनं नाम—गुणवदुपादेयः 'स एवेति तिष्ठति' इत्येवं करणादाहारनिद्राकंदुकादीनामसह्यतामापाद्य क्षुद्रपुरुषार्थनाशनं, 'लघु-

---

लिये इस प्रकार के विलक्षण विषय में संश्लेष विश्लेष दोनों पुरुषार्थ काष्ठा को नाश करते हैं ऐसा कहने में विरोध नहीं ।

अथवा पूर्वोक्त गुण दोषों के कृत्य को कहते हैं—गुण दोष दोनों इत्यादि से । गुण माने—पुरुषों के दृष्टि चित्तापहारि सौंदर्य शीलादि । दोष माने—कठिन क्रूर इत्यादि । दोनों क्षुद्र पुरुषार्थ और पुरुषार्थ काष्ठा को नाश करते हैं माने—एक एक ही दोनों का नाश करता है । गुण दोनों को नाश करता है माने 'संसार में जन्म ले उन के भुजाओं को दर्शन करनेवाले सांसारिक सुखों को छोड दिये हैं' इत्यादि में उक्त प्रकार क्षुद्र पुरुषार्थ को नाश करना, स्व सौंदर्य से मग्न करा पुरुषार्थ काष्ठारूप तदीय शेषत्व स्थिति को नाश करना है । दोष दोनों को नाश करता है माने—गुणवत् उपादेय हो उन्ही में मन लगाकर रहने के योग्य करने से भोजन निद्रा गेंद खिलौने आदिओं में विरक्त बना क्षुद्र पुरु-

एवं प्राप्ये निर्णीतेऽस्य सदृश
आवश्यकः खलु प्रापकः ॥ ४४२ ॥

---

महामनुष्याः' इत्यादिप्रकारेण पुरुषार्थकाष्ठानाशनं चेति योजना। अस्यां योजनायां नित्यशत्रुत्वेनतीदं सौंदर्यादिविशिष्टवस्तुविषयं स्यात्। यद्वा गुणः पुरुषार्थकाष्ठां नाशयति दोषः क्षुद्रपुरुषार्थं नाशयतीति विभज्य केचिद्योजयंति। तद्वा गुणः पुरुषार्थकाष्ठां नाशयतीत्यस्य दोषः क्षुद्रपुरुषार्थं नाशयतीत्यस्य च पूर्वयोजनयोरुक्तप्रकारेणार्थः स्यात्। एतद्विषयस्वभावस्यैतादृशत्वादिदं चरमपर्वभूताचार्यकैंकर्यं दुर्लभमिति सिंहावलोकनन्यायेन पूर्वेणान्वयः।

'स्वरूपस्य प्राप्यस्य चानुरूपः स्यात्खलु प्रापक' इत्यत्र स्वरूपानुरूपं प्राप्यं चरमपर्वभूताचार्यकैंकर्यमिति निर्णीतवान्। एतत्प्राप्यानुरूपप्रापकं निर्णयत्युपरि—एवं प्राप्येत्यादिना।

---

एवं प्राप्ये हि निर्णीते सदृशः प्रापकोस्य च।
प्राप्यस्य साधकोऽवश्यं भवितव्यो न संशयः ॥ ४४२ ॥

पार्थ को नाशकरता है, तदीय शेषत्वरूप पुरुषार्थ काष्ठा को भी नाश करता है। इस योजना में नित्य शत्रु माने—सौंदर्यादि गुण विशिष्ट वस्तु समझना। भगवद्विषय का स्वभाव ऐसा होनेसे चरमपर्व भूत आचार्य कैंकर्य अति दुर्लभ है ऐसा सिंहावलोकन न्याय से पूर्व वाक्य के साथ अन्वय करलेना।

"स्वरूप और प्राप्य के अनुरूप होना चाहिये प्रापक" इस में स्वरूपानुरूप प्राप्य चरमपर्व भूत आचार्य कैंकर्य समझना निश्चय किये हैं, इस प्राप्य के अनुरूप प्रापक का निर्णय करते हैं—इस प्रकार इत्यादि।

इस प्रकार प्राप्य के निर्णय करने पर
उस के सदृश प्रापक भी होना चाहिये ॥ ४४२ ॥

अन्यथा प्राप्यप्रापकयोरैक्याभावप्रसंगः ॥४४३॥

---

एवमाचार्यकैंकर्यमेव प्राप्यमिति निर्णये कृतेऽस्य प्राप्यस्यानुरूपः प्रापक आवश्यकः खल्वित्यर्थः। अनेनाचार्यकैंकर्यरूपचरमप्राप्यस्याचार्य एव प्रापकः स्यादिति सिद्धम्।

एवमनंगीकारे हानिमाह—अन्यथेत्यादिना।

एवं एतत्प्राप्यसदृशतयाऽऽचार्यस्य प्रापकत्वमनंगीकृत्येश्वरस्य प्रापकतयांऽगीकारे प्राप्यस्य प्रापकस्य च स्वस्मिन्नैक्यं न स्यादित्यर्थः। प्रथमपर्वस्य विद्यमानं प्राप्यप्रापकैक्यं चरमपर्वस्यापि समानं खलु, अत एव पिल्लैयमुदनाराचार्यैः 'प्राप्यमन्यन्नास्ति त्वच्चरणौ विना तत्प्राप्यप्रदोपायश्च नास्ति त्वच्चरणौ विना' इति प्राप्यप्रापकोभयमप्येकविषय एवेत्युक्तम्।

---

ऐक्याभावप्रसंगः स्यादन्यथोपायप्राप्ययोः ॥४४३॥

इस प्रकार आचार्य कैंकर्य ही प्राप्यतया निश्चय करनेपर प्रापक भी इस के सदृश होना चाहिये। इस से आचार्य कैंकर्यरूप चरम प्राप्य को आचार्य ही प्रापक होना चाहिये।

ऐसा न होतो क्या हानि है इस शंका में कहते हैं— न हो तो इत्यादि।

न हो तो प्राप्य प्रापकों का ऐक्य नहीं ॥ ४४३ ॥

इस प्राप्य के सदृश आचार्य को प्रापकतया नहीं मान ईश्वर को प्रापकतया माननेपर प्राप्य प्रापक दोनों का अभेद नहीं। प्रथमपर्व में प्राप्य प्रापक यथा एक है तथा चरमपर्व में भी चाहिये। इस कारण रङ्गामृत देशिक "आपके चरण के बिना अन्य एक प्राप्य नहीं उस प्राप्य को देनेवाले प्रापक भी आपके चरण बिना अन्य नहीं" ऐसा प्राप्य प्रापक दोनों एक ही विषय है ऐसा कहे हैं।

**ईश्वरस्याश्रयणं– हस्तं गृहीत्वा कार्य-साधनवत् , आचार्यस्याश्रयणं– चरणं गृहीत्वा कार्यसाधनवत् ॥ ४४४ ॥**

---

अस्मिन् प्रबंधे उपक्रमादारभ्य स्वतंत्रस्येत्यादिवाक्यपर्यंतं सिद्धोपायतया सकलशास्त्रसिद्धः ईश्वर एव परमोपाय आचार्योऽज्ञातज्ञापनमुखेनोपकारक इति च खलूक्तं, इदानीमीश्वरं विहायाचार्य एवोपाय इत्युक्तौ शास्त्रविरोधः स्वोक्तिविरोधश्च न संभवेत् किं? ईश्वरस्योपायत्वेनाश्रयणादाचार्यस्योपायत्वेनाऽऽश्रयणे किं वाऽधिक्यमिति शंकायामाह— ईश्वरस्याश्रयणमित्यादि ।

---

करं संगृह्य कार्यस्य साधनवद्धरौ रतिः ।
आचार्ये प्रीतिरुक्ता स्यात्पादं संगृह्यसाधनम् ॥ ४४४ ॥

इस प्रबंध में आरम्भ से ले "स्वतंत्र को" इत्यादि वाक्य पर्यंत सिद्धोपायतया सकलशास्त्र सिद्ध ईश्वर को परमोपायतया, आचार्य को अज्ञात ज्ञापन द्वारा उपकारकतया भी कहे हैं, अब ईश्वर को छोड आचार्य ही को उपाय कहनेपर शास्त्र विरोध और स्वोक्ति विरोध भी न होगा क्या ? ईश्वर को उपायतया आश्रयण करने की अपेक्षा आचार्य को उपायतया आश्रयण करने से अधिक लाभ क्या होगा ? इस शंका में कहते हैं---ईश्वर को इत्यादि ।

ईश्वर को आश्रयण करना---हाथ
मिलाकर कार्य कराने के तरह है,
आचार्य को आश्रयण करना---चरणों
में गिर कार्य कराने के तरह है ॥ ४४४ ॥

ईश्वरस्याश्रयणं—तद्धस्तं गृहीत्वा कार्यसाधनवदित्युक्तत्वा-न्महाप्रभुं कंचिद्वशीकृत्य कार्यसाधकः कश्चित्तद्धस्तं गृहीत्वा प्रार्थ्य कार्यं साधयितुमिच्छति चेत् स्वस्वभावेन मृदुहृदयस्यार्द्रतया कार्यकरणसंभवात् स्वातंत्र्येण न्यक्कृत्य कार्याकरणसंभवाद्वा-एवं स्यादिति निश्चयो न कर्तुं शक्यते । तथाऽऽश्रितस्यास्यापेक्षितं स्वकृपयार्द्रहृदयः करोति चेत् फलति स्वातंत्र्येण न करोति चेन्न फलति । आचार्यस्याश्रयणं तत्पादौ गृहीत्वा कार्यसाधनवदित्युक्तत्वात्—तथा प्रभुं पादौ गृहीत्वा प्रार्थ्य कार्यं साधयितुमिच्छति चेत् दयापरवशः कार्यमवश्यं करोतीति कार्यं सिद्ध्यति । तथाऽस्यापेक्षितं निःसंदेहं फलति तस्मादमोघत्वं संप्रतिपन्नम् ।

एवं प्राप्यनिर्णयं कृत्वाऽस्य सदृशः स्यात् खलु प्रापक

---

ऐसा कहना—ईश्वर के साथ आचार्य के विद्यमान ऐक्य, और उस विषय के आश्रयणापेक्षा इस विषय के आश्रयण से कार्य सिद्धि जरूर होगी ऐसा दिखाने के लिये । इस को प्रतिपादन करते हैं—आचार्य को ईश्वर के चरण कहने से ऐक्य स्पष्ट होता है । ईश्वर का आश्रयण करना इत्यादि—महाप्रभु को वश कर कार्य करानेवाला उस का हाथ पकड प्रार्थना कर कार्य स्वीकार करने का विचार करनेपर सौलभ्य गुण से मृदु मनस्क हो कार्य कर सकते हैं अथवा स्वातंत्र्य से तिरस्कार भी कर सकते हैं । ऐसा आश्रित के अपेक्षित अपनी कृपा से मृदु मनस्क हो करनेपर सिद्ध होगा, स्वातंत्र्य से रुष्ट हो नहीं करनेपर सिद्ध नहीं होगा । आचार्य को इत्यादि—उक्त प्रभु के चरण में गिर प्रार्थना कर कार्य स्वीकार करने पर दया परवश हो कार्य किये बिना नहीं रह सकते सो यथा निर्विघ्न कार्य सिद्ध होता है तथा आश्रित चेतन के अपेक्षित निश्चय सिद्ध होने से अमोघत्व सिद्ध हुआ ।

तथा च प्राप्य निर्णय कर 'इस का सदृश होना चाहिये प्रापक' इस वाक्य

## आचार्य उभयोरप्युपकारकः ॥ ४४५ ॥

---

इत्यनेनाचार्यकैंकर्यरूपचरमप्राप्यस्याचार्य एव सदृशोपाय इत्यमुमर्थं प्रतिपाद्य, तथा विभेदकरस्योपायत्वेन स्वीकारे विरोधं प्रदर्श्य, आचार्यस्य प्राप्यत्वमीश्वरेणान्वयेन यथा भवति तथा प्रापकत्वं च तदनन्यत्वनिबन्धनमिति, ईश्वराश्रयणादेतदाश्रयणस्य विद्यमानमाधिक्यं चावोचत् । इतःपरं बहुहेतुभिराचार्यवैभवं प्रकाशयति—एतद्विषयमुपायत्वेनाश्रयतां रुचिविश्वासजननार्थम् । तत्र प्रथममीश्वरचेतनोभयविषयेऽस्योपकारकत्वमाह— आचार्य इत्यादिना ।

एवमुपायत्वेन पूर्वोक्त आचार्यः शेषशेषिभूतयोरीश्वरचेतनयोरुभयोरप्यभिमतवस्तु दत्त्वोपकारक इत्यर्थः ।

---

## आचार्य उभयोः सम्यगुपकारकरः स्मृतिः ॥ ४४५ ॥

से आचार्य कैंकर्यरूप चरम प्राप्य को आचार्य ही सदृश उपाय हैं. इस अर्थ को प्रतिपादन कर, ईश्वर को उपायतया स्वीकार करनेपर होनेवाला विरोध को दिखा, आचार्य को प्राप्यत्व यथा ईश्वर के संबंध से होता है तथा प्रापकत्व भी ईश्वर से अभिन्न होने से होता है, ईश्वर के आश्रयण करने की अपेक्षा आचार्याश्रयण की श्रेष्ठता कही गई, अब बहु हेतुओं से आचार्य वैभव को प्रकाश करते हैं इस विषय को उपायतया आश्रयण करनेवालों के रुचि विश्वास होने के लिये। पहिले ईश्वर और चेतन इन दोनों का आचार्य उपकारक होते हैं यह अर्थ कहा जाता है-आचार्य इत्यादि ।

आचार्य दोनों के उपकारक हैं ॥ ४४५ ॥

एवं उपायतया पूर्वोक्त आचार्य शेषी शेष भूत ईश्वर और चेतन दोनों के अभिमत वस्तुओं का देनेवाला उपकारक होता है ।

ईश्वरस्य शेषवस्तूपकृतवान्,
चेतनस्य शेषिणमुपकृतवान् ॥ ४४६ ॥

---

उभयोरप्येतदुपकृतं किमित्यत आह- ईश्वरस्येत्यादिना।

उत्तरोत्तरसृष्ट्यवतारादिकं कृत्वा वशीकर्तुं विचारे कृतेप्येकस्याप्यात्मवस्तुन आनुकूल्यासिध्या दुःखितस्येश्वरस्यैतदात्मवस्त्वज्ञातज्ञापनमुखेन वशीकृत्येष्टविनियोगार्हमकरोत्। भगवज्ज्ञानाभावेनानादिकालमसत्सम‌तया स्थितस्य चेतनस्य भगवत्संबंधं ज्ञापयित्वा शेषिणं तं प्रादर्शयदित्यर्थः। अनेनाचार्यस्य चेतनेश्वरयोरुभयोरप्युपकारकत्ववैभव उक्तः।

अन्येनाप्येकेन प्रकारेणाचार्यवैभवं प्रकाशयति- ईश्वर इ-

---

ईश्वरस्य तु आचार्यः शेषवस्तूपकारकः।
देशिकोस्य प्रपन्नस्य शेषिवस्तूपकारकः ॥४४६॥

दोनों को इन से उपक्रियमाण वस्तु कौन है? इस शंका में कहते हैं- ईश्वर को इत्यादि।

ईश्वर को शेष वस्तु का उपकार करता
है, चेतन को शेषी का उपकार करता है ॥ ४४६ ॥

उपरि उपरि सृष्टि अवतारादि कर वश करने को देखनेपर भी एक भी आत्मवस्तु नहीं मिलने से दुःखी होनेवाले ईश्वर को शेषभूत आत्मा को अज्ञात ज्ञापन द्वारा शुद्ध कर इष्ट विनियोगार्ह किये हैं, भगवज्ज्ञानाभाव से अनादि काल असत्सम गिरा हुआ चेतन को भगवत्संबंध को जना शेषिभूत भगवान् को दिखाये हैं। इस से चेतन और ईश्वर दोनों के उपकारकत्वरूप आचार्य के वैभव कहा गया।

और भी दूसरे प्रकार से आचार्य वैभव को प्रकाश करते हैं- ईश्वर इत्यादि।

**ईश्वरश्च स्वयमाचार्यत्व आशां कृत्वा तिष्ठति ॥४४७॥**
**अत एव हि गुरुपरंपरायामन्वितत्वं**
**गीताऽभयप्रदानकथनं च ॥४४८॥**

---

त्यादिना ।

एतदर्थमनुत्पन्न ईश्वरश्चैतदाचार्यत्वाधिक्यमपेक्ष्यात्रास्यंतं श्रद्धां कृत्वा तिष्ठतीत्यर्थः ।

एतत्क दृष्टमित्यपेक्षायां तदुपपादयति— अत एव हीत्यादिना ।

आचार्यत्वे आशां कृत्वा स्थितत्वाद्धि 'स चाचार्यवंशो ज्ञेयः' 'आचार्याणामसावसावित्या भगवत्तः' इति प्रकारेण गुरुपरंप-

---

ईश्वरो देशिकत्वे वै कृत्वाशां वर्तते सदा ॥४४७॥
अतएव हि पंक्त्यां च देशिकानां प्रकीर्त्यते ।
गीताभयप्रदानस्य कथने सुप्रकीर्त्यते ॥४४८॥

ईश्वर स्वयं आचार्यत्व को चाहते हैं ॥ ४४७ ॥

इस के लिये नहीं जन्म लेनेवाले ईश्वर स्वयं आचार्यत्व के वैभव जान इस को अपेक्षा करते हैं ।

इस अर्थ को कहां पर देख सक्ते हैं इस शंका में कहते हैं— इस कारण से इत्यादि ।

इस कारण से ही गुरुपरंपरा में संबंध रखना
श्रीगीता और अभय प्रदान का उपदेश करना ॥ ४४८ ॥

इस कारण से—आचार्यत्व की अपेक्षा करने से। "सदाचार्य वंश को जानना" "आचार्यों में भगवत्पर्यंत प्रत्येक को" इन वचनों के अनुसार गुरुपरंपरा में द्वयो

आचार्यस्य सदृशप्रत्युपकारकरणं विभू-
निचतुष्टयमीश्वरद्वयं चास्ति चेद्धि ॥४४९॥

---

रायां द्वयोपदेष्टृत्वेनान्वयः । आचार्यकृत्यमारोप्यार्जुनं प्रति तत्वविवेकादिचरमोपायपर्यंतार्थप्रतिपादकश्रीगीतायाः कथनं, श्रीविभीषणनिमित्तं—

'सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥'

इत्यभयप्रदानकथनं चेत्यर्थः । अनेनेश्वरेणाप्याशाकरणार्हं खल्वाचार्यत्वस्य महत्वमित्याचार्यवैभव उक्तः ।

पुनरेकेन प्रकारेणाचार्यवैभवं दर्शयति— आचार्यस्येत्यादिना ।

---

तुल्यप्रत्युपकारस्य करणं देशिकस्य वै ।
तदा स्याच्चेद् विभूतीनां वेदत्वं चेश्वरद्वयम् ॥४४९॥

पदेशकृतया संबंध रखना, आचार्य कृत्य का आरोपण कर अर्जुन को तत्व विवेक आदि चरमोपाय पर्यंतार्थ का प्रतिपादक श्रीगीता का उपदेश करना; श्रीविभीषण सूरि के कारण से "तुमारा मैं हूं, ऐसा एक आवृत्ति याचना करनेवाले के लिये सम्पूर्ण भूतों से अभय देता हूं यह मेरा व्रत है" ऐसा अभय प्रदान करना । इस से ईश्वर के भी आशा करने योग्य आचार्यत्व वैभव कहा गया ।

और भी एक अन्य प्रकार से आचार्य वैभव को कहते हैं— आचार्य को इत्यादि ।

आचार्य को सदृश प्रत्युपकार करसक्ते
हैं चार विभूति और दो ईश्वर हो तो ॥४४९॥

ईश्वरसंबंधो बंधमोक्षयोरुभयोरपि साधारणः,
आचार्यसंबंधो मोक्षस्यैव हेतुः ॥ ४५० ॥

---

उभयविभूतिं भूतिमंतमीश्वरं च स्वाधीनाहं कृत्वा दत्तवता-चार्येण कृतस्योपकारस्य सदृशत्वेन प्रत्युपकारकरणं—एवं-मन्ये द्वे विभूती विभूतिमानेक ईश्वरश्च संति यदीत्यर्थः ।

'यो दद्यात्भगवज्ज्ञानं कुर्याद्धर्मोपदेशनम् ।
कृत्स्नां वा पृथिवीं दद्यान्न तत् तुल्यं कथंचन ॥

इत्युक्तं हि । अनेनाचार्यस्य प्रत्युपकारावकाशरहितमहोपकार-करत्वरूपवैभवं उक्तः ।

पुनरेकमुखेनाचार्यस्य वैभवमाह—ईश्वरसंबंध इत्यादिना ।
अश्वेरसंबंध इत्युच्यते—ईश्वरस्याश्रयणमिति पूर्वोक्तदा-

---

साधारणो हि श्रीशस्य सम्बन्धो बन्धमोक्षयोः ।
आचार्यस्य सम्बन्धः केवलं मोक्षसाधनम् ॥४५०॥

उभय विभूति और ईश्वर को शिष्य के अधीन करनेवाले आचार्य कृत उपकार के सदृश प्रत्युपकार तब ही कर सक्ते हैं जब इस प्रकार की दो विभूति और एक ईश्वर होवे तब "जो भगवद्ज्ञान और धर्मोपदेश करते हैं उन को संपूर्ण पृथिवी देनेपर भी सदृश नहीं है" ऐसा प्रमाण कहा है । इस से आचार्य का प्रत्युपकारावकाश रहित महोपकारकत्वरूप वैभव कहा गया ।

और एक प्रकार से आचार्य वैभव को कहते हैं— ईश्वर संबंध इत्यादि ।

ईश्वर संबध बंध मोक्ष दोनों का समान है,
आचार्य संबंध एक मोक्ष का ही हेतु है ॥ ४५० ॥

ईश्वर संबंध माने— पूर्वोक्त ईश्वराश्रयण ! बंध मोक्ष इत्यादि— कर्मा-

भगवल्लाभ आचार्येण ॥ ४५१ ॥

श्रयणरूपसंबंधः। तस्य बंधमोक्षोभयसाधारण्यं नाम- कर्मानुगुणं संसारिणं कर्तुं कारुण्यानुगुणं मुक्तं च कर्तुं शक्तेन निरंकुश-स्वतंत्रेण विद्यमानसंबंधरूपत्वादुभयसाधारण्यम्। आचार्यसंबंधो नाम—आचार्यस्याश्रयणमिति पूर्वोक्ततदाश्रयणरूपसंबंधः। तस्य मोक्षहेतुत्वं नाम—कर्मानुगुणसंसारप्रयोजकेन स्वतंत्रेण विना सर्वप्रकारेणाप्यमुमुज्जीवयितृनिरतिशयकृपावता सह विद्यमा-नसंबंधरूपत्वात् संसारमोक्षयोः साधारण्यं विना संसारवि-मोचनैकहेतुत्वम्। अनेन मोक्षैकहेतुत्वनिबंधनवैभव उक्तः।

उत्तारकत्व आचार्यस्याधिक्यमुक्तवान्, उपकारकत्व ईश्वर-स्याधिक्यं वक्तुं मूलमादायोत्तिष्ठते— भगवल्लाभ इत्यादिना।

निरुपाधिकशेषिणो निरंकुशस्वतंत्रस्य भगवतो लाभस्तत्स-मृद्ध्येकप्रयोजनः सन्मंगलाशासनस्याधिकारी स्यादिति स्वा-

नुगुण संसारी बनाना कारुण्यानुगुण मुक्त बनाना इन के समर्थ निरंकुश स्वतंत्र के साथ सबंध होनेसे उभय साधारण है। आचार्य संबंध माने—पूर्वोक्ताचार्या श्रयण। वह मोक्ष का ही हेतु माने—कर्मानुगुण संसारी बनानेबाले स्वतंत्र न हो सर्व प्रकार से चेतन को उज्जीवित करनेवाले अधिक कृपावान् आचार्य के साथ संबंध होनेसे संसार और मोक्ष दोनों के बराबर न हो मोक्षैक हेतु होना। इस से मोक्षैक हेतुत्व प्रयुक्त वैभव कहा गया।

पहिले उत्तारकत्व में आचार्य का आधिक्य कहा गया, अब उपकारकत्व में ईश्वर के आधिक्य को कहने के लिये आरंभ करते हैं—भगवल्लाभ इत्यादि से।

भगवल्लाभ आचार्य से है ॥ ४५१ ॥

निरुपाधिक शेषी निरंकुश स्वतंत्र भगवान् का लाभ भगवत्समृध्येकप्रयो-

## आचार्यलाभ ईश्वरेण ॥ ४५२ ॥

---

त्मानमंगीकृत्य तद्व्यामोहविषयं कृतवता स्वाचार्येणेत्यर्थः।

एवंभूतस्याचार्यस्य लाभस्य हेतुः क इत्याकांक्षायामाह— आचार्यलाभ इत्यादिना ।

भगवल्लाभहेतोः परमप्राप्यभूतस्याचार्यस्य लाभः 'ईश्वरस्य च सौहार्दं' इत्यादिप्रकारेण निरुपाधिकसुहृदा विशेषकटाक्षावलंबनान्यपि स्वयमेव कल्पयित्वा विशेषकटाक्षं कृत्वाऽद्वेषमुत्पाद्याभिमुख्यं जनयित्वा सात्विकैः सह संभाषणे योजयित्वा सदाचार्यप्राप्तिं कारयित्रा निर्हेतुककृपावता भगवतेत्यर्थः ।

तर्ह्युभावप्युपकारकत्वे समौ किमित्यत आह— उपकार्येत्यादि ।

---

## आचार्येण हरेः प्राप्तिर्हरिणा देशिकस्य च ॥४५२॥

जन मंगलाशासन के लिये किंकर होना चाहिये ऐसा समझ अपने को अंगीकार कर परमात्मा के व्यामोह विषय वनानेवाले अपने आचार्य से होता है ।

एवं भूत आचार्य के लाभ का हेतु क्या ? इस शंका में कहते हैं—आचार्य लाभ इत्यादि ।

आचार्यलाभ भगवान् से ॥ ४५२ ॥

भगवल्लाभ हेतु परम प्राप्य भूत आचार्य का लाभ निरुपाधिक सुहृत् विशेष कटाक्ष और आश्रयण आशा को स्वयमेव कल्पना कर अद्वेष आभिमुख्य का उत्पादन कर सात्विक संभाषण में लगा सदाचार्य प्राप्ति को करानेवाले निर्हेतुक कृपावान् भगवान् से होता है ।

ऐसा हो तो उपकार करने में दोनों वरावर हैं क्या ? इस शंका में कहते हैं—उपकार्य वस्तु इत्यादि ।

उपकार्यवस्तुगौरवेणाचार्यादत्यंत-
मुपकारक ईश्वरः ॥४५३॥

---

उभाभ्यामुपकृतयोर्वस्तुनोर्भारतोलनेन द्वयोराचार्योपका-र्यवस्तुनो बंधमोक्षोभयहेतोः प्रथमपर्वाद्भगवद्विषयाद्भगवदुप-कार्यवस्तुनो मोक्षकहेतोरीश्वरमपर्वस्याचार्यविषयस्य गौरवेणेश्वरो-पकारकादाचार्यादाचार्योपकारक ईश्वरो महोपकारक इत्यर्थः।

'अचिंत्याद्भुताक्लिष्टज्ञानवैराग्यराशये' 'अगाधभगवद्भक्ति-सिंधवे' इत्युक्तप्रकारेण आचार्यस्याधिक्यं ज्ञानवैराग्यभक्तिभिः खलु, तज्ज्ञानवैराग्यभक्तिमताचार्यसंबंधस्त्यक्तश्चेत् ता भग-वल्लाभस्य हेतवो भवंति किमित्यत आह– आचार्यसंबंध इत्या-दिना ।

---

उपकार्यवस्तुमाहात्म्यादाचार्यादधिकः किल ।
उपकारी भवेदीशः सर्वशास्त्रार्थदर्शने ॥४५३॥

उपकार्य वस्तु के गौरव से आचार्य
की अपेक्षा ईश्वर अधिक उपकारक है ॥४५३॥

दोनों से उपकृत वस्तुओं को तोलनेपर आचार्य से उपकृत वस्तु बंध और मोक्ष का हेतु प्रथमपर्व भगवद्विषय की अपेक्षा भगवान् से उपकृत वस्तु मोक्षैक हेतु चरमपर्व आचार्यरूप विषय को गौरव से ईश्वर का उपकार करनेवाले आचार्य की अपेक्षा आचार्य का उपकार करनेवाले ईश्वर महोपकारक हैं।

"अचिंत्य अद्भुत क्लेशरहित ज्ञान वैराग्यों के राशि और अगाध भगव-द्भक्ति के समुद्र" इस वचनानुसार ज्ञान वैराग्य भक्तियों से आचार्य श्रेष्ठ होते हैं तादृश ज्ञान वैराग्य भक्ति विशिष्ट इस आचार्य संबंध को छोड़नेपर भी वे भगव-ल्लाभ के हेतु होयंगे क्या ? इस शंका में कहते हैं—आचार्य संबंध इत्यादि ।

आचार्यसंबंधः स्थितश्चेज्ज्ञानभक्तिवैराग्याण्यु-
त्पादयितुं शक्यानि, आचार्यसंबंधो नष्टश्चेत्
तेषां सत्त्वेऽपि प्रयोजनं नास्ति ॥४५४॥

---

पूर्वोक्तप्रकारेणोत्तारक उपकारकश्च स्वाचार्योऽयं मदीय इति यथाभिमन्येत तथा तच्चरणयोः स्वस्य विद्यमानसंबंधः स्वविप्रतिपत्त्या यथा न नश्येत्तथा तं रक्षन् वर्ततेचेदात्मालंकारभूततत्त्वज्ञानमप्राप्तविषयवैराग्यं प्राप्तविषयभक्तिरित्यात्मगुणानामभावेऽपि सदाचार्यप्रसादाद्यैः क्रमेणोत्पादयितुं शक्यानि । सर्वमंगलहेतुः स आचार्यसंबंधः स्वविप्रतिपत्त्या नष्टश्चेज्ज्ञानादीनां तेषां पूर्वसुकृतैः केषांचित् सत्त्वेऽपि भगव-

---

सत्त्वे त्वाचार्य संबंधे विरागज्ञानभक्तयः ।
शक्याश्चोत्पादने सम्यङ् नष्टश्चेद्देशिकस्य तु ।
ज्ञानादीनां च सत्त्वेपि न प्रयोजनमीरितम् ॥ ४५४ ॥

आचार्य संबंध नष्ट न हो तो ज्ञान
भक्ति वैराग्यों का संपादन कर सक्ते
हैं, आचार्य संबंध नष्ट हो तो उन
के होने पर भी प्रयोजन नहीं ।४५४॥

पूर्वोक्त प्रकार उत्तारक और उपकारक स्वाचार्य "यह हमारा है" ऐसा अभिमान करे तैसा उन के चरण में अपना संबंध नष्ट न होनेपर आत्मालंकार भूत तत्त्व ज्ञान अप्राप्त विषय वैराग्य प्राप्तविषय भक्तिरूप आत्मगुण न होनेपर भी उस आचार्य के अनुग्रहादि से क्रम से संपादन करसक्ते हैं । सर्व मंगल हेतु आचार्य संबंध अपने अज्ञान से नष्ट हो तो ज्ञानादि पूर्व पुण्यफलतया होनेपर भी

मांगल्यसूत्रं स्थितं चेद् भूषणानि कृत्वा
धर्तुं योग्यानि, मांगल्यसूत्रं गतं चेद्
भूषणानि सर्वाण्यवद्यकराणि ॥४५५॥

---

दंगीकारहेतुत्वाभावात् निष्प्रयोजनानीत्यर्थः ।

प्रयोजनाभाव एव न, अवद्यकराणीत्याह— मांगल्यसूत्रमित्यादिना ।

पतिव्रतायाः पतिसंबंधसूचकं मांगल्यसूत्रमेकमपि स्थितं चेद् भूषणानामभावेऽपि द्रव्योपपत्तौ कृत्वा धर्तुं योग्यानि, भूषणानि संतीति विचार्य मांगल्यसूत्रं त्यक्तं चेद्विधवालंकारकल्पत्वाद्भृतानि भूषणानि सर्वाण्यवद्यावहानीत्यर्थः । अनेनात्मभूषणभूतज्ञानवैराग्यभक्तीनामभावेऽप्याचार्ये संबंधमात्रं-

---

स्थितं मांगल्यसूत्रं चेद् भूषणानि सुधारयेत ।
नष्टं मांगल्यसूत्रं चेद् भूषणं दूषणं भवेत् ॥ ४५५ ॥

भगवदंगीकार हेतु न होने से निष्प्रयोजन होते हैं ।

प्रयोजनाभाव मात्र नहीं अवद्यकर भी है ऐसा कहते हैं—मांगल्य सूत्र इत्यादि ।

माङ्गल्य सूत्र हो तो भूषण बना धारण करसक्ते हैं
मांगल्य सूत्र नष्ट होनेपर सब भूषण दोषावह हैं ॥ ४५५ ॥

पतिव्रता स्त्री को पति संबंध सूचक मांगल्य सूत्र एक रहने से भूषण न रहने पर भी द्रव्य मिलने पर बनाकर धारण कर सक्ते हैं। इतने भूषण हैं ऐसा समझ मांगल्य सूत्र को निकाल देनेपर विधवालंकार सदृश धारण किये हुए संपूर्ण भूषण अवद्यकर होते हैं । इस से आत्मभूषणभूत ज्ञान वैराग्य भक्ति न होने

**कमलस्य विकासक आदित्य एव जलवियोगे यथा तच्छोषयति, तथा स्वरूपविकासकृदीश्वर एवाचार्यसंबंधनाशे तद् ग्लपयति ॥४५६॥**

---

स्थितं चेत् तस्य प्रसादेन ताः क्रमेणोत्पादयितुं शक्याः, आचार्यसंबंध एको नष्टश्चेदात्मभूषणभूतज्ञानवैराग्यभक्तीनां सत्वेऽपि ताः श्लाघ्यताहेतुर्न भवंति, अवद्यावहा भवंतीत्यर्थः ।

आचार्यसंबंधे सत्यपि स्वरूपविकासक ईश्वरः खलु, तस्मिन्नष्टेप्येतावदात्मगुणवतः तस्य स्वरूपविकासं न कुर्यात् किमिति शंकायामाह— कमलस्येत्यादि ।

---

कंजविकासकृत् सूर्यो जलाभावे तु शोषयेत् ।
संबंधाभावकाले च देशिकस्य तथैव हि ।
सत्ताविकासकृच्छ्रीशो ग्लपयेन्न तु पोषयेत् ॥ ४५६ ॥

पर भी आचार्य संबंध मात्र नष्ट नहो तो उन के अनुग्रह से वे क्रम से हो सक्ते हैं, आचार्य संबंध नष्ट होनेसे आत्मगुण ज्ञान वैराग्य होनेपर भी वे श्लाघ्यता हेतु न हो अवद्य कर होते हैं।

आचार्य संबंध होनेपर भी स्वरूप को विकास करनेवाले ईश्वर ही हैं तो आचार्य संबंध नष्ट होनेपर भी इतने आत्मगुण विशिष्ट के स्वरूप को प्रकाश नहीं करेगा क्या ! इस शंका में कहते हैं— कमल को इत्यादि ।

कमल को विकास करनेवाले आदित्य ही जल
संबंध छूटने से जैसे उस को सुखाता है तैसे
स्वरूप को विकास करनेवाले ईश्वर ही आचार्य
संबंध नष्ट होने पर उस को सुखाता है ॥ ४५६ ॥

जलजमिति प्रकारेण जले उत्पन्नस्य जलैकधारकस्य कमलस्य 'रक्तकमलमाकाशगतेनोष्णकिरणेन विना न विकसते' इति प्रकारेण नियमेन विकासक आदित्य एव स्वधारकजलविश्लेषे तत्तामरसं न विकासयतीत्येतावदेव न किंतु शोषयति, तथाचार्यान्वयेन सत्तांप्राप्यानंतरं सत्ताधारकस्तत्संबंधः स्थितश्चेदस्य स्वरूपस्य ज्ञानविकासमुखेन 'विद्यमाना लोका अहं च सत्तावंतः' इति प्रकाशक ईश्वर एव स्वसत्ताधारकमाचार्यसंबंधं स्वविप्रतिपत्त्या स नाशयति चेत्तदा स्वेन विकासनीयं तत्स्वरूपं न विकासयतीत्येतावन्नहि किंतु दिने दिने नष्टप्रज्ञं यथा संकुचितं स्यात् तथा करोतीत्यर्थः।

'नारायणोऽपि विकृतिं याति गुरोः प्रच्युतस्य दुर्बुद्धेः ।
कमलं जलादपेतं शोषयति रविर्न तोषयति ॥'

इत्युक्तं हि ।

एवं किमित्युच्यते, एतदाचार्यसंबंधनाशेऽपि त्यक्तुं वि-

---

जल में उत्पन्न हो जलैकधारक कमल को नियमेन प्रफुल्लित करनेवाले आदित्य ही स्वधारक भूत जल के विश्लेष से उस कमल को विकास नहीं करते इतना ही मात्र नहीं अपितु सुखाते भी हैं। आचार्य संबंध से सत्ता को प्राप्त हो स्वसत्ता धारक उन के संबंध रहने से इस के स्वरूप को ज्ञान विकास द्वारा प्रफुल्लित करनेवाले ईश्वर ही स्वसत्ता धारक आचार्य संबंध को अपनी विप्रतिपत्ति से चेतन नष्ट कर लिया तो उस के स्वरूप को ईश्वर विकसित नहीं करते हैं इतना ही नहीं किंतु दिन दिन जैसे प्रज्ञा नष्ट हो तैसा संकुचित करते हैं। "गुरु से अलग हुआ दुर्बुद्धि के विषय में नारायण भी विकृत होते हैं, जल से अलग हुए कमल को सूर्य विकसित न कर सुखाता है" ऐसा कहा है।

ऐसा क्यों कहते हैं? इस आचार्य संबंध नष्ट होनेपर भी छोडने से भी

## अनेन विना भगवत्संबंधो दुर्लभः ॥४५७॥

---

चारेऽपि न त्यक्तुं शक्यत इत्युक्तो भगवत्संबंध उज्जीवनस्य निदानं न भवति किमित्यत आह— अनेन विनेत्यादिना ।

अनादिसिद्धोऽप्याचार्येण ज्ञापनात्पूर्वमसत्कल्पस्तेन ज्ञापनादनंतरमस्य कार्यकरणयोग्यः स एतदाचार्यसंबंधनाशकाल एवैतन्मूलकः स्वयमपि नश्यत्यत एतदाचार्यसंबंधेन विना भगवत्संबंधोऽस्य दुर्लभ इत्यर्थः । तस्मादेतन्नाशेऽपि सोऽस्माकमुज्जीवनहेतुरिति स्थातुमुपायो नास्तीति भावः ।

एवमाचार्यसंबंधेन विना भगवत्संबंधालाभादात्मोज्जीवनस्य तदुभयमप्यपेक्षितमिति प्रदर्शनानंतरं भागवतविषयसंबंधश्च तद्वदस्यावश्यापेक्षित इत्यमुमर्थं दर्शयितुं तद्विषयप्रश्नमनुव-

---

विनानेन च सम्बन्धो हरेर्दुर्लभमीरितः ॥ ४५७ ॥

नहीं छूटनेवाले भगवत्संबंध उज्जीवन का हेतु नहीं हो सक्ता क्या ? इस शंका में कहते हैं—इस के इत्यादि ।

इस के विना भगवत्संबंध दुर्लभ है ॥ ४५७ ॥

अनादि सिद्ध होनेपर भी आचार्य के जनाने के पहिले असत्प्राय हो इस के जनाने के बाद इस का कार्य करनेवाला आचार्य का संबंध नष्ट होनेपर इस के द्वारा होनेवाला भगवत्संबंध भी नष्ट होता है, इस लिये आचार्य संबंध विना भगवत्संबंध नहीं हो सक्ता । इस कारण आचार्यसंबंध नष्ट होनेपर भी भगवत्संबंध उज्जीवन का हेतु है ऐसा नहीं रहसक्ते ।

एवं आचार्य संबंध विना भगवत्संबंध का लाभ नहीं होनेसे आत्मोज्जीवन के लिये दोनों की आवश्यकता को दिखा भागवत विषय संबंध की आवश्यकता को

**द्वयमपि नालं किं? मध्ये महाकुटुंबी**
**किमर्थमिति चेत् ॥४५८॥**
**लताया उपघ्ने आरोपणसमये यथाऽल्पशाखाऽ-**
**पेक्षिता तथाचार्यान्वयस्याप्ययमपेक्षितः ॥४५९॥**

---

दीप्ति– द्वयमपीत्यादिना।

आत्मोज्जीवनस्य भगवत्सबंधस्थापक आचार्यसंबंधस्तत्स्था-पितभगवत्संबंधश्चेति उभयमपि नालं किं? प्राप्यमध्यपर्वोक्ततया मध्ये महाकुटुंबीवत् स्थितो भागवतैः सह 'सात्त्विकैः संभाषणं' इत्युक्तः संबंधः किमर्थमपेक्षित इति चेदित्यर्थः। अस्य प्रश्न-स्योत्तरमाह—लताया इत्यादिना।

---

**नालं द्वयं हि मध्ये च महाभागवतः किमु।**
**प्रयोजनमितीत्थं चेत्समाधिस्तत्र चोच्यते ॥ ४५८ ॥**
**लताया रोपणे काले ह्यल्पशाखा अपेक्षिता।**
**तथाचार्यान्वयस्यापि यूथोयं समपेक्षितः ॥४५९॥**

दिखाने के लिये तद्विषय प्रश्न को अनुवाद करते हैं—दोनो इत्यादि।

दोनों बस नहीं क्या ? बीच में भागवत संबंध क्यौं ? ॥ ४५८ ॥

आत्मोज्जीवन के लिये भगवत्संबंध के स्थापक आचार्य संबंध, उस से स्थापित भगवत्संबंध ये दोनों बस नहीं क्या, प्राप्य मध्यमपर्व में कहा हुआ भागवतसंबंध की अवश्यतकता क्यौं चाहिये ?

इस प्रश्न का उत्तर कहते हैं— लता को इत्यादि।

लता को आलंवन में चढाने के समय जैसे अल्पशाखा
की अपेक्षा होती है तैसे आचार्यसंबंध को यह चाहिए। ४५९॥

उपघ्नपेक्षाया वर्द्धमानाया लतायास्तत्परिणामस्य सर्वस्या-वकाशदानार्हे महति कस्मिंश्चिदुपघ्ने संयोजनसमये प्रथमत-स्तेन सह संयोजनासंभवादधःपातं विना प्रथमं स्वयमाश्रय-भूता समीपे स्थितस्वान्वयमुखेनोपघ्नवृक्षे व्यापयंत्यल्पशाखा यथाऽपेक्षिता भवति तथा 'उपघ्नमन्विष्य धावल्लतावत्' अ-भिमुखस्यैतच्चेतनस्याश्रितानधःपातं विनोज्जीवयतोर्महदाश्रयभू-तयोराचार्यचरणयोरन्वयसमये प्रथमतस्तदन्वयासिद्धेर्दुःशक-त्वात् प्रथमं स्वयमाश्रयभूताः सन्तः स्वैः सह मेलयित्वा तन्मार्गेणाचार्यविषयेण योजयितुं भागवतैः सह संबंधोऽवश्या-पेक्षित इत्यर्थः । एवमाचार्यान्वयस्य मूलं भागवताश्चेदाचा-र्यलाभो भगवतेति कथमुच्यते इति चेन्न तत्र विरोधः; भाग-वतान्वयमूलत्वात्तस्याभिमुख्यपर्यंतं यादृच्छिकसुकृतादि स्वय-मेव कारयित्वानंतरं भागवतैः सह मेलयित्वा तन्मार्गेण खलु स आचार्यविषयेण योजयति । एतत्सर्वमेतदुक्तदृष्टांते सिद्धम् ।

---

आलंबन की अपेक्षा कर बढनेवाली लता को स्थान देने योग्य एक बडे आलंबन में लगाने के समय छोटे डालियों की अपेक्षा के तरह, अभिमुख चेतन को महदाश्रय भूत आचार्य के चरणों में आश्रयण करने के समय प्रथम उन के संबंध दुःशक होनेसे भागवत लोग समीप में रह अपने साथ मिला तद्द्वारा आचार्य विषय में मिलाते हैं, इस लिये भागवतसंबंध अवश्यापेक्षित समझना । एवं आचार्य संबंध के कारण भागवत लोग हो तो 'आचार्य लाभ भगवान् से' ऐसा क्यौं कहे हैं ? उत्तर—भागवत संबंध का कारण भगवान् होनेसे । आभि-मुख्य पर्यंत स्वयमेव कृपि कर भागवतों के साथ मिला तद्द्वारा आचार्य विषय में मिलाते हैं । ये सब बातें लोकाचार्य जी के कहे हुए दृष्टांत में सिद्ध हैं क्यौं कि

तथा हि— चेतनो लतास्थानीयः आचार्य उपघ्नस्थानीयः भागवता अल्पशाखास्थानीया इत्युक्तत्वात्, कर्षकः कश्चित् स्वप्रयोजनार्थं प्रथमतो बीजमुप्त्वांकुरितं कृत्वा पल्लवव्यापन-पर्यंतं वर्द्धितां कांचिल्लतामस्या उपघ्नोऽपेक्षित इति स्वयमेवो-पघ्नमन्विष्य तत्रारोपयितुमल्पशाखां च निधाय तन्मार्गेण यथोपघ्ने योजयति सर्वशेषी सर्वेश्वरः स्वप्रयोजनार्थमिमं चेतनं प्रथमतः सृष्ट्वा ईश्वरस्य च सौहार्दमित्यादिप्रकारेण क्रमेणा-भिमुख्यपर्यंतं जनयित्वाऽस्यैकमाचार्यं चामुक इति स्वयमेवा-ङ्गीकृत्य तेन योजयितृभिर्भागवतैः सहान्वयं कारयित्वा तन्मा-र्गेणाचार्यविषयेण योजयतीत्यर्थभानात्, उपघ्न आरोपयतः क-र्षकस्यैव तया लतया जायमानप्रयोजनं च यथा भवति तथा आचार्यविषय ईश्वरेण योजितेन चेतनेन जायमानप्रयोजनं चे-श्वरस्यैवेति फलितम्। अथाचेतनोपघ्नाद् व्यावृत्तश्चेतनोत्तमो-ऽयमाचार्यः परसमृद्ध्यैकपरत्वात् स्वशेषिण ईश्वरस्य प्रयोज-नमेव स्वप्रयोजनतयाऽनुसंधाय वर्तते खलु।

---

चेतन को लता स्थान में रख आचार्य को आलंबन स्थान में मान भागवतों को छोटे डालियों स्थान में कहने से। कर्षक स्वप्रयोजनार्थ पहिले बीज बो अंकुरित पल्लवित होनेतक बढा कर लता को छोटे डालियों में लगा मददाश्रय भूत आलंबन में लगाता है। इस प्रकार सर्व शेषि सर्वेश्वर स्वप्रयोजनार्थ इस चेतन को पहिले सृष्टिकर सौहार्द गुण से क्रमेण आभिमुख्य पर्यंत जनाकर आचार्य को आपही निश्चय कर उन के साथ मिलाने वाले भागवतों के साथ मिला तद्द्वारा आचार्य विषय में मिलाते हैं। छोटे डालियों में लगानेवाले कर्षक को लता से जैसा प्रयो जन मिलता है तैसा आचार्य विषय में मिलाया हुआ चेतन से प्रयोजन ईश्वर का ही है यह सिद्ध हुआ। अचेतन भूत आलंबन बिना चेतनोत्तम आचार्य पर-समृद्ध्येकपर होनेसे स्वशेषीभूत ईश्वर के प्रयोजन ही अपना प्रयोजन मान

**स्वाभिमानेनेश्वराभिमानं नाशयतोऽस्याचार्याभिमानं विना गतिर्नास्तीति कृष्णपादस्वामिनि बहुवारं वदति श्रुतम् ॥४६०॥**

---

इतः परं स्वाभिमानेनेत्यारभ्याचार्याभिमान एवोत्तारक इत्यंतमेवं तदीयपुरस्कारपूर्वकमाश्रयणीयस्य सदाचार्यस्याभिमान एवोज्जीवनस्योचितोपाय इत्येतत्प्रबंधतात्पर्यं प्रकाशयति। महार्घस्याभरणस्य नायकरत्नवत् श्रीवचनभूषणस्यायं प्रदेशो नायकरत्नभूतः। एतावद्वक्तुमधिष्ठिका कृता पूर्वेण सर्वेण। उपरि सर्वमत्र निष्ठास्थापनार्थम्। तत्र प्रथममयमर्थः सत्संप्रदायसिद्ध इति सर्वेषां विश्वासार्थमयं स्वस्याप्तोपदेशलब्ध इत्याह—स्वाभिमानेनेत्यादिना।

---

स्वाभिमानेन श्रीशस्याभिमानं नाशयन् स्थितः।
अतोस्यापि च संबंधं विना नास्ति गतिः किल।
कृष्णो बहुविधं त्वेवं वदतीति श्रुतं मया ॥४६०॥

रहते हैं।

'स्वाभिमान से' ऐसा आरंभकर 'आचार्याभिमान ही उत्तारक है' यहांतक भागवतों के आगेकर आश्रयण करने योग्य सदाचार्य का अभिमान ही उज्जीवन का उचितोपाय समझ प्रबंध तात्पर्य को प्रकाश करते हैं। महार्घ आभरण का नायकमणि के तरह श्रीवचनभूषण का यह प्रदेश नायक रत्न होता है। पहिले और पीछे कहे हुए सब इस अर्थ को स्थापन करने के लिये उपोद्घात समझना। पहिल पहल यह अर्थ सत्संप्रदायसिद्ध समझ सब को विश्वास होनेके लिये यह अर्थ अपने को आप्तों के उपदेश से प्राप्त हुआ ऐसा कहते हैं—स्वाभिमान से इत्यादि।

"स्वाभिमान से ईश्वराभिमान को दूर कर
लेनेवाले इस चेतन को आचार्याभिमान के
विना गति नहीं" ऐसा श्रीकृष्णपाद स्वामी

अनादिकालमहं मम निर्वाहक इति स्थितस्य स्वस्य दुरभिमानेनाथमस्माकं शेषभूतोऽस्य कार्यमस्माकमेव भर इति स्वोज्जीवननिदानभूतेश्वराभिमानं नाशयतोऽस्य दुर्गतिमेवावलंब्यांगीकृत्य स्वस्योज्जीवनार्थं कृषिं कुर्वता परमदयालुनाऽऽचार्येणायं मम शेषभूत इति क्रियमाणमभिमानं विनाऽन्यदुज्जीवनोपायो नास्तीति सकलशास्त्रविदग्रेसरस्य कलिवैरिदासस्य चरणौ सेवित्वा तदेकपरतंत्रे सकलशास्त्रतात्पर्याण्यपि तदुक्तानि श्रुत्वा तन्निष्ठेऽस्मदाचार्ये कृष्णपादस्वामिनि शरणत्वेन बहुवारं वदति श्रुतमित्यर्थः। तस्मादाचार्याभिमान एवास्यात्मन उज्जीवनोपाय इति भावः

एवमाचार्याभिमानं विना गतिर्नास्तीति कथमुच्यते शास्त्रसिद्धा भक्त्याद्युपायविशेषाः संति खल्विति शंकायां तद्व्यतिरिक्ताः सर्वेऽस्योपाया न भवंतीत्यमुमर्थं क्रमेणाहोपरि, तत्र प्र-

---

अनेक वार कहते हुवे सुने हैं ॥ ४६० ॥

अनादि काल अपने दुरभिमान से ईश्वर अभिमान को नाश करलेनेवाले इस चेतन की दुर्गति का अवलम्बन कर परमदयालु अपने उज्जीवन के लिये यत्न करनेवाले आचार्य के अभिमान बिना और कोई उज्जीवनोपाय नहीं है ऐसा सकल शास्त्रविदग्रेसर कलिवैरि स्वामी के चरणों में आश्रयण कर उन के परतंत्र सकल शास्त्र के तात्पर्यों को उन के मुख से सुन तन्निष्ठ हमारे आचार्य श्रीकृष्ण पाद स्वामी आचार्याभिमान को उपायतया अनेक आवृत्ति कहनेपर मैं सुना हूं। इस लिये आचार्याभिमान ही इस आत्मा का उज्जीवनोपाय समझना।

एवं "आचार्याभिमान विना गति नहीं" ऐसा क्यों कहते हो ? शास्त्रसिद्ध भक्त्यादि उपाय नहीं हो सक्ते हैं क्या ? इस शंका में आचार्याभिमान विना पूर्वोक्त कोई उपाय नहीं हो सक्ते हैं इस अर्थ को क्रम से कहते हैं। पहिले

स्वस्वातंत्र्यभयेन भक्तिश्च्यवते ॥४६१॥
भगवत्स्वातन्त्र्यभयेन प्रपत्तिश्च्यवते ॥४६२॥

---

थमं भक्तेरुपायत्वाभावमाह— स्वस्वातंत्र्येत्यादिना ।

भगवत्प्राप्तिसाधनतया विहिता स्वयत्नसाध्या भक्तिर्भगवदेकपारतंत्र्यविरोधिस्वस्वातंत्र्यमुत्पादयेदिति भयेनास्यानुपायश्च्यवत इत्यर्थः ।

अनंतरं प्रपत्तेरनुपायत्वमाह—भगवत्स्वातंत्र्येत्यादिना ।
स्वपारतंत्र्यानुरूपा महाविश्वासरूपा प्रपत्तिर्बंधमोक्षोभयनिर्वाहकः भगवान् स्वस्वातंत्र्येण पुनरपि कर्मानुगुणं कृतचिंतां दुरीकृत्य संसारयति चेत् किं कर्तव्यमिति महाभयेनास्यानुपायश्च्यवत इत्यर्थः ।

---

च्यवते भक्तिरुत्कृष्टा स्वस्वातंत्र्यभयेन तु ॥४६१॥
प्रपत्तिश्च्यवते तद्वद्धरिस्वातंत्र्यभीतितः ॥४६२॥

भक्ति उपाय नहीं ऐसा कहते हैं— स्वस्वातंत्र्य इत्यादि ।

स्वस्वातंत्र्यभय से भक्ति उपाय नहीं ॥ ४६१ ॥

भगवत्प्राप्ति साधनतया कही हुई भक्ति स्वयत्न साध्य होनेसे भगवदेकपारतंत्र्य विरोधि स्वस्वातंत्र्य को उत्पन्न करती है, इस भय से चेतन को उपाय नहीं होती है ।

अब प्रपत्ति की उपायाभावता को कहते हैं— भगवत्पारतंत्र्य इत्यादि ।

भगवत्पारतंत्र्य भय से प्रपत्ति उपाय नहीं होती है ॥ ४६२ ॥

स्वपारतंत्र्यानुरूप महाविश्वासरूप प्रपत्ति बंध मोक्ष उभय निर्वाहक भगवान् स्वस्वातंत्र्य से फिर भी कर्मानुगुण संसारी बनावे तो क्या किया जाय इस भय से उपाय नहीं होता है ।

आचार्यविषये स्वकृतमाश्रयणमहंकारग-
र्भत्वात्कालं प्रतिगृह्य मुद्रिकाधारणवत् ॥४६३॥

---

अनंतरमाचार्यविषये स्वकीयस्वीकारानुपायत्वमाह — आचा-
र्यविषय इत्यादिना ।

आचार्यस्योपायत्वेन स्वकृतः स्वीकारः स्वफलित्वकर्तृत्व-
रूपस्वरूपनाशकाहंकारविशिष्टत्वात्स्वनाशकं कालं प्रतिगृह्य
तत्स्वर्णेनांगुलीयकधारणं कृतं चेद्यथाऽवद्यकरं भवति तथा
स्वस्य स्वरूपस्यावद्यकरो भवतीत्यर्थः ।

तस्मादयमपि नोपाय इति भावः ।

पारिशेष्यात्पूर्वं स्वोक्त एवोपाय इति समापयति—आचा-
र्याभिमान एवेत्यादिना ।

---

अहंकारविशिष्टत्वाद्देशिकाश्रयणं खलु ।
कालेनमुद्रिकावत् स्यान्न कार्यकारणं ततः ॥४६३॥

अव आचार्य विषय में स्वगत स्वीकार भी उपाय नहीं है ऐसा कहते हैं—आचार्य को इत्यादि ।

आचार्य को अपने आश्रयण करना
अहंकार गर्भित होने से मृत्यु
दान ले अंगूठी धारण करने के
तरह दोषावह होता है ॥४६३॥

आचार्य को उपायतया आप स्वीकार करनेपर फलभोक्ता और कर्त्ता आप होनेसे स्वरूप नाशक और अहंकारगर्भित होता है। जैसा स्वविनाश कर मृत्युदान ले उस स्वर्ण से अंगूठी वना धारण करना अवद्यकर होता है तैसा अपने स्वरूप का अवद्य कर समझना। इस लिये यह भी उपाय नहीं है।

अंततो गत्वा अपने से पहले कहा हुआ ही उपाय होता है ऐसा समाप्त करते हैं—आचार्याभिमान इत्यादि ।

आचार्याभिमान एवोत्तारकः॥४६४॥
हस्तगतार्थं त्यक्त्वा भूमिनिक्षिप्तमर्थं न बहुमन्येत॥

---

मोक्षसाधनतया शास्त्रसिद्धानां भक्त्यादीनामुपायत्वाभावे निरतिशयकृपावतो निर्हेतुकं स्वमंगीकृत्य निरपायं रक्षत आचार्यस्यायमस्मदीय इत्यभिमान एवेमं संसारादुत्तारयतीत्यर्थः। एवं 'स्वतंत्रस्योपायत्वेनाश्रयणे' इत्यारभ्योपपादितं चरमोपायं याथार्थ्येन शोधित्वा निर्णीतवान्।

अनंतरमेतदुपायनिष्ठस्याधिकारिणः कर्तव्यविशेषान् विस्तरेण वदंति, तत्र प्रथमं सुलभमाचार्यविषयं विहाय दुर्लभं भगवद्विषयं नेच्छेदित्यमुमर्थं दृष्टांतमुखेनाह-- हस्तगतेत्यादिना।

---

आचार्यस्याभिमानं वै सदोत्तारक ईरितः ॥४६४॥
हस्ते गतं धनं हित्वा भूगतं नातिभावयेत् ॥ ४६५॥

आचार्याभिमान हीं उत्तारक है ॥ ४६४ ॥

मोक्षसाधनतया शास्त्रसिद्ध भक्त्यादिओं में एक भी उपाय नहीं होनेपर निरतिशय कृपावान् निर्हेतुक चेतन को अंगीकार कर अपाय रहित रक्षा करनेवाले आचार्य का अभिमान ही इस को संसार से उद्धार करता है ऐसा समझना।

"स्वतंत्र को उपायतया स्वीकार करने के समय" ऐसा आरंभ कर कहा हुआ चरमोपाय स्वरूप को यथार्थतया शोधन कर निश्चय किये हैं।

• इस उपायनिष्ठ अधिकारी के कर्तव्याकर्तव्य विशेषों को विस्तारपूर्वक कहते हैं। उस में पहिले सुलभ आचार्य को छोड दुर्लभ ईश्वर को अपेक्षा नहीं करना इस अर्थ को दृष्टांत द्वारा कहते हैं—हस्तगत इत्यादि।

हस्तगत वस्तु को छोड गाढा
हुआ वस्तु को नहीं चाहना ॥ ४६५॥

पिपासोत्पत्तिसमये करस्थमुदकमुपेक्ष्य
जीमूतजलं सागरसलिलं सरित्सलिलं

---

हस्ते विद्यमानधनवदतिसुलभमाचार्यमपकृष्टमनुसंधाया-नादरेण त्यक्त्वा भूमावन्यैर्निक्षिप्तधनवल्लब्धुमशक्यत्वाद् 'दुर्लभार्थः' इति प्रकारेण दुर्लभं भगवद्विषयं रक्षकत्वेनाश्रयितुमिच्छां न कुर्यादित्यर्थः ।

'सुलभं स्वगुरुं त्यक्त्वा दुर्लभं य उपासते ।
लब्धं त्यक्त्वा धनं मूढो गुप्तमन्वेषते क्षितौ ॥'

इति, 'आश्रीयमाणमाचार्यं' इत्यारभ्य 'स्वहस्तगतं धनं त्यक्त्वा ये केचन भूमावन्यैर्निक्षिप्तं तद्धनमन्वेषमाणाः संचरंति तत्सदृशः' इत्युक्तं हि ।

पुनरपि किंचिद् दृष्टांतमुखेन सुलभमाचार्यविषयं त्यक्त्वा दुर्लभे भगवद्विषये नाशां कुर्यादित्याह— पिपासोत्पत्तिसमय— इत्यादिना ।

---

पिपासोत्पत्तिकाले तु कराम्बु समुपेक्ष्य वै ।
घनगं निधिगं तोयं नदीगं कूपगं तथा ।

हस्तगत धन के तरह अति सुलभ आचार्य को कम समझ अनादर से छोड भूमि में गाढा हुआ धन के तरह दुर्लभ भगवान् को आश्रयण करने की इच्छा नहीं करना चाहिये । "सुलभ अपने गुरु को छोड दुर्लभ का आश्रयण करना हस्तगत धन को छोड गुप्तधन की अपेक्षा करने की तरह समझना ।"

और कई दृष्टांत द्वारा सुलभ आचार्य को छोड दुर्लभ भगवान् को नहीं चाहना ऐसा कहते हैं—प्यास लगनेपर इत्यादि ।

प्यास लगने पर हस्तगत जल को छोड

वापीकूपपयांसि च न वांच्छेत ॥ ४६६ ॥

---

पिपासातिशयसमये शीघ्रं पानार्हं पात्रगतं स्वहस्ते विद्यमानं जलं सुलभत्वेनैव हेतुनाऽनादृत्य भूमौ विनाश्याकाशस्थत्वेनाप्राप्यं, भूमिस्थत्वेपि दूरस्थं, आसन्नत्वेपि प्रवाहकालव्यतिरिक्तकालेऽविद्यमानं सदावर्तमानत्वेऽपि तावद्दूरं गत्वोपजीव्यं, स्थितस्थले सत्त्वेऽपि खनित्रादिभिः खनित्वा प्राप्यं जीमूतादिजलं प्रत्याशां कुर्वन्निव रक्षकापेक्षोत्पत्तिदशायां तदानीमेव स्वस्योपकारार्हं स्वाधीनमाचार्यविषयं सौलभ्यमेवावलम्ब्योपेक्ष्य परमाकाशवर्तिनं दुष्प्रापं परत्वं, भूमौ सत्त्वेऽपि क्षीराब्धिपर्यंतं गंतुं समर्थव्यतिरिक्तानामप्राप्यव्यूहं, आसन्नत्वेऽपि तात्कालिकान्विना पाश्चात्यानामलभ्यं विभवं, नित्यसं-

---

वाप्यादिगं तथा तोयं न वांछेत सुबुद्धिमान् ॥४६६॥

मेघजल, समुद्रजल, नदीजल और
वापी कूप जलों को नहीं चाहना चाहिये ॥ ४६६ ॥

पिपासा बढनेपर उसी वखत पान करने योग्य पात्र में धरा हुआ हस्तगत जल को सुलभ समझ अनादर कर भूमि में गिर नष्ट होनेवाले आकाशस्थ मेघ जल, भूमि में होनेपर भी दूरस्थ समुद्रजल, समीप में होनेपर भी वर्षाकाल में बह शुष्कीभूत नदीजल, सदा होनेपर भी वहांतक जाकर पीने योग्य वापी कूप तटाक जल, और खनित्रादि साधन से खोदकर निकालने योग्य भूगत जलों को अपेक्षा करनेवालों के तरह रक्षकापेक्षा होने के समय उसी वखत सहाय करने योग्य हस्तगत आचार्य विषय को सुलभ समझ उपेक्षा कर परमाकाशस्थ दुष्प्राप परत्व, भूमि में होते हुए भी क्षीराब्धि पर्यन्त जासकनेवालों के बिना औरों को अनुपयुक्त व्यूह, समीप में होते हुए भी तात्कालिक मनुष्यों के विना औरों की

गानश्रवणस्थलमाक्रोशश्रवणस्थल-

निधिसत्त्वेऽपि संभाषणादिभिरनेन सहामिलित्वा स्थितमर्चा-वतारं, स्थितस्थले सत्त्वेऽपि यमनियमादिक्रमेण यत्नं कृत्वा द्रष्टव्यमंतर्यामिणं च प्रत्याशां न कुर्यादित्यर्थः ।

'चक्षुर्गम्यं गुरुं त्यक्त्वा शास्त्रगम्यं तु यः स्मरेत् ।
हस्तस्थमुदकं त्यक्त्वा घनस्थं सोभिवांछति ॥'

इति, 'लाभयोग्यतया स्थितमाचार्यं' इत्यारभ्य 'अंबुदं पश्यन् वर्तमानः' इवेत्युक्तं हि । इदं व्यूहादीनामप्युपलक्षणम् ।

एवं सुलभ आचार्यविषये स्वरक्षणस्य विद्यमाने सति त-मुपेक्ष्य दुर्लभान् परत्वादीन् न वांछेत, तथापि प्राप्यत्वेन तेऽस्य वांछनीयाः खल्विति चेत्ते सर्वे आचार्य एवेति वर्तेतेत्याह– गानश्रवण इत्यादिना ।

---

गानश्रुतिस्थलं तद्वदाक्रोशश्रवणस्थलं ।

दुर्लभ रामकृष्णाद्यवतार, निरसंनिधि करने पर भी संभाषणादियों से चेतनों के साथ नहीं मिलनेवाले अर्चावतार, स्थितस्थल में होते हुए भी यमनियमादि क्रम से यत्न पूर्वक दर्शन करने योग्य अंतर्यामी को भी नहीं चाहना चाहिये । 'चक्षुष के गोचर गुरु को छोड शास्त्रगोचर को जो चाहता है, वह हस्तगत जल को छोड मेघजल को अपेक्षा करनेवाले के तरह परिहास का विषय होता है ।' इत्यादि प्रमाणों को समझना ।

एवं सुलभ आचार्य विषय के स्वरक्षण के लिये होते हुए इस को उपेक्षाकर दुर्लभ परत्वादियों को यद्यपि नहीं चाहना तथापि प्राप्यतया वे चेतन को अपेक्षित नहीं क्या ? इस शंका में वे सब आचार्य ही को समझना ऐसा कहते हैं—गान सुनने के स्थल इत्यादि ।

गान सुनने के स्थल, पुकार सुनने के

मुत्पतनस्थलमवरोधनस्थलं भोजयि-
तृस्थलं च सर्वं प्राप्तविषय एवेति वर्तेत ॥४६७॥

---

'एतत्सामगायन्नास्ते' इत्युक्तप्रकारेण निरन्तरानुभवपरैर्नित्यमुक्तैरनुभवस्य सात्म्यार्थं क्रियमाणसामगानश्रवणस्थलं परमपदं, असुरराक्षसपीडितानां ब्रह्मरुद्रादीनामार्तनादं शृण्वतः शयनस्थलभूतव्यूहस्थलं, तेषामार्त्तध्वनिं श्रुत्वा व्याकुलतयोत्थाय 'नागपर्यंकमुत्सृज्य ह्यागतो मथुरां पुरीम्' इत्युक्तप्रकारेण क्षीरसमुद्रे शेषशयनादित आगंतुमुत्पतन्निवागत्यावततारेत्यवतारस्थलं, विचारितकार्यसमाप्तिपर्यंतं मलैयाला (मलबार्य)वरोधनवंदवरोधनं कृत्वा स्थितस्यार्चावतारस्थलं, 'येषामिंदीवरश्यामो हृदये सुप्रतिष्ठितः।' इति 'तेजिष्ठशंखगदानंदकचक्रविशिष्टोऽद्वितीयः शेषभूतस्य मम हृदये स्थितः' इत्युक्तप्रकारेण हृदयकमले स्थित्वा स्वप्रीतिविषयाणां स्वसौंदर्यस्य

---

भोजनस्य स्थलं तद्वदवतारावरोधने ।
एवं वर्तेत सद्बुद्धिः सर्वे वै प्राप्यगोचराः ॥४६७॥

स्थल, अवतार स्थल, रोकने का स्थल,
खवाने का स्थल ये सब प्राप्त
आचार्य ही ऐसा समझ रहना ॥ ४६७ ॥

सामगान करनेवाले नित्यमुक्तों के सदानुभव योग्य गान श्रवण स्थलरूप परमपद, असुर राक्षस पीडित ब्रह्मादि देवताओं के आर्तनाद सुनने के लिये योगनिद्रा करनेवाले व्यूहस्थल, उन के आर्त ध्वनि सुन घबडाकर अवतार लेनेके स्थल, इच्छित वस्तु के लाभ पर्यंत रोकनेवाले अर्चावतारस्थल, हृदयांतर्वर्ति हो

अस्य प्रातिकूलाः स्वतंत्रा देवतांतरप-

---

भोजयितुरंतर्यामिणः स्थलमित्येतत्प्राप्यस्थलानि सर्वाणि स्वस्य प्राप्तस्थलभूतः प्राप्य आचार्यविषय एवेति निश्चत्य वर्तेतेत्यर्थः । अवरोधनस्थलं नामान्यैरविदिततया तिरस्करिणीं कृत्वा वर्तमानांतर्यामिणः स्थलम् । भोजयितृस्थलं नाम—चक्षुर्विषयत्वेन स्थित्वा स्वसौंदर्यगुणांश्चाश्रितान् भोजयदर्चावतारस्थलमिति वा ।

'येनैव गुरुणा यस्य न्यासविद्या प्रदीयते ।
तस्य वैकुंठदुग्धाब्धिद्वारकाः सर्व एव सः ॥'

इति 'किरणैरधिकरत्नयुक्तः' इत्यारभ्य 'कृपया स्थापितवान् सः' इति चोक्तम् ।

अथवा गानश्रवणेत्यादीनां रक्षकत्वेन तान्प्रत्याशां न कुर्यादित्येतावदेव न किंत्वेते सर्वे स्वस्यायं विषय एवेति वर्तेतेति पूर्वेण योजना ।

एवंभूतस्यास्याधिकारिणः स्वरूपनाशकत्वस्वरूपवर्द्धकत्वतदुभयराहितत्वैः प्रतिकूलाननुकूलाननुभयांश्च दर्शयति—अस्य प्रतिकूला इत्यादिना ।

---

आश्रितों को सौंदर्यादि दिखा अनुभव करानेवाले अंतर्यामि स्थल, ए सब प्राप्य स्थल, अपने को प्राप्त प्राप्यभूत आचार्य ही हैं ऐसा निश्चय करना चाहिये, "जिस गुरु से प्रपत्ति उपदेश की जाती है वही गुरु उस चेतन को वैकुंठ क्षीराब्धि द्वारका यह सब है" इस प्रमाण का अनुसंधान करना ।

एवंभूत इस अधिकारी को स्वरूपनाशकत्व स्वरूप वर्द्धकत्व उदासीनत्व आदि से प्रतिकूल अनुकूल उदासीन लोगों को दिखाते हैं—इस को इत्यादि ।

रतंत्राश्च, अनुकूला आचार्यपरतंत्राः,
उपेक्षणीया ईश्वरपरतंत्राः ॥४६८॥

---

एवमाचार्याभिमाननिष्ठस्य परत्वादिपंचके विद्यमानं प्रावण्यं कृत्स्नमस्मिन् विषये एव प्रवाहं कृत्वा 'देवमन्यं न जानामि' इति वर्तमानस्यास्याधिकारिणः सहवासे आत्मनाशकारिणः, स्वतंत्राः-पारतंत्र्यमंगीकृत्यापि भगवद्व्यतिरिक्तदेवतांतराणां परतंत्राश्च, स्वसंसर्गेण स्वरूपवर्द्धका अनुकूलाः—स्वरूपं याथात्म्येन ज्ञात्वा तच्चरमावधिनिष्ठाः सदाचार्यपरतंत्राः, एवं स्वरूपनाशकत्वस्वरूपवर्द्धकत्वयोरभावाज्जिहासोपादित्साऽविषयभूता उपेक्षणीया चरमपर्वाचार्यपारतंत्र्ये श्रद्धां विना प्रथमपर्वेश्वरपारतंत्र्ये श्रद्धां कृ-

---

स्वतन्त्रा देवतान्तरपरतन्त्रास्तथैव च ।
प्रतिकूला भवन्त्यस्यानुकूला देशिकाद्दताः ।
उपेक्षणीया ईशस्य परतन्त्रपरा जनाः ॥ ४६८ ॥

इस को प्रतिकूल स्वतंत्र और
देवतांतर पर हैं, अनुकूल
आचार्य परतंत्र हैं, उपेक्षा करने
योग्य ईश्वर परतंत्र हैं ॥ ४६८ ॥

एवं आचार्याभिमाननिष्ठ परत्वादि पंचक विषय प्रावण्य को आचार्य विषय में करनेवाले आचार्य व्यतिरिक्त अन्य को नहीं जाननेवाले इस अधिकारी को सहवास करनेपर स्वरूप नाश करनेवाले—आत्मापहारी स्वतंत्र और देवतांतर भक्त हैं। अपने संबंध से स्वरूप को बढानेवाले अनुकूल—स्वरूप को अच्छीतरह से जान चरमावधि निष्ठ सदाचार्य के परतंत्र हैं, ऐसा स्वरूप नाशक और स्वरूप बर्द्धक न हो उपेक्षा करने योग्य—चरमपर्व आचार्य पारतंत्र्य में विश्वास छोड

ज्ञानानुष्ठानं उभेऽन्येषामुपायांगमस्योपेयांगम् ॥

---

त्वा वर्तमाना इत्यर्थः। प्रतिकूलानां कथनस्थले स्वतंत्रदेवतांत-रपरतंत्रयोरुभयोरुक्तिः प्रपत्तिप्रकरणोक्तानामन्येषामपि प्रतिकूलानामुपलक्षणम्। प्रथमपर्वनिष्ठस्य प्रतिकूला अस्य प्रतिकूला भवंत्येव खलु। अनेन पूर्वं भगवत्प्रपन्नाधिकारिणः सहवासतन्नि-वृत्त्यर्थमनुकूलप्रतिकूलदर्शनं यथाऽकरोत् तथाचार्याभिमा-ननिष्ठस्यास्यापि सहवासनिवृत्तिविषयप्रतिकूलान् सहवासवि-षयाननुकूलांश्च प्रदर्श्य तदधिक उपेक्षणीयविषय एकोऽस्तीति प्रादर्शयत्।

अस्याधिकारिण आवश्यकानि प्रतिपत्त्यनुष्ठानानि बहुप्र-कारमत्रोचत्। एतत्प्रसङ्गेऽन्योपायनिष्ठस्य ज्ञानानुष्ठानयोरस्य ज्ञानानुष्ठानयोर्विद्यमानविनियोगविशेषमाह—ज्ञानानुष्ठाने उभे इत्यादिना।

तत्वज्ञानं तदनुरूपमनुष्ठानं चाचार्याभिमाननिष्ठादेतस्माद्भि-

---

ज्ञानानुष्ठानयुग्मं चान्येषां साधनसाधनन्।
उपेयांगं भवेदस्योत्कृष्टपर्वनिवासिनः ॥ ४६९ ॥

प्रथमपर्व ईश्वर पारतंत्र्य में दृढ विश्वास करनेवाले हैं। प्रथमपर्व निष्ठ को जो पतिकूल होते हैं वे सब इस को भी प्रतिकूल हैं परंतु उपेक्षणीय विषय अधिक है।

इस अधिकारी के अपेक्षित ज्ञानानुष्ठानों को वहु प्रकार कहे हैं, इस प्रसंग में अन्योपाय निष्ठों के ज्ञानानुष्ठान और आचार्याभिमान निष्ठों के ज्ञानानुष्ठान इन दोनों के उपयोग को कहते हैं—ज्ञानानुष्ठान दोनों इत्यादि।

ज्ञानानुष्ठान दोनों औरों को उपायांग
होते हैं इस को उपेयांग होते हैं ॥ ४६९ ॥

तत्वज्ञान तदनुरूप अनुष्ठान औरों को उपेय प्राप्ति पर्यंत उपायाधिकार नहीं

अस्य निषिद्धानुष्ठानं स्वस्येतरेषां
च नाशकत्वात्त्याज्यम् ॥ ४७० ॥

---

ज्ञानाम्नधिकारिणामुपायस्याधिकारिसापेक्षत्वादुपेयप्राप्तिपर्यंत-मुपायाधिकारस्याप्रच्युत्यनुवर्तने प्रयुक्ते तत्प्रणाल्योपायशेषभूते भवतः । आचार्याभिमानस्यैवोत्तारकत्वेनोपायाधिकारशेषत्वेन कस्याप्यपेक्षाभावादस्याधिकारिणो विद्यमाने ज्ञानानुष्ठाने उभे अप्याचार्यमुखविकासरूपोपेयस्य शेषभूते इत्यर्थः । अस्योपेय-मिति पाठश्चेदाचार्यस्याभिमते एते एवास्योपेयमित्यर्थः ।

एवं ज्ञानानुष्ठाने उभे अप्याचार्यप्रीतिहेतुत्वेनानुसंधाय सावधानतया वर्तमानस्यास्याधिकारिणोऽवश्यनिवर्तनीयानि वक्तुं विचार्य प्रथमं निषिद्धानुष्ठानं त्याज्यमित्यमुमर्थमाह—अस्य निषिद्धानुष्ठानमित्यादिना ।

---

निषिद्धाचरणं त्वस्य सवर्था त्याज्यमेव हि ।
स्वरूपनाशकत्वाच्च स्वस्यापि स्वेतरस्य च ॥ ४७० ॥

छूटने के लिये उपाय के अंगभूत होते हैं । आचार्याभिमान ही उत्तारक है जिस को ऐसे अधिकारी को उपायाधिकार शेषभूत अंगापेक्षा नही होनेसे इस के ज्ञानानु-ष्ठान आचार्य मुखोल्लासरूप उपेय का अंग होते हैं ।

एवं ज्ञानानुष्ठान दोनो आचार्यप्रीति हेतुतया समझ सावधानी से रहनेवाले इस अधिकारी को अवश्य छोडने योग्यों को कहते हुवे पहिले निषिद्धानुष्ठान त्याज्य है ऐसा कहते हैं—इस को इत्यादि ।

इस को निषिद्धानुष्ठान अपने और अन्यों
को नाश करने से त्याज्य होता है ॥ ४७० ॥

**स्वस्य नाशोऽपचारत्रयेऽप्यन्वयात्, इतरेषां नाशः स्वानादरेण स्वानुष्ठानांगीकारेण च ॥४७१॥**

---

एवंभूतस्याधिकारिणः परदारपरिग्रहादिनिषिद्धानुष्ठानं स्ववि-नाशस्य स्वानुष्ठानं पश्यतामन्येषां विनाशस्य च जनकत्वात् परित्याज्यमित्यर्थः ।

उभयविनाशश्चानेन कथं भवतीत्यत आह— स्वस्य नाश इत्यादि ।

आचार्याभिमानांतर्गतस्य भगवद्भागवताचार्यविषयाणां त्रयाणामप्यभिमतविषयत्वेन वर्तमानस्य स्वस्य नाशः—तेषां

---

स्वस्य नाशो भवेदागस्त्रयेऽप्यन्वयहेतुतः ।
स्वानुष्ठानकृतत्वाच्च स्वानादरणहेतुतः ।
इतरेषां च नाशः स्यात्तस्मात्तत्परिवर्जयेत् ॥ ४७१ ॥

एवं भूत इस अधिकारी को परदारपरिग्रहादि निषिद्धानुष्ठान स्वविनाश और अपने अनुष्ठान को देखनेवाले अन्यों के बिनाश को भी करने से त्याज्य होता है ।

उभय बिनाश इस से कैसा होता है इस शंका में कहते हैं—अपना नाश इत्यादि ।

अपना नाश तीन अपचार में अन्वित
होनेसे होता है । औरों का नाश अपने
को अनादर करने और अपने अनु-
ष्ठान को अंगीकार करने से होता है ॥ ४७१ ॥

आचार्याभिमान में अंतर्भूत हो भगवद्भागवताचार्यों के अभिमत बिषय अपना नाश—उन तीनों को यह अनिष्ट होनेसे । अपचार माने—अनिष्टकरण

त्रयाणामप्यस्यानिष्टत्वात्, अनिष्टकरणस्यापचारत्वात्, क्रूरापचारत्रयेप्यन्वयात्। इतरेषां नाशः— चरमपर्वपर्यंतमागत्य स्थितस्य भागवतोत्तमस्य निषिद्धानुष्ठानकृदित्यनादरेण, तत्वंविदयं तथा कुरुते तत्र दोषाभावादेव खल्वस्माकं पुनः किमिति स्वानुष्ठानस्यांगीकारेण चेत्यर्थः। अनादरं कुर्वंति भागवतवैभवानभिज्ञाः! अनुष्ठानमंगीकुर्वंति प्राप्ताप्राप्तविवेकशून्याः। अनुष्ठानमंगीकुर्वंतो नश्यंति, अनादरं कुर्वंतो किमिति नश्यंति? दोषे दृष्टेऽनादरो न कर्तव्यः किमिति चेत्? यथा राजपुत्रस्य दोषे सत्यपि राजा स्वयं शिक्षयति, तस्मिन्ननादरकृत्सु निग्रहं कृत्वा तान् दंडयति तथा स्वाभिमतस्यास्य दोषसत्वेऽपि सर्वेश्वरः स्वयं शुद्धं करोति नत्वन्यकृतानादरं सहते। तस्मादनादरं कुर्वतां विनाश एव फलति, अतोऽनादरो न कर्तव्यः।

---

होनेसे,अतिक्रूर अपचार त्रय में संबंध रखने से। औरों के नाश चरमपर्व पर्यंत आकर रहनेवाले इस भागवतोत्तम का निषिद्धानुष्ठान को देख उपेक्षा करने से। तत्वज्ञानी यही करता है तो हम को करने में दोष क्या ऐसा समझ इन के अनुष्ठान को करने से होता है। अनादर करनेवाले भागवत वैभव को नहीं जाननेवाले, अनुष्ठान को अंगीकार करनेवाले प्राप्ताप्राप्त विवेक रहित। अनुष्ठान को अंगीकार करनेवालों का नष्ट होना तो उचित है, अनादर करनेवाले क्यों नष्ट होते हैं, दोष को देख अनादर करना। अनुचित है क्या इस शंका में कहते हैं—राज पुत्र के दोष होनेपर राजा स्वयं शिक्षा करता है इतना ही, उन के अनादर करनेवालों को निग्रह कर जैसा दण्ड देता है तैसा स्वाभिमत इस चेतन के दोष होनेपर भी सर्वेश्वर आप ही शोधन कर लेते हैं औरों के अनादर को नहीं सह सक्के इसलिये अनादर करनेवाले नष्ट होयंगे समझ अनादर नहीं करना। " अत्यंत

विहितभोगो निषिद्धभोगवत् लोक-
विरुद्धो नरकहेतुश्च न भवति तथा-

---

'अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मंतव्यः सम्यग्व्यवसितो हि सः ॥'
इत्युपासकविषयत्वेनोक्तप्रकारे दृष्टे सीमाभूमिस्थैतदधिकारि-विषये तस्य स्थितिप्रकारो न वक्तव्यः खलु । तस्मात्स्वस्येतरेषां च नाशकत्वादस्य निषिद्धानुष्ठानं परित्याज्यमित्युक्तम् ।

एवं परदारादिभोगस्य स्वपरविनाशहेतुत्वे मूलं शास्त्रनिषिद्धत्वं खलु, एवं विना शास्त्रविहितस्य स्वदारभोगस्य दोषो नास्ति खल्वित्यत आह—विहितभोग इत्यादि ।

---

वैधभोगो निषिद्धस्य भोगवल्लोकगर्हितः ।
विद्यते नहि याम्यस्य कारणं च तथापि वै ।

दुराचार होनेपर भी अनन्यभाव से मुझ को भजनेवाले को साधु ही समझना, कारण वह दृढ विश्वास करता है" यह वचन उपासक विषय में कहा है तो सीमा भूमि में आया हुआ इस अधिकारी के स्थिति में क्या कहना । इसलिये आप और अन्यों के नाशकारी निषिद्धानुष्ठान को त्याग करना चाहिये ।

एवं परदारादि भोग स्व–पर–विनाश हेतु होने का कारण शास्त्र निषिद्ध होने से, ऐसा न हो शास्त्र विहित विषय स्वदारा के भोगने में दोष क्या ? इस शंका में कहते हैं—विहित भोग इत्यादि ।

विहित भोग निषिद्ध भोग के तरह लोक
विरुद्ध और नरक हेतु भी नहीं है तो भी
स्वरुप-विरुद्ध, वेदांत विरुद्ध, शिष्ट गर्हित

पि स्वरूपविरुद्धत्वाद्वेदांतविरुद्धत्वाच्छि-
ष्टगर्हितत्वात्प्राप्यप्रतिबंधकत्वाच्च त्याज्यः ॥

---

विशिष्टवेषविषयशास्त्रेण विहितः स्वदारभोगः तादृशशास्त्र-निषिद्धपरदारवल्लोकविरुद्धो न भवति, ताम्रनिर्मितप्रतिमा-लिंगनादिघोरदुःखानुभवकृन्नरकहेतुश्च न भवति, एवं प्रत्यक्ष-परोक्षसिद्धलोकविरुद्धत्वनरकहेतुत्वयोरभावेप्यनन्यभोगत्वरूप-स्य स्वरूपस्य विरुद्धत्वात्,

'शांतो दांत उपरतस्तितिक्षुः समाहितो
भूत्वाऽत्मन्येवात्मानं पश्येत्'

इत्यादिभिर्मूलमंत्रादिभिश्चोपासकस्य प्रपन्नस्य चाविशेषेण वि-षयभोगोऽनुचित इति प्रतिपादयतो वेदांतस्य विरुद्धत्वात्,

---

स्वरूपस्य विरुद्धत्वाद् वेदान्ताविहितत्वतः ।
शिष्टैर्हि गर्हितत्वाच्चोपेयस्य प्रतिबन्धकात् ।
त्याज्य एव महाप्राज्ञैः स्वरूपावाप्तिलिप्सुभिः ॥४७२॥

और प्राप्य प्रतिबंधक भी होनेसे त्याज्य है ॥ ४७२ ॥

विशिष्टवेष विषयक शास्त्र में विहित स्वदार भोग तादृश शास्त्रनिषिद्ध परदार भोग के तरह लोक विरुद्ध नहीं, जलती हुई ताम्र प्रतिमा के आलिङ्गन प्रभृति घोर दुःखानुभव रूप नरक का हेतु भी नहीं, एवं प्रत्यक्ष परोक्ष सिद्ध लोक विरुद्धत्व नरक हेतुत्व दोनों न होनेपर भी अनन्य भोग्यत्वरूप स्वरूप का विरुद्ध. "शांत, दांत, विरक्त, क्षमावान् पुरुष सावधानी से मन से आत्मा को देखें" इत्यादि वचनों से और मूलमंत्र आदि से उपासक और प्रपन्न दोनों को समान विषयभोग के निषेध को प्रतिपादन करनेवाले वेदांत शास्त्र के विरुद्ध, दोष दर्शन

भोग्यताबुद्धिनिवृत्त्या धर्मबुद्ध्या
प्रवृत्तावपि स्वरूपं नश्यति॥४७३

---

दोषदर्शनेनाप्राप्तिदर्शनेन च विषयभोगे जुगुप्सां कृत्वा वर्तमानैराचारप्रधानैः शिष्टैर्हेयं इति निंदितत्वात् , अप्राप्तविषयविरक्तिप्रियस्याचार्यस्यानभिमतत्वेनाचार्यमुखकमलविकासरूप प्राप्यस्य प्रतिबन्धकत्वादेवमनेकानर्थावहत्वादस्याधिकारिणः परित्याज्यः ।

एवं भोग्यताबुद्धिं त्यक्त्वा धर्मबुद्ध्या प्रवृत्तावेते दोषा न संति खल्वित्यत आह—भोग्यताबुद्धिनिवृत्त्येत्यादि ।

विहितविषयप्रवृत्तौ कामुकतयाऽऽगतभोग्यताबुद्धिं विहायोपासका महर्षिप्रभृतयः शिष्टाः पैतृकर्णविमोचकप्रजोत्पादनार्थं

---

भोग्यताबुद्धिहान्या वै धर्मबुद्ध्या प्रवर्तने ।
अवश्यं नाशमायाति स्वरूपं तस्य धीमतः ॥४७३॥

और अप्राप्त दर्शन से विषय भोग को छोडनेवाले आचार प्रधान पूर्वाचार्यों से निंदित, अप्राप्त विषय विरक्ति के प्रिय आचार्य के अनभिमत भी होनेसे, आचार्य मुखोल्लासानुभवरूप प्राप्य का प्रतिबंधक भी होकर अनेकानर्थावह होने से इस अधिकारी को त्याज्य है समझना ।

भोग्यता बुद्धि को छोड धर्म समझकर करने से ये दोष नहीं है न ? इस शंका में कहते हैं—भोग्यता बुद्धि इत्यादि ।

भोग्यता बुद्धि छोड धर्मबुद्धि से प्रवृत्त
होनेपर भी स्वरूप नष्ट होगा ॥ ४७३ ॥

विहित विषय प्रवृत्ति में कामुक होनेसे होनेवाली भोग्यता बुद्धि को छोड उपासक महर्षि आदि शिष्ट लोग पितृ ऋण मोचक संतानोत्पादन के लिये ऋतु

स्नानादिवसंगीकाराभावे भ्रूणहत्यादिदोषः स्यादित्यतश्च धर्मबुद्ध्यां यथा प्रवर्तंते तथायमपि धर्मबुद्ध्या प्रवर्तते चेत् सिद्धधर्मनिष्ठस्यास्यान्यधर्मान्वयाविरोधित्वादनन्योपायत्वरूपस्वरूपं नश्यतीत्यर्थः। अनेन भोग्यताबुद्ध्या प्रवृत्तावनन्यभोग्यत्वरूपं स्वरूपं नश्यति। धर्मबुद्ध्या प्रवृत्तावनन्योपायत्वरूपं स्वरूपं नश्यति। तस्मादेकेनापि प्रकारेणास्याधिकारिणो विहितविषयप्रवृत्तिर्नोचितेत्युक्तम्। तस्मादेकेनापि प्रकारेणान्वयेऽपि स्वरूपहानिरवश्यं भवति। अतः परित्याज्य इत्यर्थो निश्चितः।

एवं स्वरूपहानिः स्यादिति भयेन त्यागो नालं, प्राप्तविषयप्रवणचित्ततया प्राकृतसकलवस्तूनामपि प्रतिकूलत्वेन भानावस्थोत्पत्तिरावश्यकी स्वरूपनाशाभावस्येत्याह— क्षेत्राणीत्यादिना।

---

स्नाता भार्या को अंगीकार न करने पर भ्रूण हत्यादि दोष होता है समझ धर्म बुद्धि से जैसे प्रवृत्त होते हैं तैसे यह भी धर्मबुद्धि से प्रवृत्त हो तो भी सिद्ध धर्म निष्ठ इस को अन्यधर्म संबंध विरोधि होनेसे अनन्योपायत्व रूप स्वरूप नष्ट होगा। इस से भोग्यता बुद्धि से प्रवृत्त होतो अनन्य भोग्यत्वरूप स्वरूप जैसे नष्ट होता है धर्मबुद्ध्या प्रवृत्त हो तो अनन्योपायत्वरूप स्वरूप नष्ट होता है।

इसलिये इस अधिकारी को किसी प्रकार भी विहित विषय प्रवृत्ति न होनी चाहिये। किसी एक प्रकार से अन्वित होनेपर भी स्वरूप हानि होगी इस लिये परित्याग करना ही उचित है।

एवं स्वरूप हानि के डर से छोडना मात्र नहीं प्राप्तविषय में प्रवण चित्त होने से प्राकृत सकल भोग्य वस्तु में प्रतिकूलत्व बुद्धि की आवश्यकता है, स्वरूप नष्ट नहीं होने के लिये ऐसा कहते हैं—क्षेत्राणि इत्यादि।

'क्षेत्राणि मित्राणि' इति श्लोकोक्तावस्थो-
त्पत्तिरावश्यकी स्वरूपनाशाभावस्य ॥४७४॥

---

'क्षेत्राणि मित्राणि धनानि नाथ
पुत्राश्च दाराः पशवो गृहाणि ।
त्वत्पादपद्मप्रवणात्मवृत्ते-
र्भवन्ति सर्वे प्रतिकूलरूपाः ॥'

इति महाकृपालयं स्वामिनमुद्दिश्य ब्रह्मणा विज्ञप्तश्लोके उक्तानि क्षेत्रमित्रधनादिरूपसमस्तवस्तून्यपि यथाग्निकल्पानि भासन्ते तादृशावस्थोत्पत्तिरावश्यकी स्वरूपप्रच्युत्यजननार्थमित्यर्थः । एतत् श्लोकार्थं 'सत्पुत्राः' इत्यादिभिर्यज्ञमूर्तिरप्यवोचत् ।

इतःपरं प्राप्यभूमिप्रावण्यादित्रयमस्यावश्यमपेक्षितमिति

---

क्षेत्राणीत्यादिवृत्तोक्तावस्थोत्पत्तिस्तु सर्वथा ।
आवश्यकी स्वरूपस्य नाशाभावस्य कारणात् ॥४७४॥

"क्षेत्र मित्र" इस श्लोक में की अवस्था स्वरूप
नाश न होने के लिये उत्पन्न होना चाहिये ॥४७४॥

"हे नाथ! आप के चरणारविंद में प्रवणचित्त मनुष्य को क्षेत्र मित्र धन पुत्र दारा पशु गृह ये सब प्रतिकूल होते" इस परमात्मा के उद्देश कर कहाहुआ ब्रह्मा के वचन में उक्त क्षेत्र मित्र धनादि समस्तवस्तु अग्नि की तरह भान होने की अवस्था होनी चाहिये स्वरूप नाश न होने के लिये। इस श्लोकार्थ को "समीचीन पुत्र" इत्यादि से यज्ञमूर्ति भी कहे हैं।

प्राप्य भूमि में प्रावण्यादि तीनों भी इस को अवश्यापेक्षित हैं ऐसा दिखाने

प्राप्यभूमौ प्रावण्यं त्याज्यभूमौ जिहासाऽनुभवालाभ आत्मधारणायोग्यता चोपायचतुष्टयस्याप्यपेक्षिताः ॥

---

ज्ञापयितुं तस्योपायचतुष्टयसाधारण्यमाह— प्राप्यभूमावित्यादिना ।

प्राप्यभूमिर्नाम— स्वस्य प्राप्तशेषिविषयावासदेशः । तत्प्रावण्यं नाम— तद्देशप्राप्तिं विनाऽधारणोपयुक्तातिमात्राशा । त्याज्यभूमिर्नाम— तद्विषयविश्लेषहेतुर्देशः । तज्जिहासा नाम— इयं त्यक्तव्येतीच्छा । अनुभवालाभ आत्मधारणाऽयोग्यता नाम— प्राप्तशेषिविषयस्य विग्रहाद्यनुभवालाभे देहधारणभूतभोजना-

---

प्राप्यभूमौ हि प्रावण्यं त्याज्यभूमौ हि त्याज्यता ।
अलाभेनुभवस्यापि स्वात्मनोऽधारणार्हता ।
अपेक्षितास्त्युपायानां चतुष्टयधृतस्य वै ॥ ४७५ ॥

के लिये वे उपाय चतुष्टय के भी साधारण हैं ऐसा कहते हैं—प्राप्य भूमि में इत्यादि ।

प्राप्य भूमि में प्रावण्य, त्याज्य भूमि में
छोडने की इच्छा, अनुभव के अलाभ में
आत्मा को धारण नहीं कर सकना,
तीनों चारों उपायों को अपेक्षित हैं ॥ ४७५ ॥

प्राप्य भूमि माने—अपने प्राप्य शेषी सर्वेश्वर के विराजने का स्थान । उस में प्रावण्य माने—उस देश को प्राप्त हुए विना धारण न कर सकने की अत्यंत आशा । त्याज्य भूमि माने—भगवद्विषय को छोडकर रहने के योग्य देश । उस में छोडने की इच्छा माने—इस को छोडने से ही बच सकते हैं ऐसी आशा । अनुभवालाभ में इत्यादि—प्राप्त शेषी के विग्रहादि अनुभव के लाभ न होनेपर देह

भावे देहो यथा न ध्रियते तथा स्वयं धारणस्य योग्यतां विना स्थितिः । उपायचतुष्टयस्याप्यपेक्षिता इति— उपायचतुष्टयं नाम— स्वस्वातंत्र्यभयेनेत्यारभ्य पूर्वमुक्ता भक्तिप्रपत्ती आचार्यविषये स्वगतपरगतस्वीकारौ च। भगवद्विषये स्वगतपरगतस्वीकारौ वाचार्यविषये स्वगतपरगतस्वीकारौ च वा । अत्र पूर्वयोजनाया औचित्यमस्ति, पूर्वमुपायचतुष्टयगोचराया एतदुक्तेरनुरूपत्वात् । अत्र भक्तिप्रपत्तिनिष्ठयोरुभयोः 'महाकाशशब्दवाच्यवैकुंठं द्रष्टुं मम मन एकप्रकारेण मनोरथं करोति' इत्युक्तप्राप्यभूमिभूतपरमपदे प्रावण्यं—

'वरं हुतवहज्वालापंजरांतर्व्यवस्थितिः ।
न शौरिचिंताविमुखजनसंवासवैशसम् ॥'

'क्रूरलोकं मादर्शय' इति च प्रकारेण प्राप्यवस्तुवियोगेन प्राकृतमध्ये स्थितिहेतुसंसाररूपत्याज्यभूमौ जिहासा, 'त्वां विहाय

---

धारण भूत भोजन के अभाव में जैसे देह नहीं रहसक्ता तैसे आप नहीं धारण कर सकना । चारो उपायों को इत्यादि—ये तीनों चारो उपायों के अधिकारियों को अधिकारानुगुण आवश्यक है । चारो उपाय माने—"स्वस्वातंत्र्य भय से" ऐसा प्रारंभ कर पूर्वोक्त भक्ति प्रपत्ति, आचार्य के विषय में स्वगत स्वीकार और परगत स्वीकार हैं । भगवद्विषय में स्वगत परगत स्वीकार और आचार्य विषय में स्वगत परगत स्वीकार ऐसा भी कह सक्ते हैं । इस योजना की अपेक्षा पहिली योजना को ही श्रेष्ठ समझना । इस में भक्ति प्रपत्ति निष्ठ दोनों को "महावैकुंठ कब देखूं ऐसा हमारा मन सदा चिंतवन करता है" इस वचन से प्राप्य भूमि परम पद में प्रावण्य, "नारायण की चिंता से विमुख लोगों के सहवास रूप आरी से चीरजाने की अपेक्षा अग्निज्वाला घेरी हुई पिंजरा के भीतर रहना भी श्रेष्ठ है" "क्रूर लोक को न दिखाओ" इत्युक्त प्रकार प्राप्य वस्तु को छोड प्राकृत लोगों के बीच में रहने

धर्तुं न शक्नोमि' इति प्रकारेण भगवदनुभवालाभ आत्मधारणायोग्यता चावश्यमपेक्षिताः। आचार्यविषये स्वगतपरगतस्वीकारनिष्ठयोरनयोः सर्वं प्राप्तविषय एवेति स्थितत्वादाचार्यवासदेशः प्राप्यभूमिः, तद्विश्लेषोपयुक्तदेशस्त्याज्यभूमिः, उभयोरपि तद्विग्रहादीनामेवानुभवविषयत्वात् प्राप्यभूमौ प्रावण्यादित्रयमपि तदनुगुणमवश्यमपेक्षितमित्यधिकारानुगुणं विभज्य वक्तव्यम्। अथवा 'मधुरकव्युक्तवाक्ये विश्वासवतां स्थानं वैकुंठः' इति स्वोक्तप्रबंधे 'अभ्यासवतां वासस्थानं तदीयवैभवैकप्रवरभूमिभूतश्रीवैकुंठः' इति श्रीमधुरकविनोक्तत्वाच्चरमपर्वनिष्ठानामस्याचार्यस्याभिमतभगवद्विषयपरिपूर्णानुभवादिसिद्धिस्तद्विभूतौ, तस्मात्प्राप्यभूमिः परमपदम्। अज्ञानप्रदभूमित्वात्तस्य विरोधो संसारो त्याज्यभूमिः। अनुभवालाभ आत्मधारणायोग्यता नाम— आचार्यविषये तदभिमतभगवद्विषये चानुभवालाभे स्वस्य धारणाशक्तत्वमित्येवं योजना स्यात्।

उक्तोपायचतुष्टये च भगवद्विषयावलंबनरूपभक्तिप्रपत्तिरूपोपायद्वयमप्यस्याधिकारिविषये च्युतिप्रकारकथनानंतरमाचा-

---

योग्य संसार रूप त्याज्य भूमि को छोडने की इच्छा, भगवदनुभव के अलाभ में "आप को छोड क्षणभर भी नहीं रहसक्ते" इस प्रकार आत्मा को धारण नहीं कर सकना ये तीनों आवश्यक हैं। आचार्य के विषय में स्वगत परगत स्वीकार निष्ठ दोनों को आचार्य के वासस्थान ही प्राप्य भूमि है उन को छोड कर रहने का देश ही त्याज्य भूमि है, उन का विग्रहादि ही अनुभव विषय होनेसे प्राप्य भूमि में प्रावण्यादि तीनों आचार्याभिमान निष्ठा के अनुगुण अवश्य होना चाहिये ऐसा अधिकारानुगुण विभाग करलेना।

उक्त चारो उपायों में भगवद्विषय का अवलंबन करनेवाले भक्ति और प्रपत्ति रूप दोनों उपाय भी इस अधिकारी को छूट जानेके प्रकार को कहे हैं, अब

अमोघमेकं ज्ञातवान् इति गाथा
पूर्वोपायस्य प्रमाणतयानुसंधेया ॥ ४७६ ॥

---

**यंविषये 'स्वकूनमाश्रयणं'इति 'आचार्याभिमान एवोत्तारक'इति चोक्तस्याचार्यविषये स्वगतपरगतस्वीकाररूपोपायद्वयस्य प्रमाणं दर्शनीयमिति विचार्य प्रथमं स्वगतस्वीकारस्य प्रमाणं दर्शयति– अमोघमित्यादिना ।**

**'अमोघमेकमुपायं ज्ञातवान्'– आश्रयतां समाश्रयणीयस्य क्षीरसमुद्रे शयानस्य चरणयोरप्रच्युतिप्रकारमनुसंधाय प्रतिदिनमनुकूलवृत्तिं कुर्वाणं ज्ञानाधिकं दृष्ट्वा स्वेषामुत्तारकत्वेनाश्रित्योज्जीवंत आत्मनाऽविनाभूतं पापं दूरीकृत्य श्रीवैकुंठद्वारमुद्घाट्य तत्र समृद्धज्ञानादिविशिष्टास्तदीयकैङ्कर्यनिरताः संतो**

---

अमोघमेकमित्यादि पाशुरः सुप्रसादितः ।
प्रमाणत्वेन पूर्वस्योपायस्यानुविधीयते ॥ ४७६ ॥

"आचार्य को अपने आश्रयण करना" "आचार्याभिमान ही उत्तारक है" इन वाक्यों में कहा हुआ आचार्य के विषय में स्वगत परगत स्वीकाररूप दोनों उपायों का प्रमाण दिखाने के लिये पहिले स्वगत स्वीकाररूप उपाय का प्रमाण दिखाते हैं—व्यर्थ नहीं होता है इत्यादि ।

"व्यर्थ नहीं होनेवाले उपाय को मैं जान लिया हूं" इस
गाथा को स्वगत स्वीकाररूप उपाय का प्रमाण समझना ॥ ४७६ ॥

व्यर्थ नहीं होनेवाले उपाय को जानलिया हूं—आश्रयण करनेवालों को आश्रयण करने के योग्य हो क्षीराब्धिशायी के चरणारविंदों को उपाय मान प्रतिदिन अनुकूल वृत्ति को करनेवाले ज्ञानाधिक को देख अपना उत्तारक समझ आश्रयण कर उज्जीवन को प्राप्त होनेवाले आत्मा के अविना भूत पाप को दूर कर श्रीवैकुंठ में ज्ञानादि समृद्ध तदीयों के कैंकर्य करते हुए विलक्षण होते हैं ऐसा परम-

## 'समीचीनमत्सखि' 'प्रतिपक्षिणं दानवं' इति गाथे स्तोत्ररत्नेऽतिमः

व्यावृत्तास्तिष्ठंतीति परमाप्तेन श्रीभक्तिसारेणोक्तोऽमोघमिति गाथा आचार्यविषये प्रथमसुक्तस्वगतस्वीकाररूपोपायस्य प्रमाणतयानुसंधेया इत्यर्थः । अनेन स्वगतस्वीकारोऽहंकारगर्भतयाऽवद्यकरत्वेपि फलसिद्धौ मोघो न भवतीत्युक्तं—

'गुरुणा योऽभिमन्येत गुरुं वा योऽभिमन्यते ।
तावुभौ परमां सिद्धिं नियमादुपगच्छतः ॥'

इति परगतस्वीकारवत् स्वगतस्वीकारस्यापि फलव्यभिचारो नास्तीति भरद्वाजसंहितायामुक्तम् ।

इतःपरं परगतस्वीकाररूपपरमोपायस्य प्रमाणानि बहूनि दर्शयति– समीचीनमत्सखीत्यादिना ।

---

**समीचीने मे सखि च दानवं प्रतिपक्षिणम् ।
इति सूक्तिस्तथा स्तोत्ररत्ने वृत्तं तु चांतिमम् ।**

आप्त भक्तिसार सूरि के गाथा को आचार्य के विषय में स्वगत स्वीकार रूप उपाय का प्रमाण समझना । इस से स्वगत स्वीकार के अहंकार गर्भित और अवद्य कर होनेपर भी फल देने में व्यर्थ न होगा यह अर्थ सिद्ध हुआ । "गुरु को जो मानता है और गुरु से जो मानाजाता है वे दोनों निश्चय करके परमपद को प्राप्त होते हैं" ऐसा परगत स्वीकार के तरह स्वगत-स्वीकार का भी फल होगा यह अर्थ भारद्वाज संहिता में भी कहा है ।

अब परगत स्वीकार रूप परमोपाय के बहुत प्रमाण दिखाते हैं—समीचीन मत्सखी इत्यादि ।

"समीचीन मत्सखी" "शत्रुभूत दानव को" ये गाथा स्तोत्ररत्न में

**श्लोकः 'पशुर्मनुष्यः' इति श्लोकश्चा-
स्य प्रमाणतयानुसंधेयाः ॥ ४७७ ॥**

---

संखीयं स्वस्य लाभहेतुतयानुसंधाय तिष्ठति तस्य 'नत्यजे-यं' इति वार्ता, विष्णुचित्तोदरे जन्म च इदानीं तद्वार्तायाः फलाभावमात्रमादायात्राप्यतिशंकां करोति। इतः परमियं कथं जीविष्यतीत्यत्यंतं क्लेशयुक्ताऽ तिष्ठन् तां दृष्ट्वा मत्तोऽपि मद्धाने-र्दुःखितुं निदानस्नेहविशिष्टे मम सखि ! अनंतशायी अत एव सर्वस्मात्परस्स तदुपरि श्रियःपतिः कस्यापि दुष्प्राप्यत्वमूलवैभ-ववान् कश्चिद्, देवयोनावुत्पत्त्या किंचित्सान्निकर्षमपि विना तेषामस्माकं च पर्वतपरमाण्वोरिव तारतम्यप्रयोजकक्षुद्रमनु-ष्यत्वविशिष्टा वयं, एवं च सत्यस्माभिः कर्तव्यं किं स एकां वार्तां पूर्वमवोचदिति तामादायास्माभिरवरोधः कथं कर्तव्यः,-

---

**पशुर्मनुष्य इत्यादि वृत्तं चास्य प्रमाणतः ।
अनुसंधानकार्ये हि स्वेष्टार्थसाधकैः स्मृतम् ॥४७७॥**

अंतिम श्लोक और "पशु मनुष्य"
यह श्लोक इन में प्रमाण समझना ॥ ४७७ ॥

सखी नायकी " नहीं छोडूंगा " यह वचन और विष्णु चित्त योगी के घर में जन्म इन दोनों को अपने इष्ट साधन समझती है वे फलीभूत न होने से अतिशंका कर यह नायकी कैसे फल को प्राप्त होगी ऐसा विचार करती भयी, उस को देख हम से अधिक हमारे फल को चाहने वाली हे सखि ! अनंत-शायी अतएव सर्वस्मात्पर श्रियःपति किसी को भी अप्राप्य महिमावाले हैं हम लोग देव योनि में न होकर पर्वत और परमाणुओं के तारतम्य से क्षुद्र मनुष्य हैं इस लिये हम कुछ नहीं कर सक्ती हैं वह कभी एक बात कह दिये हैं ऐसा समझ

तत्तिष्ठतु अस्माकं लाभस्य मार्गोऽस्ति श्रीविल्लिपुत्तूरुग्रामेऽवतारप्रयुक्ताधिक्यविशिष्टः सर्वव्यापकवस्तु स्वहृदये स्थापयन् वर्तमानः श्रीविष्णुचित्तः 'आचार्यदेवो भव' इति प्रकारेणास्माकं देवस्य स्वस्य देवं तमेकां गाथामुक्त्वाऽऽह्वयेद्वा, अथवा यथा वयं स्वं पुरस्कुर्मस्तथा स्वस्य पुरुषकारभूतां पुरस्कृत्याह्वयेत्, अथवाऽन्येन केनचित्प्रकारेणाह्वयति चेत्तं प्रतीक्ष्य वर्तेमहि वयं त्वरां न कुर्म इति गोदयोक्तसमीचीनसखीति गाथा, ईश्वर इत्यदृष्ट्वा स्वस्य प्रतिपक्षिभूतं हिरण्यासुरं तीक्ष्णनखेन वरबलेन दृढे वक्षसि स्वर्णपर्वतमिव द्विधा विदलयत्पराक्रमविशिष्टं नरसिंहं 'सन्ध्याकाले नरसिंहो भूत्वा शत्रुं नाशितवंतं बहुशरदः' इत्यनन्यप्रयोजनं मंगलाशासनं कृत्वा स्थितान् जयति व्यावृत्तेषु तेषु न्यस्तभराणां तेषामभिमानांतर्गतानां सुकृतमिति भक्तिसारोक्ता 'प्रतिपक्षिणं दानवमिति' गाथा, अकृ-

---

हमलोग उन को रोक सक्ते हैं क्या ? अस्तु हमारे फलका दूसरा उपाय है श्रीविल्लिपित्तूर में अवतार ले सर्व व्यापक वस्तु को अपने हृदय में रखनेवाले विष्णुचित्त सूरि हमारे आचार्य होनेसे अपने स्वामी को एक गाथा कह बुलावेंगे या विद्याशुल्क को तोडकर बुलावेंगे या अभिषेक करने के लिये बुलावेंगे, अथवा केश बांधने के लिये वा सुलाने के लिये या अपने पुरुषकार को आगेकर बुलावेंगे उस वखत हम उन का दर्शन करलेंगी हम आग्रह नहीं करसक्ती हैं इस प्रकार गोदा देवी से कही हुई 'समीचीन मत्सखि' यह गाथा, अपने ईश्वरत्व को न देख सामने शत्रुरूप से आयाहुआ हिरण्य असुर के तीक्ष्ण नखों से वरबलों से दृढ छाती को स्वर्ण पर्वत को चीरने के तरह अनायास दो टुकडे करनेवाले पराक्रमी नृसिंह को अनन्य प्रयोजन हो मंगलाशासन करनेवालों को भागवताभिमान को उपाय समझ रहनेवालों के सुकृत जीवना है ऐसा भक्तिसार सूरि की "शत्रुभूत दानव को" यह गाथा, "अकृत्रिम" इस यामुनाचार्य का श्लोक स्वाभाविक आप

त्रिमित्यारभ्य स्वाभाविकस्य भवतः प्राप्तयोर्भोग्ययोश्चरणयोर्वि-
द्यमानस्य प्रेम्णोऽतिशयस्य सीमाभूमिभूतं तादृशप्रेमप्रकर्षमू-
लभूतात्मयाथात्म्यज्ञानविशिष्टं विद्यया जन्मना च दासस्य
मम पितामहं नाथमुनिं विलोक्य दासस्य मम वृत्तमदृष्ट्वा
प्रसन्नो भवेति परमाचार्यैर्यामुनमुनिभिरुक्तो वेदांततात्पर्यभूते
स्तोत्ररत्ने चरमश्लोकः, ज्ञानोत्पत्तेर्योग्यतारहितपशुपक्षिणो वा
ज्ञानयोग्यतायुक्तमनुष्या वा ये केचन भगवत्सम्बन्धैकनिरूप-
केण तदीयेन सम्बन्धविशिष्टास्ते तेन वैष्णवेन प्राप्यभूमिभूत-
परमपदं प्राप्नुवंतीत्युक्तत्वात् ज्ञानं स्याद्वा मा वा तदीयाभि-
मान एवोत्तारक इतीममर्थं सुस्पष्टं प्रकाशयन्-

'पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः ।
तेनैव ते प्रयास्यंति तद्विष्णोः परमं पदम् ॥'

इति पौराणिकश्लोकश्चाचार्याभिमानरूपस्यास्य परगतस्वीकारो-
पायस्य प्रमाणतयानुसंधेया इत्यर्थः ।

पूर्वोक्तप्रपत्तिनिष्ठाधिकारिण उपायाधिकारस्य न्यूनत्वेऽपि

---

के प्राप्त और भोग्य चरणारविंदों में अधिक प्रेम करनेवाले उस के हेतु आत्म यथात्म्य ज्ञानवाले विद्या और जन्म से हमारे पितामह नाथमुनि को देख हमारे दुर्वृत्त को न देख प्रसन्न होओ ऐसा परमाचार्य यामुनाचार्य कर्तृक वेदान्त तात्पर्य रूप स्तोत्ररत्न में अंतिम श्लोक और ज्ञानयोग्यता रहित पशु और पक्षी हो ज्ञान योग्यतावाला मनुष्य हो भगवत्संबंधैक निरूपणीय भागवत के अभिमान में अंत-भूत होते हैं तो वे उन के प्राप्य भूमि भूत परमपद को प्राप्त होते हैं ऐसा तदीया-भिमान को ही उत्तारक कहनेवाले "पशु मनुष्य या पक्षी हो वैष्णव का आश्रयण कर विष्णु के परमपद को प्राप्त होते हैं"। इस पौराणिक श्लोक को भी आचार्या-भिमान रूप परगत स्वीकारात्मक उपाय में प्रमाण समझना ।

पूर्वोक्त प्रपत्ति निष्ठ अधिकारी को उपायाधिकार में न्यूनता होनेपर भी उस

आचार्याभिमानः प्रपत्तिवदुपायां
तरस्यांगं स्वतंत्रश्च भवति ॥ ४७८ ॥

---

तदहष्ट्वेश्वरः कार्यं कर्तुं निदानत्वात् तदुपायशेषभूत आचार्या भिमान एव सदा स्वतंत्रोपाय इति कथमुच्यते? एकस्यैवो भयाकारः कथं भवतीति शंकायामाह— आचार्याभिमान इत्यादि।

आचार्याभिमानः— 'तमेव चाद्यं शरणं प्रपद्ये' तमेव शरणं गच्छ' इत्यादिषूक्तप्रकारेण विरोधिपापक्षयस्य भक्तिविवृद्धेश्च हेतुः सत्युपायांतरभक्तेरङ्गं, तत्त्यागपूर्वकं 'मामेकं शरणं व्रज' इति विहितेष्टानिष्टप्राप्तिपरिहारयोः स्वयमेवोपायभूता सती स्वतंत्रोपायभूता प्रपत्तिरिवोपायाधिकारमांद्यं दृष्ट्वोपेक्षामकृत्वा ईश्वरः कार्यं कर्तुं निदानत्वात् स्वेतरोपायप्रपत्तेः साफल्यमापा-

---

साधनान्तरकस्यांगमाचार्यशरणागतिः।
प्रपत्तिवत्स्वतंत्रश्च विद्यते नात्र संशयः॥ ४७८ ॥

के तरफ न देख ईश्वर कार्य करने के उपयुक्त आचार्याभिमान को स्वतंत्र उपाय-तया क्यों कहते हैं दो आकार एक उपाय के कैसे हो सक्ते हैं? इस शंका में कहते हैं—आचार्याभिमान इत्यादि।

आचार्याभिमान प्रपत्ति के तरह उपायां-
तरों का अंग और स्वतंत्र भी होता है ॥ ४७८ ॥

आचार्याभिमान विरोधी पापक्षय और भक्ति वृद्धि के उपयुक्त हो उपायांतर भक्ति का अंग उपायांतर त्यागपूर्वक शरणागति करनेवालों के इष्ट प्राप्ति और अनिष्ट परिहार करनेवाले स्वतंत्र उपाय प्रपत्ति के तरह उपायाधिकार में योग्यता-भाव को देख ईश्वर उपेक्षा न कर कार्य करने के उपयुक्त होनेसे अपने से व्यति-

दयन् तन्मार्गेण तदंगं, तां विहाय स्वस्यैवोपायत्वेन स्वीकारेऽनिष्टनिवृत्त्यादिकस्य स्वयमेवोपायभूतः सन् स्वतंत्रोपायो भवतीत्यर्थः । अथवा 'अनाचार्योपलब्धा हि विद्येयं नश्यति ध्रुवम्' इति,

'शास्त्रादिषु सुदृष्टाऽपि सांगा सहफलोदया
न प्रसीदति वै विद्या विना सदुपदेशतः ॥'

इति चोक्तत्वात् यां कांचन विद्यामवलंबतस्तस्य चार्योपदेशावश्यकत्वात्, आचार्याभिमानस्य सकलोपायांगत्वे सति 'तेनैव ते प्रयास्यन्ति' इति स्वतंत्रोपायतया कथमुच्यत इत्यत आह– आचार्याभिमान इत्यादि । अयमर्थः– प्रपत्तिः कर्मज्ञानभक्तिरूपोपायांतराणामुत्पत्तिविवृद्धिविरोधिपरिहारार्थं विहिता तदंगं भवति—

'अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् ।
तदेकोपायता याच्ञा प्रपत्तिः शरणागतिः ॥'

इत्युक्तप्रकारेणान्योपायांस्त्यक्त्वा स्वस्यैवोपायत्वेन स्वीकारेऽनि-

---

रिक्त उपाय प्रपत्ति को सफल करते हुवे तद्द्वारा उस का अंग, उस को छोड अपने को ही उपाय माननेपर स्वयमेव स्वतंत्र उपाय भी होता है । यद्वा "अनाचार्य से लब्ध विद्या निश्चय कर के नष्ट होती है" "शास्त्रादिओं में अंग और फल के सहित पढे जानेपर भी सदाचार्योपदेश विना विद्या नहीं प्रसन्न होती" इन वचनों से किसी भी विद्या के अवलंबन करनेवालों को आचार्योपदेश की आवश्यकता होनेसे आचार्याभिमान सकलोपायों के अंग होते हुवे स्वतंत्र उपाय कैसे कह सक्ते हैं इस शंका में कहते हैं—आचार्याभिमान इत्यादि । प्रपत्ति—कर्म ज्ञान भक्ति रूप उपायों की उत्पत्ति और वृद्धि के विरोधी पाप को दूर करने के लिये विहित हो उन का अंग होती है, अन्य उपायों को छोड अपने को उपायतया स्वीकार करनेपर अनिष्ट निवृत्ति पूर्वक इष्ट प्राप्ति का जैसे स्वयमेव निर्वाहक हो

भक्तावशक्तस्य प्रपत्तिः प्रपत्तावशक्तस्यायम् ॥४७९॥

---

ष्टनिवृत्तिपूर्वकेष्टप्राप्तेर्निर्वाहिका स्वतंत्रा च भवति । तथाऽऽचा-र्याभिमानरूपोयं सर्वस्याप्युपायस्याचार्योपदेशस्यावश्यमपेक्षित-त्वात्तन्मार्गेणोपायांतरस्यांगभूतोऽपि,

'बालमूकजडांधाश्च पंगवो बधिरास्तथा ।
सदाचार्येण संदृष्टाः प्राप्नुवंति परां गतिम् ॥'

'पशुर्मनुष्यः पक्षी वा' इत्यादिप्रकारेण स्वयमेवोत्तारकत्वात्स्व-तंत्रोपायश्च भवतीति ।

एवं स्वतन्त्रस्यास्योपायस्याधिकारिण इमे इत्याह— भ-क्तावित्यादि ।

'उभयपरिकर्मितस्वांतस्य' इत्युक्तप्रकारेण जन्मांतरसहस्रसि-द्धकर्मज्ञानसंस्कृतांतःकरणस्योत्पद्यमानायां पारतंत्र्यविरोधिन्यां

---

भक्तौ शक्तिविहीनस्य प्रपत्तिः परमा गतिः ।
प्रपत्तौ शक्तिहीनस्य चाचार्यशरणागतिः ॥४७९॥

स्वतंत्र होता है तैसे आचार्याभिमान रूप यह उपाय अन्य उपायों का अंग होते हुए "बाल मूक जड अंध पंगु बधिर ये सब सदाचार्य के कटाक्ष पात्र हो परम पद को प्राप्त होते हैं"। "पशु मनुष्य या पक्षी हो" इत्यादि बचनानुसार स्वयमेव उत्तारक होनेसे स्वतंत्र उपाय भी होता है।

एवं स्वतंत्रभूत इस उपाय का अधिकारी अमुक है ऐसा कहते हैं— भक्ति में इत्यादि ।

भक्ति में अशक्त को प्रपत्ति है,
प्रपत्ति में अशक्त को यह है ॥ ४७९ ॥

जन्मान्तर सहस्रों में अनुष्ठित कर्मज्ञानों से निर्मलांतःकरण वालों को होने वाली स्वपारतंत्र्य विरोधी स्वयत्न रूप उपाय में दुष्करत्व और स्वरूप विरोधित्व

स्वयत्नरूपायां भक्तावुपाये दुष्करत्वबुद्धया स्वरूपविरोधित्वबुद्धया च वयमस्याशक्ता इति स्थितस्य निवृत्तिसाध्यतया सुकरो भगवत्पारतन्त्र्यरूपस्वरूपानुरूपः प्रपत्त्युपायः । अध्यवसायज्ञानरूपप्रपत्त्युपाये महाविश्वासस्य दुर्लभत्वाद्बन्धमोक्षयोरुभयोरपि साधारणस्येश्वरस्य स्वातंत्र्यभयेन च वयमशक्ता इति भीतस्य पश्वादीनामपि कार्यकरत्वाद्विश्वाससापेक्षत्वं च विना मोक्षैकहेतुर्भवति परतंत्रस्वरूपस्य सदाचार्यस्याभिमानरूपोऽयं चरमोपाय इत्यर्थः । भक्तावशक्तस्य दुष्करत्वस्वरूपविरुद्धत्वयोरुभयोरपि हेतुत्वेप्यत्र स्वरूपविरोध एव प्रधानहेतुः । प्रपत्तावशक्तस्य विश्वासमांद्यभगवत्स्वातंत्र्यभयरूपहेतुद्वये सत्यपि भगवत्स्वातंत्र्यभयमेव प्रधानहेतुः । 'स्वस्वातंत्र्यभयेन भक्तिश्च्यवते, भगवत्स्वातंत्र्यभयेन प्रपत्तिश्च्यवते' इति खल्वयं पूर्वं स्वयमेवावोचत् । अनेनान्योपायाशक्ततया अनन्यगतिरेव यथा प्रपत्त्यधिकारी भवति तथैतदुपायाधिकार्य-

---

ज्ञान से मै इस के योग्य नहीं ऐसा समझ हटनेवाले को निवृत्तिसाध्य सुकर भगवत्पारतंत्र्यरूप स्वरूपानुरूप प्रपत्ति उपाय है अध्यवसाय ज्ञानरूप प्रपत्ति उपाय में महाविश्वास होना दुष्कर होनेसे बंध और मोक्ष दोनों का साधारण ईश्वर के स्वातंत्र्य भय से हम इस प्रपत्ति करने को अशक्त हैं ऐसा समझनेवाले को पश्वादिओं का भी कार्यकर होनेसे विश्वास की अपेक्षा विना मोक्षैकहेतु परतंत्ररूप सदाचार्य का अभिमानरूप यह चरमोपाय है । भक्ति में अशक्त को दुष्करत्व और स्वरूपविरोधित्वरूप दोनों हेतु हो तो भी इस स्थल में स्वरूपविरोधित्व ही प्रधान हेतु है । प्रपत्ति में अशक्त को विश्वास की कमी और भगवत्स्वातंत्र्य भय इन दोनों के हेतुत्व होनेपर भी भगवत्स्वातंत्र्य भय ही प्रधान हेतु है । 'स्वस्वातंत्र्य भय से भक्ति च्युत हुई, भगवत्स्वातंत्र्य भय से प्रपत्ति च्युत हुई' ऐसा यही कहे हैं । इस से जैसा अन्योपायों में अशक्त अनन्यगति ही प्रपत्त्यधिकारी

अयं प्रथमं स्वरूपं पल्लवितं करोति. पश्चात्
पुष्पितं करोति, अनंतरं फलपर्यंतं करोति ॥४८०॥

इति श्रीलोकाचार्यप्रणीतं श्रीवचनभूषणं समाप्तम् ।

---

प्यन्योपायाशक्ततयाऽनन्यगतिरेवेत्युक्तम् ! अथवाऽस्य स्वतंत्रत्वं भक्तावशक्तस्येत्यादिना स्थिरीकरोतीति योजना । वाक्ययोजनायां भेदो नास्ति । भक्तावशक्तं प्रति विहिता प्रपत्तिर्यथा स्वतंत्रा जाता तथा प्रपत्तावशक्तं प्रति विहितोऽयमपि स्वतंत्र इत्युक्तौ न विरोध इति भावः ।

एतदाचार्याभिमानेनास्योत्पाद्यमानां फलपरंपरामुक्त्वाऽमुमर्थं निगमयति— अयमित्यादिना ।

---

अयं स्वरूपं प्रथमं सुपत्रितं करोति पश्चाद्विशदं सुपुष्पितम् ।
फलस्य पर्यंतमनंतरं हि करोति ज्ञानाधिकसत्तमस्य ॥४८०॥

क्वेदं महद्वचनभूषणगर्भसारं
क्वेयं ममाल्पविषया धिषणा तथापि ।
क्षाम्यो न किं बुधवरा मम साहसोऽस्मिन्
खर्वो हरेः प्रतिकृतिः स्वदतीति नो किम् ॥१॥

होता है, तैसा इस उपाय के अधिकारी भी अन्योपायों में अशक्त और अनन्यगति ही है। भक्ति में अशक्त को जैसा प्रपत्ति स्वतंत्र उपाय होती है तैसा प्रपत्ति में अशक्त को आचार्याभिमान स्वतंत्र उपाय होता है ऐसा समझना ।

इस आचार्याभिमान से चेतन को होनेवाले फलपरंपरा को कह इस अर्थ को समाप्त करते हैं—यह इत्यादि ।

यह पहिले स्वरूप को पल्लवित बनाता है, पीछे
पुष्पित बनाता है, बाद फल पर्यंत करता है ॥४८०॥

एवं पूर्वोक्तोऽयमाचार्याभिमानः प्रथममस्य चेतनस्य प्रणवोक्तं भगवदनन्यार्हशेषत्वं चरमपर्वपर्यंतं ज्ञापयित्वाऽना-दिकालं स्वातंत्र्यरूपाग्निस्पर्शेन निष्पन्नत्वेन स्थितं स्वरूपं पल्लवितं करोति, एवं पल्लवोत्पत्त्यनंतरं मध्यमपदोक्तानन्यश-रणत्वं चरमपर्वपर्यंतं ज्ञापयित्वा फलसूचकोपायाध्यवसाययो-गेन पुष्पितं करोति, एवं पुष्पोत्पत्त्यनंतरं चरमपदोक्तानन्य-भोग्यत्वं चरमपर्वपर्यंतं ज्ञापयित्वा नित्यकैंकर्ययोगेन स्वरूपं फलपर्यंतं करोतीत्यर्थः। प्रथमरहस्यभूते श्रीमंत्रे पदत्रयप्रति-पाद्यमनन्यार्हशेषत्वाद्याकारत्रयमप्यात्मनः स्वरूपं सच्चरमपर्व-

य: श्रीमद्द्वयकंठदेशिकवरः साकेत वृन्दावने
तेने दिव्यमठादिकार्यकरणान्नित्ये यशःसंततीं ।
गोपालार्यगुणोदधिः सुधिषणस्तत्पादकञ्जाश्रित-
स्तच्छिष्यावरजोस्य कर्तृपदभाग्रामप्रपन्नो लघुः ॥२॥

इति श्रीमद्द्वयमार्गप्रतिष्ठापकेत्यादिविरुदविशिष्ट श्री १०८ श्रीमद्गोपालाचार्यपाद-पंथोजचंचरीकेण श्रीरामप्रपन्नाचार्येण कृतं श्रीवचनभूषणसूत्रप्रति-कृतिरूपं रहस्यमञ्जरीनामधेयं समाप्तम्।

पूर्वोक्त आचार्याभिमान रूप यह पहिले इस चेतन को प्रणवोक्त भगवदन-न्यार्ह शेषत्व को चरमपर्व पर्यन्त जनाकर अनादिकाल से स्वातंत्र्यरूप अग्नि में जल शुष्कीभूत स्वरूप को पल्लवित करता है। एवं पल्लवित हुए बाद मध्यम पदोक्तानन्यशरणत्व को चरमपर्व पर्यंत जनाकर फलसूचक उपायाध्यवसाय के संबंध से स्वरूप को पुष्पित बनाता है। इस के बाद चरमपदोक्तानन्यभोग्यत्व को चरमपर्व पर्यंत जनाकर नित्य कैंकर्य भोग से स्वरूप को फलपर्यंत करता है। प्रथम रहस्य रूप श्रीमंत्र में पदत्रय से प्रतिपाद्य अनन्यार्ह शेषत्वादि आकारत्रय

पर्यंतं खलु वर्तते । एतेषां चाचार्योपदेशादिभिर्लभ्यत्वादेत-दुपदेशादिकं प्रति 'अयमस्मदीय' इत्याचार्याभिमानस्यैव हेतु-त्वादाचार्याभिमान एतान्युत्पादयतीत्युच्यते । एवमेतादृश पदत्रयार्थनिष्ठामयमाचार्याभिमानोऽस्योत्पाद्योज्जीवयतीत्युक्तम्

अथवा— एवं स्वतंत्रोपायभूतोऽयमस्य स्वरूपं पर्वक्रमे-णोज्जीवयतीति प्रकाशयन्नमुमर्थं निगमयति— अयमित्यादि-ना । आचार्याभिमानरूपोऽयं प्रथमं भगवद्विषयेऽन्वयं कार-यित्वाऽनादिकालं तदन्वयराहित्येन 'म्लान' इत्युक्तप्रकारेणा-द्ये म्लानं स्वरूपं पल्लवितं करोति, पश्चाद्भागवतविषये श्रद्धां कारयित्वैतस्य फलान्वययोग्यकरणात् पल्लवितमेतत्पुष्पितं करोति, अनंतरं 'स्थितिं प्राप्य स्वस्य कल्याणगुणगणान् स्तो-तुं' इत्युक्तप्रकारेण चरमपर्वे स्थितिं प्राप्य पुष्पितमेतत्फलप-र्यंतं करोतीत्ययमर्थः ।

तथाचाचार्यमुपायत्वेनाश्रयतां 'भयाभये द्वे अपि व्यत्या-

---

भी आत्मा का स्वरूप हो चरमपर्व पर्यंत होता है ये अर्थ आचार्योपदेशों से लभ्य है, तादृशोपदेशों के कारण आचार्याभिमान होनेसे आचार्याभिमान ही इन को उत्पन्न करता है। तथा आचार्याभिमान ही पदत्रयार्थ निष्ठा को उत्पादन कर उज्जी-वन को प्राप्त कराता है।

अथवा स्वतंत्रोपायरूप यह इस का स्वरूप को पर्वक्रमेण उज्जीवित करने के प्रकार को कहते हुए इस अर्थ को समाप्त करते हैं—यह इत्यादि । आचार्याभि-मान रूप यह पहिले भगवद्विषय में लगाकर अनादिकाल से संबंधज्ञानाभाव से मुरझा हुआ स्वरूप को पल्लवित बनाता है, बाद भागवतविषय में लगाकर फल के योग्य बनाने से पुष्पित करता है, अनंतर चरमपर्व में स्थापन कर पुष्पित को फल पर्यंत करता है ऐसा समझना ।

तथा च इस प्रकरण से—आचार्य को उपायतया स्वीकार करनेवालों को भयाभय दोनों के प्रसंग नहीं है, इस अर्थ को निश्चय करनेवाले प्रमाण अमुक है,

सेन भवेयुः' इत्यस्य प्रसंगस्याभावः, एतदर्थनिर्णायकप्रमाण-मेतदिति, एतदर्थस्थापनोपपत्तिः, ऐतिह्यं, एतदर्थोपपादनार्थं प्राप्यनिर्णयः, एवं प्राप्यनिर्णयकरणेऽस्य सदृश एवांगीकार्यः प्रापक इत्ययमर्थः, अन्यथाचेत् प्रसक्तं दूषणं, ईश्वरविषयेऽस्य विद्यमानचरणवत्पारतंत्र्यानन्यत्वसूचनपूर्वकमीश्वरस्याश्रयणा-दस्याश्रयणस्य विद्यमानो विशेषः, ईश्वरचेतनयोरुभयोरयमुपकारक इति, ईश्वरस्याप्याशाविषयपदविशिष्ट इति, अनेन क्रियमाणोपकारस्य प्रत्युपकारो नास्तीति, अनेन संबंधो मोक्षैकहेतुरिति, ईश्वरोपकारकादस्मादेतदुपकारक ईश्वरो महोपकारक इति, एतदाचार्यवैभवः, आत्मगुणसत्वेप्याचार्यसंबंधनाशने प्रयोजनभवत्वकरमीश्वरनिग्रहहेतुर्भवतीति प्रकारः, आचार्यसंबंधविच्छेदे भगवत्संबंधदौर्लभ्यं, आचार्यान्वयस्यापि भागवतसंबंध आवश्यक इति, आचार्याभिमानं विनोज्जीवनोपायो नास्तीत्यत्राप्तोपदेशः, एतदर्थस्थिरीकरणं, एतदाचार्याभिमान-

इस अर्थ को स्थापन करनेवाले प्रमाण, ऐतिह्य, इस अर्थ के उपपादन के लिये प्राप्य निर्णय, प्राप्य के सदृश प्रापक भी होना चाहिये, नहीं तो होनेवाले दोष, ईश्वर विषय में आचार्य के चरण के तरह पारतंत्र्य अनन्यत्व को दिखाते हुए ईश्वर के आश्रयण की अपेक्षा इन के आश्रयण की श्रेष्ठता, ईश्वर और चेतन दोनों के आचार्य उपकारक है, ईश्वर भी अपेक्षा करने योग्य आचार्यत्व वाले हैं, आचार्य कर्तृक उपकार के सदृश प्रत्युपकार नहीं है, इन के साथ संबंध मोक्ष का ही हेतु है, ईश्वर को देनेवाले आचार्य की अपेक्षा आचार्य को देनेवाले ईश्वर ही महोपकारक हैं, आचार्य के वैभव, आत्मगुणों के होनेपर भी आचार्य संबंध छूटनेपर अवद्यकर और ईश्वर के निग्रह हेतु, आचार्य संबंध छूटने से भगवत्संबंध दुर्लभ है, आचार्य के संबंध के लिये भागवतसंबंध अपेक्षित है, आचार्याभिमान विना उज्जीवनोपाय नहीं इस अर्थ में आप्तोपदेश, इस अर्थ को स्थिर करना, इस

निष्ठः सुलभमिमं विषयं त्यक्त्वा दुर्लभं भगवद्विषयं रक्षकत्वेन नेच्छेदिति, परत्वादिप्राप्यस्थलानि सर्वाण्ययं विषय एवेति वर्ततेत्यर्थः, अस्य प्रतिकूलानुकूला एते इति, अस्य ज्ञानानुष्ठानयोर्विनियोगः, अस्य निषिद्धानुष्ठानं विहितभोगश्च त्याज्य इत्ययमर्थः, स्वरूपप्रच्युत्यभावस्यापेक्षिताऽवस्था, प्राप्यभूमिप्रवणादित्रयमस्यावश्यापेक्षितमित्ययमर्थः, आचार्यविषये स्वगतपरगतस्वीकारोपायद्वयप्रमाणानि, आचार्याभिमानस्य स्वतंत्रोपायत्वं, तदधिकारिनिर्णयः, एतदाचार्याभिमानेनास्य चेतनस्योत्पाद्यमाना फलपरंपरा चोक्ताः । अतः सदाचार्याभिमानः सर्वेषामुत्तारक इत्युक्तम् ।

एवमनेन वाक्यद्वयोक्तोपायोपेयचरमावधिमुक्तवान् ।

इति चतुर्थप्रकरणं समाप्तम् ।

इति श्रीरम्यजामातृमुनिप्रणीत
श्रीवचनभूषणव्याख्या संपूर्णा ।
श्रीरम्यजामातृमुनिचरणौ शरणं प्रपद्ये ।

---

आचार्याभिमान निष्ठ सुलभ आचार्य को छोड दुर्लभ भगवान् को नहीं चाहना, परत्वादि प्राप्य स्थल सब को आचार्य ही समझना, इस को प्रतिकूल अनुकूल और उपेक्षा योग्य अमुक हैं, इस के ज्ञानानुष्ठानों के विनियोग प्रकार इस को निषिद्धानुष्ठान और विहित भोगादि त्याज्य हैं, स्वरूप नाश न होने के लिये अपेक्षित अवस्था विशेष, प्राप्यभूमि प्रावण्यादि तीनों इस को अवश्यापेक्षित हैं, आचार्य विषय में स्वगत परगत स्वीकार दोनों के उपाय होने में प्रमाण, आचार्याभिमान स्वतंत्रोपाय है, तदधिकारि निर्णय, इस आचार्याभिमान से होनेवाली फल परंपरा ये सब कहे जान से सदाचार्याभिमान ही सब को उत्तारक है यह अर्थ कहा गया

तथा च---इस से वाक्यद्वयोक्तोपायोपेय चरमावधि कहेगये हैं ।

इति श्रीवचनभूषण व्याख्या भाषाटीका संपूर्णा ।

# विज्ञापन

महान्त श्री १००८ श्रीगदाधर रामानुज स्वामीजी राजगोपाल मठ पुरी [illegible]
[illegible]गवसंप्रदाय की उन्नति के लिये अपने मठ में "श्रीरघुनन्दन" [illegible]
[illegible]थापन किये हैं, उस में पूर्वाचार्यों के [illegible] (संस्कृत और द्राविड)
ग्रंथों के संस्कृतानुवाद, जो कि वैकुंठवासी श्रीमान् पूज्य श्री १००८ श्रीगोवर्द्धन[illegible]
[illegible]चार्य स्वामी जी बहुत परिश्रम से किये हैं। वे अद्यावधि मुद्रित न [illegible]
[illegible]साधुओं का दुर्लभ समझ उन का मुद्रित कर प्रकाश करनेको उत्कंठित हुए हैं

उन में पहिले 'अजेत्सारतमं शास्त्रम्' इस वचन के अनुसार 'श्रीवचनभूषण' [illegible]
ग्रंथ, रायल ५० पृष्ठ संचिकारूप से प्रतिमास निकलेगा। श्रीकृष्णपाद [illegible]
[illegible]प्रपन्नाचार्य जी कृत श्रीवचनभूषण के सूत्रगतोक्ताति [illegible]
[illegible] भगवद्विषय, श्रीगीताग्रंथ (तिरुप्पावै), वार्तामाला आदि [illegible] पुस्त[illegible]
संचिका रूप से ही प्रकाशित होंगे। इस में विशेष बात [illegible] कि उक्त [illegible]
भाषाटीका समेत [illegible] कर निकलने से संस्कृतानभिज्ञ लोगों को [illegible]
ज्ञान घर बैठे ही [illegible] सुलभतया हो सकैगा।

श्रीमान् महन्तजी की इच्छा थी कि संचिकाओं को [illegible]
जाय, परंतु अमूल्य वितरण किया जानेपर व्ययका कोई ठिकाना नहीं कि, [illegible]
होगा। इस बात को जो महाशय पुस्तकें लिख कर छपवाये हैं वा [illegible]
उन को भली भांति मालूम है।

इन ग्रंथो में सम्पूर्ण वेद, वेदांत, स्मृति और समग्र पुराण ही भरा हु[illegible]
इन [illegible] पढनेमें फिर उपरोक्त ग्रंथों की आवश्यकता न पडगी। संचिकाओं का [illegible]
इस लिये रक्खा गया [illegible] कि प्रेस का कार्य इन के आय द्वारा स्वतंत्रतया [illegible]
न कि लाभ के लिये।

ग्राहकगण शीघ्रता करें ऐसा अमूल्य और दुष्प्राप्य वस्तु को प्राप्त करनेके लि[illegible]
अब विशेष समय नहीं है।

संचिका का वार्षिक मू० ६ रु० मासिक मू० ।।=

डाक खर्च [illegible] न लगेगा।

मिलने का पता—

मैनेजर, श्रीरघुनन्दन प्रेस

राजगोपाल मठ, पुरी।